# BIBLIOTHECA INDICA;

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

---

THE

## SANHITA' OF THE BLACK YAJUR VEDA,

WITH THE

COMMENTARY OF MA'DHAVA A'CHA'RYA.

EDITED BY

DR. E. ROER AND E. B. COWELL, M. A.

VOL. I.

KA'NḌA I. PRAPA'ṬHAKAS I.—VII.






CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1860.

# PREFACE.

THE present edition of the Taittiríya Sanhitá was originally commenced by Dr. Röer in 1855, but its publication was stopped on the temporary suspension of the Bibliotheca Indica in 1857 and 1858. When the Bibliotheca recommenced, Dr. Röer found himself precluded by an increase of official duties from undertaking the sole editorship, and from p. 768 the work has been continued under the joint charge of the present editors.

The following are the MSS. used in the preparation of this edition.

For the text—

*A.*—An old and accurate MS. belonging to the Benares College Library.

*B.*—An accurate MS. containing the Pada text, also belonging to ditto.

*C.*—A recent but correct MS. belonging to Dr. Röer.

*D.*—An inferior MS. belonging to the Asiatic Society of Bengal.

For the Commentary·

A.—A MS. in the Tailinga character presented to Dr. Röer by W. Elliott, Esq. of the Madras Civil Service. This MS. was very correct in the earlier prapáṭhakas of the present volume, but has many omissions and corrupt readings in the latter part.

B.—A MS. copied for the Asiatic Society from a MS. in the Benares College Library.

C.—A MS. purchased by F. E. Hall, Esq. for the Asiatic Society. This wants the 5th and 6th prapáṭhakas of the present Káṇda.

D.—A MS. of the first Káṇḍa, in the Asiatic Society's Library, (No. 765).*

Of these MSS. A, when it is accurate, represents the best text. The others are all of one family, and frequently repeat the same errors; but their occasional differences, in addition as well as omission, prove that they are not immediate copies of any one original.†

---

* Besides this MS. the Society possesses large fragments of another copy beginning with the second Káṇḍa, and a badly written copy of the Commentary on the third and seventh Káṇḍas.

† The opening lines in p. 1, ascribe this Commentary to Mádhavácharya, which is the reading of the Tailinga MS.—but the Benares copies add, after the 3rd 'sloka, the following lines.

स ह्याह नृपतिं राजन् सायनार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यतां ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वशात् सायनाचार्यं वेदार्थस्य प्रकाशने ॥

In the 4th 'sloka (as printed from the Tailinga MS.) these MSS. read सायनाचार्यो for माधवाचार्यो. The same difference occurs in the epigraphs at the close of the different prapáṭhakas.

# INDEX TO THE FIRST VOLUME.

THE FIRST KÁṆḌA OF THE TAITTIRÍYA SANHITÁ.

*Prapáṭhakas* I.—VII.

*Prapáṭhaka* I.



*Prapáṭhakas* II.—IV.

*Somayágah.*

*Prapáṭhaka* II.

---

*Prapáṭhaka* III.

*Somay'aga (continued.)*



---

*Prapáṭhaka* IV.

*Soma-yága (continued).*



---

*Prapáṭhaka* V.



---

*Prapáṭhaka* VI.

---

*Prapáthaka* VII.

ओँ

---

श्रीगणेशाय नमः।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे।
यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननं॥ १॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥ २॥
यत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः।
आदिशन्माधवाचार्य्यं वेदार्थस्य प्रकाशने॥ ३॥
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात्।
कृपालुर्म्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः॥ ४॥
ब्राह्मणं कल्पसूत्रे द्वे मीमांसां व्याकृतिं तथा।
उदाहृत्याथ तैः सर्व्वैर्मन्त्रार्थः स्पष्टमीर्य्यते॥ ५॥

ननु कोऽयं वेदो नाम, के वास्य विषयप्रयोजनसम्बन्धाधिकारिणः, कथं वा तस्य प्रामाण्यं। न खल्वेतस्मिन् सर्व्वस्मिन्नसति वेदो व्याख्यानयोग्यो भवति। अत्रोच्यते। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः। अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्त्येते। अनुभूयमानस्य स्रक्चन्दन-

वनितादेरिष्टप्राप्तिहेतुत्वं, औषधसेवादेरनिष्टपरिहारहेतुत्वञ्च प्रत्यक्षसिद्धं। स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यं। एवं तर्हि भाविजन्मगतसुखादिकमपि अनुमानगम्यमिति चेत्। न। तद्विशेषस्यानवगमात्। न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यस्यावगन्तुं शक्नोति। तस्मादलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तं। अत एवोक्तं।

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता"॥ इति॥

स एवोपायो वेदस्य विषयः। तद्बोध एव प्रयोजनं। तद्बोधार्थी च अधिकारी। तेन सह उपकार्य्योपकारकभावः सम्बन्धः। नन्वेवं सति स्त्रीशूद्रसहिताः सर्व्वे वेदाधिकारिणः स्युः, इष्टं मे स्यादनिष्टं मा भूदिति आशिषः सार्व्वजनीनत्वात्। मैवं। स्त्रीशूद्रयोः सत्युपाये बोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात्। उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्टप्राप्तिहेतुरिति बोधयति। कथं तर्हि तयोस्तदुपायावगमः, पुराणादिभिरिति ब्रूमः। अत एवोक्तं।

"स्त्रीशूद्रद्विजबन्धूणां त्रयी न श्रुतिगोचरा।
इति भारतमाख्यानं मुनिना कृपया कृतं"॥ इति॥

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य सम्बन्धः। तत्प्रामाण्यं तु

बाधकत्वात् स्वत एव सिद्धं। पौरुषेयवाक्यं तु बोधकमपि सत् पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते, न तु वेदः तस्य नित्यत्वेन वक्तृ*दोषशङ्कानुदयात्। एतदेव जैमिनिना सूत्रितं "तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्" इति।

ननु वेदोऽपि कालिदासादिवाक्यवत् पौरुषेय एव ब्रह्मकार्य्यत्वश्रवणात्। "ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात् यजुः तस्मादजायत" इति श्रुतेः। अत एव बादरायणः "शास्त्रयोनित्वात्" इति सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत्। मैवं। श्रुतिस्मृतिभ्यां नित्यत्वावगमात्। "वाचा विरूपनित्यया" इति श्रुतेः। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति स्मृतेश्च। बादरायणोऽपि देवताधिकरणे सूत्रयामास। "अत एव च नित्यत्वं" इति। तर्हि परस्परविरोध इति चेत् । न। नित्यत्वस्य व्यावहारिकत्वात्, सृष्टेरूर्द्धं संहारात् पूर्व्वं व्यवहारकालस्तस्मिन्नुत्पत्तिविनाशादर्शनात्। कालाकाशादयो यथा नित्या एवं वेदोऽपि व्यवहारकाले कालिदासादिवाक्यवत्पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद्वेदोत्पत्तिराम्नायते अतो विषयभेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य वक्तृदोषाभावात् स्वतस्सिद्धं प्रामाण्यं सद्वस्थं। तस्माल्लक्षणप्रमाणसद्भावाद्विषयप्रयोजनसम्बन्धाधिकारि-

* कर्तृ इति तै।

सद्भावात् प्रामाण्यस्य सुस्थत्वाच्च वेदो व्याख्यातव्य एव। यथोक्त-विषयादिसद्भावमभिप्रेत्य स्वाध्यायोऽध्येतव्य इत्यध्ययनं विधीयते। पाठमात्रस्याध्ययनशब्दवाच्यत्वेनार्थावबोधस्याविहितत्वा-द्वेदव्याख्यानमयुक्तमिति चेत्। न। विधेर्बोधपर्य्यवसायित्वात्। एतच्च भट्टगुरुमतानुसारिभिर्बहुधा प्रपञ्चितं। आम्नायते च "यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैन्धो न तज्ज्वलति कर्हिचित्"॥ "स्थाणुरयं भारहारः किलाभूत्। अधीत्य वेदं न विजानाति योऽर्थं। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥ ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति। एवं तर्हि ज्ञानस्य पृथग्विधानाद-ध्ययनं पाठमात्रमिति चेत्। अस्तु नाम वर्णयन्त्येव शाङ्करद-र्शनानुसारिणः। क्रतुविधिभिरेवानुष्ठानान्यथानुपपत्त्या वेदार्थ-ज्ञानस्य प्रापितत्वान्नैतद्विधेयमिति चेत्, तर्हि तद्विधिबलाद्वे-दनमात्रेण स्वतन्त्रं किञ्चिदपूर्व्वमस्तु। श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलं। "सर्व्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति। अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बहायाससाध्यमनुष्ठानं व्यर्थं स्यादिति चेत्। न। तरणीयाया ब्रह्महत्याया मानसिककायिकत्वादिभेदेन तारत-म्योपपत्तेः। मनसा सङ्कल्पिता वाचाभ्यनुज्ञाता वा परहस्तेन कारिता स्वयं कृता पुनः पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधा, अतस्तरणमप्यनेकविधं यथा स्वर्गो बहु-विधस्तद्वत्। "अग्निहोत्रं जुहुयात् स्वर्गकामः" "दर्शपौर्णमासा-

भ्यां स्वर्गकामो यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादावुच्चावचकर्मणामेकविधफलासम्भवात् स्वर्गो बहुविधः। यत्तु कर्मानुष्ठानकालीनं वेदनं तत्कर्मफल एवातिशयं दर्शयति। "उभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इति विद्वदविद्वत्प्रयोगौ प्रस्तुत्य, "यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवति" इत्याम्नानात्। अङ्गोपास्तिविषयमेतद्वाक्यमिति चेत्। न। न्यायस्य समानत्वात्। अस्ति ह्यस्यार्थस्योपोद्बलकं लिङ्गं। प्रजापतिः किल सोमयागेभ्योऽर्व्वाचीनानग्निहोत्रपौर्णमास्यामावास्यनामकान् परस्परमुच्चावचान् यज्ञान् ससर्ज। सोमयागांश्चाग्निहोत्रादिभ्यः प्रौढानग्निष्टोमोक्थ्यातिरात्रनामकान् परस्परमुच्चावचान् सृष्ट्वा प्रथमसृष्टेष्वग्निहोत्रादिष्वभिमानविशेषेण वर्गद्वयं तुलयेदं मिमीते। एतद्वृत्तान्तं विजानतोऽग्निहोत्रादिभिरग्निष्टोमादिफलं भवति। तथा च ब्राह्मणमाम्नायते। "प्रजापतिर्यज्ञानसृजत। अग्निहोत्रञ्चाग्निष्टोमञ्च। पौर्णमासीञ्चोक्थ्यञ्च। अमावास्याञ्चातिरात्रञ्च। तानुदमिमीत। यावदग्निहोत्रमासीत्तावानग्निष्टोमः। यावती पौर्णमासी तावानुक्थ्यः। यावत्यमावास्या तावानतिरात्रः। य एवं विद्वानग्निहोत्रं जुहोति। यावदग्निष्टोमेनोपाप्नोति। तावदुपाप्नोति। य एवं विद्वान् पौर्णमासीं यजते। यावदुक्थ्येनोपाप्नोति। तावदुपाप्नोति। य एवं विद्वानमावास्यां यजते। यावदतिरात्रेणोपाप्नोति। तावदुपाप्नोति" इति। तदेतद्वेदनस्य सर्व्वत्र स्वतन्त्रफलकत्वे लिङ्गं। किञ्च तत्तद्विधिसमीपे य एवं वेदेति वचनानि वेदनादेव फलं

ब्रुवते। तान्यर्थवादरूपाणीति चेत्। अस्तुनाम, सहैम ह्येवैतमपराधं तेषां वचनानां विधेयार्थप्रशंसापरत्वात्। तर्हि 'यत्परः शब्दः स शब्दार्थः' इतिन्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत्। न। महातात्पर्य्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्य्यस्य स्वार्थविषयतानिवारणात्, ग्रावाणः प्लवन्त इत्यर्थवादस्यापि स्वार्थप्रामाण्यं प्रसज्येतेति चेत्। न। प्रमाणान्तरबाधितत्वात्। हिः सम्वत्सरस्य सस्यं पच्यत इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यं। वेदनफलवचनानि तु नानुवादकानि। नापि बाध्यानि। तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यं। अन्यथा मन्त्रार्थवादादिभ्ये ादेवादीनां विग्रहादिमत्त्वं न सिध्येत्। अत एवोक्तं।

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादः सिद्धानामर्थवादस्त्रिधा मतः" ॥ इति ॥

किं बहुना। विद्यत एवावश्यं वेदनमात्रादपूर्व्वं। अतो वेदनाय वेदो व्याख्यायते। योऽयं विषयरूप इष्टप्राप्त्यनिष्टपरिहारोपायः सामान्यतो निर्दिष्टः स विशेषेण स्पष्टीक्रियते। वेदस्तावत् काण्डद्वयात्मकः। तत्र पूर्व्वस्मिन् काण्डे नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं कर्म्म प्रतिपाद्यं। "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिकं नित्यं तस्य नियतनिमित्तत्वात्। "यस्य गृहान् दहत्यग्नये चामवते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादिकं नैमित्तिकं तस्यानियतनिमित्तत्वात्। "चित्रया यजेत पशुकामः" इत्यादिकं काम्यं। "तस्मान्मलवद्वाससा न

* तद्धानादिति का०।

संवदेत न सहासीत" इत्यादिकं निषिद्धं। तेषु नैमित्तिकानुष्ठानादकरणे प्रत्यवायरूपमनिष्टं परिह्रीयते। स च प्रत्यवायो याज्ञवल्क्येन स्मर्य्यते।

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" ॥ इति ॥

यावज्जीवादिवाक्येष्वनुक्तोऽप्यवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते। तथा चापस्तम्बः। "तद्यथा फलार्थे निर्म्मिते च्छाया गन्ध इत्यनूत्पद्येते। एवं धर्म्मेऽपि चर्य्यमाणेऽर्था अनूत्पद्यन्ते" इति काम्यस्येष्टप्राप्तिहेतुत्वं तद्विधिवाक्य एव स्पष्टं। इष्टविघातमनिष्टञ्चार्थात् परिह्रीयते। निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठनजन्यो नरकपातः परिह्रीयते। न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः, किन्तु धी शुद्ध्यादिविविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति। तथा च वाजसनेयिनः समामनन्ति "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति। एवं तर्हि पूर्व्वकाण्ड एवाशेषपुरुषार्थसिद्धेः किमुत्तरकाण्डेनेति चेत्। न। अपुनरावृत्तिलक्षणस्यात्यन्तिकपुरुषार्थस्य तत्रासिद्धेः। अत एवाथर्वणिकाः "कर्म्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चामनन्ति, सोमलोके विभूतिमनुभूय पुनरावर्त्तन्ते" इति। अत उत्तरकाण्ड आरब्धव्यः। आत्यन्तिकपुरुषार्थसिद्धिस्तु द्विविधा सद्योमुक्तिः क्रममुक्तिश्चेति। वर्त्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः। उत्तरमार्गेण ब्रह्मलोके चिरं भोगाननुभूय तत्रो-

त्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः। तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते। ब्रह्मोपास्तिप्रसङ्गाद्ब्रह्मदृष्ट्या प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते। ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे प्रतीकोपासकस्य विद्युल्लोकादूर्द्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्तेरप्यभावादस्ति पुनरावृत्तिः। एतच्च प्रतीकालम्बनान् नयतीत्यधिकरणे द्रष्टव्यं। नन्वस्त्वेवं पूर्व्वोत्तरकाण्डयोस्तत्र तत्रोचितप्रयोजनं फलविशेषश्च, तथापि पूर्व्वकाण्डस्यादौ कर्म्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत्। प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः। प्रकर्षेण ह्यङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षः। विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते। अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते। अत अतिदेशस्य प्रकर्षाभावः। प्रकृतिस्त्रिविधा। अग्निहोत्रमिष्टिः सोमश्चेति। त्रिष्वप्येतेषु अन्यनैरपेक्ष्येण स्वाङ्गजातं सर्व्वमुपदिष्टं। तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु दर्शपूर्णमासेष्टिसापेक्षत्वान्न पूर्व्वभावित्वं युक्तं। इष्टेस्तु सोमयागनैरपेक्ष्यात् सोमात् प्राचीनत्वं युक्तं। यद्यप्यग्निहोत्रस्य स्वरूपेणाङ्गेषु च नास्त्यन्यापेक्षा तथाप्यग्निसिध्यपेक्षत्वादाहवनीयाद्यग्नीनाञ्च पवमानेष्टिसाध्यत्वात्, पावमानेष्टीनां दर्शपूर्णमासविकृतित्वात् परम्परयाऽग्निहोत्रस्य दर्शपूर्णमासापेक्षास्तीति प्रथमभावित्वं न युक्तं। दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेत् मैवं। नाधा-

नमात्रेणाग्नयस्सिद्ध्यन्ति किन्तु पवमानेष्टिभिरपि । ताश्च इष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव दर्शपूर्णमासावपेक्षन्ते । दर्शपूर्णमासौ तु अग्निद्वारा पावमानेष्टिसापेक्षावपि न साक्षात् पवमानेष्टिरपेक्षते, अतो निरपेक्षत्वाद्दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या । ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासेष्टिर्नाम्नाता, इति चेत्, बाढं । यजुर्वेदमपेक्ष्य दर्शपूर्णमासयोरादित्वमुक्तं कर्म्मकाण्डविषये यजुर्वेदस्यैव प्राधान्यात् । आनुपूर्व्या कर्म्मणां स्वरूपं यजुर्वेदे समाम्नातं। तत्र तत्र विशेषापेक्षायामपेक्षितायां याज्यापुरोऽनुवाक्यादयो यजुर्वेदे * समाम्नायन्ते, स्तोत्रादीनि तु सामवेदे । तथा सति भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ, तस्मात् कर्म्मसु यजुर्वेदस्य प्राधान्यं, तस्मिंश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता । यद्यपि मन्त्रब्राह्मणात्मको वेदः तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मन्त्रा एवादौ समाम्नाताः । मन्त्राश्च त्रिविधाः, ऋचः सामानि यजूंषि चेति । तत्र यजुषामध्वर्युवेदेऽतिबहुलत्वात् क्वचित् क्वचिदृचां सद्भावेऽपि यजुर्वेद इत्येवाख्यायते, अध्वर्य्युवेदत्वञ्चाख्यानादिसिद्धयाज्ञिकसमाख्याबलादवगन्तव्यं । अस्मिन् वेदे समाख्याता दर्शपूर्णमासेष्टिमन्त्रास्त्रिविधाः, आध्वर्य्यवा याजमाना हौत्रकाश्चेति । 'इषे' इत्यादौ प्रपाठके पठिता आध्वर्य्यवाः । 'सन्त्वा सिञ्चामि' इत्यादौ पठिता याजमानाः । 'सत्यं प्रपद्ये' इत्यादौ पठिता हौत्राः ।

---

* ऋग्वेदे, इति का० ॥

एतेषां मध्ये याजमानानां हौत्राणाञ्च चित्रस्थानीयत्वाद् भित्तिस्थानीयानामाध्वर्य्यवाणामेवादौ पाठो युज्यत इति। तेऽपि आध्वर्य्यवाः 'इषे त्वा' इत्यादिषु त्रयोदशस्वनुवाकेषु आम्नाताः तत्र प्रथमेऽनुवाके वत्सापाकरणार्था मन्त्राः। द्वितीये बर्हिःसम्पादनार्थाः। तृतीये दोहनार्थाः। चतुर्थे हविर्निर्वापार्थाः पञ्चमेऽवघातार्थाः। षष्ठे तण्डुलपेषणार्थाः। सप्तमे कपालोपधानार्थाः। अष्टमे पुरोडाशनिष्पादनार्थाः। नवमे वेदीकरणार्थाः। दशमे प्राधान्येनाज्यग्रहणार्थाः प्रसङ्गात् पत्नीसन्नहनार्थाः। एकादशे प्राधान्येनेध्मसन्नहनार्था बर्हिरास्तरणाद्यर्थाश्च। द्वादशे आघारार्थाः। अत्र सामिधेनीप्रयाजाज्यभागप्रधानयागादिमन्त्राणां प्राप्तावसरत्वेऽपि तेषां हौत्रत्वात् तानुपेक्ष्योपरितनप्रयोगाङ्गभूता आध्वर्य्यवाः स्रुगपोहनादिमन्त्रास्त्रयोदशे समाम्नाताः। तदेतत् सर्व्वं विनियोगसङ्ग्रहकारेणेत्थं सङ्गृहीतं॥

"ये दर्शपूर्णमासाङ्गमन्त्रा एते समासतः।
इषे त्वाऽद्यनुवाकेषु त्रयोदशसु वर्णिताः॥
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डने।
पेषणञ्च कपालानि पुरोडाशश्च वेदिका॥
आज्यग्रहेध्मसन्नाहावाघारोपरि तन्त्रके।
इत्युक्ता अनुवाकार्थाः प्रतिमन्त्रं क्रियोच्यते"॥ इति।

किमिदं वत्सापाकरणं, कथं वा तस्य प्राथम्यमिति चेत् उच्यते। अस्ति दर्शयागे त्रीणि प्रधानहवींषि पूर्णमासयागे

च त्रीणि। आग्नेयोऽष्टाकपाल ऐन्द्रं दधि ऐन्द्रं पय इति दर्शयागे। आग्नेयोऽष्टाकपाल आज्येन प्राजापत्य उपांशुयाग आग्नीषोमीय एकादशकपाल इति पूर्णमासे। तत्र प्रतिपद्दिने दधि होतुं दधिसम्पादनायामावास्यायां रात्रौ गावो दोग्धव्याः। तद्दोहनार्थं प्रातःकाले लौकिकदोहनादूर्द्ध्वं स्वमातृभिः सह सञ्चरन्तो वत्सा मातृभ्योऽपाकरणीयाः। तदिदं वत्सापाकरणं यथोक्तरीत्या, तस्य प्राथम्यञ्च। तत्र वत्सापाकरणं सद्यश्छिन्नया पलाशशाखया कर्त्तव्यमिति। तच्छेदनार्थोऽयमिषे त्वेति मन्त्र आदौ समाम्नायते। अस्य च मन्त्रस्य तच्छेदनाङ्गत्वं ब्राह्मणे द्रष्टव्यं। अत एव सब्राह्मणो मन्त्रो ज्ञातव्य इति। छन्दोगा अभिधीयन्ते "यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण यजति याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पत्यते प्रवामीयते पापीयान् भवति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति। आर्षेय ऋषिसम्बन्धः। अतीन्द्रियार्थद्रष्टारो ऋषयः। तेषां वेदद्रष्टृत्वं स्मर्य्यते।

"युगान्ते तर्हि तान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्व्वमनुज्ञाताः स्वयम्भुवा"॥ इति।

इषे त्वादीनाञ्च मन्त्राणां प्रजापतिर्ऋषिः। तथा च काण्डानुक्रमणिकायामुक्तं।

"शाखादियाजमानञ्च होतृन् हौत्रञ्च दार्शिकं।
तद्विधीन् पितृमेधञ्च नवाङ्कः कस्य तद्विदः"॥ इति।

शाखादिरिषे त्वादिप्रपाठकः। जायमानं सन्त्वा सिञ्चामी-

त्यादि। होतारः चित्तिस्रुगित्यादयो मन्त्राः। सत्यं प्रपद्य इत्यादिकं दार्शिकं होत्रं। तद्विधयः प्रोक्तानाञ्चतुर्विधमन्त्राणां चत्वारि ब्राह्मणानि। पितृमेधः परे युवाꣳसमित्यादिः। तान्येतानि नवकाण्डानि प्रजापतिना दृष्टानि। छन्दोविशेषास्तु वेदाङ्गभूते छन्दोनामके ग्रन्थे द्रष्टव्याः। मन्त्रपदव्याख्यानादेव तत्प्रतिपाद्यार्थरूपदेवता विज्ञायते। ब्राह्मणविशेषस्तु तत्तन्मन्त्रव्याख्यानावसर एवोदाहियते। यद्यपि मन्त्रविनियोगा ब्राह्मणे सर्व्वेऽपि नाम्नाताः तथापि कल्पसूत्रकारैर्ब्राह्मणान्तरपर्य्यालोचनया सर्व्वेऽभिहिताः। अतो बोधायनादिसूत्रोदाहरणादिपूर्व्वकं ब्राह्मणानुसारेण मन्त्रार्थं योजयामः॥

---

ओं तत्सत्।

इषे त्वोर्जे त्वा वायवं स्थोपायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ १ ॥ इषे चित्वारिंशत् ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥

दर्शयागश्चिकीर्षुरमावास्यायां प्रातर्नित्याग्निहोत्रं कृत्वा ततो दर्शयागार्थं "ममाग्नेवर्च:" इत्यादिभिर्मन्त्रैर्वह्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणार्थं मन्त्रेण पलाशशाखां छिन्द्यात्। तदाह बोधायनः "तान् छिनत्तीषे त्वोर्जे त्वा" इति। आपस्तम्बस्तु तदेतदभिधाय मन्त्रभेदपक्षमपि कञ्चिदाश्रित्य विनियोगभेदमाह, "इषे त्वोर्जेत्वेति तामाच्छिनत्त्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति सन्नमयत्यनुमार्ष्टि वा" इति। सन्नमनमृजूकरणं। अनुमार्जनमानुलोम्येन संलग्नधूल्याद्यपनयनं। सोऽयं मन्त्रभेदपक्षो जैमिनिना द्वितीयाध्याये प्रथमपादे स्वीकृतः। तत्र

पलाशशाखायाः प्राशस्त्यं ब्राह्मणे समाम्नातं "तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वं" इति (ब्रा०३कां०।२प्र०।१अ०)। द्युशब्दस्याकाशे प्रसिद्धत्वात् तत्परित्यागेन स्वर्गलोकविवक्षां दर्शयितुमितः पृथिवीत आरभ्य गणनया तृतीयस्यां दिवि सोमलता पूर्वमासीदित्युक्तं। गायत्र्याः सोमाहरणं कद्रूश्च वै सुपर्णी चेति (स० ६ का०।१ प्र०।६ अनुवाके। "सोमो वै राजा गन्धर्वेष्वासीत्" इत्यस्मिन् बह्वृचब्राह्मणे च प्रपञ्चितं। तदाहरणाभिघातेन सोमस्य पर्णं भूमौ पतितं। पक्षिरूपाया गायत्र्याः पक्षः पतित इति चेत्, पतितस्य पर्णस्य पलाशवृक्षरूपेणाविर्भावात् तस्य वृक्षस्य पर्णनाम सम्पन्नं। न चास्य पर्णस्य कथं वृक्षत्वमिति विस्माययितव्यं,विधातुरीश्वरस्याचिन्त्यशक्तित्वात्। अन्यथा वीजवृक्ष इत्यत्रापि क्व वीजं कुत्र वा वृक्षः इत्ययं विस्मयः केन वार्येत। सर्वत्र पर्णेभ्यो वृक्षः प्रसज्येतेत्ययमतिप्रसङ्ग ईश्वरसङ्कल्पाभावेन परिहर्तव्यः। स च सङ्कल्पः कार्यैकसमधिगम्यः। तस्माद्वेदार्थे कुतर्कैर्न चोदनीयं। शाखया वत्सापाकरणं विधत्ते "ब्रह्म वै पर्णः। यत्पर्णशाखया वत्सानपाकरोति। ब्रह्मणैवैनानपाकरोति" (ब्रा०३का०।२प्र०।१अ०)। यथा जगन्निष्पादकं ब्रह्म प्रशस्तं तथा यागनिष्पादकस्य पलाशस्य प्रशस्तत्वाद् ब्रह्मत्वेन स्तुतिः। वैशब्देनार्थवादान्तरोपपादिता पलाशस्य ब्रह्मसम्बन्धप्रसिद्धिः सूच्यते। देवेषु परस्परं ब्रह्मतत्त्वं निरूपयत्सु पलाशवृक्षः तत्त्वमशृणोदित्येतादृशो ब्रह्मसम्बन्धः। औपानुवाक्यकाण्डे द्युरूपं वर्ण-

यित्वा विधिशेषोऽर्थवादे श्रूयते "देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम। यस्य पर्णमयी जुहूर्भवति। न पापꣳ श्लोकꣳ शृणोति" इति। एवं यत्र यत्रार्थवादे प्रसिद्धिसूचका वैशब्दहिशब्दादयः पठ्यन्ते तत्र सर्व्वत्र सति सम्भवे लौकिकप्रसिद्धिः, अन्यथार्थवादान्तरप्रसिद्धिरिति द्रष्टव्यं। वत्सापाकरण इव गोप्रस्थापनेऽपि शाखां विनियुङ्क्ते "गायत्रो वै पर्णः। गायत्राः पशवः। तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि। त्रिपदा गायत्री। यत्पर्णशाखया गाः प्रार्पयति। स्वयैवैना देवतया प्रार्पयति" इति (ब्रा०३कां०।२प्र०।१अ०) पर्णस्य गायत्रीसम्बन्धो वेदगम्यः सोमाहरणद्वारजः। स च पूर्व्वमुदाहृतः। अनुमानगम्योऽप्यपरः सम्बन्धोऽस्ति गायत्रीपादेष्विव पलाशपर्णेषु त्रित्वावगमात्। पशूनाञ्च गायत्रीदेवतेत्ययमर्थोऽन्यत्र द्रष्टव्यः। छेद्यायाः पलाशशाखायाः बहुपर्णत्वप्रागग्रत्वादिगुणान् विधत्ते "यङ्कामयेतापशुः स्यादिति। अपर्णां तस्मै शुष्काग्रामाहरेत्। अपशुरेव भवति। यं कामयेत पशुमानत्स्यादिति। बहुपर्णां तस्मै बहुशाखामाहरेत्। पशुमन्तमेवैनं करोति। यत्प्राचीमाहरेत्। देवलोकमभिजयेत्। यदुदीचीं मनुष्यलोकं। प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै" इति (ब्रा०३कां०।२प्र०।१अ०)। यं यजमानमुद्दिश्याध्वर्युः कामयेत। स्पष्टमन्यत्। यथोक्तशाखाच्छेदने कं मन्त्रं पठेदित्याशङ्क्योदाहरति "इषे त्वोर्जे त्वेत्याह" इति (ब्रा०३का०।२प्र०।१अ०)। अस्मिन्मन्त्रे विनियोगानुसारेण छिनद्मीति पदमध्याहृत्य वाक्यं पूरणीयं। यदन्नं सर्व्वैः

प्राणिभिरिष्यमाणत्वाद् बलहेतू रसः ऊर्जबलप्राणनयोरिति धातुः। ऊर्ज्यते बलं सम्पाद्यते अनया रसरूपयेत्यूर्क्। हे पलाशशाखे *देवान्नरूपदध्यर्थं त्वामाच्छिनद्मि। तस्य देवस्य बलप्रदरसार्थं त्वामाछिनद्मीति वाक्यार्थः। मन्त्रद्वयपक्षे विनियोगानुसारेणोर्जे त्वामनुमार्ज्मीत्यध्याहर्त्तव्यं। एतन्मन्त्रस्तात्रकमर्थवादमाह "इषमेवोर्जं यजमाने दधाति" (ब्रा०३कां०।२प्र०।१अ०)। एतन्मन्त्रं पठन्नध्वर्युः भोजनायान्नं बलाय रसञ्च यजमाने सम्पादयत्येव। न चात्र प्रत्यक्षविरोध आशङ्कनीयः, "ग्रावाणः प्लवन्ते" इत्यादिवदस्यार्थवादस्य प्रशंसारूपगुणवादत्वाङ्गीकारात्। मन्त्रान्तरविनियोगमाह बोधायनः "तया वत्सानपाकरोति वायव स्थोपायव स्थ" इति। वान्ति गच्छन्तीति वायवो गन्तारः, उपसमीपे यजमानगृहे पुनरायन्त्यागच्छन्तीत्युपायवः। हे वत्साः तृणभक्षणाय प्रथमं मातृसकाशादपेत्य स्वेच्छयैवारण्ये गन्तारो भवत सायं पुनर्यजमानगृहे समागन्तारो भवत। अथ वा वत्सानां परम्परया वायुदेवताकत्वादभेदविवक्षया वायुरूपत्वं ब्रुवन्नध्वर्युस्तद्रक्षार्थं वत्सान् वायुदेवतायैव समर्पयति। अनेनैव प्रकारेण मन्त्रस्य पूर्व्वभागो ब्राह्मणेन व्याख्यायते "वायव स्थेत्याह। वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददाति" इति (ब्रा०३का०।२प्र०।१अ०)। अध्यक्षा इति वचनव्यत्ययः। वायुः स्वप्रचारेणान्तरिक्षमधितिष्ठति। अन्तरिक्षे च विस्रम्भसञ्चाराय बहुलमवकाशं प्रय-

* देवानां भागेति का०।

च्छन् वत्सान् पालयति सेयं प्रत्यक्षप्रसिद्धिरर्थवादान्तरगतस्व-स्वामिभावो वा वैखलुशब्दैर्द्योत्यते। तस्यैव मन्त्रभागस्य प्रकारा-न्तरेणाभिप्राय आम्नायते "प्र वा एनानेतदाकरोति। यदाह। वायव स्थेति" (ब्रा°३का०।२प्र०।१अ०)। अध्वर्युरिमं भागमु-च्चारयति यदेतेनोच्चारणेन वत्सान् वायुतादात्म्यलक्षणप्रकृष्टा-कारवतः करोति। उत्तरभागं व्याचष्टे "उपायव स्थेत्याह। यजमानायैव पशूनुपह्वयते" इति (ब्रा°३का०।२प्र०।१अ०)। विनियोगमाह बोधायनः "अथैषां मातॄः प्रेरयति। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देव-भागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मामावस्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परिवो वृणक्तु"इति। आपस्त-म्बस्तु त्रीनेतान्मन्त्रानभिप्रेत्य विनियोगत्रयमाह"देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति, प्रस्थितानामे-काꣳ शाखयोपस्पृशति, दर्भैर्दर्भपुञ्जीलैर्वा" "आप्यायध्वं" इति। "रुद्रस्य हेतिः परिवो वृणक्त्विति प्रस्थिता अनुमंत्रयते" इति। हे गावः प्रेरको देवोऽन्तर्यामी परमेश्वरोऽत्यन्तश्रेष्ठायेन्द्राय दधिरूपाय कर्मणे युष्मानरण्ये घासमत्तुं *प्रार्पयतु प्रथममन्त्र-स्यार्थः। तस्य मन्त्रस्य पूर्वभागे स्थितस्य सवितृपदस्य तात्पर्यं व्याचष्टे "देवो वः सविता प्रार्पयत्वित्याह प्रसूत्यै" (ब्रा०३का०। २प्र०।१अ०)। प्रेरणायेत्यर्थः। उत्तरभागं व्याचष्टे "श्रेष्ठतमाय कर्मण इत्याह। यज्ञो हि श्रेष्ठतमं कर्म। तस्मादेवमाह" (ब्रा०

---

* प्रेरयत्विति तै०।

३का०।२प्र०।१अ०)। द्वितीयमन्त्रस्यायमर्थः। हे अघ्नियाःगावो देवस्येन्द्रस्य दधिरूपं भागमाप्यायध्वं प्रभूतघासभक्षणेन प्रवृद्धं कुरुत। युष्मानपहर्तुं स्तेनश्चोरो मेशत शक्तो मा भूत्। कीदृशी-र्युष्मान्। अत्यन्तरसा अधिकक्षीरा बह्वपत्याः क्रिमिदोषरहिता रोगान्तरहीनाश्च अघशंसो भक्षणादिना तीव्रपापेन घातको व्याघ्रादिरपि शक्तो मा भूदिति। अस्य मन्त्रस्य प्रथमभागे देव-भागमिति पदतात्पर्यं व्याचष्टे "आप्यायध्वमघ्निया देवभागमि-त्याह। वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायन्त। देवेभ्य एवैना इन्द्रायाप्याययति" इति (ब्रा०३का०।२प्र०१अ०)। या-गार्थप्रवृत्तेः पुर्वं गोग्रासेन वत्सभागो मनुष्यभागश्च प्रवृद्धो भ-वति। ऊर्द्धं तु क्षीराज्यरूपो देवान्तरभागो दधिरूप इन्द्रभा-गश्च प्रवर्धते। एवकारेण मनुष्यभागव्यावृत्तिः। द्वितीयं भागमु-पपादयति "उर्जस्वतीः पयस्वतीरित्याह। ऊर्जं॒ हि पयः सम्भर-न्ति"(ब्रा०।३का०।२प्र०।१अ०) प्रभूतघासभक्षणेन रसाधिक्यस-म्पादनं क्षीराधिक्यसम्पादनञ्च लौकिकदोहे प्रसिद्धमिति हिश-ब्दस्यार्थः। तृतीयभागस्य प्रयोजनमाह "प्रजावतीरनमीवा अय-क्ष्मा इत्याह प्रजात्यै"(ब्रा०।३का०।२प्र०।१अ०)। वन्ध्यात्वे क्रि-मिदोषेण रोगान्तरे च नास्ति प्रजोत्पत्तिः तदभावे तु विद्यते। चतुर्थभागस्य प्रयोजनमाह "मा वस्तेन ईशत माघशं॑स इत्याह गुप्त्यै" (ब्रा०३का०।२प्र०।१अ०)। चोरव्याघ्रादेरशक्तौ गावो र-क्षिता भवन्ति। तृतीयमन्त्रस्यायमर्थः। रुद्रनामकस्य क्रूरदेवस्या-युधं युष्मान् परिहरत्विति। एतन्मन्त्रपाठफलमाह "रुद्रस्य हेतिः

परिवो वृणक्तित्याह। रुद्रादेवैनास्त्रायते" (ब्रा०३का०।२प्र०।
१अ०)। बोधायनः "ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमा-
नमीक्षते" इति। आपस्तम्बः "ध्रुवा अस्मिन् गोपतौ स्यात
बह्वीरिति यजमानस्य गृहानभिपर्यावर्तत" इति। हे गावो भव-
त्यो भवत्स्वामिनि यजमाने स्थिरा भवत, न तु अप्रीतिदाना-
पहाराल्पायुभिर्यजमानं परित्यजत, अपत्यपरम्परया बह्व्यश्च
भवत। एतन्मन्त्रपाठं प्रशंसति "ध्रुवा अस्मिन् गोपतौ स्यात
बह्वीरित्याह। ध्रुवा एवास्मिन् बह्वीः करोति" (ब्रा०३का०।
२प्र०।१अ०)। बोधायनः "अथैतां शाखामग्रेणाहवनीयं पर्याहृत्य
पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेनसि, उत्तरार्धे वाऽ-
न्यागारस्योद्गूहति, यजमानस्य पशून् पाहि" इति। आपस्तम्बः
"यजमानस्य पशून् पाहीत्यग्निष्ठेनसऽन्यागारे वा पुरस्तात प्रती-
चीꣳ शाखामुपगूहति पश्चात् प्राचीं वा" इति। अग्निष्ठं अनो
व्रीहिरूपस्य हविषो वाहकं शकटं। मन्त्रपाठप्रयोजनमाह
"यजमानस्य पशून् पाहीत्याह। पशूनां गोपीथाय। तस्मात् सायं
पशव उप समावर्तन्ते" (ब्रा०३का०।२प्र०।१अ०)। गोपीथो
रक्षणं तस्माच्छाखाया रक्षितत्वाच्छाखाया भूमौ स्थापनं नि-
वार्यते। तन्निवारणफलमाह "अनधः सादयति। गर्भाणां धृत्या
अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः" (ब्रा०३का०।२
प्र०।१अ०)। उच्चदेशस्थापनं तत्फलञ्चाह "उपरीव निदधाति।
उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०३
का०।२प्र०।१अ०)। इवशब्द एवकारार्थः। समष्टिः सम्यग्व्याप्तिः।

अस्मिन् अनुवाके स्थितानां मन्त्राणां विनियोगः संगृह्यते।

"इषे शाखाच्छिनत्यूर्जे मार्ष्टिवा एति वत्सकान्।
अपाकृत्याथ देवो गाः प्रस्थाप्याप्येति गां स्पृशेत्॥
रुद्रस्येत्यभिमन्त्र्यैतान्ध्रुवेति गृहमाव्रजेत्।
यजेति शाखोपगूह इत्यष्टावनुवाकगाः॥ इति।
सूत्रद्वयं ब्राह्मणं च विरोधार्थमुदाहृतं।
सन्देहस्यापनुत्यर्थं मीमांसाप्यत्र वर्ण्यते"॥

अथ मीमांसा। लोके तावद्विचारेण सन्देहनिवृत्तिः प्रसिद्धा वेदेऽपि तत्र तत्र तत्त्वविचारपूर्व्वकं सन्देहापनयनमुपलभामहे। तथा ह्यग्न्युपस्थानविषयविवादे विचारः प्रथमकाण्डे पञ्चमप्रपाठके नवमेऽनुवाके श्रूयते। "उपस्थेयोऽग्नी३ र्नोपस्थेया३ इत्याहुर्मनुष्या येऽन्वे योऽहरहराहृत्याथैनं याचति स इन्वैतमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषैवैकं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" इति। अस्यायमर्थः। प्रतिदिनं सायं प्रातरग्निहोत्रमनुष्ठायोपप्रयन्तोऽध्वरमित्यादिभिर्मन्त्रैरग्निप्रार्थनलक्षणमुपस्थानं कर्त्तव्यं नवेति संशयः। न कर्त्तव्यमिति तावत् प्राप्तं। कुतः। उपस्थानेनाग्नेरुपद्रवप्रसंगात्। तथाहि "आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाहि"इत्यादिषूपस्थानमन्त्रेषु चायुरादीनि बहूनि याच्यन्ते। तत्र यजमानः स्वल्पं हविर्दत्वा बहूनि याचमानः कथमग्निं न बाधेत। लोकेऽपि

यःकश्चिद्दरिद्रो मनुष्यो यत्किञ्चिज्जम्बीरफलादिकं मनुष्यायैव राज्ञे प्रतिदिनमुपायनमानीय दत्त्वा तं राजानं प्रति सहस्र-सङ्ख्याकं धनं याचति,स याचकस्तं राजानं पीडयत्येव स च राजा तं कुप्यति। यदा मनुष्येष्वप्येवं तदा को नामाग्न्यादीन् देवान्महाप्रभावान् प्रतिदिनं याचितुं धृष्टो भवेत् तस्मादग्निर्नोपस्थेय इति पूर्वपक्षे प्राप्ते राद्धान्तोऽभिधीयते। इदं मे भूयादिदं मे भूयादित्येवं स्वाभीष्टमखिलमाशासितुमेव यजमानः प्रजापतिरूपमिममग्निं यजते। आहिताग्नेर्यजमानस्य मन्त्रैरुपस्थानमेवाशीः। न चात्र हविषोऽल्पत्वं शङ्कनीयं, मन्त्रसामर्थ्येन वर्धमानत्वात्। तथा च श्रूयते। "धान्यमसि धिनुहि देवानित्याह। एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति" इति (ब्रा०३का०।२प्र०।६अ०)। तस्मान् मनुष्याणां क्रयविक्रयाविव यजमानदेवतयोर्यागतत्फले विस्तरेण* व्यवहर्तुं शक्यते। अतएव भगवद्गीतायां तृतीयाध्याये कर्मानुष्ठानकर्त्तव्यता प्रसङ्गेन स्मर्यते।

"देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ"॥ इति।

तस्माद्धविषो जम्बीरफलादिवैलक्षण्येनोक्तदोषाभावादग्निरुपस्थेय एवेति राद्धान्तः। एतदेव द्रढयितुंवाक्यशेषे राज्ञ इव देवतायाः कोपप्रसङ्गो नास्तीत्यभिप्रेत्य श्रूयते "न तत्र जाम्य-

---

* विस्रंम्भेण इति का०।

स्तोत्याहुर्यो ऽहरहरुपतिष्ठते" इति। यथा पञ्चमकाण्डस्य पञ्चमप्रपाठके प्रथमानुवाकेऽग्निचयनगतस्य कस्यचित् पशोर्देवताविशेषो विचारितः। "वायव्यः कार्या३ प्राजापत्या३ इत्याहुः" इति। तत्रैव तृतीयानुवाके चीयमानस्याग्नेरधोमुखत्वमूर्ध्वमुखत्वं वेति विचारितं। "ब्रह्मवादिनो वदन्ति न्यग्निश्चेतव्या३ उत्ताना३ इति"। षष्ठकाण्डस्य प्रथमप्रपाठके चतुर्थानुवाके होमो विचारितः। "ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३ इ न होतव्या३ मिति"। तत्रैव नवमानुवाके क्रेतव्ये सोमे पतिततृणादिकमपनेयं वा नवेति विचारितं। "ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति"। तस्मिन्नेव काण्डे तृतीयप्रपाठकेऽष्टमानुवाकेऽध्वर्युयजमानयोः पशुस्पर्शो विचारितः। "ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३ र्नान्वारभ्या३ इति"। तत्रैव पञ्चमप्रपाठके नवमानुवाके सोमयागस्य तृतीयसवने हारियोजननामकग्रहं प्रति होमो विचारितः। "तं व्यचिकित्सञ्जुहवानी३ माहौषा३ मिति"। तत्रैव षष्ठप्रपाठके द्वितीयानुवाके देवभागनामकं मुनिं प्रति सात्यहव्यनामको मुनिः पप्रच्छ। यज्ञाङ्गे देवा गातुविद इत्येतन्मन्त्रहोमे सोमयागं समापितवानसि यजमानो वेति प्रश्नार्थः। स प्रश्न एवं श्रूयते। "वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत् सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा३ *यज्ञपता३ विति स होवाच"। सप्तमकाण्डस्य प्रथमप्रपाठके सप्तमानु-

* ष्ठिपा३ का॰।

वाके गर्गत्रिरात्रनामकस्य यागस्य दक्षिणारूपे गोसहस्रे चरमधेनोरनुगमनं पुरोगमनं वेति विचारितं। "सहस्र९ँ सहस्रतम्यन्वेती३ सहस्रतमी३९ँ सहस्रा३ मिति"। तत्रैव पञ्चमप्रपाठके सप्तमानुवाके गवामयनविकृतिरूपस्योत्सर्गिणामयनस्य सम्बन्धि किञ्चिदहः परित्याज्यं न वेति विचारितं। "उत्सृज्यां३ नोत्सृज्या३ मितिमीमा९ँ सन्तेब्रह्मवादिनः" इति। एवं ब्राह्मणान्तरेष्वपि विचारा उदाहरणीयाः। तदेवं वेदवादिनां विचारपूर्वकेऽर्थनिर्णये तात्पर्यातिशयदर्शनात् सर्वोऽपि वेदार्थो विचार्य निर्णेतव्य इत्यनुगम्यते। तथा सति पुनः संशयो नोदेष्यति, अन्यथा कदाचित् स्वबुद्धौ पूर्वपक्षयुक्तिप्रतिभाने सति विपरीतनिर्णयः संशयो वा प्रसज्येत। अतएवोक्तं "धर्मे प्रमीयमाणे हि वेदेन करणात्मना" इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति। स्मृतिरपि।

"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥ इति।

आर्षं ब्रह्मज्ञानं। तस्मा*ज्जैमिनिबादरायणाभ्यां मीमांसा वर्णिता*। येषु वाक्येषु संशयो नास्ति तेष्वपि मीमांसया किञ्चिदपूर्वं जन्यते। अतएव स्मर्यते।

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरं।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ" ॥ इति।

तस्मादस्माभिस्तत्तदनुवाकेषु सम्भाविता मीमांसोदाह्रीयते। प्रथमन्तावत् सर्ववेदसाधारणान् विचारानुदाहरिष्यामः। यद्-

---

* तस्य का०।　　* प्रवर्त्तिता का०।

ऋामलौकिकार्थबोधको वेद इति। तत्र वेदार्थो द्विविधः। धर्मो ब्रह्म च। तयोर्धर्मं प्रति विचारितं।

"प्रत्यक्षादिभिरप्येष गम्यते विधिनाऽथवा।
अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता॥
वर्त्तमानैकविषयमक्षधर्मस्तु भाव्यसौ *।
अक्षमूलानुमानाद्युस्तेन विध्येकमेयता"॥ इति।

स्पष्टार्थः। अत्र ब्रह्मतत्त्वं प्रत्यप्येवं विचारितं।

"अस्त्यैन्यमेयताप्यस्य किं वावेदैकमेयता।
घटवत् सिद्धवस्तुत्वाद् ब्रह्मान्येनापि मीयते।
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता।
तं त्वौपनिषदित्यादौ प्रोक्ता वेदैकमेयता"॥ इति

"तं त्वौपनिषदंपुरुषं पृच्छामीति याज्ञवल्क्यं शाकल्यः पप्रच्छ"। तत्र उपनिषत्स्वेवाधिगतः पुरुष औपनिषदः। आदिशब्देन "नावेदविन्मनुते तं बृहन्तं" इति श्रुतिर्विवक्षिता। तस्मादलौकिकार्थबोधको वेदः तस्य प्रामाण्यं विचारितं।

"वेदवाक्यममानं स्यान्मानं वा नास्य मानता।
पृथक् सङ्केतवीक्षायामनपेक्षत्ववर्जनात्॥
वेदेऽपि लोकवन्नैव वाक्यार्थे सङ्गतिः पृथक्।
ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः"॥ इति।

अग्निमीळे पुरोहितं इषे त्वेत्यादिपदानां पृथक् सङ्केतापेक्षैः स्वार्थे सहसङ्गतिः वृद्धव्यवहारे गृहीतेति पदार्था बुध्यन्ते।

* ते दश्म का०।

तेति पदार्था बुध्यन्ते। ज्योतिष्टोमादिवाक्यस्य सत्यज्ञानादिवाक्यस्य च स्वार्थाभ्यां धर्मब्रह्मभ्यां सङ्गतेरगृहीतत्वादस्ति पृथक् सङ्केतापेक्षा, तस्मादनपेक्षत्वलक्षणं प्रामाण्यं नास्तीति चेत्, मैवं, लोके तावद्गवादिपदानामेव स्वार्थे सङ्गतिर्गृह्यते न तु गामानयेतिवाक्यानां, तथाऽपि वाक्यार्थो बुध्यत एव, तद्वद्वेदेऽपि बोधसम्भवादस्त्येव नैरपेक्ष्यं। वृद्धव्यवहारे लौकिकयोरेव पदपदार्थयोः सङ्गतिर्गृह्यते, न तु वैदिकयोरितिशङ्कां वारयितुं विचार्यते। इदं विचारितं।

"लोके पदपदार्थौ यौ न तौ वेदेऽथवाऽत्र तौ।
रूपभेदात् पदं भिन्नमुत्तानाद्यभिधा स्फुटा॥
वर्णैकत्वात् पदैकत्वं क्वाचित्की रूपभिन्नता।
प्रायिकेण पदैक्येन पदार्थैक्यं तथा स्मृतं"॥ इति।

वैदिकौ पदपदार्थौ लौकिकाभ्यां भिन्नौ। कुतः। रूपभेदात्। ब्राह्मणा इति लौकिकपदस्य रूपं वेदे ब्राह्मणासः पितर इत्याम्नायते। अर्थभेदोऽप्यस्ति। अर्वाञ्चि लौकिका गावो वहन्ति। वेदे तु "उत्तानायै देवगवा वहन्ति" इति श्रुतं। अत्रोच्यते। य एव लौकिकाः पदपदार्थास्त एव वैदिकाः। कुतः। प्रत्यभिज्ञानात्। यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकपुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इत्यबाधितप्रत्यभिज्ञानाद्वर्णैकत्वं तन्नित्यत्ववादिभिरभ्युपगतं तथा गवाश्वादिपदानां लोकवेदयोरबाधितप्रत्यभिज्ञानात् पदैकत्वं। क्वाचित्को रूपभेदो बहुतरप्रत्यभिज्ञया बाध्यते, उत्तानवहनाद्यर्थभेदस्य क्वाचित्कः।

किञ्चोत्तानशब्दवद्दृमशब्दयोस्तदर्थयोश्च भेदो नास्ति तस्माद-
भेदाद्वेदे पृथग्व्युत्पत्तिर्नापेक्षिता। तथा चोक्तं।

"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः" ॥ इति।

कर्तृदोषादप्रामाण्यं वारयितुमिदं विचारितं।

"पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत्॥
समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतं।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता" ॥ इति।

वाल्मीकीयं वैयासिकीयमित्यादिसमाख्यानाद्रामायणभा-
रतादिकं यथा पौरुषेयं तथा काठकं कौथुमं तैत्तिरीयमि-
त्यादिसमाख्यानाद्वेदः पौरुषेयः। किञ्च वेदवाक्यं पौरुषेयं वा-
क्यत्वात् कालिदासादिवाक्यवदिति चेत्, मैवं, सम्प्रदायप्रवृत्त्या
समाख्योपपत्तेः। वाक्यत्वहेतुस्त्वनुपलब्धिविरुद्धकालात्ययाप-
दिष्टः। यथा व्यासवाल्मीकिप्रभृतयस्तद्ग्रन्थनिर्म्माणावसरे कै-
श्चिदुपलब्धाः, अन्यैरप्यविच्छिन्नसम्प्रदायेनोपलभ्यन्ते, न तथा
वेदकर्त्ता पुरुषः क्वचिदुपलब्धः। प्रत्युत वेदस्य नित्यत्वं श्रुति-
स्मृतिभ्यां पूर्व्वमुदाहृतं। परमात्मा तु वेदकर्त्ताऽपि न लौकि-
कपुरुषः, तस्मात् कर्तृदोषाभावान्नास्त्यप्रामाण्यशङ्का तेष्वेतेषु
विचारेषु ब्रह्मणो मानान्तरागोचरत्वं वैयासिके शास्त्रे प्रथ-
माध्याये प्रथमपादे "शास्त्रयोनित्वात्" इत्यस्य सूत्रस्य द्वितीयव-
र्णकेऽभिहितं, अवशिष्टन्तु जैमिनीये। तत्रापि लोकवेदाधिकरणं

प्रथमाध्यायस्य तृतीयपादे, इतरत् प्रथमपादे। तस्यैतस्य प्रमाणभूतस्य वेदस्य भागद्वयं कल्पसूत्रकार आह "मन्त्रब्राह्मणयोर्वेदनामधेयं" इति। तयोर्मध्ये मन्त्रसामान्यस्य मन्त्रविशेषाणामृगादीनाञ्च लक्षणं द्वितीयाध्यायस्य प्रथमपादे विचारितं।

"अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणं।
नास्त्यस्ति वाऽस्य नास्तीह व्याप्त्यादेरनिवारणात्॥
याज्ञिकानां समाख्यानलक्षणं दोषवर्जितं।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते"॥ इति।

आधानप्रकरण इदमाम्नायते"अहे बुध्निय मन्त्रं मे गोपाय" इति। तत्र मन्त्रस्य लक्षणं नास्ति। कुतः। अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। विहितार्थस्याभिधायको मन्त्र इत्युक्ते"वसन्तायकपिञ्जलानालभते" इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः। मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिरिति चेत्, मैवं, याज्ञिकसमाख्यानबलान् निर्दोषलक्षणत्वाच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति। उरु प्रथस्वेत्यादयोऽनुष्ठानस्मारकाः। अग्निमीले पुरोहितमित्यादयस्तुतिरूपाः। इषे त्वेत्यादयस्त्वां ता अग्न आयाहि वीतय इत्यादय आमन्त्रणोपेताः। एवमन्येऽप्युदाहार्य्याः। ईदृशेष्वत्यन्तविजातीयेषु समाख्यामन्तरेण नान्यः कश्चिदनुगतो धर्म्मोऽस्ति यस्य लक्षणत्वमुच्येत, तस्मात् समाख्यानं मन्त्रलक्षणं। ऋगादिलक्षणे पूर्व्वोत्तरपक्षावाह।

"ऋक्सामयजुषां लक्ष्मसाङ्कर्य्यादिति शङ्किते।
पादस्य गीतिः प्रश्लिष्टा पाद इत्यस्त्वसङ्करः"॥ इति।

इदमाम्नायते। “अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूꣳषि” इति। त्रीन् वेदान् विदन्तीति त्रिविदः। त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः। ते च यं मन्त्रभागं ऋगादिरूपेण त्रिविधं विदन्ति तं गोपायेति योजना। त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः। साङ्कर्य्यस्य दुष्परिहारत्वात्। अध्यापकप्रसिद्धेषु ऋग्वेदादिषु पठितो ऋगादिरूप इति हि वक्तव्यं, तच्च सङ्कीर्णं। तथा हि। “अग्नये मथ्यमानायानुब्रूहि। हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि” इत्यादीनि यजूंषि ऋग्वेदे समाम्नातानि। “देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्य्यस्य रश्मिभिः” इत्ययं मन्त्रो ऋग्वेदे सम्प्रतिपन्नः, यजुषामध्ये च पठितः। न च तस्य यजुष्ट्वमस्ति ऋग्रूपत्वेन तद्ब्राह्मणे व्यवहृतत्वात्।“सावित्र्यर्चेति हि ब्राह्मणं। एतत् सामगायन्नास्ते” इति प्रतिज्ञाय“हा ३ वु हा ३ वु हा ३ वु” इत्यादिकं साम यजुर्वेदे गीतं। अच्चितमस्यच्युतमसि प्राणꣳ शंसितमसि”इति त्रीणि यजूंषि सामवेदे समाम्नायन्ते। तस्मान्नास्ति लक्षणमिति चेत्, न, पादादीनामसङ्कीर्णलक्षणत्वात्। पादेनार्द्धर्चेन चोपेता वृत्तबद्धा मन्त्रा ऋचः, गीतिरूपा मन्त्राः सामानि, वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि, इति व्यवस्थितं लक्षणं। प्रथमाध्यायस्य द्वितीयपादे मन्त्रेष्वन्यद्विचारितं।

“मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेषु तु पुरोडाशप्रथनादेश्च भासकाः॥

ब्राह्मणेनापि तज्ज्ञानान्मन्त्राः पुण्यैक हेतवः।

न तज्ज्ञानस्य दृष्टत्वाद् दृष्टं परमदृष्टतः'' ॥ इति।

उरु प्रथस्वेत्ययं कश्चिन्मन्त्रस्तस्यायमर्थः। भो पुरोडाश त्वं उरु विपुलं यथा भवति तथा कपालेषु प्रथस्वेति ईदृशमन्त्रा यागप्रयोगेषूच्चार्य्यमाणा अदृष्टमेव जनयन्ति, न त्वर्थप्रकाशनाय तदुच्चारणं। पुरोडाशप्रथनलक्षणार्थस्य ब्राह्मणवाक्येनापि भासमानत्वात्। उरु प्रथस्वेति पुरोडाशं प्रथयतीति हि ब्राह्मणवाक्यमिति चेत्। नैतद्युक्तं। अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य सम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्, तस्माद्दृष्टार्थमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनं। मन्त्रब्राह्मणवाक्येनाप्यर्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमस्तस्यादृष्टं प्रयोजनमस्तु न तु मन्त्राणामनुष्ठेयार्थस्मारकत्वं क्वचिद्व्यभिचरितं। तथा हि। "दिवो वा विष्णवुत वा पृथिव्यामहो वा विष्णवुतवान्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणा दोतसव्यात्''इत्यस्मिन्मन्त्रे धनमाशास्त इत्ययमर्थः प्रतीयते। अनुष्ठेयार्थस्तु शकटस्थापनायाधारभूतकाष्ठस्थापनं। तत्तु ब्राह्मणेन विधीयते"दिवो वा विष्णवुतवा पृथिव्या इत्याशीर्वदनयर्चादक्षिणस्य हविर्धानस्य मेधिं निहन्ति" इति। नायं दोषः, अस्याधिकरणस्य लिङ्गविनियोगविषयत्वात्, उदाहृतस्तु मन्त्रः श्रुत्या विनियुज्यते। द्वितीयाध्यायस्य प्रथमपादे मन्त्रेष्वन्यद्विचारितं।

"देवांश्चयाभिर्यजत इत्याख्यातन्तु मन्त्रगं"।

विधायकं न वाक्येन * न मन्त्रात्तद्विधायकं॥
यच्छब्दादेःक्षीणशक्तिर्न विधिस्त्रिविधस्ततः।
आख्यातमभिधानञ्च प्रधानगुणकर्म्मणि"॥ इति।

अयं मन्त्र आम्नायते। "देवाꣳश्चयाभिर्यजते ददाति च ज्योगित्ताभिस्सचते गोपतिः सह" इति। अयमर्थः। गोपतिर्यजमानो याभिर्गोभिर्देवान् यजते याश्च गा ब्राह्मणेभ्यो ददाति चिरमेव ताभिस्सह लोकेऽवतिष्ठत इति। तत्र यथा ब्राह्मणगतमाख्यातपदं प्रधानगुणकर्म्मणोरन्यतरविधायकं तथा मन्त्रगतमपीति चेत्, मैवं, यच्छब्दादिना विधिशक्तेः क्षीणत्वात्। सति हि यच्छब्दे तस्य वाक्यस्यानुवादकत्वं प्रतीयते न तु विधायकत्वं। यच्छब्दादेरित्यादिशब्देनामन्त्रणोत्तमपुरुषादयः। वायव स्थेत्यामन्त्रणं। अग्नये जुष्टं निर्वपामीत्युत्तमपुरुषः। तस्मादाख्यातस्य प्रधानकर्म्मविधायकत्वं गुणकर्म्मविधायकत्वञ्चेत्येतं द्वावेव प्रकारौ न भवतः किन्त्वभिधायकत्वमपीत्यस्ति तृतीयः प्रकारः। ततो मन्त्रगतमाख्यातं न विधा यकं। प्रधानगुणकर्म्मणोस्तु लक्षणं वक्ष्यते। एवमेतैर्विचारैरयं निर्णयः प्रकृते सम्पन्नः। इषे त्वोर्जे त्वा, ब्रह्मविदाप्नोति परं, इति काण्डद्वयप्रतिपाद्यार्थो न मानान्तरगम्यः। काण्डद्वयगतवाक्यस्य नास्ति पृथक्सङ्केतापेक्षा। तत्रत्यौ पदपदार्थौ लौकिकावेव तद्वाक्यं च न पौरुषेयं अभियुक्तसमाख्यानं मन्त्रस्य लक्षणं। प्रश्लिष्टपाठो मन्त्रविशेषस्य

* समवायादिति का०।

यजुषो लक्षणं। निर्दोषत्वादिति मन्त्रस्य स्वार्थानुष्ठानकाले स्वार्थस्मारणं प्रयोजनं। मन्त्रगतश्च वायव स्थ सविता प्रार्पयत्वित्यादिकं न विधायकमिति। इत्थं मन्त्रसामान्यं विचार्य्य विशेषो विचार्य्यते।

"इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात्॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः*" ॥ इति।

इषे त्वोर्जे त्वेत्यत्र क्रियापदाभावेनोरु प्रथस्वेति मन्त्रवदर्थस्मारकत्वाभावाददृष्टार्थत्वे सत्येकादृष्टस्य कल्पने लाघवादेक एव मन्त्र इति चेत्। मैवं। शाखान्तरे इषे त्वेत्याच्छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीति विनियोगभेदश्रवणात्। तदनुसारेणेषे त्वाच्छिनद्मि। ऊर्जे त्वाऽनुमार्ज्मीति क्रियापदेऽध्याहृते सत्यर्थद्वयस्मारकत्वाद्भिन्नोऽयं मन्त्रः। अथ ब्राह्मणविषया विचाराः। तल्लक्षणं द्वितीयाध्याये प्रथमपादे विचारितं।

"नास्त्येतद्ब्राह्मणेऽत्यत्र लक्षणं विद्यतेऽथवा।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः॥
मन्त्रश्च ब्राह्मणश्चेति द्वौ भागौ तेन मन्त्रता।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणं" ॥ इति।

चातुर्मास्य इदमाम्नायते। "एतद्ब्राह्मणान्येव पञ्च हवींषि"

* क्रियाभेदात् का०।

इति। तत्र ब्राह्मणस्य लक्षणं नास्ति। कुतः। वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वादिति चेत्। न। भागद्वयाङ्गीकारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मणमिति लक्षणस्य निर्दोषत्वात्। ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयोऽपि भागा आम्नायन्ते।"यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथानाराशꣳसीः" इति। मैवं। विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्। "देवासुराः संयत्ता आसन्" इत्यादय इतिहासाः। "इदं वा अग्रेनैव किञ्च नासीत् न द्यौरासीत्" इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणं। कल्पास्त्वारुणकेतुकचयनप्रकरणे समाम्नायन्ते।"इति मन्त्राः।कल्पोऽतऊर्द्ध्वं। यदि बलिꣳ हरेत्"इति।अग्निचयने यमगाथाभिः परिगायतीति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः। तस्मान्मन्त्रब्राह्मणव्यतिरिक्तभागाभावाल्लक्षणं सुस्थं। तच्च ब्राह्मणं द्विविधं। विधिरूपमर्थवादरूपञ्चेति। "यत् पर्णशाखया वत्सानपाकरोति" इति विधिः। "तृतीयस्यामितो दिवि सोम आसीत्" इत्यादिकोऽर्थवादः। तत्र विधेः प्रामाण्यं प्रथमाध्यायस्य प्रथमपादे विचारितं।

"अबोधको बोधको वा न तावद्बोधको विधिः।
शक्तेरलौकिके धर्म्मे ग्रहणं दुर्घटं यतः॥
सम्भिव्याहृते धर्म्मे शक्तिग्रहणसम्भवात्।

बोधकस्य विधे*र्मानमनपेक्षतया स्थितं" ॥ इति ॥

धर्मो नामानुष्ठानजन्यमपूर्वं तद्धेतुर्यागो वा तस्यालौकिकत्वेन गवाद्यर्थवद्वृद्धव्यवहाराविषयत्वात् सङ्गतिग्रहणं नास्ति अतो विधेरबोधकत्वादप्रामाण्यमिति चेत्। मैवं। प्रसिद्धार्थैः पर्णशाखादिपदैः समभिव्याहृतस्यापाकरोतीति पदस्यापूर्व्वपर्य्यवसायिन्यर्थे शक्तिग्रहणसम्भवात्। यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिवतीत्यत्र मधुकरपदस्यार्थमजानान इतरपदार्थानामर्थमवगत्य तत्समभिव्याहारात् कमलमध्यगते मधुपानं कुर्व्वति भ्रमरे मधुकरशब्दस्य सङ्गतिं गृह्णाति, तद्वत्, अतो बोधकत्वान्मूलप्रमाणानपेक्षत्वाच्च विधिः स्वत एव प्रमाणं। न च "वत्सानपाकरोति" इत्यत्र विधायकानां लिङ्लोट्तव्यप्रत्ययानामभावादविधित्वमिति शङ्कनीयं कल्पकोपनीतपदपूर्व्वार्थत्वेन पञ्चमलकाराश्रयणे विधित्वसम्भवात्। एतच्च तृतीयाध्यायचतुर्थपादे विचारितं।

"उपन्यासे*ऽनुवादो वा विधिर्वाऽऽद्यो यतः स्मृतौ।
प्राप्तं मैवम पूर्व्वत्वात् क्रतौ लेटा विधीयते" * ॥ इति ॥

दर्शपूर्णमासप्रकरणे कल्पकत्वेन वस्त्रस्योपवीतत्वमेवसमाम्नायते "देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत" इति। तदिदं वाक्यमुपवीतत्वस्यानुवादकं वा विधायकं वेति संशयः, नित्योदकी नित्ययज्ञोपवीतीति स्मृत्या प्राप्तत्वात्। विधायकानां

---

*धर्म्मन्त्वेति का०। *उपध्याने इति का०। *वेदाद्विधीयत इति का०।

लिङादीनामभावाच्चानुवादकमिति प्राप्ते ब्रूमः। पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात् पञ्चमलकारेण दर्श-पूर्णमासाङ्गतया विधीयत इति राद्धान्तः। तेनैव न्यायेन वत्सानपाकरोतीत्ययं न प्रथमलकारः किन्तु पञ्चमलकारः। तस्य च विधायकत्वं लिङर्थे लेडिति सूत्रेण सिद्धं। नन्वेवमपि यत् पर्णशाखयेत्यनुवादकत्वगमकेन यच्छब्देन विधिशक्तिः प्र-तिपाद्यते "देवाꣳस्त्वयाभिर्यजते" इति वदिति चेत्। मैवं। रिधारणन्यायेन यच्छब्दस्यबाधितत्वात्। स च न्यायस्तस्मिन्नेव पादेऽभिहितः।

"धारयन्नुपरिष्टाद्धि देवेभ्य इति संस्तवः।
विधिर्वाऽधोधृतेः पित्र्ये प्राप्तायाः पूर्व्ववत् स्तुतिः॥
ऊर्द्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः।
अतो हिशब्द सन्त्यागादपूर्व्वार्थो विधीयते"॥ इति॥

प्रेताग्निहोत्रे श्रूयते। "अधस्तात् समिधं धारयन्नुद्रवेदुपरि-ष्टाद्धि देवेभ्यो धारयति" इति। अत्र पित्र्यं हविर्होतुं हस्ते धारयन् यदो द्रवति तदानीमुद्धृतस्याधस्तात्समिधं धारयेदिति यद्विधीयते तदेतद्वैविकेनोपरिधारणेन स्तूयते। कुतः। हि-शब्देनानुवादत्वप्रतीतेः। तत्रत्ये पूर्व्वाधिकरणे "प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति। ये पुरोदञ्चोदर्भा-स्तान्दक्षिणाग्रां स्तृणीयात्" इत्यस्मिन्नुदाहरणद्वये यज्ञोपवीति-त्वोदगग्रत्ववाक्ययोर्हिशब्दयच्छब्दयुक्तयोर्विधायकत्वमपोह्यार्थवा-दत्वं निर्णीतं। तद्वदत्रापीति प्राप्ते ब्रूमः। विषमो दृष्टान्तः

दैविके यज्ञोपवीतित्वोदगयत्वयोर्मानान्तरप्राप्तत्वाद्धिशब्दयच्छब्दाववबाधितत्वात् तत्रार्थवादत्वं वक्तुमुचितं, उपरिधारणे त्वप्राप्तत्वाद्धिशब्दं परित्यज्य विधिरेवाभ्युपगन्तव्यः। एवं सति वत्सापाकरणस्याप्यपूर्व्वार्थत्वात् यच्छब्दपरित्यागेन विधिरेव युक्तः। ननु लोके सायन्दोहार्थिभिः प्रातर्वत्सा गोभ्योऽपाक्रियन्ते, अतो लोकत एव प्राप्तत्वान्न वत्सापाकरणं विधेयमिति चेत्। मैवं। अवघातवन्नियमापूर्व्वहेतुत्वेन विधेयत्वात्। अवघातन्यायश्च द्वितीयाध्यायस्य प्रथमपादे वर्णितः।

"अवघातादिनाऽपूर्व्वमुत्पाद्यं विद्यते न वा।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥
दृष्टे तुषविमोकेऽस्ति नापूर्व्वं द्रव्यतन्त्रता।
स्याद्यजत्यादि वैषम्यं नियमापूर्व्वकृद्वचः"॥ इति॥

यथा समिधो यजतीत्यत्र यागजन्यमपूर्व्वमस्ति तथा व्रीहीनवहन्यादित्यत्रापि तदभ्युपेयं, अन्यथा विधिवाक्यवैयर्थ्यप्रसङ्गादिति चेत्। न। दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वात्। न चात्र यजत्यादिविधिसाम्यमस्ति गुणकर्म्मत्वेनावघातस्य द्रव्यतन्त्रत्वात्। यागस्तु प्रधानकर्म्म। अनयाश्च कर्म्मणां भेदो जैमिनिना सूत्रत्रयेण स्पष्टीकृतः॥"तानि द्वैधं गुणप्रधानभूतानि"।"यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्"। "यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्" इति॥ यैस्तु कर्म्मभिर्द्रव्यमुत्पादयितुं संस्कर्त्तुं वेष्यते तेषु कर्म्मसु गुणत्वं। कुतः। तस्य कर्म्मणो द्रव्यप्रधानत्वात्। द्रव्यं प्रधान-

मस्येति बहुव्रीहिः। यूपं तक्षत्यावहनीयमादधातीत्यादौ यूपा-हवनीयादिद्रव्यमुत्पादयितुमिष्यते। व्रीहीनवहन्ति तण्डुलान् पिनष्टीत्यत्र व्रीह्यादिद्रव्यं संस्कर्त्तुमिष्टं। आज्येन प्रयाजा इज्यन्त इत्यादिषूक्तवैपरीत्यात् प्रधानकर्म्मत्वं, अतो यजति वैषम्यादवघातोऽपूर्व्वजनकः। न च विधिवाक्यवैयर्थ्यं। नखविदलनादिनापि तण्डुलनिष्पत्तिसम्भवे सति अवघातेनैव तण्डुला निष्पादनीया इति तन्नियमजन्यमपूर्व्वं बोधयितुं विधेरपेक्षितत्वात्। तद्वच्छाखीयापाकरणेनैव सायं दोहः सम्पादनीय इति नियमविधिरस्तु। उक्तेषु विधिसामान्यविचारेष्वेते निर्णयाः सम्पन्नाः। विधिरलौकिकधर्म्मबोधकः पञ्चमलकाराश्रयणेन विधायकत्वं। अप्राप्त्यर्थे यच्छब्दादयो न त्रिविधबाधकाः। संस्कारकर्म्म दृष्टार्थे सम्भवेऽपि नियमापूर्व्वार्थमपीति। शाखाहरणे तु चतुर्थाध्यायस्य द्वितीयपादे किञ्चिद्विचारितं।

"प्राचीमाहरतीत्यत्र दिक्शाखा वाऽस्तु दिक्श्रुतेः।
आहार्य्यत्वं दिशो नास्ति शाखा तेनोपलभ्यते" ॥इति॥

यत्प्राचीमाहरेदिति वाक्ये प्राचीशब्देन मुख्यार्थत्वाद्दिग्विवक्षितेति चेत्। न। दिश आहर्त्तुमशक्यत्वेन दिक्सम्बन्धिन्याः शाखायाः उपलक्षणीयत्वात्। तस्मिन्नेव पादेऽन्यद्विचारितं।

"शाखां छित्त्वोपवेषञ्च मूले कुर्व्वीत शाखया।
मुद्देत्तान् कपालानि स्थापयेदुपवेषतः॥
द्वयं प्रयोजनं छित्तेर्वत्सापाकृतिरेव वा।
आद्योग्रमूलयोरत्र विभज्य विनियोगतः॥

उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।

पूर्य्यतेऽतोऽनुनिष्पादि स तस्माद्युज्यतेऽन्तिमः”॥ इति॥

इदमाम्नायते। मूलतः शाखां परिवास्योपवेषं करोतीति। तस्यायमर्थः। येयमिषेत्वेति मन्त्रेणावच्छिन्ना शाखा तां पुनर्मूले छित्त्वा तं मूलभागमुपवेषं कुर्य्यादिति। अत्र तयोर्मूलाग्रयोः पृथग्विनियोग आम्नायते। उपवेषेण कपालान्युपदधाति। शाखया वत्सानपाकरोतीति। अत्र च वत्सापाकरणं कपालोपधानं चेत्युभयं शाखाच्छेदनस्य प्रयोजकं। कुतः। अग्रमूलयोः साम्येन विभज्य विनियोगादिति चेत्। मैवं। उपवेषं करोतीत्ययं विधि-रुपवेषस्य प्रकृतिद्रव्यमपेक्षते। सा चापेक्षा मूलेन पूर्य्यते। तच्च मूलं शाखार्थं इषे त्वोर्जे त्वेति तामाच्छिनत्तीत्यत्र छिन्नायाः समूलायाः शाखायाः सौकर्य्यार्थं परिवासनवाक्ये न पुनर्मूलोपादानकं छेदनं श्रूयते। न चासति मूले मूलापादानकं छेदनं सम्भवति। तस्माच्छाखार्थमेव मूलं न तूपवेषार्थं। अतोऽन्यार्थ-मूलानुनिष्पन्नोपवेषेण क्रियमाणं कपालोपधानं न शाखाच्छेदस्य प्रयोजकं, किन्तु वत्सापाकरणमेव तत्प्रयोजकं। तथा सति यत्र शाखायाः प्रथमच्छेदनेनैव सौकर्य्यं सम्पाद्यते तत्रोपवेषसिद्धये पुनः प्रयत्नेन मूलं न सम्पादनीयं, किन्तु लौकिकेनैव केनचित् काष्ठेन कपालान्युपधेयानीति विचारस्य फलं सिद्धं। ब्राह्मणे विधिभागस्य सामान्यविशेषविचारः प्रदर्शितः। अथार्थवाद-विचाराः प्रदर्श्यन्ते।

वायुर्वा इत्येवमादेरर्थवादस्य मानता।

न विधेयेऽस्ति धर्म्मे किं किंवाऽसौ तत्र विद्यते॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात्।
नास्त्येकवाक्यता धर्म्मे प्रामाण्यं सम्भवेत् कुतः॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः।
तेनैकवाक्यता तस्माद्वादानां धर्म्ममानता॥ इति॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते। "वायव्यꣳ श्वेतमालभेत भूतिकामः" इति विधिः। "वायुर्वै क्षेपिष्ठा देवता" इत्ययमर्थवादः। तत्र वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधते। अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव क्षिप्रगामिदेवतालक्षणं सिद्धार्थमन्वाचक्षते। अत एवैकवाक्यत्वाभावान्नास्त्यर्थवादानां धर्म्मे प्रामाण्यमिति चेत्। न। पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यत्वाद्विधिवाक्येन पुरुषप्रवृत्तिसिद्धये स्तावकमर्थवादवाक्यमपेक्ष्यते। अर्थवादवाक्यस्यापि पुरुषार्थपर्य्यवसानाय विधिवाक्यापेक्षा। अतो वाक्ययोः परस्परमन्वयादेकवाक्यत्वे सति विधिभागवदर्थवादभागोऽपि धर्म्मे प्रमाणं। अनेनैव न्यायेन "तृतीयस्यामितो दिवि सोम आसीत्" इत्याद्यर्थवादस्य "यत्पर्णशाखया वत्सानपाकरोति" इत्येतद्विधिस्तावकत्वाद्विधिगम्ये नियमापूर्व्वे प्रामाण्यमस्ति। ननु अर्थवादस्य विधिस्तावकत्वं क्वचिद्व्यभिचरति। "प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै" इत्यत्र फलविधिप्रतिभानात् इति चेत्। मैवं। औदुम्बराधिकरणन्यायेन स्तावकत्वात्। स च न्यायस्तस्मिन्नेव पादेऽभिहितः।

"ऊर्जोवरुध्या इत्येष विधिवन्निगदो न किं।
यूपोदुम्बरतां स्तौति स्तौति वा तद्विधित्सया॥
चतुर्थ्या फलता भानाद्यूपोदुम्बरता फलं।
ऊर्जोवरोधं कथयन् कथं स्तुतिपरो भवेत्॥
अस्तुतोदुम्बरत्वस्यविधानात्कस्य तत्फलं।
अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः"॥ इति॥

इदमाम्नायते। "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्ज्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोवरुध्यै"इति। अत्रावरोधवाक्येन किं फलमेव विधीयते, किंवा यूपोदुम्बरत्वमपि स्तूयते। नाद्यः। औदुम्बरविध्यभावेन तत्फलकथनायोगात्। न चात्रोदुम्बरत्वस्य प्रत्यक्षो विधिरस्ति, लिङाद्यश्रवणात्। अतस्तुत्यैवात्र विधिरुन्नेयः। न चात्र स्तुतिमङ्गीकरोषि। न द्वितीयः। अर्थभेदेनावृत्तिलक्षणवाक्यभेदापत्तेः। तस्मादूर्गवरोधः स्तावकः। तद्वदुभयलोकाभिजयेनाग्नेशानदिक् प्रवृद्धाद्यशोषणादिभिः प्रवृत्ता शाखाविधानाय स्तूयते। तदेवं वेदसामान्यतद्विशेषयोर्मन्त्रब्राह्मणयोर्मन्त्रविशेषाणामृगादीनां ब्राह्मणविशेषयोर्विध्यर्थवादयोश्चापेक्षिताः सामान्यविशेषविचारा अस्मिन्ननुवाके उदाहृताः, वक्ष्यमाणानुवाकेष्वपि ते सर्व्वे यथायोगमुदाहरणीयाः।

"उदाहृत्यात्र मीमांसां प्रकृतिप्रत्ययस्थितिं।
अर्थं व्याकरणे सिद्धं बोद्धुं तत्प्रक्रियोच्यते"॥

न च व्याकरणप्रामाण्ये तत्प्रयोजने वा विवदितव्यं, तत्प्रामा-

णस्य स्मृतिपादे निर्णीतत्वात्। तत्प्रयोजनस्य च कात्यायनेन अभिहितत्वात्। तथा हि।

"गवाद्यादिषु साधुत्वे प्रयोगेवा न कश्चन।
नियमोऽस्त्यस्ति वा नास्ति व्याकृतेर्मूलवर्जनात्॥
साधूनेव प्रयुञ्जीत गवाद्या एव साधवः।
इत्यस्ति नियमः पूर्व्वं तेन व्याकृतिमूलता"॥ इति॥

निर्मूलत्वेन विगीतत्वादयः पूर्व्वपक्षहेतवोऽप्युपलक्ष्यन्ते।

"निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात्।
पूर्व्वापरविरोधाच्च नास्त्यप्रामाण्यसम्भवः"॥

इति ते हेतवः उक्ताः। व्याकरणस्य पौरुषेयत्वात् मूलप्रामाण्यमपेक्षितं। अत एव बुद्धादिवाक्यानां प्रामाण्यं दूषितं।

"प्रायेणानृतवादित्वात् पुंसां भ्रान्त्यादिसम्भवात्।
चोदनानुपलब्धेश्च श्रद्धामात्रात् प्रमाणतः"॥ इति॥

न तावत् प्रत्यक्षमूलं गवादिशब्दा एव साधवः। न तु गाव्यादिशब्दाः। साधूनेव प्रयुञ्जीत नापशब्दानित्यस्यार्थद्वयस्य केनापीन्द्रियेण गृहीतुमशक्यत्वात्। योगिप्रत्यक्षस्यातीन्द्रियत्वात् तद्ग्राहकत्वमिति चेन्न।

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
अयोग्येनेन्द्रियग्राह्ये न रूपे श्रोत्रवृत्तिता"॥ इति

आचार्य्यैरुक्तत्वात्। विगीतत्वमपि व्याकरणे बहुश उपलभ्यते। अनादिसिद्धेऽभियुक्तव्यवहारे गृहीतसङ्गतिका गवादिशब्दा एव साधव इति भगवतो मतं। पाणिनिस्तु शास्त्रस्याम-

ल*चूडं तद्विपरीतानेवापशब्दान् जगौ।“अइउण्”(पा०१।१।१)। “घेर्ङिति”(पा०७।३।१११)।“स्तोःश्चुनाश्चुः”(पा०८।४।४०)।“ष्टुना-ष्टुः”(पा०८।४।४१) इत्यादिप्रयोगात्। न च धर्मार्थकाममोक्षा-दिषु किञ्चित्फलं व्याकरणे पश्यामः। वेदस्तु प्रयत्नेन व्याकरणं बाधते।“तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः” इति। परस्परविरोधश्च भूयानस्ति त्रिमुनि व्याकरणमित्यभ्युपगच्छति। तत्र पाणिनीये उक्तं। “इन्धिभवति-भ्याञ्च”(पा०१।२।६)।“कर्मवत् कर्मणा तुल्यक्रियः”(पा०३।१। ८७) इति। तत्कात्यायनेन दूषितं “इन्धेश्छन्दो विषयत्वाद्भुवो-वुकोनित्यत्वात्ताभ्यां लिटः किद्वचनमानर्थक्यं। सिद्धन्तु प्राक्-तकर्मत्वात्” इति। क्वचित् पाणिनिः स्वोक्तं स्वयमेव दूषया-मास “तदशिष्यं सञ्ज्ञाप्रमाणत्वात्” इति। तस्मान्न व्याकरणं प्रमाणमित्येवं प्राप्ते ब्रूमः। न तावदिदन्निर्मूलं, पूर्व्वव्याकर-णानामेव मूलत्वात्। सन्ति हि पूर्व्वव्याकरणानि, पाणिनिनैव तत्तन्मतानामुदाहृतत्वात्।“तृषिमृषिकृशेः काश्यपस्य”(पा०१।२ २५)“ऋतो भारद्वाजस्य”(पा०७।२।६३)“त्रिप्रभृतिषु शाकटाय-नस्य”(पा०८।४।५०) “लोपः शाकल्यस्य”(पा०८।३।१९)“ओतो गार्ग्यस्य”(पा०८।३।२०) इति ह्युदाहृतं। तत्तद्व्याकरणानां पूर्व्व-पूर्व्वव्याकरणमूलत्वेऽपि वीजाङ्कुरवदनादित्वेन मूलक्षयाभावा-न्नानवस्थादोषः। न च “घेर्ङिति” इत्यादेरपशब्दत्वं साङ्केति-

* भूतं इति का०।

कानामपि स्वस्वविषये गवादिपदवत् सुशब्दत्वात्। अन्यथा "ववरः प्रावाहणिरकामयत" इत्यादेरपशब्दप्रसङ्गात्। नापि निष्फलत्वं। "एकः शब्द :सम्यक् ज्ञातः सुष्टुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति साधुशब्दावबोधतत्प्रयोगाभ्यां धर्म्मोत्पत्तिश्रवणात्। नापि वेदबाधः। न म्लेच्छितवा इत्यादेर्गाव्याद्यपशब्दविषयत्वात्। "नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तत्" इत्ययन्तु निषेधः समाधिनिष्ठ ब्रह्म योगिविषयः। नापि परस्परविरोधः, उक्तानुक्तदुरुक्तचिन्तारूपं वार्त्तिकं कुर्व्वतः कात्यायनस्य क्वचित् क्वचिद्दूषयितुमुचितत्वात्। नापि लोकव्याहतिः, पूर्व्वोत्तरपक्षाभिप्रायेण तदुपन्यासात्। तस्मात् प्रमाणभूतव्याकरणानुसारेण गवादिशब्दा एव साधवः। तानेव प्रयुञ्जीतेति नियमद्वयं सिद्धं। प्रकृतिप्रत्ययविभागो ज्ञातव्य इत्यनेनैवाभिप्रायेण वेदे तत्र तत्र शब्दनिर्वचनमुदाह्रियते। तथा हि ब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके श्रूयते "प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। ततो वै ते सर्व्वान् रोहानरोहन्। तद्रोहिण्यै रोहिणित्वं" इति। तत्रैव तृतीयानुवाके प्रजापतिं प्रस्तुत्य श्रूयते "स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्। तत् पृथिव्यै पृथिवित्वं। अभूद्वा इदमिति। तद्भूम्यै भूमित्वं" इति। एवं सर्व्वत्रोदाहार्य्यं। व्याकरणपूर्व्वकस्य पदार्थज्ञानस्यावश्यम्भावित्वादेव देवैः प्रार्थित इन्द्रो व्याकरणं निर्म्ममे। एवञ्च षष्ठकाण्डे चतुर्थप्रपाठके ऐन्द्र-

वायवग्रहब्राह्मणे श्रूयते "वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्व्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते" इति। पराची प्रकृतिप्रत्ययविभागरहिता मध्यतोऽवक्रम्य विभागं कृत्वेत्यर्थः। आथर्व्वणिकास्तु ऋग्वेदादिवद्व्याकरणमपि वेदितव्यमित्यामनन्ति "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति। परा चैवा परा च। तत्रापरा। ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वणवेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा। यया तदक्षरमधिगम्यते" इति। कात्यायनोऽपि व्याकरणप्रयोजनान्युदाजहार "रक्षोहागमलघ्वसन्देहाः प्रयोजनं" इति स्वरवर्णविपर्य्यासरूपो विप्लवो वेदस्य मा भूदिति व्याकरणेन वेदो रक्षणीयः। विप्लवे तु बाधं पठन्ति।

"मन्त्रो हीनस्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुःस्वरतोपराधात्॥ इति।

विश्वरूपनामानं त्वष्टुः पुत्रमिन्द्रो जघान। स च त्वष्टा सोमयागे तमिन्द्रं नोपाह्वयत। इन्द्रस्य यज्ञविघ्नं कृत्वा बलात् सोमं पीत्वा जगाम। अवशिष्टेन सोमरसेनेन्द्रस्याभिचारं कर्त्तुं स्वाहेन्द्रशत्रुर्वर्धस्वेत्यनेन मन्त्रेणाजुहोत्। तत्र शत्रुशब्दो घातकमाचष्टे। भो उत्पत्स्यमान पुरुष इन्द्रस्य घातकस्त्वं वर्धस्वेति

विवक्षित्वा मन्त्रमुच्चारितवान्। तदानीं तत्पुरुषसमासत्वाद-न्तोदात्तेन भवितव्यं। प्रमादात्त्वनेनाद्युदात्तो मन्त्रः प्रयुक्तः। स च स्वरो बहुव्रीहि समासलभ्यः। ततश्च इन्द्रो घातको यस्ये-त्यस्मिन्नर्थे पर्य्यवसानादिन्द्रेण बध्यो वृत्र उदपद्यत। तस्माच्च वेदस्य रक्षा कर्त्तव्या। तथा प्रकृतौ दर्शपूर्णमासेष्टौ "अग्नये जुष्टं निर्वपामि" इति मन्त्र आम्नातः। स च विकृतावैन्द्राग्नेष्टावति-दिष्टः। तत्र कर्म्मसमवेतार्थप्रकाशनायाग्नये जुष्टमिति पदं परि-त्यज्य "इन्द्राग्निभ्यां जुष्टं निर्वपामि" इत्यूहनीयः। स चोहो-व्याकरणानभिज्ञेन कर्त्तुमशक्यः। तथा "वेदोऽध्येयो ज्ञेयश्च" इत्यागमेन ज्ञेयत्वं विहितं। तच्च प्रकृतिप्रत्ययादिनिर्णयमन्तरेण न सम्भवति। तथा बृहस्पतिना अध्याप्यमाण इन्द्रो दिव्यं वर्षस-हस्रमधीयानोऽपि यदा शब्दानामतं न जगाम। तदानीमिन्द्रा-दिभिर्धातुप्रातिपदिकप्रत्यया देशादिरूपालघूपायाः कल्पिताः। उपायमन्तरेण सर्व्वे शब्दाः कथं बोद्धुं शक्यते। तथा "स्थूलपृष-तीमालभेत" इत्यत्र स्थूला चासौ पृषती चेति विग्रहे पशुशरी-रगतस्थौल्यमुक्तं भवति। स्थूलानि पृषन्ति यस्यामित्युक्ते शरीरग-तवर्णविशेषरूपाणां विन्दूनां स्थौल्यमुक्तं भवति। सोऽयं सन्देहः स्वरनिर्णयमन्तरेण नापैति। तस्माद्रक्षोहादीनि पञ्चप्रयोज-नानि। तदेवं प्रमाणत्वात् सप्रयोजनत्वाच्च व्याकरणमारम्भ्यं।

"इषे त्वेत्यादिशब्दानां प्रक्रियां शब्दसङ्ग्रहे।
अवोचं स्वरमात्रन्तु वैशद्याय पुनर्ब्रुवे"॥

इषिति प्रातिपदिकगत इकारः "फिषोन्त उदात्तः" (फि०

कौ० प० २३०) इत्युदात्तः। फिडिति प्रातिपदिकस्य सञ्ज्ञा। इषित्यत्र षकारस्यान्तिमत्वेऽपि स्वरविधौ व्यञ्जनमविद्यमानवदित्युक्तत्वादिकार एव फिडन्तिमः। एकारस्य सुप्त्वात् "अनुदात्तौ सुप्पितौ" (पा० ३।१।४) इत्यनुदात्तत्वे प्राप्ते तदपवादः। "सावेकाचस्तृतीयादिर्विभक्तिः" (पा०६।१।२६८) सप्तमीबहुवचने परतः स्थिते यत्प्रातिपदिकमेकाच्कं तस्मादुत्तरा तृतीयादिर्विभक्तिरुदात्ता भवति। "अनुदात्तं पदमेकवर्ज" (पा० ६।१।१५८)। उदात्तस्वरितौ वा यस्य वर्णस्य विधीयेते। तं वर्जयित्वा शिष्टं पदमनुदात्तं भवति। तत्रास्मिन् पदे एकारस्योदात्तत्वविधानादिकारोऽनुदात्तः। नन्विकारस्यापि पूर्व्वमुदात्तत्वं विहितं। ततस्तं वर्जयित्वा विभक्तेरेवानुदात्तत्वमस्त्विति चेत्। मैवं। प्रथमतः प्रातिपदिकस्वरेऽवस्थिते सति पश्चाद्विधीयमानत्वेन विभक्तिस्वरस्य प्रबलत्वात्। सति शिष्टस्वरो बलीयानिति हि मर्य्यादा। तस्मादनुदात्तादिकमुदात्तान्तमिष इति पदं सिद्धं। त्वेति पदमनुदात्तं। युष्मच्छब्दस्याष्टमिकापादादावादेशत्वात् "अनुदात्तं सर्व्वमपादादौ" (पा० ८।१।१८) इति हि तत्रानुवर्त्तते। संहितायां तूदात्तादेकारादुत्तरत्वेन तस्य "उदात्तादनुदात्तस्य स्वरितः" (पा० ८।४।६६) इति स्वरितत्वं। ततः स्वरितान्तमिदं वाक्यं। एवमूर्जे त्वेति वाक्यं योज्यं। तयोर्वाक्ययोस्संहितायां "आद्गुणः" इति (पा० ६।१।८७) ओकारे गुणे प्राप्ते "पूर्व्वत्रा सिद्धं" इति (पा० ८।१।१) स्वरितस्यासिद्धत्वात् अनुदात्तयोः पूर्व्वोत्तरवर्णयोः स्थाने विहित ओकारोऽनुदात्तः।

तस्योदात्तादुत्तरत्वेन स्वरितत्वे प्राप्ते तदपवादः, "उदात्तस्वरितपरस्य सन्नतरः"(पा०१।२।४०)। यस्मादनुदात्तात् परत उदात्तः स्वरितो वा वर्त्तते तस्यानुदात्तस्यातिनीचोऽनुदात्तो भवति। एतावता यथाम्नातमिषे त्वोर्जे त्वेति सिद्धं। उणादीन्यव्युत्पन्न प्रातिपदिकानीति मते वायुशब्दस्य फिट्स्वरेणान्तोदात्तत्वादवशिष्ट आकारोऽनुदात्तः। विभक्तेः सुप्त्वादनुदात्तत्वे सत्युदात्तादुत्तरत्वेन स्वरितत्व।स्थशब्दस्य"तिङ्ङतिङः"(पा०८।१।२८) अतिङन्तात् परं तिङन्तं निहन्यते। निघातो नामानुदात्तः। "स्वरितात् संहितायामनुदात्तानां" (पा०१।२।३९) इति स्थशब्दगतानुदात्तस्य स्वरितादुत्तरत्वेनैकश्रुतिर्भवति। तां प्रचय इत्याचक्षतेऽध्यापकाः। एवमुपायवस्थेति वाक्यं योज्यं। तयोर्वाक्ययोः संहितायामोकारः प्रचयः। यद्यप्ययमोकारः प्रचयानुदात्तयोरुभयोः स्थाने विहितः तथापि द्वैरूप्यस्य युगपदसम्भवात् पर्य्यायेण तथात्वे स्थानिवद्भावादेकस्मिन् पक्षे प्रचयः। पक्षान्तरे तु स्थानिवद्भावाभावादनुदात्तत्वे "स्वरितात् संहितायामनुदात्तानां"(पा०१।२।३९) इति प्रचयः। पाशब्दस्य सन्नतरत्वं। देवशब्दस्य फिट्स्वरेणान्तोदात्तत्वात् संहितायामोकारोऽप्युदात्तः युष्मच्छब्दादेशस्यानुदात्तः संहितायां स्वरितः। "चितः"(पा०६।१।१६३) चित्प्रत्यययुक्तस्य समुदायस्यान्त उदात्तः स्यात्। ततः सवितृशब्दे तृच्प्रत्ययस्य चकारेत्वा सवितृपदस्य कृदन्तत्वेन प्रातिपदिकत्वाद्वा अन्तोदात्तत्वं। संहितायां सेत्यस्य प्रचयः। विशब्दस्योदात्तपरत्वादि-

कारः सन्नतरः। "उपसर्गाश्चाभिवर्जं" (सि०कौ०प०२३२) अभिशब्दव्यतिरिक्ता उपसर्गा आद्युदात्ता स्युः। इति प्रशब्द उदात्तः। अर्पयत्वस्य निघाते। "एकादेश उदात्तेनोदात्तः" (पा०८।२।५)। उदात्तेन सह य एकादेशः स उदात्तस्यात्। इति सवर्णदीर्घ उदात्तः। तस्मादुत्तरेषां स्वरितप्रचयौ। तुशब्दस्य संहितायां सन्नतरत्वं। श्रेष्ठतमायेत्यत्र "ञ्नित्यादिर्नित्यं" (पा०६।१।९७)। ञितिनिति च प्रत्यये परतः पूर्व्वस्यादिरुदात्तस्यात् इति श्रेष्ठशब्दगतस्येष्ठन् प्रत्ययस्य नित्वाच्छ्रेष्ठशब्द आदिरुदात्तः। श्रेष्ठत्यस्यानुदात्तस्वरितौ। तमपः पित्वात् विभक्तेः सुप्त्वाच्चानुदात्तत्वे सति पश्चात्प्रत्ययस्य सन्नतरत्वं पूर्व्ववत्। "न ब्विषयस्यानिसन्तस्य" (सि०कौ०प०२३१) इसन्तव्यतिरिक्तस्य नपुंसकलिङ्गविषयस्य प्रातिपदिकस्यादिरुदात्तः स्यादित्यनेन कर्म्मन् शब्दस्यादिरुदात्तः। उत्तरयोर्यथा योगमनुदात्तत्वे सति स्वरितप्रचयौ सन्नतरत्वञ्च पूर्व्ववत्। आप्यायध्वमित्यत्रोपसर्ग उदात्तः। शिष्टस्य निघाते सति स्वरितप्रचयौ। "आमन्त्रितस्य च" (पा०८।१।१९) पदादुत्तरस्य सम्बोधनान्तस्य सर्व्वस्यानुदात्तः स्यात्। इत्यघ्नियाशब्दस्य निघाते सति संहितायां पूर्व्वाभ्यां प्रचयाभ्यां सह प्रचयः। देवभागशब्दे "समासस्य" (पा०६।१।२२३) इति अन्तोदात्ते सति विभक्त्यासहैकादेश स्वरः। स च संहितायामाद्यौ द्वौ प्रचयौ। तृतीयः सन्नतरः। ऊर्जस्पयस्शब्दयोर्नपुंसकत्वादाद्युदात्तत्वं। मतुपोङीपश्च पित्वादनुदात्तत्वं। ततो यथा योगं स्वरितप्र-

चय मन्तरा:। प्रजाशब्दे प्रातिपदिकमन्तोदात्तं टाबनुदात्तः। तयोरेकादेश उदात्तः। शेषं पूर्ववत्। "नञ्सुभ्यां" (पा० ६।२।१७२)। बहुव्रीहि समासे नञ् सु इत्येताभ्यामुत्तरस्य पदस्यान्त उदात्तः स्यात्। इत्यनमीवा अयक्ष्मशब्दयोरन्तोदात्तत्वे सति शेषमुन्नेयं। न च तत्र समासस्येत्यन्तोदात्तत्वं सिद्ध्यति। "बहुव्रीहौ प्रकृत्यापूर्व्वपदं" (पा०६।२।१) इत्युक्तं। पूर्व्वपदप्रकृतिस्वरत्वमपवदितुं नञ्सुभ्यामिति सूत्रस्यापेक्षितत्वात्। "निपाता आद्युदात्ताः" (फि० को० पा०२।३२) इति माशब्द उदात्तः। व इत्येतत्पूर्व्ववत्। स्तेनशब्दस्य फिट्स्वरः। ईशतेत्यस्य निघातः। मेति पूर्व्ववत्। अघेन क्रौर्य्येण विशसनं बधो यस्य सोऽयमघशंसः। ततो बहुव्रीहिस्वरेण अघ इत्यन्तोदात्तः। रुद्रहेतिशब्दयोः फिट्स्वरः। परिशब्दो निपातत्वादाद्युदात्तः। वोवृणक्त्विति शब्दावनुदात्तौ। ध्रुवशब्दस्य फिट्स्वरे सति टाप्रत्ययेन विभक्त्यासहैकादेश स्वरः। अस्मिन्नित्यत्र विभक्तेः "सावेकाच" (पा०६।१।१६८) इत्युदात्तत्वं। गोपताविव्यत्र "पत्यावैश्वर्य्ये" (पा०६।२।१८)। ऐश्वर्य्यार्थे पतिशब्दे परतः पूर्व्वपदस्य प्रकृतिस्वरत्वं भवति। ततो गोशब्दस्याद्युदात्तत्वे सति शिष्टस्यानुदात्त स्वरितप्रचयाः। स्यातेत्यस्य निघातप्रचयौ। बह्वीरिति। अत्र ङीष् प्रत्ययस्योदात्तत्वेन सवर्णदीर्घोप्युदात्तः। यजमानस्येत्यत्र "धातोः" (पा०६।१।१६२)। धातोरन्त उदात्तस्यात् इति जकारात् पूर्व्वाकार उदात्तः। शपः पित्वादनुदात्तत्वं। शानचः "चितः" (पा०६।१।६३) इत्यन्तोदात्तत्वे प्राप्ते

तदपवादः। "तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः"(पा० ६।१।१८६)। तासिप्रत्ययादनुदात्तेतो धातोर्ङितो धातोरकारोपदेशाच्चोत्तरस्य लकारस्य स्थाने विहितं लसार्वधातुकमनुदात्तं भवति। ह्नुङ् अपनयने इङ् अध्ययने, इत्येतौ धातू वर्जयित्वा अत्र शवन्तस्य यजेत्यस्यादुपदेशत्वात् तदुत्तरः शानच्, अनुदात्तः। पशूनित्यत्र फिट्स्वर एकादेशस्वरश्च। पाहीत्यस्य निघाते सति स्वरितप्रचयौ॥

"सम्बन्धश्च श्रुतिव्याख्या मीमांसा व्याकृतिस्वरैः।
चतुः प्रकारैराद्योऽयमनुवाकः समापितः"॥ १॥

इति श्रीविद्यातीर्थमहेश्वरापरावतारश्रीमद्राजाधिराजपरमेश्वरश्रीवीरबुक्कमहाराजस्याज्ञापरिपालकश्रीमाधवाचार्य्यविरचिते तैत्तिरीयसंहिताभाष्ये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥

यज्ञस्य घोषदसि प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्य्यक् पर्व्व ते राध्यासमाच्छेत्ता ते मा रिषं देवबर्हिः शतवल्शं विरोह सहस्रवल्शाः॥ १॥

वि वयꣳ रुहेम पृथिव्याः सम्पृचः पाहि सुसम्भृता त्वा सम्भराम्यदित्यै रास्नाऽसीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवं गममसि॥२॥

सहस्रवल्शा अष्टाचिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥

प्रथमेऽनुवाके वत्सापाकरणमुक्तं। द्वितीयेऽनुवाके बर्हिराहरणमुच्यते। तयोरनुक्रमे पाठःप्रमाणमिति मीमांसिष्यते। पौर्णमास्यान्तु सान्नाय्याभावे वत्सापाकरणप्रयोजनाभावादग्न्याधानस्यानन्तरं अमावास्यायामसन्नयतोऽपि बर्हिरेव प्रथमं सम्पादनीयं। अत एव बोधायनः "यद्यु वै न सन्नयति बर्हिः प्रतिपदेव भवति" इति। अस्मिन्ननुवाके यज्ञस्य घोषदसीत्ययमाद्यो मन्त्रः। ब्राह्मणे तु तस्मात् पूर्व्वमन्यो मन्त्रः शाखान्तरादिह्वानीय येन व्याख्यातः तस्य विनियोगमाह बोधायनः "अथ जघनेन गार्हपत्यं तिष्ठन्नसिदमश्वपर्शुं वाऽऽदत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे"इति। आपस्तम्बः "उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत् पर्शुर्वा निहितो भवति देवस्य त्वा सवितुः प्रसव इति असिदमश्वपर्शुं वाऽऽदत्ते तूष्णीमनडुत् पर्शुं" इति। असिदो दर्भच्छेदनसाधनं शस्त्रं पर्शुः पार्श्वास्थि तच्च खड्गवत्तीक्ष्णधारत्वाल्लवने समर्थं। मन्त्रस्यायमर्थः।

भो त्वमसाधन प्रेरकस्य देवस्य प्रेरणे सति देवतासम्बन्धिभ्यां बाहुभ्यां हस्ताभ्याञ्च त्वां स्वीकरोमीति। मणिबन्धादधस्तनौ बाहू। उपरितनौ हस्तौ। अत्र ब्राह्मणं "देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह यत्यै" इति (ब्रा०।३कां०।२प्र०।२अ०)। यतिर्नियतिः यज्ञसाधनमुपादेयं। तत्सर्वं पोषकस्य देवस्य हस्ताभ्यामेवेति नियमः। अश्वपर्शुणा सह बर्हिः प्राप्तुं गच्छेदिति सार्थवादेन वाक्येन विधत्ते "यो वा ओषधीः पर्व्वशो वेद। नैनाः स हिनस्ति। प्रजापतिर्वा ओषधीः पर्व्वशो वेद। स एना न हिनस्ति। अश्वपर्श्वा बर्हिरच्छैति। प्राजापत्यो वा अश्वः स योनित्वाय। ओषधीनामहिꣳसायै" इति (ब्रा०।३का०।२प्र०।२अ०)। प्रजापत्यचिपरिणामोऽश्व इत्यश्वमेधविधौ श्रूयते "प्रजापतेरक्ष्यश्वयत्। तत्परापतत्। तदश्वोऽभवत्। यदश्वयत्। तदश्वस्याश्वत्वं" इति। ततोऽश्वस्य प्राजापत्यत्वात् प्रजापतेश्चौषधीषु तत्तत् पर्व्वाभिज्ञत्वेन पर्व्वणः सन्धौ च्छेत्तुं प्रवृत्तस्य पर्व्वभञ्जकत्वाभावेनाश्वपर्श्वा प्रजापतिरूपया दर्भच्छेदे हिंसा न भवति इति। द्रव्यान्तरपरित्यागेनाश्वपर्शुस्वीकारस्तद्योनिभूतप्रजापतिसाहित्यार्थं। अस्ति च तत् साहित्यं कारणस्य कार्य्येऽनुगतत्वात्। तस्मात् प्रजापतिद्वारेण कर्त्तुर्हिंसादोषाभाव उपपद्यते। अश्वपर्शोरभिमन्त्रणे प्रथमं मन्त्रं बोधायनो विनियुङ्क्ते "आदायाभिमन्त्रयते। यज्ञस्य घोषदसि" इति। आपस्तम्बस्तु ब्रूते "यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य" इति। घोषदिति धनस्य नाम। भोऽश्वपर्शो त्वं यज्ञस्य

साधनं द्रव्यमसि। भो गार्हपत्येति वा योज्यं। अत्र ब्राह्मणं "य-ज्ञस्य घोषदसीत्याह। यजमान एष रयिं दधाति" इति (ब्रा०। ३कां०।२प्र०।२अ०)। रयिं धनं। बोधायनः "गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः" इति। आपस्तम्बः "आहवनीये गार्हपत्ये वाऽसिदं प्रतितपति न पर्शुं" इति। अस्मिन् लवनसाधने निगूढं राक्षसस्य वैरिणाञ्च स्वरूपं अत्यन्तं दग्धं भवतु। मन्त्र-प्रयोजनमाह "प्रत्युष्टꣳरक्षः प्रत्युष्टा आरातय इत्याह। रक्ष-सामपहत्यै" इति (ब्रा०।३कां०।२प्र०।२अ०)। बोधायनः "अ-थाहवनीयमभिप्रैति। प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टं" इति। स एव मन्त्रशेषं पृथग्विनियुङ्क्ते "इह बर्हिरासद इति वेदिं प्रत्यवेक्षते" इति। आपस्तम्बस्तु कृत्स्नस्य मन्त्रस्यैकमेव विनियो-गमाह "प्रेयमगादित्युक्तोर्ब्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति" इति। इयमश्वपर्शुर्विद्यारूपत्वेनाभिज्ञा सती बर्हिः प्राप्तुं प्राचीं ग-च्छति। कीदृशी सा। प्रजापतिरूपेण मनुना स्वचक्षुषा नि-र्मिता। अश्वभक्षितान्नलक्षणया स्वधया विशेषेण तीक्ष्णीकृता यस्मात् ते पूर्व्वे कवयो विद्वांसोऽनुष्ठातारः पूर्व्वस्या दिशो बर्हि-रानयन्ति तस्मादियं प्राङ्मुखी गच्छति। देवेभ्यो हविर्भुग्भ्यः प्रियं बर्हिरिह वेद्यामासादयितव्यं। अस्य मन्त्रस्य प्रथमभागे पदार्थं तात्पर्यञ्चाह "प्रेयमगाद्धिषणा बर्हिरच्छेत्याह। विद्या वै धिषणा। विद्ययैवैनदच्छैति" इति (ब्रा०।३कां०।२प्र०२।अ०)।

द्वितीयभागस्यार्धे श्रुत्यन्तरप्रसिद्धिमनुमानप्रसिद्धिञ्चाह“मनुना कृता स्वधया वितष्टेत्याह। मानवी हि पर्शुः स्वधा कृता” इति (ब्रा०।३कां०।२प्रा०२अ०)। अनेनास्थ्याद्युपचयोऽन्वयव्यतिरेकसिद्धः। तृतीयभागे पदार्थं पुरस्ताच्छब्दतात्पर्य्यञ्चाह “त आवहन्ति कवयः पुरस्तादित्याह। शुश्रुवाꣳसो वै कवयः। यज्ञः पुरस्तात्। मुखत एव यज्ञमारभते” इति (ब्रा०।३का०।२प्र०।२अ०)। होमाधारस्याहवनीयस्य पूर्व्वदिग्वर्त्तित्वाद्यज्ञः पुरस्ताद्वर्त्तत इति उच्यते तच्छब्दपाठेन पुरस्तादेव यज्ञ आरब्धो भवति। अपि च तत्पाठे दिगन्तरप्रयुक्तं वैकल्यं नास्तीत्याह “अथो यदेतदुक्त्वा यतः कुतश्चाहरति। तत्प्राच्या एव दिशो भवति” इति (ब्रा०।३कां०।२प्रा०।२अ०)। चतुर्थभाग आसद इति पदस्य तात्पर्य्यमाह“देवेभ्यो जुष्टमिह बर्हिरासद इत्याह। बर्हिषः समृद्ध्यै। कर्म्मणोऽनपराधाय” इति (ब्रा०।३कां०।२प्रा०।२अ०)।आसादयितव्यमित्युक्ते यावद्वेद्यामास्तरणाय पर्य्याप्तं तावतः सूचितत्वादेतत्पदोच्चारणं समृद्ध्यै सम्पद्यते। ततो न्यूनत्वलक्षणः कर्म्मणोऽपराधो न भविष्यति। बोधायनः “दर्भस्तम्बं परिगृह्णाति यावन्तमलं प्रस्तराय मन्यते देवानां परिषूतमसीत्यथैनमन्मार्ष्टि वर्षवृद्धमसीति” इति। आपस्तम्बस्तु द्वयोरेकतन्त्रत्वमभिप्रेत्यैकमेव विनियोगमाह “देवानां परिषूतमसि वर्षवृद्धमसीति दर्भान् परिषौति” इति। भो दर्भजात त्वं देवानामर्थे परिगृहीतमसि न तु मया स्वगृहाच्छादनार्थे ततो न मे लवनदोषोऽस्ति। वर्षेण पुनः वृद्धिमभवात् तवापि

न हानिः। परिगृहीतस्य कृत्स्नस्यापि देवार्थत्वं न लोकदेशस्ये-त्येतं मन्त्राभिप्रायं दर्शयति "देवानां परिषूतमसीत्याह। यद्वा इदं किञ्च। तद्देवानां परिषूतं" इति (ब्रा०।३का०।२प्र०।२अ०)। अपि च। यथा लोके कश्चित् भृत्यो राजनियोगाद् ग्रामेषु गत्वा बलाद्गृह्यमाणमिदं दधिक्षीरादिद्रव्यं वसुमत्तमाय राज्ञे न तु मदर्थमिति प्रजानां अग्रे प्रतिप्रोच्य निर्भयः सर्व्वमिदं करि-ष्यामि इति * ब्रूते तद्वत्। इदमित्यभिप्रायान्तरमाह "अथो यथावस्यमे प्रतिप्रोच्याहेदं करिष्यामीति। एवमेव तदध्वर्य्युः प्रतिप्रोच्य बर्हिर्दाति। आत्मनोऽहिंसायै" इति (ब्रा०।३का०।२प्र०।२अ०)। स्वीकार्य्यस्य स्तम्बस्यैकत्वं कृत्स्नलवनञ्च विधत्ते "यावतस्तम्बान् परिदिशेत्। यत्तेषामुच्छिꣳष्यात्। अति तद्य-ज्ञस्य रेचयेत् एकꣳ स्तम्बं परि दिशेत्। तꣳ सर्व्वं दायात्। यज्ञस्याऽनतिरेकाय" इति (ब्रा०।३का०।२प्र०।२अ०)। यज्ञस्य सम्बन्धि यद्द्रव्यं तस्य यज्ञात् वहिर्भावोऽतिरेकः, स चायुक्तः। अकृष्टपच्यानां दर्भादीनां तटाकाद्युदकमनपेक्ष्य वर्षेणैव वृद्धिः प्रसिद्धेत्याह "वर्षवृद्धमसीत्याह। वर्षवृद्धा वा ओषधयः" इति (ब्रा०।३का०।२प्र०।२अ०)। बोधायनः "असिदेनोप-यच्छति देवबर्हिर्मा त्वान्वङ्मा तिर्य्यक् पर्व्वते राध्यासं" इति। विनियोगद्वयमाहापस्तम्बः "देव बर्हिर्मा त्वान्वङ्मा तिर्य्यगिति संयच्छति पर्व्वते राध्यासमित्यसिदमधि निदधाति" इति। हे देव

* सर्व्वथेदं हरिष्यामि इति का०॥

बर्हिस्त्वां अन्वक् तिर्य्यगपि मा हिंसिषं किन्तु येन तव पर्व्व पुनः प्ररोहस्थानं अविनष्टं यथा भवति तथा स्थापयामि हिंसया अन्वक्त्वं दैर्घ्येण द्वैधीभावः। तिर्य्यक्त्वं ह्रस्वानां खण्डानां सम्पादनं। बर्हिषो देवसम्बन्धस्तादर्थ्यरूप इत्यभिप्रायमाह "देव बर्हिरित्याह। देवेभ्य एवैनत् करोति" इति (ब्रा०।३का०।२प्र०।२अ०)। निषेधो दोषपरिहारायेत्याह "मा त्वान्वङ्मा तिर्य्यगित्याहा हिंसायै" इति (ब्रा०।३का०।२प्र०।२अ०)। पुनः प्ररोहरूपसमृद्ध्यर्थं पर्व्वसाधनमित्याह "पर्व्वते राध्यासमित्याहर्द्ध्यै" इति (ब्रा०।३का०।२प्र०।२अ०)। बोधायनः "आच्छिनत्त्याच्छेत्तारते मा रिषमिति" इति। तद्वदापस्तम्बोऽपि। इत ऊर्द्ध्वं यत्र द्वयोर्विशेषाभावस्तत्र अन्यतरस्यैव विनियोग उदाहरिष्यते। हे देवबर्हिस्त्वामाच्छेत्ताऽपि मन्त्रसामर्थ्यान्मा हिंसिषं। अत्र मा रिषमित्येतं मन्त्रं पठतस्तदर्थाभिज्ञस्य च स्वकीयं किमपि न विनश्यतीत्याह "आच्छेत्ता ते मा रिषमित्याह। नास्यात्मनो मीयते। य एवं वेद" इति (ब्रा०।३का०।२प्र०।२अ०)। कल्पसूत्रं "देवबर्हिः शतवल्शं विरोहेत्यालवानभिमृशति" इति। लूनावशिष्टमूलान्यालवाः शतवल्शं शतशाखं बर्हिषः पुत्रादिवदुपकारकत्वेन तत्प्ररोहाशंसेयमाशीः पुत्रोत्पत्त्यै भवतीति व्याचष्टे "देव बर्हिः शतवल्शं विरोहेत्याह। प्रजानां प्रजननाय" इति (ब्रा०।३का०।२प्र०।२अ०)। कल्पः "सहस्रवल्शा विवयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशतीति"। मन्त्रस्याशीः परत्वं स्पष्टमित्याह "सहस्रवल्शा विवयꣳ रुहेमेत्याह। आशिषमेवैतामाशास्ते" इति (ब्रा०।३का०।२प्र०।

२अ०)। कल्पः "पृथिव्याः सम्पृचः पाहीत्यनधो निदधाति" इति। भो तृणकाष्ठाद्याधार पृथिव्याः सम्पर्कादिमं दर्भं रच। द्रव्यान्तरस्योपरिस्थापने प्रयोजनमाह "पृथिव्याः सम्पृचः पाहीत्याह प्रतिष्ठित्यै" इति (ब्रा०।३का०।२प्र०।२अ०)। यदि लूनमिमं दर्भं पृथिव्यां निदध्यात् तदानीमुच्छिष्टादिस्पर्शेन त्याज्यत्वे सति दर्भोऽप्रतिष्ठितःस्यात्। पूर्व्वं प्रस्तराख्यस्य दर्भमुष्टेः समन्त्रकलवनं प्रपञ्चितं। इदानीं मुष्ट्यन्तराणां मन्त्रमन्तरेणैव लवनं विधत्ते "अयुङ्गा युङ्गान्मुष्टीन् लुनोति। मिथुनत्वाय प्रजात्यै" इति (ब्रा०।३का०।२प्र०।२अ०)। अयुङ्गत्वं युग्मरूपसमसङ्ख्याराहित्यं। अत्र विषमसङ्ख्यापचाणां बहुविधत्वादशेषसङ्ग्रहार्था वीप्सा। तान् पचान् दर्शयति बोधायनः "तूष्णीमत ऊर्द्धमयुजो मुष्टीन् लुनोति। त्रीन् वा पञ्च वा न वैकादशवा" इति। अमन्त्रकलवने ब्राह्मणान्तरमुदाजहार। आपस्तम्बः "प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति वाजसनेयकं" इति। समन्त्रकामन्त्रकलवनयोर्द्वित्वेन मिथुनत्वं तेन च लौकिकस्त्रीपुरुषरूपमिथुनस्मरणात् तद्द्वारा प्रजोत्पत्तये लवनद्वयं सम्पद्यते। अथ दर्भमयं शुल्वं भूमौ प्रसार्य्यत तस्मिन् लूनामुष्टयो निधातव्याः। तत्र पाठक्रमादर्थक्रमो बलीयानिति न्यायेन मन्त्रद्वयस्य व्यत्यासेन विनियोगः कल्पे दर्शितः "अदित्यैरास्नासीत्युदगग्रं वितत्य सुसम्भृता त्वा सम्भरामीति तस्मिन्निधनानि सम्भृत्य" इति। हे रास्ना त्वं भूमेः काचिद्गुणस्थानीया रशनासि। हे दर्भमुष्टिसमुदाय त्वां सुष्टुसङ्गृहीतुं योग्यया रशनया सङ्गृह्णामि। ब्राह्म-

णन्तु पाठक्रमेणैव व्याचष्टे "सुसम्भृता त्वा सम्भरामीत्याह। ब्रह्म-णैवैनत् सम्भरति। अदित्यै रास्नासीत्याह। इयं वा अदितिः। अस्या एवैनद्रास्नां करोति" (ब्रा०।३का०।२प्र०।२अ०) इति। दर्भमयत्वेन प्रशस्तत्वाद्रज्जोर्ब्रह्मत्वं। एतद् दर्भजातं एतदेनां रशनां। कल्पः "इन्द्राण्यै सन्नहनमिति सन्नह्यति" इति। शुल्व-मूलाग्रयोर्मेखलारूपं बन्धनं सन्नहनं। तस्येन्द्राणीप्रियत्वं विशद-यति "इन्द्राण्यै सन्नहनमित्याह। इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत। मार्ध्नोत्। ऋध्यै सन्नह्यति" (ब्रा०।३का०।२प्र०।२ अ०) इति। येयमिदानीमिन्द्रस्य पत्नी देवतानां मध्ये श्रेष्ठा वर्त्तते सा पूर्व्वस्मिन् जन्मनि शतसङ्ख्याकान् क्रतूननुतिष्ठता यजमानेन तत्तत्क्रतौ योक्त्रेण बद्धाऽभूत् तद्बन्धनसामर्थ्यादिन्द्राणीत्वं रूप-समृद्धिं प्राप्तवती। तस्मात् समृध्यर्थमेवाध्वर्य्युर्दर्भैः सन्नह्येत्। किञ्च बर्हिषः प्रजारूपत्वादिदं सन्नहनं प्रजानामशैथिल्याय * भवति। तस्माद्ब्रह्मसृष्टावपि प्रजा धमनिभिर्व्याप्ता जायन्त इ-त्याह "प्रजा वै बर्हिः। प्रजानामपराभावाय। तस्मात् स्नावस-न्तताः प्रजा जायन्ते" (ब्रा०।३का०।२प्र०।२अ०) इति। कल्पः "पूषा ते ग्रन्थिङ्ग्रथ्नात्विति ग्रन्थिङ्करोति" इति। हे सन्नहरज्जो तव ग्रन्थिं पोषको देवः करोतु। हे दर्भेति वा योज्यं। देवता-विवक्षया पूषन्शब्दस्यैव प्रयोगेऽभिप्रायमाह "पूषा ते ग्रन्थिं ग्रथ्ना-त्वित्याह। पुष्टिमेव यजमाने दधाति" (ब्रा०।३का०।२प्र०।२अ०)

---

* अपराभावाय इति का०।

इति। कल्पः "स ते मा स्थादिति पुरस्तात् प्रत्यञ्चङ्ग्रन्थिमुपगूहति पश्चात् प्राञ्चं वा" इति। हे दर्भ तव निर्बन्धकारी स रज्जुग्रन्थिः चिरं मा तिष्ठतु। दर्भोपद्रवपरिहारो निषेधफलमित्याह "स ते मा स्थादित्याहाहिꣳसायै" (ब्रा०।३का०।२प्र०।२अ०) इति। गूहनं विधत्ते "पश्चात् प्राञ्चमुपगूहति। पश्चाद्वै प्राचीनꣳ रेतो धीयते। पश्चादेवास्मै प्राचीनꣳ रेतो दधाति" (ब्रा०।३का०।२प्र०।२अ०) इति। ग्रन्थिशेषो रज्जुरग्रतो द्विगुणीकृत्य रज्जुवेष्टनस्यान्तःपश्चादाकृष्य यथा प्रागग्रो भवति तथोपगूहेत्। पुरुषोऽपि पश्चादवस्थाय प्राचीनं रेतः सिञ्चति। तस्मादीदृशं गूहनमपत्यार्थियजमानार्थं रेतः सिञ्चनरूपेण व्यवस्यन्ति। कल्पः "इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते" इति। इन्द्रशब्दप्रयोगेणेन्द्रवत्तस्य सामर्थ्यसिद्धिं दर्शयति "इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्याह। इन्द्रियमेव यजमाने दधाति" (ब्रा०।३का०।२प्र०।२अ०) इति। कल्पः "बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधिनिधत्ते" इति। प्राशस्त्यत्वाद्ब्रह्मत्वेन बृहस्पतिं स्तौति "बृहस्पतेर्मूर्ध्ना हरामीत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनद्धरति" (ब्रा०।३का०।२प्र०।२अ०) इति। कल्पः "उर्वन्तरिक्षमन्वहीति एति"। गच्छेदित्यर्थः। हे दर्भविस्तीर्णत्वादन्तरिक्षं गमनायानुकूलं अतस्त्वं गच्छ। इहीत्यस्य शब्दविवक्षां दर्शयति "उर्वन्तरिक्षमन्विहीत्याह गत्यै" (ब्रा०।३का०।२प्र०।२अ०) इति। कल्पः "पत्योत्तरेण गार्हपत्यमनधः साधयति देवं गममसीति" इति। तस्य शब्दस्याभिप्रायं

दर्शयति "देवं गममसीत्याह। देवानेवैतद्गमयति" (ब्रा०।३का०। २प्र०।२अ०) इति। पलाशशाखाया इव बर्हिषो भूमौ स्थापनं निषिध्योच्चप्रदेशस्थापनं विधत्ते "अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०।३का०।२प्र०।२अ०) इति। अत्र विनियोगसङ्ग्रहः।

"यज्ञस्येत्यग्निमामन्त्र्य प्रत्युष्टाचस्य तापनं।
प्रेयं जपति देवानां दर्भसीमाय मुष्टितः॥
देवेति दर्भान्त्संयम्य पर्व्व संस्थाप्य दात्रकं।
आच्छे छिन्द्यादिव मूलं स्पृशेत् स्वस्व सहेत्यतः॥
पृथिव्युपर्य्यवस्थाप्यादित्यै रज्जुं प्रसारयेत्।
सुसम्भृदर्भास्त्सभार्य्या इन्द्राण्या इति बन्धनं॥
पूषा ग्रन्थिस्तते गूहा इन्द्रोद्यम्य हृदेत्यतः।
मूर्ध्नाधायोरुगत्यूर्ध्वं स्थापयेद्देवमित्यतः॥
अनुवाके द्वितीयेऽस्मिन्नुक्ता एकोनविंशतिः"।

अथ मीमांसा। अत्र पाठोऽनुष्ठानक्रमे प्रामाण्यमित्ययमर्थः। पञ्चमाध्यायस्य प्रथमपादे विचारितः।

"प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते।
श्रुत्यर्थाभावतो मैवं क्रमः पाठान्नियम्यते"॥ इति॥

अथाध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमित्यत्र क्त्वाश्रुत्या पञ्चमीश्रुत्या च क्रमः प्रतीयते न तथा प्रयाजेषु श्रुतिरस्ति। "समिधो यजति" "तनू-

पातं यजति" इत्यत्र समिद्यागतनूनपाद्यागयोः क्रमवाचिनः शब्दस्यादर्शनात्। यथा वा अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र यवाग्वा होमसाधनत्वेन पूर्व्वभावित्वमार्थिकं। न तथा समिद्यागस्येतरयागसाधनत्वमस्ति। अतोऽर्थापत्तेरप्यभावान्नास्ति क्रम इति चेत्। मैवं। वाक्यपाठेन प्रतीतस्य क्रमस्य बाधाभावेनाभ्युपेयत्वादनेनैव न्यायेन प्रथमद्वितीयानुवाकाभ्यामुक्तयोर्वत्सापाकरणबर्हिःसम्पादनयोः क्रमो द्रष्टव्यः। पाठादर्थक्रमो बलीयानित्येतदपि तत्रैव विचारितं।

"अग्निहोत्रं जुहोतीति यवागूं पचतीति च।
क्रमः पाठादर्थतो वा पाठात् सर्व्वत्र दर्शनात्॥
होमद्रव्यसमुत्पत्त्यै पूर्व्वं पाकोऽनगम्यते।
यवाग्वेति श्रुतौ होमद्रव्यताऽतोऽर्थतः क्रमः"॥ इति॥

यवाग्वाग्निहोत्रं जुहोतीति होमद्रव्यत्वं श्रुतं। अनेनैव न्यायेन अदित्यै रास्नासीति मन्त्रेण रज्जुप्रसारणं पूर्व्वभावि सुसम्भृता त्वा सम्भरामीति मन्त्रेण दर्भबन्धनं पश्चाद्भावीति द्रष्टव्यं। धिषणा बर्हिरच्छेत्यादौ बर्हिःशब्दार्थः प्रथमाध्यायस्य चतुर्थपादे विचारितः।

"बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः।
जात्यर्था वा शास्त्ररूढास्ते स्युः संस्कारवाचिनः॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः।
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः"॥ इति॥

दर्शपूर्णमासयोः श्रूयते बर्हिर्लुनाति। आज्यं विलापयति।

पुरोडाशं पर्य्यग्नि करोतीति। तत्र बर्हिरादिशब्दानां शास्त्राणां सर्व्वत्र संस्कृतेष्वेव तृणादिषु प्रयोगात्। पील्वादिशब्देषु शास्त्रीयरूढिप्राबल्यस्यावकत्वात् यूपाहवनीयादिशब्दवत्संस्कारवाचिनो बर्हिरादिशब्दा इति चेत्। मैवं। अन्वयव्यतिरेकाभ्यां जातिवाचित्वात्। यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र तत्र जातिरित्यव्याप्तेर्लोके वेदे च नास्ति व्यभिचारः। संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते। क्वचिद्देशविवक्षायां लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते। बर्हिरादाय गावो गताः, क्रय्यमाज्यपुरोडाशार्थमेताः, माता पुरोडाशकं ददातीति। तस्माज्जातिवाचिनः। विचारप्रयोजनन्तु बर्हिषा यूपावटमवस्तृणातीत्यत्र विनासंस्कारेण स्तरणविधिः।

अथ व्याकरणं। यज्ञस्येत्यत्र फिट्स्वरशेषानुदात्तस्वरिताः। घोषदित्यत्र फिट्स्वरानुदात्तमन्तराः। असीत्यत्र निघातस्वरितप्रचयमन्तराः। अथ विशेषमेव वदामः। प्रत्युष्टमित्यत्र "समासस्य" (पा० ६।१।२२३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादेनाव्ययपूर्व्वपदप्रकृतिस्वरत्वं प्राप्तं। तस्याप्यपवादः। "गतिकारकोपपदात् कृत्" (पा० ६।२।१३९) तत्पुरुषसमासे गतेः कारकादुत्तरपदाच्चोत्तरं कृत्प्रत्ययान्तं पदं प्रकृतिस्वरं भवतीत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते तस्याऽप्यपवादः। "गतिरनन्तरः" (पा० ६।२।४९) कर्म्मवाचिनि क्तान्त उत्तरपदे परतः प्रत्यासन्नः पूर्व्वभाविगतिसञ्ज्ञकः शब्दः प्रकृतिस्वरो भवति। प्रतिशब्दस्य

"उपसर्गाश्चाभिवर्जं"(कौ॰ फिट्० प० २३२) इत्याद्युदात्तः प्रकृतिस्वरः। रच इत्यत्र "नब्विषयस्य"(कौ० फि॰प०२३१) इत्याद्युदात्तः। रातयो धनस्य दातारः तद्विपरीता अरातयो धनापहारिणः शत्रवः। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययं द्वितीयाकृत्याः" (पा०६।२।२)। तत्पुरुषसमासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तञ्च उपमानवाचकमव्ययं द्वितीयान्तङ्कृत्यप्रत्ययान्तञ्च यत्पूर्व्वपदं तत् प्रकृतिस्वरं भवति। इति नञः परस्य प्रकृतिस्वरत्वं तस्य समासस्वरस्यापवादो नञ् स्वरः "निपाता आद्युदात्ताः"(कौ० फिट्० प०२३२) इत्याद्युदात्तं। धिषणेत्यत्र "पृषोदरादीनि यथोपदिष्टं" (पा० ६।३।१०९) इति मध्योदात्तं। बर्हिःशब्दस्येसन्तत्वेन नपुंसकस्वराभावात् फिट्स्वर एव। अच्छेति निपातस्वरः। मनुना शब्दः "वृषादीनाञ्च" (पा०६।१।२०३) इत्याद्युदात्तः। वितष्टेति प्रत्युष्टवत्। पुरस्तादित्यत्र "आद्युदात्तश्च" (पा०३।१।३) यः प्रत्ययः स आद्युदात्तो भवति इत्यस्तातिप्रत्ययस्यादिरुदात्तः। जुष्टशब्दस्य "नित्यं मन्त्रे" (पा० ६।१।२१०) मन्त्रे विषये जुष्टार्पितशब्दौ नित्यमाद्युदात्तौ भवतः। इड्शब्दे ड प्रत्यय उदात्तः। आसद इत्यत्र आसादयितव्यमित्यस्मिन् कृत्यप्रत्ययार्थे विहितस्य कन्प्रत्ययस्य नित्वात् सद इत्येतत्पदमाद्युदात्तं। ततः समासान्तोदात्तं बाधित्वा तत्पुरुषे पूर्व्वपदप्रकृतिस्वरत्वे प्राप्ते तदपोद्य गतेरुत्तरस्य कृदन्तस्य प्रकृतिस्वरत्वं। परिषूतमित्यत्र परिशब्दो निपातत्वादाद्युदात्तः। षूतशब्दः षूप्रेरण इत्य-

क्षाद्धातोरुत्पन्नः क्तप्रत्ययान्तः । "धातोः" (पा० ६।१।१६२) । धातोरन्त उदात्तः स्यात् । क्तप्रत्ययोऽपि "आद्युदात्तश्च" (पा० ३।१।३) इत्युदात्तः । सति शिष्टत्वादयमेव शिष्यते । अतः "समासस्य" (पा० ६।१।२२३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादेन "तत्पुरुषे तुल्यार्थ"(पा० ६।२।२)इति सूत्रेणाव्ययपूर्व्वपदप्रकृति-स्वरत्वं प्राप्तं । तदपोद्य "गति कारक" (पा० ६।२।३९) इति सूत्रेण कृदुत्तरपदप्रकृतिस्वरत्वं प्राप्नोति । तन्निवार्य्य "गति-रनन्तरः" (पा०६।२।४९) इति पुनः पूर्व्वपदप्रकृतिस्वरे प्राप्ते तस्याप्यपवादः । "परेरभितो भाविमण्डलं" (पा० ६।२।१८२) परिशब्दादुत्तरमभितो भाव्यर्थवाचकं पदं मण्डलपदञ्चान्तो-दात्तं स्यात् । परितोऽभितः सर्व्वतः स्तृतं स्तीकृतमिति तस्य पदस्यार्थः । वर्षेण वृद्धं वर्षवृद्धं तत्र कारकादुत्तरस्य कृद-न्तस्य तस्य प्रकृतिस्वरत्वे प्राप्ते तदपवादः । "तृतीया कर्म्मणि" (पा० ६।२।४८) कर्म्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्व्व-पदं प्रकृतिस्वरं स्यात् । देव बर्हिरित्यत्र षष्ठाध्यायोक्तेन "आम-न्त्रितस्य" (पा० ६।१।१९८) इति सूत्रेणाद्युदात्तः । पूर्व्वानु-वाकगतस्याग्निया इत्यस्य पदात् परत्वेनाष्टमाध्यायोक्तेन "आ-मन्त्रितस्य" (पा० ८।१।१९) इति सूत्रेण निघातः । इह तु वाक्यादित्वान्न पदात् परत्वं । आच्छेत्तेति कृदुत्तरपदप्रकृति-स्वरः । शतवल्शमित्यत्र "बहुव्रीहौ प्रकृत्या पूर्व्वं पदं" (पा० ६।२।१) इति पूर्व्वपदप्रकृतिस्वरत्वं । शतशब्दस्य फिट्स्वरः । सहस्रशब्दः पृषोदरादित्वान्मध्योदात्तः । पृथिवीशब्दात् ङीषः

प्रत्ययस्वरः "उदात्तयणो हल् पूर्व्वात्" (पा०६।१।१७४) उदात्तस्य स्थाने योयण् हल् पूर्व्वः तस्मादुत्तरस्य नदीसञ्ज्ञकप्रत्ययस्य जातिविभक्तेश्चोदात्तस्वरत्वं स्यात। सम्पृच इत्यत्र क्विप्प्रत्ययान्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वं। तद्वत् सुसम्भृतेति शब्दोऽपि। दितिः खण्डिता। न दितिः अदितिः। "तत्पुरुषे तुल्यार्थः" (पा०६।१।२) इत्यव्ययपूर्व्वपदप्रकृतिस्वरः। रास्नाशब्दो वृषादिः। इन्द्राण्या इत्यत्र "उदात्तयण" (पा०६।१।१७४) इति विभक्तिरुदात्ता। सन्नहनमित्यत्र "लिति" (पा०६।१।१९३) इत्सञ्ज्ञकलकारोऽपेते प्रत्यये परतः पूर्व्वमुदात्तं स्यात्। सन्नह्यतिधातोरुपरि ल्युट्प्रत्ययस्यानादेशोऽपि ल्युट् भवति। ततः कृदुत्तरपदप्रकृतिस्वरत्वं। इन्द्रशब्दो वृषादिः। बृहस्पतेरित्यत्र "उभे वनस्पत्यादिषु युगपत्" (पा०६।२।१४०) वनस्पत्यादिषु समासेषु पूर्व्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। बृहच्छब्दः पतिशब्दश्च वृषादिः। मूर्द्धेत्यत्र "अनुदात्तस्य च यत्रोदात्तलोपः" (पा०६।१।१६१) यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्यानुदात्तस्योदात्तः स्यात् इति विभक्तेरुदात्तत्वं। अन्तरिक्षशब्दः पृषोदरादिः। सर्व्वत्रागतिक आद्युदात्तः पृषोदरादिः। अगतिको मध्योदात्तः पृषोदरादिरिति द्रष्टव्यं। देवं गमं इत्यत्र प्रातिपदिकत्वात् समासत्वात् कृदुत्तरपदत्वाद्वाऽन्तोदात्तत्वं॥ ॥ इति माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये द्वितीयोऽनुवाकः॥ * ॥

शुन्धध्वं दैव्याय कर्म्मणे देवयज्यायै मातरिश्वनो घर्म्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारꣳ हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्म्मा सम्पृच्यध्वमृतावरीरूर्म्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वातनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥ १ ॥ सोमेनाष्टौ च ॥ ३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥

द्वाभ्यामनुवाकाभ्याममावास्यायामहनि यत् कर्त्तव्यं तदुक्तं। तृतीयेन रात्रौ कर्त्तव्यो दोह उच्यते। आदौ तावद्ब्राह्मणेन बर्हिषः कालो विधीयते "पूर्व्वेद्युरिध्मा बर्हिः करोति। यज्ञमेवारभ्य गृहीत्वोपवसति"(ब्रा० ३कां०।२प्र०।३अ०)इति। यद्यपि दर्शपूर्णमासेष्टिः प्रतिपदि कर्त्तव्या तथापि पर्व्वण्येवेध्मं बर्हिश्च सम्पादयेत्। तावता यज्ञः प्रारब्ध एव भवति। न केवलं प्रारम्भः किन्तु देवताश्च गृहीत्वा तासां समीपे निवासः कृतो भवति। अनेन देवतापरिग्रहस्यापि पूर्व्वेद्युरेव काल इति सूच्यते। तत्प्रकारस्तु याजमानकाण्डे वक्ष्यते। इध्ममन्त्रास्तु यत्क-

ष्णोरूपं ह्यलेत्यादयः, ते चान्यत्राम्नातत्वात् तत्रैव व्याख्यास्यन्ते। अथ दोहनार्थं कुम्भीद्वयं विधत्ते "प्रजापतिर्यज्ञमसृजत। तस्योखे अस्र्ꣳसेतां। यज्ञो वै प्रजापतिः। यत्सान्नाय्योखे भवतः। यज्ञस्यैव तदुखे उपदधात्यप्रस्र्ꣳसाय"(ब्रा०३कां०।२प्र०।३अ०)इति। यज्ञो दर्शेष्टिः सान्नाय्यमिति दधिपयसोर्नाम। यज्ञसम्बन्धिन्योः कुम्भ्योर्नाशे यज्ञस्य नष्टत्वात् स्रष्टुः प्रजापतेरपि नाशः। कुम्भ्योः सम्पादने यज्ञस्य सम्पादितत्वात् प्रजापतेरेवाविनाशायैतत् सम्पद्यते। यदुखे भवत इति यदस्ति तत्-तेनोखासम्पादनेनेति योज्यं। बौधायनः "उत्तरेण गार्हपत्यं तृणानि सꣳस्तीर्य्य तेषु चतुष्टयꣳ संसादयति दोहनं पवित्रं सान्नाय्यतपन्यौ स्थाल्याविति"।"अथैनान्यद्भिः प्रोक्षति शुन्धध्वन्दैव्याय कर्म्मणे देवयज्याया इति त्रिः" इति। आपस्तम्बः "सान्नाय्यपात्राणि प्रक्षाल्योत्तरेण गार्हपत्यं दर्भान् सꣳस्तीर्य्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति कुम्भीꣳ शाखा पवित्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वा पिधानार्थमग्निहोत्रहवणीमुपवेषं पर्णवल्कञ्च तृणञ्च। शुद्धध्वं दैव्याय कर्म्मण इति त्रिः प्रोक्षति"इति। हे पात्राणि देवयज्यात्मने दैव्याय कर्म्मणे शुन्धध्वं शुद्धानि भवत। विशेषेण प्रयोजनमाह "शुन्धध्वं दैव्याय कर्म्मणे देवयज्याया इत्याह। देवयज्याया एवैनानि शुन्धति" (ब्रा०३कां०।२प्र०।३अ०) इति। शोधयतीत्यर्थः। तेन दानव्रतादिरूपं स्मार्त्तमपि कर्म्म दैविकमस्ति तन्मा भूदिति विशेषणं। बौधायनः "अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति मात-

रिश्वनो घर्म्मोऽसीति तेषु सान्नाय्यतपनीमधिश्रयति द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व माह्वाः" इति। आपस्तम्बस्तु एकमन्त्रत्वमाश्रित्याह "मातरिश्वनो घर्म्मोऽसीति तेषु कुम्भीमधिश्रयति" इति। हे कुम्भ वायोः सञ्चारस्थानप्रदानेन दीपकोऽयमन्तरिक्षलोकस्तद्रूपस्त्वमसि। तवोदरेऽप्यन्तरिक्षसद्भावात्। किञ्च द्युलोकजन्य वृष्ट्युदकात् भूलोकस्थमृत्तिकायाश्च सम्पादितत्वेन लोकद्वयरूपोऽसि। किञ्च विशदेन बहुक्षीरधारणसामर्थ्येन विश्वधारकवृष्टिरूपोऽसि ततो दृढा भव भग्ना मा भूः। यथोक्तार्थो ब्राह्मणेन विशदीक्रियते "मातरिश्वनो घर्म्मोऽसीत्याह। अन्तरिक्षं वै मातरिश्वनो घर्म्मः। एषां लोकानां विधृत्यै। द्यौरसि पृथिव्यसीत्याह। दिवश्च ह्येषा पृथिव्याश्च सम्भृता। यदुखा। तस्मादेवमाह। विश्वधाया असि परमेण धाम्नेत्याह। वृष्टिर्वै विश्वधायाः। वृष्टिमेवावरुन्धे। दृꣳहस्व माह्वारित्याह धृत्यै" (ब्रा०३का०।२प्र०।३अ०) इति। द्यौरसि पृथिव्यसीति द्वयोर्लोकयोर्वाचकशब्देनोपात्तत्वात् साहचर्य्येण घर्म्मशब्देऽन्तरिक्षपरे सति कुम्भे त्रयाणां लोकानां विशेषेण धारणं सिध्यति। विश्वधाया इत्युच्चारणाद्वृष्टेरनवरोधस्तानधीनता भवति। कल्पः "तस्यां प्रागग्रꣳ शाखापवित्रं निदधाति वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारं" इति। भोः शाखापवित्र कुम्भीमुखे संस्थापित त्वं प्राणनिवासहेतूनां क्षीरांशानां पवित्रं शोधकमसि। लघ्ववधानेन तृणपर्णादीनां क्षीरेण सह कुम्भ्यां पततां प्रतिब-

ध्यमानत्वात्। न च क्षीरमप्येवं प्रतिबध्येत इति शङ्कनीयं। सूक्ष्मैः पवित्रच्छिद्रैः कुम्भ्यां पतन्तीनां शतसहस्रसङ्ख्यानां क्षीरधाराणां सद्भावात्। शोधकत्वमादत्तुं वसूनां पवित्रमसीति द्विरुक्तिः। वसुशब्दार्थं षष्ठ्यभिप्रेतं सम्बन्धविशेषञ्च आह "वसूनां पवित्रमसीत्याह। प्राणा वै वसवः। तेषां वा एतद्भागधेयं। यत् पवित्रं। तेभ्य एवैनत् करोति" (ब्रा० ३का०।२प्र०।३अ०) इति। धनवाचिना वसुशब्देन सह इह विवक्षितानां क्षीरावयवानां प्राणनिवासलक्षणजीवनहेतुत्वात्। प्राणरूपत्वं शोधकं पवित्रमिति यदस्ति तत् प्राणानामेव सम्बन्धि। कुतः। प्राणार्थमेव हि सर्व्वो जनः पिपीलिकामक्षिकाद्यपनयनेन क्षीरशोधनं करोति। शतसहस्रशब्दद्वयसूचितमर्थं दर्शयति "शतधारꣳ सहस्रधारमित्याह। प्राणेष्वेवायुर्दधाति सर्व्वत्वाय" (ब्रा० ३का०।२प्र०।३अ०) इति। शतायुर्भव सहस्रायुर्भवेत्येवमाशीर्व्वादो लोके प्रसिद्धः। स चापमृत्युपरिहारेणायुषः कार्त्स्न्याय सम्पद्यते। गुणत्रयविशिष्टं पवित्रं विधत्ते "त्रिवृत्पलाशशाखायां दर्भमयं भवति" (ब्रा०३का०।२प्र०।३अ०) इति। क्रमेण त्रीनर्थवादानाह "त्रिवृद्वै प्राणः। त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति। सौम्यः पर्णः सयोनित्वाय। साक्षात्पवित्रं दर्भाः" (ब्रा० ३का०।२प्र०।३अ०) इति। प्राणापानव्याननामकैरूर्ध्वाधोमध्यवृत्तिलक्षणैरवान्तरभेदैः प्राणवायोस्त्रिवृत्वं कार्य्ये पलाशे कारणस्य सोमस्यानुगतिर्योनिसहितत्वं। तदर्थमेवात्र पलाशशाखायामादरः। दर्भास्तु साक्षादेव शुद्धिहेतवो न तु द्रव्यान्तरसम्पा-

द्दनेन। एतच्च सन्ध्यावन्दनादिशास्त्रेषु प्रसिद्धं। शाखापवित्रस्य त्रिवृस्य निर्म्माणप्रकारः सूत्रे दर्शितः "त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायाᳲ शिथिलमवसृजति मूले मूलान्यग्रेऽग्राणि न ग्रन्थिं करोति" इति। तस्य शाखापवित्रस्य कालभेदेन कुम्भीमुखे स्थापनप्रकारभेदं विधत्ते "प्राक्शाग्रमधिनिदधाति। तत्प्राणापानयो रूपं। तिर्य्यक्प्रातः। तद्दर्शस्य रूपं। दार्श्यᳲ ह्येतदहः। अन्नं वै चन्द्रमाः। अन्नं प्राणाः। उभयमेवोपैत्यजामित्वाय। तस्मादयᳲ सर्व्वतः पवते" (ब्रा० ३का०।२प्र०।३अ०) इति। अमावास्यादिने सायन्दोहे कुम्भ्या उपरि शाखापवित्रं प्रागग्रं पश्चान्मूलं निदध्यात्। तथा सति प्राणापानसदृशं भवति। प्राणवायुः पूर्व्वरूपे मुखद्वारे निवसति अपानवायुः पश्चिमरूपे गुदद्वारे मलं निःसारयति तस्मादस्ति सादृश्यं। प्रतिपदि प्रातर्दोहे तिर्य्यङ्निदध्यात्। प्रागग्रत्वस्य दीर्घत्वादुदगग्रत्वं तिर्य्यक्त्वं तच्च दर्शनविषयेण चन्द्रेण सदृशं दृश्यते। शुक्लपक्षद्वितीयादिषु दक्षिणोत्तरवर्त्तिशृङ्गद्वयोपेतश्चन्द्रमा यद्यपि प्रतिपदि न दृश्यते तथाप्येकया कलया चन्द्रोत्पत्तेः शास्त्रसिद्धत्वेन दर्शनयोग्यत्वादेतदहश्चन्द्रदर्शनसम्बन्धि भवति। न च चन्द्रः प्राणरूपत्वे प्रयोजनाभावः तयोरन्नरूपत्वेन सप्रयोजनत्वात्। ओषधीरनुगृह्णानश्चन्द्रमास्तद्द्वारेणान्नं भवति। प्राणस्याप्यन्नेनोपचीयमानत्वात् अन्नत्वं। तर्ह्युभयोरपि कालयोः प्रागग्रत्वमेवास्तु तावतैवान्नत्वसिद्धेरिति चेत्। मैवं। अनालस्याय विलक्षणयोः प्रागग्रत्वोदगग्रत्वयोः

कर्त्तव्यत्वात्। यस्मादालस्यमवश्यं त्याज्यं तस्मादेवायं वायुरनालस्यः। सर्व्वेषु देशेषु सर्व्वेषु कालेषु पवते। बोधायनः "दोह्यमानामनुमन्त्रयते हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यां" इति। आपस्तम्बस्तु दुग्धस्य कुम्भ्यां शाखापवित्रे सेचनकाले बहिः पततां बिन्दूनामभिमन्त्रणे मन्त्रं विनियुङ्क्ते "हुतस्तोको हुतो द्रप्स इति विप्रुषोऽनुमन्त्रयते" इति। अल्पो विन्दुः स्तोकः प्रौढो विन्दुर्द्रप्सः तदुभयं नाकनाम्ने स्वर्गवासिने प्रौढायाग्नये हुतमस्तु। तथा द्यावापृथिवीभ्यामपि स्वाहा हुतमस्तु। अत्र हुतशब्दप्रयोगाद्धविष्ट्वेन प्रतितिष्ठति। ततः स्कन्नदोषो न भवतीत्याह "हुतस्तोको हुतो द्रप्स इत्याह प्रतिष्ठित्यै। हविषो स्कन्दाय। न हि हुतꣳ स्वाहा कृतꣳ स्कन्दति" (ब्रा०३का०।१प्र०।३अ०) इति। हविषोऽग्नौ प्रक्षिप्तत्वं हुतत्वं। देवतोद्देशपूर्व्वकत्यागवाचकस्वाहाशब्दप्रयोगेण विषयीकृतत्वं स्वाहाकृतत्वं। न च स्वाहाकारमन्तरेण हविःप्रक्षेपो नास्ति इति शङ्कनीयं, वषट्कारेणापि तत्प्रक्षेपात्। अत एव वाजसनेयिनो वाग्धेनोरुपास्तावामनन्ति "तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्चेति"। विकल्पश्च तयोः शास्त्रे चिन्तितः। एवञ्च सति द्विधापि देवतानामुपयुक्तयोर्हुतस्वाहाकृतयोर्नास्ति नाशदोषः। न खलु लोके कश्चिदपि भुक्तमन्नं नष्टमिति ब्रूते। नाकाय विप्रुषां होममुपपादयति "दिवि नाको नामाग्निः। तस्य विप्रुषो भागधेयं। अग्नये बृहते नाकाय-

ण्याह। नाकमेवाग्निं भागधेयेन समर्द्धयति"(ब्रा० ३का०।२प्र०।३अ०)इति। नाकस्य भागः कथं द्यावापृथिवीभ्यां दत्त इत्याशङ्क्य न तयोर्नाकवद्भोक्तृत्वं, किन्तु स्थित्याधारत्वेन पालकत्वमित्याह "स्वाहा द्यावापृथिवीभ्यामित्याह। द्यावापृथिव्योरेवैनत् प्रतिष्ठापयति" (ब्रा० ३का०।२प्र०।३अ०) इति। सपवित्रे कुम्भे क्षीरसेचनं विधत्ते "पवित्रवत्यानयति। अपाञ्चैवौषधीनाञ्च रसꣳ सꣳसृजति। अथो ओषधीष्वेव पशून् प्रतिष्ठापयति" (ब्रा० ३का०।२प्र०।३अ०)इति। वर्षधाराभिरागतानामपां रसो दर्भः। गोभिर्भक्षितानामोषधीनां रसः क्षीरं। तदुभयमत्र संसृष्टं भवत्येव। किञ्च दर्भोपलक्षितास्वोषधीषु क्षीरोपलक्षितान् पशून् प्रतिष्ठापयत्येव। गोदोहनकाले कुम्भस्पर्शपूर्व्वकं मौनं विधत्ते "अन्वारभ्य वाचं यच्छति। यज्ञस्य धृत्यै" (ब्रा०३का०।२प्र०।३अ०) इति। पवित्रधारणं विधत्ते "धारयन्नास्ते। धारयन्त इव हि दुहन्ति" (ब्रा०३का०।२प्र०।३अ०) इति। लोके दोग्धारो वामहस्तेन वा जानुभ्यां वा पात्रं धारयन्त एव दुहन्ति। तथात्रापि पवित्रं धारयन्नेवासीत। कुम्भीस्पर्शनपवित्रधारणयोर्विकल्पः सूत्रे दर्शितः "कुम्भीमन्वारभ्य वाचं यच्छति पवित्रं वा धारयन्नास्ते" इति। गां दुग्ध्वा कुम्भीं प्रति क्षीरमानयन्तं दोग्धारं पृच्छेदिति विधत्ते "कामधुक्ष इत्याह तृतीयस्यै। त्रय इमे लोकाः। इमानेव लोकान् यजमानो दुहे" (ब्रा०३का०।२प्र०।३अ०) इति। विद्यमानानां गवां मध्ये कां कां दुग्धवानसि। सोऽयं प्रश्नस्तृतीयगोपर्य्यन्तः।

गोर्भूरादिलोकरूपत्वात्। गवां त्रित्वेन लोकत्रयदोहो लभ्यते। दोग्धुरुत्तरं विधत्ते "अमूमिति नाम गृह्णाति। भद्रमेवासां कर्माविष्करोति" (ब्रा०३का०। २प्र०।३अ०) इति। अमूमित्यङ्गुल्यानिर्दिश्य तदीयं व्यावहारिकं नाम गृह्णीयात्। सन्ति हि गवां व्यवहाराय तत्स्वामिभिः सङ्केतितानि गङ्गायमुनासरस्वतीत्यादिनामानि क्रियन्ते। तन्नामग्रहणे बहुक्षीरप्रदानलक्षणमासां भद्रं कर्माविष्कृतं भवति। अथ वा मन्त्रद्वयमच्छिद्रकाण्डे समाम्नातं "कामधुक्षः प्र णो ब्रूहि। इन्द्राय हविरिन्द्रियं" इत्यमूं। "यस्यां देवानां पयो हि तं" इति च। तयोरत्र प्रश्नोत्तरवाक्याभ्यां प्रतीकग्रहणमस्तु। आपस्तम्बेन तयोः पठितत्वात्। कल्पः "अथ पुरस्तात् प्रत्यगानयन्तं पृच्छति कामधुक्ष इति। अमूमितीतरः प्रत्याह। तामनुमन्त्रयते सा विश्वायुरिति। द्वितीयामानयन्तं पृच्छति। कामधुक्ष इत्यमूमित्येवेतरः प्रत्याह। तामनुमन्त्रयते सा विश्वव्यचा इति। तृतीयामानयन्तं पृच्छति। कामधुक्ष इति। अमूमित्येवेतरः प्रत्याह। तामनुमन्त्रयते। सा विश्वकर्मा" इति। विश्वं कृत्स्नं आयुर्यस्याः सा विश्वायुः। विश्वस्य व्यचो व्याप्तिर्यस्याः सा विश्वव्यचाः। विश्वानि कर्माणि यस्याः सा विश्वकर्मा। पृथिव्यन्तरिक्षद्युलोकाभिमानि देवतानां क्रमेणोक्तगुणोपेतत्वात् तदभेदेन गावः स्तूयन्त इत्यमुं मन्त्राभिप्रायं दर्शयति "सा विश्वायुः सा विश्वव्यचाः। सा विश्वकर्मेत्याह। इयं वै विश्वायुः। अन्तरिक्षं विश्वव्यचाः। असौ विश्वकर्मा। इमानेवैताभिर्लोकान्

यथा पूर्व्वं दुहे" (ब्रा०३का०।२प्र०।३अ०) इति। दुग्ध इत्यर्थः। किञ्च बहुक्षीरप्रदानेन सन्तुष्टो विश्वायुष्ट्वादिकमाशीर्व्वादं प्रयुङ्क्ते इत्यभिप्रायान्तरमाह "अथो यथाप्रदात्रे पुण्यमाशास्ते। एवमेवैना एतदुपस्तौति। तस्मात् प्रादादित्युन्नीय वन्दमाना उपस्तुवन्तः पशून् दुहन्ति" (ब्रा०३का०।२प्र०।३अ०) इति। यथा लोके प्रभूतं धनं दत्तवते राज्ञे चिरञ्जीवेत्यादि आशीर्व्वादं पुरोधाः करोति एवमेवैतेन मन्त्रेण गाः स्तौति। यस्माच्छास्त्रीयदोहने स्तुतिराम्नाता तस्माल्लौकिकदोहनेऽपि प्रभूतं क्षीरं पूर्व्वेद्युरदादिति निश्चित्य हस्तेन वन्दमाना वाचा मम माता मम भगिनीत्येवं गाः स्तुवन्तो दुहन्ति। एतत् काण्डगतेषु मन्त्रेषु अनाम्नातं कञ्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते "बहुदुग्धीन्द्राय देवेभ्यो हविरिति वाचं विसृजते। यथा देवतमेव प्रैति। दैव्यस्य च मानुषस्य च व्यावृत्त्यै" (ब्रा०३का०।२प्र०।३अ०) इति। हे दोग्धस्त्वमिन्द्राय तदनुचरेभ्यश्च देवेभ्यः पर्य्याप्तं बहु क्षीरं सम्पादयितुं तिसृभ्य उत्तरा गा दोग्धि। तत्र समन्त्रकगोत्रयदोहनमिन्द्रार्थं, अमन्त्रकमितरगोदोहनं तदीयानुचरेभ्य इति यथादेवतत्वं प्रभूतत्वेन मानुषदोहनाद् व्यावृत्तिः। कल्पे त्वच्छिद्रकाण्डोक्त एव तत्समानार्थो मन्त्रो विनियुक्तः "बहुदुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृज्य" इति। ब्राह्मणेऽप्येतस्यैव मन्त्रस्य प्रतीकमस्तु। अर्थतो निर्देशाद्धविरितीषत्पाठभेदः। मन्त्रस्यावृत्तिं विधत्ते "त्रिराह।

त्रिषत्या हि देवाः” (ब्रा०३का०।२प्र०।३अ०) इति । त्रिरुक्ते सत्यत्वबुद्धिर्येषां ते त्रिषत्याः। मौनं कुम्भीस्पर्शनञ्च विनैव तिसृभ्योऽधिका गा दोहयेदिति विधत्ते “अवाचं यमोऽनन्वारभ्योत्तराः। अपरिमितमेवावरुन्धे” (ब्रा०३का०।२प्र०।३अ०) इति। उत्तरासामपि गवां दोहने बहुदेवसहितायेन्द्रायापरिमितं क्षीरं सम्पादितं भवति। तूष्णीमुत्तरा दोहयित्वेत्यमन्त्रकदोहनं कल्पे दर्शितं। पूर्व्वपक्षत्वेन दारुपात्रन्निषेधति “न दारुपात्रेण दुह्यात्। अग्निवद्वै दारुपात्रं। यद्दारुपात्रेण दुह्यात्। यातयाम्ना हविषा यजेत”(ब्रा०३का०।२प्र०।३अ०)इति। मन्थनेनाभिव्यज्यमानोऽग्निः पूर्व्वं दारुणि गूढो वर्त्तत इत्यग्निसहितं दारुपात्रं तत्रत्याग्निना क्षीरस्य स्वीकृतत्वाद्धविषो गतसारत्वं। सिद्धान्तरूपेण तत्पात्रं विधत्ते “अथो खल्वाहुः। पुरोडाशमुखानि वै हवीꣳषि। नेत इतः पुरोडाशꣳ हविषो यामोऽस्तीति।काममेव दारुपात्रेण दुह्यात्”(ब्रा०३का०।२प्र०।३अ०) इति।पूर्व्वं निषेधवादिनो हविषस्तत्त्वं न जानन्ति। अतस्तज्ज्ञातृत्यर्थोऽयमथोशब्दः। अभिज्ञास्त्वेवमाहुः। लोके तावदपूपौदनादीनां क्षुन्निवर्त्तकत्वात् प्राधान्यं दृष्टं। दधिक्षीरादीनान्तु सहकारित्वमेव। ततो यागेष्वपि पुरोडाशचरुमांसान्येव सारवन्ति हवींषि। न तु पुरोडाशादर्व्वाचीनस्य क्षीरादिहविषः कश्चित् सारोऽस्ति योऽग्निना स्वीक्रियेत। तस्माद्दारुपात्रदोहनं न विरुध्यत इति।“यदुपर्य्युपरि शिरो हरेत्। अधोऽधः शिरो हरति” इत्यादाविव इत इतः पुरोडाशमिति वीप्सा द्वितीया च। चरु-

पुरोडाशादत्यन्तमर्व्वाचीनस्येत्यर्थः। पुनरप्यन्यं पूर्व्वपक्षमाह "शूद्र एव न दुह्यात्। असतो वा एष सम्भूतः। यच्छूद्रः। अह-विरेव तदित्याहुः। यच्छूद्रो दोग्धीति" (ब्रा०३का०।१प्र०।३अ०) इति। असतोऽधमावयवात् पादात् जातः। सिद्धान्तमाह "अग्निहोत्रमेव न दुह्याच्छूद्रः। तद्धि नोत्पुनन्ति। यदा खलु वै पवित्रमत्येति। अथ तद्धविरिति" (ब्रा०३का०।२प्र०।३अ०)। अग्निहोत्रहविष उत्पवनाभावान्नास्ति शूद्रस्पर्शे शुद्धिः। इदन्तु हविरुत्पवनस्य त्रिवृत्या पवित्रमतिशयेन प्राप्नोतीति शुद्ध-मेव। कल्पः "दोहने अप आनीय सङ्क्षालनमानयति सम्पृ-च्यध्वमृतावरीरूर्म्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातय इति"। ऋतशब्देन सत्यवाचिना जलेनावश्यम्भावि चालनसामर्थ्यमुप-लक्ष्यते। हे सामर्थ्यवत्य आपो यूयं कुम्भीगतेन क्षीरेण सम्पृक्ता भवत। कीदृश्यो यूयं। ऊर्म्मिमत्त्वेनात्यन्तमाधुर्य्येण हर्षहेतु-त्वेन च क्षीरसदृश्यः। किमर्थोऽयं सम्पर्कः। सान्नाय्यलक्षणधन-लाभार्थः। सामर्थ्योर्म्मिमाधुर्य्यगुणोपन्यासादत्र रससम्पर्को विवक्षितो न तु द्रव्यमात्रसम्पर्क इत्याह "सम्पृच्यध्वमृतावरी-रित्याह। अपाञ्चैवौषधीनाञ्च रसꣳ सꣳसृजति। तस्मादपा-ञ्चौषधीनाञ्च रसमुपजीवामः" (ब्रा०३का०।२प्र०।३अ०) इति। दोहनपात्रक्षालनेन स्वादुतमोऽपां रसः। कुम्भीगतक्षीरस्वरू-पमेव गोभिर्भक्षितानामोषधीनां रसस्तद्रसद्वयं कुम्भ्यां संसृष्टं। यस्मादुभयमेलनं प्रशस्तं तस्मादयं सर्व्वे तदुभयमुपजीवामः। एतच्च लोके प्रसिद्धं। छन्दोगास्तूभयोरुपजीवनं विशदीकृत्या-

मनन्ति "अन्नमशितं त्रेधा विधीयते तस्य यत् स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते तासां यत् स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः" इति। धनलाभोक्तिप्रयोजनं दर्शयति "मन्द्रा धनस्य सातय इत्याह। पुष्टिमेव यजमाने दधाति" (ब्रा०३का०।२प्र०।३अ०) इति। कल्पः "अथैनत्तस्मादगुद्वास्य शीतं कृत्वा तिरः पवित्रं दध्यातनक्ति सोमेन त्वातनच्मीन्द्राय दधीति"। हे चीर दधिरूपेण सोमेन त्वामातनच्मि। तेनातञ्चनेन निष्पन्नं दधीन्द्राय होष्यते। नन्वत्र सोमशब्देन मुख्यसोमं परित्यज्य कुतो दध्युपलभ्यते। ब्राह्मणान्तरबलादिति ब्रूमः। तच्च ह्यातञ्चनद्रव्यविशेषैर्देवताविशेषाणां प्रीतिं ब्रुवती श्रुतिः दध्न इन्द्र प्रियत्वं दर्शयति।"यत् पूतिकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं। तद्यत्कलैराचमं। तद्यत्तण्डुलैर्वैश्वदेवं। तद्यदातञ्चनेन मानुषं। तद्यद्दध्ना तत् सेन्द्रं। तद्यद्दध्नातनक्ति सेन्द्रत्वाय" इति। अत्रातञ्चनोक्तं मुख्यं दधिशब्दं परित्यज्य गौणस्य सोमशब्दस्योपादाने प्रयोजनमाह "सोमेन त्वातनच्मीन्द्राय दधीत्याह। सोममेवैनत् करोति" (ब्रा० ३का०।२प्र०।३अ०) इति। सान्नाय्यस्य सोमीकरणं प्रयोजनं। तस्यापि प्रयोजनमाह "यो वै सोमं भक्षयित्वा। संवत्सरꣳ सोमं न पिबति। पुनर्भक्ष्योऽस्य सोमपीथो भवति। सोमः खलु वै सान्नाय्यं। य एवंविद्वान्त्सान्नाय्यं पिबति। अपुनर्भक्ष्योऽस्य सोमपीथो भवति (ब्रा०३का०।२प्र०। ३अ०) इति। सोमपीथः पातव्यत्वेन विहितः सोम इत्यर्थः।

अग्निष्टोममननुष्ठाय संवत्सरमतिवाह्य सोमयागं यो न करोति तेनावश्यमसौ कर्त्तव्यः। वसन्ते वसन्ते ज्योतिष्टोमेन यजेतेति तद्विधानात्। यदि द्रव्याभावादिनिमित्तेन प्रतिबध्येत तद्भावनया सोमीकृतं। सान्नाय्यं पिबतस्तद्वैकल्यं परिह्रियते। अस्ति अनुष्ठातुमशक्तस्य सर्व्वत्र भावनया तत्पूर्त्तिः। अत एव वृहदारण्यके सृष्टिप्रकरणे ब्रह्मचारिणो गार्हस्थ्यधर्म्मं वाञ्छतस्तदसम्भवे मनसोपासनया तत्सम्पूर्त्तिराम्नायते “एकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्याकृत्स्नता। मन एवास्यात्मा। वाग् जाया। प्राणः प्रजा। चक्षुर्मानुषं वित्तं। चक्षुषा हि तद्विन्दते। श्रोत्रं दैवं वित्तं। श्रोत्रेणैव हि तच्छृणोति। आत्मैवास्य कर्म्म। आत्मना हि कर्म्म करोति” इति। आत्मा देहो वेदगम्यं। मन्त्रादिकं दैवं वित्तं। अतः सोमभावनया वैकल्यपरिहारो युज्यते। कुम्भ्याःपिधानाय पात्रविशेषं विधत्ते “न मृन्मयेनापि दध्यात्। यन्मृण्मयेनापि दध्यात्। पितृदेवत्यꣳ स्यात्। अयस्पात्रेण वा दारुपात्रेण वा पिदधाति। तद्धि सदेवं (ब्रा०३का०।२प्र०।३अ०) इति। पितॄणां मृत्पात्रसुदकुम्भश्राद्धादौ सिद्धं। दारुपात्रस्य सदेवत्वं दोहनपात्रेऽवगतं मन्त्रान्तराद्वा। तत्रैवमाम्नायते “असृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यतां” इति। अयस्पात्रस्याप्येतद्द्रष्टव्यं। पिधानपात्रस्य सोदकत्वं विधत्ते “उदन्वद्भवति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै” (ब्रा०३का०।२प्र०।३अ०) इति। स्वाभिमानिदेवतामुखेनापां

रक्षो घ्नत्वं। पिधानाय मन्त्रमुत्पाद्य व्याचष्टे "अदस्तमसि विष्णवे त्वेत्याह। यज्ञो वै विष्णुः। यज्ञायैवैनददस्तं करोति" (ब्रा० ३का०२प्र०।३अ०) इति। अदस्तमनुपचीर्णं। कल्पे तु प्रतीकमिदमित्यभिप्रेत्याच्छिद्रकाण्डगतो मन्त्रो विनियुक्तः "अथैनददन्वता कꣳसेन वा चमसेन वा पिदधाति। अदस्तमसि विष्णवे त्वा यज्ञायापि दधाम्यहं अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते" इति। प्रथमपक्षे हे मान्नय्य विष्णवे त्वा पिदधामीति अध्याहारः। कल्पः "तदुपरीव निदधाति यत्र गुप्तम्मन्यते विष्णो हव्यꣳ रक्षस्वेति" इति। अत्र रक्षणार्थमेव विष्णुसम्बोधनं। न त्विन्द्रवद्धविः स्वीकारायेत्यमुमभिप्रायं विशदयति "विष्णो हव्यꣳ रक्षस्वेत्याह गुप्त्यै" इति। शाखा बर्हिषोरिव मान्नाय्येऽपि विधत्ते "अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०३का०।२प्र०।३अ०) इति। अत्र विनियोगसङ्ग्रहः।

"शुन्धमान्नाय्यपात्राणि प्रोक्ष्य मातेति कुम्भिका।
संस्थाप्याग्नौ वसुशाखापवित्रं तत्र निक्षिपेत्॥
हुतविन्दून् सेति गास्तु दुग्धास्तिस्रोऽभिमन्त्रयेत्।
सम्पृमङ्क्षालनं क्षिप्त्वा सोमे दध्मातनक्ति हि॥
विष्णोऽनधो दधात्यस्मिन् तृतीये दश वर्णिताः"॥

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

"शुन्धध्वमिति मन्त्रोऽयं पौरोडाशिकशोधने।

सान्नाय्यपात्रशुद्धौ वा प्रथमोऽस्तु समाख्यया॥
पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा।
सन्निध्यनुक्तितः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात्"॥इति।

शुन्धध्वं दैव्याय कर्म्मणे देवयज्यायै इत्ययं मन्त्रः पौरोडाशिकमिति याज्ञिकैः समाख्याते काण्डे पठितत्वात्। समाख्यया पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनां शोधनेऽङ्गमिति चेत्। मैवं। पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमन्त्रमभिधत्ते। तद्धितप्रत्ययस्तु तत्सम्बन्धिकाण्डं। न चैतावता पुरोडाशपात्राणां मन्त्रसन्निधिः प्रत्यक्षो भवति, किं त्वर्थापत्त्या कल्प्यते। यद्युक्तसन्निधिर्न स्यात् तथा मन्त्रग्रन्थस्य पौरोडाशिकसमाख्या न स्यात्। न ह्यसावसन्निहितानामिषे त्वादिमन्त्राणामाग्नेयकाण्डसमाख्या भवति। सन्निहितानान्तु युञ्जानः प्रथमं मन इत्यादिमन्त्राणां भवत्येषा समाख्या। तस्मात् काण्डसमाख्यया सन्निधिं परिकल्प्य तत्सन्निध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं पौरोडाशिकपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतिं कल्पयित्वा तया श्रुत्या विनियोग इति समाख्याया विप्रकर्षः। सान्नाय्यपात्राणां शोधनमन्त्रसन्निधिस्तु प्रत्यक्ष इष्टा बर्हिः सम्पादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नाय्यपात्राणां देशः। उक्तमन्त्रस्त्वेषा बर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते। तेन च प्रत्यक्षसन्निधानात् प्रकरणादीनाञ्चतुर्णामेव कल्पनात् सन्निधिः सन्निकृष्यते। तस्मात् क्रमेण समाख्यां बाधित्वा सान्नाय्यपात्रशो-

धनशेषो मन्त्र इत्ययं चरमः पक्षोऽभ्युपेतव्यः। तस्मिन्नेवाध्याये षष्ठपादे विचारितं।

"शाखाच्छेदादयो दोहधर्म्मास्साय्यं व्यवस्थिताः।
प्रातस्र्च सन्ति वा साय्यं स्थानात् ते पूर्व्ववत् स्थिताः॥
आनर्थक्यप्रतिहतिः पूर्व्ववन्नैव विद्यते।
बलिनाऽतः प्रकरणात् प्रातर्दोहेऽपि सन्ति ते"॥ इति।

दर्शपूर्णमासप्रकरणे पलाशशाखाच्छेदनं तया शाखया वत्सापाकरणमित्यादयो दोहधर्म्माः समाम्नाताः। दोहौ च द्वौ विद्येते। अमावास्यायां रात्रावेको दोहः। प्रतिपदि प्रातरपरो दोहः। तत्र पूर्व्वन्यायेन स्थापनबलात् प्राथमिकेनायं दोहे प्रथमश्रुतास्ते धर्म्मा व्यवतिष्ठन्त इति चेत्। मैवं। वैषम्यात्। पूर्व्वत्र हि सोमे पशुविशसनादिकर्म्मणामनन्वयात् प्रकरणमानर्थक्यं प्रतिहतं। ततोऽग्नीषोमीयपशौ स्थानबलात् ते धर्म्मा व्यवस्थिताः। इह तु नास्त्यानर्थक्यप्रतिहतिः। ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्म्मा अभ्युपेयाः। दशमाध्यायस्याष्टमपादे विचारितं।

"स्वाहेत्युक्तिर्दर्व्विहोमे संहारस्तात्र वाग्रिमः।
पूर्व्वन्यायेन तन्मन्त्रे स्वाहाकाराविधित्वतः॥
विधित्वेऽपि नियत्यैव न बाध्या स वषट्कृतिः।
होमान्तरे वषट्कारस्वाहाकारविकल्पनं"॥ इति।

अनारभ्य श्रूयते। वषट्कारेण वा देवेभ्योऽन्नं प्रदीयत इति। दर्व्विहोमविशेषे श्रूयते। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति।

तत्र पूर्व्वाधिकरणे यथा अनारभ्य विहितस्य साप्तदशस्य प्राकरणिकेन साप्तदश्यविधिना उपसंहारे सति विकृत्यन्तरे साप्तदश्यं नास्ति तथा इहाप्यनारभ्यवादेन विहितस्य स्वाहाकारस्य दर्विहोमप्रकरणपठितमन्त्रगतेन स्वाहाशब्देनोपसंहारे होमान्तरेषु नास्ति स्वाहाकार इति प्राप्ते। ब्रूमः। पृथिव्यै स्वाहेति मन्त्रपाठोऽयं। न त्वत्र स्वाहाकारोऽनारभ्याऽधीतब्राह्मणवाक्येनेव विधीयते। न खलु "यमादित्या अꣳशुमाप्याययन्ति" इत्यादि याज्यामन्त्रगता आदित्यादिशब्दाः कस्यचिदर्थस्य विधायका दृष्टाः। यथा सिद्धार्थवाचक आदित्यशब्दो न विधत्ते, यथा क्रियावाचित्वेऽपि वर्त्तमानार्थ आप्याययन्तीति न विधायकः तथा वैदिकहविर्विषयो देवस्य दत्तमित्यस्मिन्नर्थे वर्त्तमानः स्वाहाशब्दो नोच्चारणं विदधाति। तथा सत्युपसंहार्य्योपसंहारकयोरेकविषयत्वशङ्काया अप्यभावान्नास्त्येवात्र पूर्व्वन्यायः। ननु प्रकरणादिना मन्त्रस्य होमे विनियुक्तत्वात् स्वाहाकारविधिरर्थाल्लभ्यत इति चेत्, एवमपि ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते। अस्मिन्नुपहोमे स्वाहाकारेणैवान्नं प्रदीयत इति। ततः पाक्षिको वषट्कारोऽर्थान्निवर्त्तते। किञ्च "पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात् स्वाहाकृतयो ऽन्ये" इति ब्राह्मणोक्तन्यायेन स्वाहा पृथिव्या इत्यपि पाठः पक्षे प्राप्नोति। तत्र पृथिव्यै स्वाहेत्येव पठेदिति नियम्यते। अर्थाद्व्यात्यासो निवर्त्तते। तस्मादविधित्वविधित्वयोरुपसंहाराभावेन होमान्तरेष्वनारभ्य विहितो वषट्कारस्वाहाकारविकल्पः सुस्थितो

भवति। एवञ्च सति "हुतः स्तोकः" "स्वाहा द्यावापृथिवीभ्यां" इति मन्त्रांशाभ्यां सूचितस्य स्वाहाकारविकल्पस्य न कदाचिदनुपपत्तिः। प्रथमाध्यायस्य द्वितीयपादे किञ्चिद्विचारितं।

"तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः।
हिना श्रुता हेतुताऽतः शूर्पादन्यच्च साधनं॥
शूर्पसाधनता श्रौती नाश्रौती सा विकल्प्यते।
अतो निरर्थको हेतुः स्तुतिस्तु स्यात् प्रवर्त्तिका"॥ इति।

इदमाम्नायते "शूर्पेण जुहोति"। "तेन ह्यन्नं क्रियते" इति। अयमर्थवादो विधेयशूर्पे हेतुत्वेनान्वेति हिशब्दस्य हेतुवाचित्वात्। यस्मादन्नसाधनं तस्माच्छूर्पेण होतव्यमित्युक्ते यद्यदन्नसाधनं दर्वीपिठरादिकं तेन सर्वेण होतव्यमिति लभ्यते। ततः पिठरादयः शूर्पेण सह विकल्प्यन्त इति प्राप्ते। ब्रूमः। शूर्पस्य होमसाधनत्वं श्रौतं तृतीयया तदवगमात्। पिठरादीनां त्वानुमानिकं। अतोऽसमानबलत्वान् न विकल्पो युक्तः। ततो हेतुर्व्यर्थः। स्तुतिस्तु प्ररोचनायोपयुक्ता। तस्मात् स्तुतित्वेनान्वयः। अनेनैव न्यायेन प्रकृतेऽपि "अग्निहोत्रमेव न दुह्याच्छूद्रः। तद्धि नोत्पुनन्ति" इत्यत्र हिशब्दस्य हेतुत्वाद्यत्र यत्र नास्त्युत्पवनं तत्र तत्र शूद्रस्पर्शो निषिद्ध इति व्याप्तौ सत्यां उत्पवनरहितानां व्रीहियवादीनां कदाचिच्छूद्रेण स्पृष्टानां यागयोग्यत्वं न स्यादिति पूर्व्वः पक्षः। तद्धि नोत्पुनन्तीत्यर्थवादस्य स्तावकत्वेन हेतुप्रतिपादकत्वाभावान्नोक्तदोष इति राद्धान्तः।

अथ व्याकरणं। शुन्धध्वमित्यत्र धातुरुदात्तः। शप्प्रत्ययस्य

पित्वादनुदात्तः। अदुपदेशादुत्तरं लसार्वधातुकमप्यनुदात्तं। देव्यशब्दो यञन्तत्वेन ञ्नित्यादिरिति (पा० ६।१।१९७) आद्युदात्तः। मातरिश्वन्शब्दो धिषणेतिवन्मध्योदात्तः। घर्मोऽसीत्योकारस्योदात्तानुदात्तयोरकारयोः स्थाने पतितत्वादेकादेशस्वरेण नित्यमुदात्तत्वे प्राप्ते तदपवादः। स्वरितो वानुदात्ते पदादौ (पा० ८।२।६)। उत्तरपदस्यादावनुदात्ते परत उदात्तानुदात्तयोर्य एकादेशः स विकल्पेन स्वरितः स्यात् इत्योकारः स्वरितः। पृथिव्यसीत्यत्र उदात्तस्वरितयोर्यणःस्वरितोऽनुदात्तस्य (पा० ८। २।४) उदात्तस्य वा स्वरितस्य वा स्थाने यो यण् तस्मादुत्तरस्यानुदात्तस्य स्वरितः स्यात् इत्याकारःस्वरितः। विश्वस्य धायो धारणं यस्या वृष्टेः सा विश्वधायाः,तत्र पूर्वपदप्रकृतिस्वरः प्राप्तः। विश्वशब्दस्य स्वत आद्युदात्तः "विश्वे देवा ऋतावृध" इत्यादौ तद्दर्शनात्। इह तु बहुव्रीहौ विश्वं संज्ञायां (पा० ६।२।१०६) इति विश्वमित्येतत् पूर्वपदमन्तोदात्तं। परमशब्दो नपुंसकलिङ्गोऽपि नित्यनपुंसकत्वाभावात् फिट्स्वरेणान्तोदात्तः। दृꣳहस्वेत्यत्र पृथग्वाक्येन पदात् परत्वाभावान्न निघातः, किन्तु धातुस्वरशप्स्वरलसार्व्वधातुकस्वराः। परमेण धाम्ना दृꣳहस्वेत्येवं एकवाक्यत्वेऽपि दृꣳहस्वमाह्वारिति समुच्चयविवक्षायां चकारस्य लुप्तत्वेन चादिलोपे विभाषेति (पा० ८।१।६३) निघातस्य विकल्पो द्रष्टव्यः। वसुशब्दो वृषादिः। पवित्रमित्यत्र पुवस्संज्ञायामिति (पा० ३।२।१८५)पूञ्धातोरित्रप्रत्यये सतीकार उदात्तः। शतधारशब्दः शतवल्शशब्दवत्। इषोऽस्मये इत्यत्र घर्मोऽसीतिवदोकारः स्वरि-

तः। वृहन्महतोरुपसंख्यानं (पा० ६।१।१७३।१ वा०) इति वृहच्छ
ब्दादुत्तरस्या अजादिविभक्तेरुदात्तत्वं। कं सुखं अकं दुःखं त
विद्यते यस्मिन्नसौ नाकः पूर्वपदप्रकृतिस्वरः। स्वाहाशब्दो निपात
द्यावापृथिवीशब्दस्य, देवताद्वन्द्वे च (पा० ६।२।१४१) इत्युभय
दप्रकृतिस्वरत्वादाद्यन्तावुदात्तौ। विश्वधाया इति वत् विश्वायुरि
त्यादयः। ऋतावरीशब्दस्य आमन्त्रितत्वान्निघातः। ऊर्म्मिन्शब्दस्य
फिट्स्वरः। ङीबनुदात्तः। मधुशब्दो वृषादिः। मतुप्समपावनु
दात्तौ। धनशब्दो नपुंसकस्वरः। सोमेन्द्रविष्णुशब्दा वृषादिगताः
हव्यस्य होमस्य योग्यं हव्यं प्रत्ययस्वरः॥ इति माधवीये वेदा-
र्थप्रकाशे तैत्तिरीयसंहिताभाष्ये तृतीयोऽनुवाकः ॥ * ॥

कर्म्मणे वां देवेभ्यः शकेयं वेषाय त्वा प्रत्युष्टꣳ रक्षः
प्रत्युष्टा अरातयो धूरसि धूर्व्व धूर्व्वन्तं धूर्व्व तं योऽस्मान्
धूर्व्वति तं धर्व्व यं वयं धूर्व्वामस्त्वं देवानामसि सस्नित-
मं पप्रितमं जुष्टतमं वह्नितमं देवहूतममहुतमसि हु-
विर्धानं दृꣳहस्व माह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे माभे-
र्मासंविक्था मा त्वा ॥ १ ॥

हिꣳसिषमुरु वाताय देवस्य त्वा सवितुः प्रसवेऽश्वि-
नोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्व्वपाम्यग्नीषो-
माभ्यामिदं देवानामिदमु नः सह स्फात्यै त्वा नारात्यै
सुवरभि विख्येषं वैश्वानरं ज्योतिर्दृꣳहन्तां दुर्य्या द्यावा-

पृथिव्योरुर्व॑न्तरि॑क्षमन्वि॑ह्यदि॑त्यास्त्वोपस्थे॑ सादयाम्य-
ग्ने ह॒व्यꣳ र॑क्षस्व ॥ २ ॥

मा त्वा षट्च॑त्वारिꣳशच्च ॥४॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपा-
ठके चतुर्थोऽनुवाकः ॥ ४ ॥

अनुवाकत्रयेण पर्वदिनकर्तव्यं समापितं। उत्तरैर्दशभिरनु-
वाकैः प्रतिपद्दिनकर्तव्यमभिधातव्यं। तत्र प्रथमं तावदस्मिंश्चतु-
र्थेऽनुवाके हविर्निर्वापोऽभिधीयते। बोधायनः “अथ प्रातर्हु-
तेऽग्निहोत्रे हस्तौ सम्मृशते कर्मणे वां देवेभ्यः शकेयमिति” इति।
आपस्तम्बः“कर्मणे वां देवेभ्यः शकेयमिति हस्ताववनिज्य” इति।
हे हस्तौ देवानां सम्बन्धिने कर्मणे प्रक्षालितौ युवां प्रयोक्तुं शक्तो
भूयासं। विनापि प्रक्षालनं लौकिकशक्तेः सद्भावाच्छास्त्रीयशक्त्य-
र्थोऽयं मन्त्रः प्रक्षालनहेतुरित्यभिप्रेत्याह। “कर्मणे वां देवेभ्यः
शकेयमित्याह शक्त्यै”(ब्रा०३का०।२प्र०।४अ०) इति। कश्चिन्मन्त्र-
मुत्पाद्य तृणास्तरणे विनियुङ्क्ते “यज्ञस्य वै सन्ततिमनु प्रजाः प-
शवो यजमानस्य सन्तायन्ते। यज्ञस्य विच्छित्तिमनु प्रजाः पशवो
यजमानस्य विच्छिद्यन्ते। यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै
स्तृणामि सन्तत्यै त्वा यज्ञस्येत्याहवनीयात् सन्तनोति। यजमानस्य
प्रजायै पशूनाꣳ सन्तत्यै”।(ब्रा०३का०।२प्र०।४अ०) इति। यज्ञस्य
त्वा सन्तत्या इत्येषां पदानामादरार्थेन द्विरभ्यासेन भूमिर्यथा
न दृश्यते तथा स्तरणीयमिति सूचयति। अत एवान्यत्राम्नातं

"अनतिदृश्नꣳ स्तृणाति" इति। स्तरणप्रदेशस्याद्यन्तौ कल्पे दर्शितौ "गार्हपत्यात् प्रक्रम्य सन्ततामुलपराजीꣳ स्तृणात्याहवनीयात्" इति। उलपराजिस्तृणविशेषः। प्रणयनं विधत्ते "अपः प्रणयति" (ब्रा॰३का॰।२प्र॰।४अ॰) इति। तत्प्रकारः कल्पे दर्शितः "अपरेण गार्हपत्यमुपविश्य कꣳसं वा चमसं वा प्रणीताप्रणयनमानीय तस्मिंस्तिरः पवित्रमप आनयन्नाह। ब्रह्मन्नपः प्रणेष्यामि यजमानवाचं यच्छेति सम्प्रेष्यन् समं प्राणैर्धारयमाणोऽविषिञ्चन् ह्लोत्तरेणाहवनीयं दर्भेषु सादयित्वा" इति। प्रणयनविधेरर्थवादमाह "श्रद्धा वा आपः। श्रद्धामेवारभ्य प्रणीय प्रचरति"। (ब्रा॰३का॰।२प्र॰।४अ॰) इति। अपां श्रद्धाजनकत्वेन श्रद्धारूपत्वमुपचर्यते। तज्जनकत्वञ्च श्रुत्यन्तरे समाम्नातं "आपोऽहास्मै श्रद्धां सन्नमन्ते पुण्याय कर्म्मणे" इति। दृश्यते स्नाना च मनोपेतस्य श्रद्धातिशयः। पूर्व्वोक्तमेव प्रणयनविधिं पुनः पुनरनूद्य बहुधा स्तौति "अपः प्रणयति। यज्ञो वा आपः। यज्ञमेवारभ्य प्रणीय प्रचरति। अपः प्रणयति। वज्रो वा आपः। वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचरति। अपः प्रणयति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै। अपः प्रणयति। आपो वै देवानां प्रियं धाम। देवानामेव प्रियं धाम प्रणीय प्रचरति। अपः प्रणयति। आपो वै सर्व्वा देवताः। देवता एवारभ्य प्रणीयप्रचरति" (ब्रा॰३का॰।२प्र॰।४अ॰) इति। यज्ञो यथाभीष्टस्वर्गसाधनं तद्वदपामभीष्टप्रीत्यादिसाधनत्वाद्यज्ञत्वं। प्रणीताभिरद्भिः पिष्टस्य संयमनं प्रचरणं। यथा वज्रो वैरिणं वारयति तद्वदापस्तृष्णां

धारयन्ति। रक्षो घ्नत्वं पूर्व्वोक्तं। वृष्णुदकस्य देवप्रियधाम्नो द्युलो-
कादुत्पन्नत्वादपां तद्धामत्वं। देवास्तावदग्निं प्रविश्य तद्भावं प्राप्ताः।
तथा च श्रूयते "देवासुराः संयत्ता आसन्। ते देवा बिभ्यतोऽग्निं
प्राविशन्। तस्मादाहुरग्निः सर्व्वा देवता" इति। "स चाग्निरप्सु
प्रविष्टः। स निलायत। सोऽपः प्राविशत्" इति श्रुतेः। तस्मादपां
सर्व्वदेवता त्वं। ब्राह्मणान्तराद्वा तथात्वं द्रष्टव्यं। कल्पः "आदत्ते
दक्षिणेनाग्निहोत्रहवणीꣳ सव्येन शूर्पं वेषाय त्वेति" इति। तदेत-
दुभयं यज्ञायुधमध्यपाति, तानि यज्ञायुधान्यन्यत्रैवमाम्नातानि
"स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च
शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला च एतानि वै दशयज्ञा-
युधानि" इति। तेषां प्रयोगप्रकारः सूत्रे दर्शितः "उत्तरेण गार्हं-
पत्याहवनीयौ दर्भान् संꣳस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति
दशापराणि दशपूर्व्वाणि स्फ्यश्च कपालानि चेति यथा समा-
म्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्य-
स्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्व्वाणि
तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीं मदन्तीमश्मानमुपवेषं प्रा-
तर्दोहपात्राणीति प्रणीता प्रणयनं पात्रसꣳसादनात् पूर्व्वमेके स-
मामनन्ति" इति। तत्राग्निहोत्रहवण्यादाने शाखान्तरमन्त्र उदा-
हृतः "वानस्पत्यासि दक्षायत्वेत्यग्निहोत्रहवणीमादत्त" इति।
तस्मात् "वेषाय त्वा" इति मन्त्रेण शूर्पमाददीत। वेषो व्याप्तिमान्
यज्ञस्तदर्थं हे शूर्प त्वामाददे। अत्रार्थावबोधकाल एव वाक्यपूर्त्तये
पदाध्याहारः। अनुष्ठानकाले तु न लौकिकं पदमध्याहर्तव्यं।

अनाम्नातस्योहादिवदमन्त्रत्वात्। अवबुद्धस्यार्थस्य वाक्यैकदेशे-नापि संस्कारोद्बोधे सति स्मृत्युपपत्तेः। अमन्त्रत्वादेव तद्द्वार-कस्मृत्या नास्त्यदृष्टं किञ्चित्। सूर्याय जुष्टं निर्वपामीत्यूहादी-नमन्त्रानपि प्रयुञ्जते। अन्यथाऽग्नये जुष्टमित्येवमाम्नातस्यैव प्रयोगे सौर्यकर्मसमवेतस्यार्थस्य स्मृत्यभावप्रसङ्गात्। शूर्पस्य यज्ञार्थत्वं नि-र्वापावघातादौ प्रसिद्धमित्याह"वेषाय त्वेत्याह। वेषाय ह्येनदा-दत्ते" (ब्रा०३का०।२प्र०।४अ०) इति। कल्पः "प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य" इति। व्याचष्टे"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह। रक्षसामपहत्यै" (ब्रा०३का०।२प्र०।४अ०) इति। कल्पः "जघनेन गार्हपत्यमग्नि-ष्ठमनो भवति तस्यैत्योत्तरां युगधुरमभिमृशति धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः"इति। व्रीहिरूप-हविर्धारकशकटसम्बन्धिनो युगस्य बलीवर्दवहने प्रदेशे कश्चिद्धिं-सकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते। हे वह्ने त्वं हिंसकोऽसि ततः पापरूपं हिंसकं विनाशय। किञ्च यो राक्षसादिः याग-विघ्नेनास्मान् जिघांसति तमपि विनाशय। यं वा आलस्यादिरूपं वैरिणं वयं जिघांसामः तमपि विनाशय। वह्न्याधारभूताया युगस्य धुरः संस्पर्शं विधत्ते "धूरसीत्याह। एष वै धुर्योऽग्निः। तं यदनुपस्पृश्यातीयात्। अध्वर्युञ्च यजमानं च प्रदहेत्। उपस्पृ-श्यात्येति। अध्वर्योश्च यजमानस्य चाप्रदाहाय" (ब्रा०३का०। २प्र०।अ०) इति। तन्धूर्वेति वाक्ययोः पौनरुक्त्यभ्रमं निवार-यति "धूर्वन्तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वाम इत्याह।

द्वौ वाव पुरुषौ। यश्चैव धूर्वति। यश्चैनं धूर्वति। तावुभौ शुचार्पयति
(ब्रा० ३का०।२प्र०।४अ०) इति। शोकेन योजयतीत्यर्थः। कल
"अनोऽभिमन्त्रयते त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं व
ह्नितमं देवहूतममहुतमसि हविर्धानं दृꣳहस्व माह्वाः" इति।
शकट त्वं देवानां सम्बन्धि भवसि ततः शुद्धतमं व्रीहिभिः पूर्णत
प्रियतमं हविषो वाहकतमं देवानामाह्वातृतमञ्चासि। कि
व्रीहिभारापादितवक्रत्वरहितं हविषो धारकमसि अतो दृ
भव। भग्नं मा भूः। मन्त्रस्य प्रथमभागे स्पष्टार्थत्वं दर्शयति "
देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमसि
त्याह। यथा यजुरेवैतत्" (ब्रा० ३का०।२प्र०।४अ०) इति
मन्त्रपदैर्योऽर्थो यथा प्रतीयते स तथैव, न त्वत्र कश्चिदन
विवक्षाविशेषोऽस्ति। द्वितीयभागे व्रीहिभारप्रयुक्तं शैथिल्यं व
र्यते इत्याह "अह्रुतमसि हविर्धानमित्याहानार्त्यै" (ब्रा०
का०।२प्र०।४अ०) इति। तृतीयभागे स्वयमप्यारोढुं शकट
धैर्यं सम्पाद्यत इत्याह "दृꣳहस्व माह्वारित्याह धृत्यै"। (ब्रा
३का०।२प्र०।४अ०) इति। अत एवापस्तम्बः उत्तरस्य भाग
मन्त्रान्तरत्वमभिप्रेत्याह "अह्रुतमसि हविर्धानमित्यारोहति
इति। कल्पः "अथ पुरोडाशीयान् प्रेक्षते मित्रस्य त्वा चक्षुषा प्रे
मा भेर्मा संविक्था मा त्वा हिꣳसिषं" इति। हे व्रीहि सम
जगन्मित्रस्य सूर्यस्य चक्षुषा त्वामवलोकयामि न तु वैरिचक्षुषा
ततो मा भैषीः मात्र कम्पिष्ठाः अहन्तु त्वां न मारयामि अ
कूलोऽयमिति बुध्युत्पादनाय मित्रशब्दप्रयोग इत्याह "मित्र

त्वा चक्षुषा प्रेक्ष इत्याह मित्रत्वाय'' (ब्रा०३का०।२प्र०।४अ०) इति। भयकम्पयोरपि हिंसावान्तरभेदत्वमभिप्रेत्याह ''मा भेर्मा संविक्था मा त्वा हिंसिषमित्याहाहिंसायै'' (ब्रा०३का०।२प्र०।४अ०) इति। कल्पः ''उरुवातायेति परिणाहमपवाह्य'' इति। हे करिष्यमाणद्वार त्वमेतेन पिधानभूततृणाद्यपनयनेन वायुप्रवेशार्थं विस्तीर्णा भव। वायुप्रवेशे प्रयोजनमाह ''यद्वै किञ्च वातो नाभिवाति। तत् सर्व्वं वरुणदेवत्यं। उरुवातायेत्याह। अवारुणमेवैनत् करोति'' (ब्रा०।३का०।२प्र०।४अ०) इति। यद्द्रव्यमावृतत्वेन वायुर्न स्पृशति तस्य सर्व्वस्यावरको वरुणः स्वामी तच्च स्वामित्वं वायुना निवर्त्यते। कल्पः ''अथ निर्व्वपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्व्वपामि'' इति। तत्प्रकारः सूत्रे दर्शितः ''शूर्पे पवित्रं निधाय तस्मिन्नग्निहोत्रहवण्या हवींषि निर्व्वपति तया वा पवित्रवत्या'' इति। व्याचष्टे ''देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह यत्यै। अग्नये जुष्टं निर्व्वपामीत्याह। अग्नय एवैनान् जुष्टं निर्व्वपति'' (ब्रा०३का०।२प्र०।४अ०) इति। एतान् व्रीहीन् प्रियं हविर्यथा भवति तथा निर्व्वपति। आवृत्तिं विधत्ते ''त्रिर्य्यजुषा। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। तूष्णीं चतुर्थं। अपरिमितमेवावरुन्धे'' (ब्रा०३का०।२प्र०।४अ०) इति। आपस्तम्बः ''एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्यां'' इति।

तदिदं स्पष्टीचकार बोधायनः "एतामेव प्रतिपदं कृत्वाग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधाय चेन्द्राग्निभ्यामित्यमावास्यायामसन्नयत इन्द्रायेति सन्नयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवति" इति। देवस्य त्वेत्येतमेव भागमुपक्रमं कृत्वा जुष्टं निर्व्वपामीत्युपसंहारं कृत्वा तयोर्मध्येऽग्नीषोमाभ्यामिति प्रयोक्तव्यं। एतत् सर्व्वमभिप्रेत्याह "स एतमेवानुपूर्व्वꣳ हवीꣳषि निर्व्वपति" (ब्रा॰ ३ का॰।२ प्र॰।४ अ॰) इति। कल्पः "इदं देवानामिति निरुप्तानभिमृशतीदमु नःसहेत्यवशिष्टान्" इति। शूर्पे निरुप्तमिदं देवानामेव स्वं इदन्तु शकटस्थं देवैस्सहितानामस्माकं स्वं यागान्तराणामस्माभिः करिष्यमाणत्वाद् भोक्ष्यमाणत्वाच्च। भागयोरसाङ्कर्य्याय मन्त्रद्वयमित्याह "इदं देवानामिदमु नः सहेत्याह व्यावृत्त्यै"। (ब्रा॰३का॰।२प्र॰।४अ॰) इति। कल्पः "स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्य" इति। हे हविः अभिवृद्ध्यै त्वामभिमन्त्रयामि। तत्राभिवर्द्धनमदानाय न भवति किन्तु देवेभ्यो दातुमेव। सोऽयं मन्त्रो हविषोऽवस्कन्दनेन क्षयो मा भूदित्येवं रक्षार्थ इत्याह "स्फात्यै त्वानारात्या इत्याह गुप्त्यै"। (ब्रा॰३का॰।२प्र॰।४अ॰) इति। बोधायनः "अथा हवनीयमीक्षते सुवरभिविख्येषं वैश्वानरं ज्योतिः" इति। आपस्तम्बस्तु मन्त्रभेदमभिप्रेत्याह "सुवरभिविख्येषमिति सर्व्वं विहारमनुवीक्षते। वैश्वानरं ज्योतिरित्याहवनीयं" इति। स्वर्गसाधनत्वात् स्वर्गरूपं सर्व्वयागप्रदेशमभितो विशेषेण पश्यामि आहवनीयाग्निं स्वर्गस्य प्रकाशकं ज्योतिःस्वरूपं पश्यामि। शकट-

स्योपरिभागे परितः कटवेष्टिते तमस्विनि प्रदेशेऽवस्थितस्य वहि-रवलोकनमप्यपेक्षितमित्याह "तमसीव वा एषोऽन्तश्चरति। यः परीणहि। सुवरभिविख्येषं वैश्वानरं ज्योतिरित्याह। सुव-रेवाभिविपश्यति। वैश्वानरं ज्योतिः। (ब्रा०३का०।२प्र०।४ अ०) इति। बोधायनः "अथ गृहानन्वीक्षते दृꣳहन्तां दुर्या द्यावापृथिव्योः" इति। आपस्तम्बः "दृꣳहन्तां दुर्या द्यावा पृथि-व्योरिति प्रत्यवरुह्य" इति। इहलोकपरलोकयोरस्मद्गृहा दृढीभवन्तु। अदार्ढ्यशङ्कायाः सद्भावाद्दार्ढ्यमाशंसनीयमि-त्याह "द्यावापृथिवी हविषि गृहीत उदवेपेतां। दृꣳहन्तां दुर्या द्यावापृथिव्योरित्याह। गृहाणां द्यावापृथिव्योर्धृत्यै" (ब्रा०३का०।२प्र०।४अ०) इति। गृहीतहविष्कः किंवोद्दिश्य यच्छतीत्यज्ञानालोकयोर्भयेन कम्पः प्राप्तः। दृꣳहन्तामित्युक्ते सत्येतद्विनाश उद्देशो न भवतीति निश्चयाद्धैर्यं भवति। कल्पः "उर्वन्तरिक्षमन्विहीति हरति" इति। व्याचष्टे "उर्वन्तरि-क्षमन्विहीत्याह गत्यै" (ब्रा०३का०।२प्र०।४अ०) इति। कल्पः "एतेनोत्तरेण गार्हपत्यमुपसादयत्यदित्यास्त्वोपस्थे सादयामि" इति। अदितिशब्दस्य भूमिरर्थ इत्याह "अदित्यास्त्वोपस्थे सा-दयामीत्याह। इयं वा अदितिः। अस्या एवैनदुपस्थे सादयति" (ब्रा०३का०२प्र०।४अ०) इति। कल्पः "गार्हपत्यमभिमन्त्र-यते अग्ने हव्यꣳ रक्षस्वेति" इति। अत्र हविषो रक्षामात्रं वि-वक्षितमित्याह "अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै" (ब्रा०३का०। २प्र०।४अ०) इति। अत्र विनियोगसङ्ग्रहः।

"कर्म्मणे हस्तयोः शुद्धिर्वेषशूर्पपरिग्रहः।
प्रत्युष्टमिति मन्त्रेण धूस्पृशेच्छकटे धुरं॥
त्वमीषां संस्पृशेद्दृंह शकटं त्वधिरोहति।
उर्व्वन्तर्धिमपश्यायं मित्रेति हविरीक्षते॥
देवेति निर्व्वपेदग्नीत्यपि पूर्व्वानुषञ्जनात्।
इदं निरुप्तवञ्चैषा स्पृशेत् स्फात्याभिमन्त्रणं॥
सुवर्व्विहारवीचाथ वेश्मा पूर्व्वाग्निवीक्षणं।
दृंहावरुह्योरु गच्छेददितिभूमौ हि सादयेत्॥
अग्नेऽग्निमन्त्रणं मन्त्रा उक्ता एकोनविंशतिः"।

अथ मीमांसा। तत्र केचित् सामान्यविचारा उच्यन्ते। यद्यपीमे त्वेत्यत्रैव ते वक्तव्याः तथापि मञ्जारव्युत्पत्तये तत्तदनुवाकेषु वर्ण्यन्ते। द्वादशाध्यायस्य तृतीयपादे विचारितं।

"अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा न सः।
तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः" *॥ इति।

पर्व्वणि नाध्येतव्यमिति निषिद्धत्वादनध्यायेषु क्रतुप्रयोगे मन्त्रपाठो नास्तीति चेन्मैवं। निषेधस्य ग्रहणार्थाध्ययनविषयत्वात् क्रतुप्रयोगे तदभावात्। अन्यथा प्रतिपद्ये वेष्टेर्व्विहितत्वेन मन्त्रपाठाभावे तदध्ययनमनर्थकं स्यात्, तस्मात् प्रतिपदि कर्म्मणे वामित्यादयो मन्त्राः पठितव्याः। तत्रैवान्यद्विचारितं।

"स्वरो मन्त्रे भाषिकः किं स्यात् प्रावचनिकोऽथ वा।

---

* तत्पाठस्यानिषेधः स्यादस्ति पाठनिषेधता इति का० पाठः।

ब्राह्मणोक्तेरादिमोऽन्यस्तदुक्तेर्लक्षणत्वतः" ॥ इति ।

तत्तद्देशीयब्राह्मणस्वरो भाषिक इत्युच्यते । तदुक्तमाचार्यैः।

"छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।

उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते" ॥ इति ।

सोऽयं भाषिकः क्रतौ मन्त्रेषु प्रयोक्तव्यः। कुतः। ब्राह्मणेनोक्तत्वात्। * मन्त्रविनियोगस्याङ्गेन सिद्धतया स्वरविशेषविधानायैव ब्राह्मणे मन्त्र उपादीयत इति प्राप्ते। ब्रूमः। न हि ब्राह्मणे मन्त्रः पठ्यते। किन्तु प्रवचनप्रसिद्धस्वराद्युपेतं मन्त्रकाण्डे समुत्पन्नं मन्त्रमुपलक्षयितुं तदुपलक्षणसमर्थानि मन्त्रोपक्रमसदृशानि कानिचिदक्षराण्युच्चार्यन्ते। तद्यथा "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति। मतमेवाभिप्रायं द्योतयितुं क्वचित् क्वचित् शब्दान्तरेणोपलक्ष्यन्ते । तद्यथा "सावित्राणि जुहोति प्रसूत्यै" इति। यत्र लिङ्गसिद्धो विनियोगस्तत्र ब्राह्मणमनुवादकमस्तु। तस्मात् प्रावचनिकः स्वरः क्रतौ कर्म्मणि वामित्यादिमन्त्राणां प्रयोक्तव्यः। तत्रैवान्यश्चिन्तितं।

"ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्य्यं भाषिकोऽथवा ।

आद्योऽन्यमन्त्रवन्नैवं स्वरान्तरविवर्जनात्" ॥ इति ॥

वानस्पत्यासीत्ययं मन्त्रो ब्राह्मण एवोत्पन्नः। तस्यान्यमन्त्रवत् प्रावचनिकस्वर इति चेन्नैवं। मन्त्रकाण्डे तदपाठेन तत्स्वराभावात्। तस्माद्भाषिकस्वरः। यद्यपि यज्ञस्य सन्ततिरसीत्ययं

---

* मन्त्रस्य लिङ्गविनियोज्यतया इति का० ।

तैत्तिरीयब्राह्मणोत्पन्नो मन्त्रस्तैस्वर्येणैवाम्नायते तथापि सोमाय राज्ञे क्रीताय प्रोह्यमाणायामनुब्रूहीत्येवमादीनां बह्वृचब्राह्मणोत्पन्नमन्त्राणां अयं भाषिकः स्वरः। अन्यदपि तत्रैव चिन्तितं।

"यदा कदाचिन्मन्त्रान्ते वा कर्म्मानियमाद्भवेत्।
आद्यो मैवं कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः" ॥ इति ॥

इषे त्वेतिमन्त्रः शाखाच्छेदकरणं। इमामगृभ्णन्निति रशनादाने। तत्र तत्र संशयः। किं मन्त्रादौ कर्म्म कर्त्तव्यं, उतागृभ्णन्रशनेत्येवं विधस्य कर्म्मप्रकाशकमन्त्रस्योच्चारणकाले, किम्वा यस्य कस्यचित् पदस्योच्चारणकाले, आहोस्विन्मन्त्रान्ते, अथ वा ततोऽपि कञ्चित्कालं विलम्बेनेति। तत्र नियामकाभावाद्यदा कदाचिदिति प्राप्ते। ब्रूमः। कृत्स्नमन्त्रजन्यमर्थस्मरणं कर्म्मणोऽङ्गं। तच्च मन्त्रसमाप्तेः पूर्व्वं नोदेति विलम्बेतूत्पन्नापि विनश्यतीति ततः परिशेषात् कर्म्मणे वामित्यादिमन्त्रान्ते कर्म्म सन्निपतेत्। तृतीयाध्यायस्य प्रथमपादे चिन्तितं।

"हस्तौ द्वाववनेनिक्ते स्तृणात्युलपराजिकां।
दर्भास्तरण एवाङ्गंहस्तशुद्धिरुताखिला॥
तन्मंत्राङ्गत्वमन्त्रस्यादानन्तर्यात्मकात् क्रमात्।
लिङ्गप्रकरणाभ्यान्तु सर्व्वानुष्ठानशेषतः" ॥ इति ॥

दर्शपूर्णमासप्रकरणे श्रूयते हस्ताववनेनिक्ते उलपराजीँस्तृणातीति। वेद्यामास्तरितुं सम्पादितः स्तम्ब उलपराजी तत्र हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्य्येण पाठात् क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गमिति चेत्। मैवं। अवनेजनं हस्त-

संस्कारः। संस्कृतौ च हस्तौ सर्व्वानुष्ठानयोग्याविव्येतादृशं सामर्थ्यलिङ्गं दर्शपूर्णमासयोः स्फुटं। अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात् सर्व्वशेषो हस्तशुद्धिः। अयं न्यायो वाग्यमेऽपि द्रष्टव्यः। चतुर्थाध्यायस्य द्वितीयपादे विचिन्तितं।

"मृन्मये प्रणयेत् कामी नित्येऽप्येतदुतेतरत्।
आकांक्षा सन्निधिश्चास्ति तस्मान्नित्येऽपि मृन्मयं।
कामार्थत्वादयोग्यत्वं सामान्यविहिते न च।
आकांक्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत्" ॥ इति ॥

अपः प्रणयति इति प्रकृत्य श्रूयते। मृन्मयेन प्रतिष्ठाकामस्य प्रणयेदिति। तत्रापां प्रणयनस्य नित्यप्रयोगेऽपि मृन्मयपात्रमेव साधनं। कुतः। नित्येऽपि पात्रस्याकांक्षितत्वात्। न च लोकसिद्धं किञ्चित् पात्रं उपादीयत इति वाच्यं। श्रौते कर्म्मण्यश्रुताच्छ्रुतस्य सन्निहितत्वादिति प्राप्ते। ब्रूमः। कामार्थं मृन्मयमाम्नातं। तच्च सति कामे योग्यं। न हि पाक्षिकं कामं निमित्तीकृत्य प्रवृत्तं निमित्तस्य योग्यं भवति। पात्राकाङ्क्षा तु सामान्यतोऽविहितेन निवर्त्तते। अपः प्रणयतीति हि पात्रमनुपन्यस्य विहितं। तच्चान्यथानुपपन्नं सत्पात्रं किञ्चित् सामान्येन कल्पयति। तस्मान्नित्यप्रयोगे तत्काम्यं मृन्मयं नान्वेति। किन्त्वितरत् पात्रं यत्किञ्चिदुपादेयं। चमसेनापः प्रणयेदिति नित्ये पात्रं विधीयत इति चेत् तर्हि क्रत्वा चिन्तास्तु। द्वितीयाध्यायस्य प्रथमपादे चिन्तितं।

"देवस्य त्वेतिमन्त्रस्य भिन्नत्वमथवैकता।
ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता ॥

# शुद्धिपत्रं ।

| अशुद्धं | शुद्धं | पृष्ठा | पङ्क्तिः |
|---|---|---|---|
| कारिस्युः | कारिणः | २ | १३ |
| बाधक | बोधक | ३ | १ |
| ष्ठोमो | ष्टोमो | ५ | १० |
| मन्त्रार्थंस | मन्त्रार्थं | ६ | ६ |
| ष्ठन | ष्ठान | ७ | ११ |
| जायमानं | याजमानं | ११ | २२ |
| बाद | वाद | १६ | ६ |
| पुर्वं | पूर्वं | १८ | १० |
| निवावरण | निवारण | १६ | १८ |
| त्रिरात्रि | त्रिरात्र | २३ | १ |
| ठवे | ठके | २३ | ३ |
| शाकल्यः | शाकल्यः | २४ | १२ |
| पुण्यैकं तवः | पुण्यैकहेतवः | २६ | १ |
| जुष्ठं | जुष्टं | ३० | १२ |
| नात्मीयन्तो | नात्मीयत्ता | ३१ | १७ |
| पाद्यते | पाद्यते | ३४ | ७ |
| रिधारण | विधारण | ३४ | ८ |
| विधारणां | विधारणं | ३८ | १ |
| ऊर्ज्जेव | ऊर्ज्जेव | ३६ | ८ |
| निष्ट | निष्ठ | ४२ | ७ |
| रेत्वा | रेत्वात् | ४६ | २१ |
| रुद्रेम | रुद्रेम | ५० | १ |
| वैत | वैन | ५६ | १ |
| सान्नय्य | सान्नाय्य | ७८ | ७ |
| नुप्पपत्तिः | नुपपत्तिः | ८२ | ३ |
| तंधर्वं | तंधूर्वं | ८४ | १३ |
| मये | मये | ८४ | १८ |
| मद्दव्य | मैद्दव्य | ८५ | २ |
| शुद्धाति | शुद्धाति | ८६ | १३ |
| अध्वंयु | अध्वर्यु | ८८ | १६ |
| वक्कचा | वक्कृचा | ६४ | ३ |

विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकं।
तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते" ॥ इति।

दर्शपूर्णमासयोराम्नायते "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति। तत्र वाक्यानि भिन्नानि भवितुमर्हन्ति। कुतः। एकत्वनियामकस्याभावात्। अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेत्। न। एकस्मिन् पदेऽतिव्याप्तेः। पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां सम्भवाद्*वाक्यभेद इति प्राप्ते ब्रूमः। यद्विभागे साकाङ्क्षमविभागे एकार्थं तदेकं वाक्यमिति नियामकं। विभागे साकाङ्क्षमित्येवोक्ते अतिव्याप्तिः स्यात्। "स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि ते", "तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इत्यत्र तस्मिन्त्सीदेत्यादिपदसमूहस्य विभागे सति प्रकृतवाचितच्छब्दस्य निर्णयाय पूर्वपदसमूहस्य साकाङ्क्षत्वमस्ति। अतस्तद्व्यावच्छेत्तुमेकार्थत्वमित्युक्तं। न हि तत्रैकार्थत्वमस्ति। पूर्वसमूहस्य सदनकरणमर्थः। उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनमर्थः। स्योनं समीचीनं सुशेवं सुष्ठु सेवितुं योग्यमिति प्रथमवाक्यस्यार्थः। व्रीहीणां मेध व्रीहिसारभूतपुरोडाश इत्यर्थः। अत्र द्वयोस्समूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धं तदेकार्थमित्यनेन व्यावर्त्यते। एकार्थमित्युक्तेऽप्यतिव्याप्तिः स्यात्। "भगो वां विभजतु", "पूषा वां विभजतु" इत्यनयोर्भिन्नमन्त्रयोः सम्मतयोः पदसमूहयोस्तात्पर्य्यविषयस्य द्रव्यभागरूपस्यार्थ-

* वाक्यं नावधार्यत इति का॰।

स्यैकत्वात् तद्भावच्छेत्तुं विभागे साकाङ्क्षमित्युक्तं। प्रकृते तु अग्नये जुष्टमित्यादिसमूहे पृथक्कृते पूर्व्वो देवस्य त्वेति समूहः साकाङ्क्षो भवति। एकीकृते तु कृत्स्नस्यैक एव निर्व्वापोऽर्थः। एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यं। अत्रैवान्यच्चिन्तितं।

"या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनं।
तनूरित्यस्य शेषत्वादध्याहारोऽत्र लौकिकः॥
वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनं।
अस्य शेषोऽपि बुद्धिस्थो लौकिकस्तु न हीदृशः"॥ इति।

ज्योतिष्टोमे उपसद्धोमेष्वेवमाम्नायते"या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा। या ते अग्ने रजाशया। या ते अग्ने हराशया" इति। अयमर्थः। अयसा रजतेन हिरण्येन च निर्म्मिता अग्नेस्तिस्रस्तनवः, तास्वाद्या येयमुक्ता सा अतिशयेन प्रवृद्धा गह्वरे तीक्ष्णद्रव्ये लोहे च स्थिता, तया तन्वा क्षुत्पिपासे गोवधाद्युपपातकं वीरहत्यादिकञ्च महापातकं हतवानस्मीति। तथा च ब्राह्मणं "उग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहेति। अशनयापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं वचः" इति। अत्र यः स्वाहान्तः प्रथमो मन्त्रः स पूर्णवाक्यत्वान्निराकाङ्क्षः। द्वितीयतृतीयमन्त्रयोराकाङ्क्षां पूरयितुमुचितो लौकिको वाक्यशेषोऽध्याहर्त्तव्यः। न हि तनूर्वर्षिष्ठेत्यादिभागस्तयोरन्वेतुं योग्यः तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते ब्रूमः। वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव

वाक्यशेषेण पूरणीया। ततस्तनूर्वर्षिष्ठेत्यादिभाग इतरयोर्मन्त्रयोरनुषज्यते। यद्यप्यसावन्यशेषः तथापि बुद्धिस्थः सन् कल्पनीयादध्याहारात् सन्निकृष्यते, तस्मादनुषङ्गः कर्तव्यः। एवञ्च सति विकृतेऽप्यग्नीषोमाभ्यामित्यस्मिन् मन्त्रे देवस्य लेत्यादिपूर्व्वभागो जुष्टमित्याद्युत्तरभागश्चानुषञ्जनीयः। नवमाध्यायस्य प्रथमपादे चिन्तितं।

"सवित्रा स्यादूहनीयं न वाऽर्थः सङ्गतस्ततः।
ऊहो नाविकृतस्यैव निर्व्वापान्वयसम्भवात्" ॥ इति।

दर्शपूर्णमासयोः श्रूयते "देवस्य त्वा सवितुः प्रसवे" इत्यस्मिन्नेव मन्त्रे सवित्रश्विपूषन्शब्दाः कर्म्मणि सङ्गतं देवतारूपमर्थमभिधातुमर्हन्ति। तथा सति दृष्टप्रयोजनलाभोऽग्निस्तु कर्म्मसमवेता देवता। ततः कयाचिदपि व्युत्पत्त्या न सवित्रादिशब्दैरग्निरभिधीयतां। अथोच्यते। अग्निशब्देनैव अग्नेरभिधानात् पुनस्तदभिधानं व्यर्थं। किञ्च देवतान्तरेषु रूढास्ते शब्दा नाग्निमभिधद्युरिति। एवं तर्हि तास्तिस्रो देवता अग्निना सह कर्म्मणि विकल्प्यन्तां। ततः प्राकृतस्य मन्त्रस्य विकृतिष्वतिदेशे सति सवित्रादिशब्दस्थाने तत्तद्देवतावाचकः शब्द ऊहनीय इति प्राप्ते ब्रूमः। नात्रोहः कर्त्तव्यः। कुतः। अविकृतस्यैव मन्त्रस्य निर्व्वापशेषत्वेनान्वयसम्भवात्। न हि प्रकृतावग्निना सह सवित्रादिदेवतानां विकल्पो वाक्यभेदादिदोषप्रसङ्गात्। तस्मान्निर्व्वापस्तावकानां सवित्रादिशब्दानां कर्म्मण्यसमवेतार्थत्वान्नास्त्यूहः। तत्रैवान्यच्चिन्तितं।

"तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः।

सवित्रादिवदूह्यो नो समवेतार्थवर्णनात्" ॥ इति।

तस्मिन् पूर्वोक्त एव मन्त्रे अग्नये जुष्टमित्ययमग्निशब्दो विकृतिषु नोहनीयः। कुतः। देवतान्तरवाचिसवित्रादिशब्दवदग्निशब्दस्याप्यत्र निर्व्वापस्तावकत्वेन पाठादिति प्राप्ते ब्रूमः। विषमो दृष्टान्तः। कर्म्मण्यसमवेतार्थाः सवित्रादिशब्दाः। अग्निशब्दस्त्वाग्नेये कर्म्मणि समवेतमर्थं ब्रूते। नन्वत्र जुष्टशब्दोऽसमवेतार्थः निर्वापात् पूर्वं हविषो जुष्टत्वाभावात्, तद्योगादग्निशब्दोऽपि तथा स्यादिति चेत्। मैवं। जुष्टं यथा भवति तथा निर्वपामीति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात्। तस्मात् सौर्य्ये यागे सूर्य्याय जुष्टं निर्व्वपामीत्येवमूहनीयं। एवञ्च सति प्रकृतेऽपीन्द्राय वैमृधायेत्याद्यूहः कर्त्तव्यः। द्वितीयाध्यायस्य प्रथमपादे चिन्तितं।

"ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथवा न वा।

मन्त्रास्त्वेकवाक्यत्वात् *न तल्लक्षणवर्ज्जनात्" ॥ इति।

अग्नये जुष्टं निर्व्वपामीत्यस्य सौर्य्यचरौ सूर्य्याय जुष्टमित्येवं पदान्तरप्रक्षेप ऊहः। अदोचिष्टायं ब्राह्मण इत्यस्य मन्त्रस्य शेषत्वेन प्रयोगकाले देवदत्तोऽयमिति ब्राह्मणनामधेयविशेषं तदीयप्रवरञ्चैव पठन्ति। असौ देवदत्तोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता, अमुष्याः पुत्रोऽमुष्याःपौत्रोऽमुष्या नप्ता देवदत्तो

---

* तदेकवाक्यत्वादिति का० पा०।

ऽयमिति ब्राह्मणनामधेयविशेषं पठन्ति। तथा वरणमन्त्रेषु आङ्गीरसबार्हस्पत्यभारद्वाजगोत्रं ब्राह्मणं त्वां वृणीमह इति प्रवरं पठन्ति। एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति। कुतः। मन्त्रेण सहैकवाक्यत्वादिति चेत्। मैवं। याज्ञिकप्रसिद्धिरूपस्य मन्त्रलक्षणस्योहादिष्वभावात्। न ह्यध्येतार ऊहादीन् मन्त्रकाण्डेऽभिधीयन्ते, तस्मान्नास्ति मन्त्रत्वं। तथा सतीन्द्राय वै मृधाय जुष्टमित्याद्यूहस्य मन्त्रत्वाभावात् स्वरवैकल्येऽपि मन्त्रो हीन इत्यादिना उक्तदोषो न भविष्यति। तदेवं मन्त्रसम्भाविता विचारा दर्शिताः।

अथ व्याकरणं। कर्म्मणे वामित्यादिशब्देषु नव्विषयस्येत्यादि (सि०कौ०२३१प०) फिट्सूत्रेण पूर्व्वोक्तस्वरादिकं यथायोगमनुसन्धेयं। वेषशब्दो वृषादिः। प्रथमद्वितीययोर्धूर्व्वशब्दयोर्व्वाक्यादित्वेन पदात् परत्वं नास्तीति निघाताभावः। तृतीयस्य तु तं धूर्व्वेत्येवं पदादुत्तरत्वादस्ति निघातः। योऽस्मान् धूर्व्वति यं धूर्व्वाम इत्यनयोर्य्यच्छब्दयोगान्निघातो निषिद्धः। निपातैर्य्यद्यदि हन्त कुविन्नेच्चेच्चण्कच्चिद्यत्र युक्तं (पा०८।१।३)। एतैः पदादिभिर्युक्तं पदं निहन्यते। सप्तिपप्रिशब्दयोः क्तिन्प्रत्ययस्य नित्वादाद्युदात्तः। जुष्टशब्दोऽदन्तः। वह्निशब्दो वृषादिः। देवानाह्वयतीति देवहूरित्यत्र तत्पुरुषे तुल्यार्थेति (पा०।६।२।२)। द्वितीयान्तपूर्व्वपदप्रकृतिस्वरः प्राप्तः स च कृदुत्तरपदप्रकृतिस्वरेण वार्य्यते। अह्रुतमित्यव्ययपूर्व्वपदप्रकृतिस्वरः। हविर्धानमित्यत्र ल्युट्प्रत्ययात् पूर्व्वस्योदात्तत्वात् समासे कृदुत्त-

रपदप्रकृतिस्वरः। इूःइस्वेति गतं। प्रेत्त इत्यत्रोत्तरपदादेरनुदात्तत्वेऽपि स्वरितो वानुदात्ते० (पा०८।२।६) इत्यस्य विकल्पितत्वादेकादेश० (पा०८।२।५) इत्युदात्तः। माङ्गारित्यत्र चादिलोप० (पा०८।१।६३) इति सूत्रेण निघातस्य विकल्पितत्वाद्धातुस्वरः। वातशब्दो वृषादिः। सवितुरित्यत्र प्रातिपदिकान्तोदात्तस्य विभक्त्या सहैकादेशे सत्युकार उदात्तः। प्रसव इत्यत्र सूधातोरप्प्रत्यये सति तस्य पित्वाद्धातुस्वर एव श्रियते। ततः समासे कृदुत्तरपदप्रकृतिस्वरे प्राप्ते तदपवादः। थाथ घञ् क्ता जवित्रकाणां (पा०६।२।१४४)। गतेः कारकादुपपदाच्चोत्तरेषां थादीनामष्टानां प्रत्ययानामन्त उदात्तः स्यात्। पूष्ण इत्यत्र अनुदात्तस्य च यत्रोदात्तलोपः (पा०६।१।१६१) इति विभक्तिरुदात्ता। अग्नीषोमाभ्यामित्यत्र अग्निशब्दस्यान्तोदात्तत्वात् सोमशब्दस्य चाद्युदात्तत्वात् समासे देवता द्वन्द्वे चेति (पा०६।२।१४१) युगपदुभयोः प्रकृतिस्वरत्वं। उशब्दस्यानुदात्तत्वं स्वरादिपाठे निपातितं। सहशब्दस्य निपातत्वाभावेन फिट्स्वरः। स्फात्या इत्यत्र स्फायिधातोर्णत्वादुत्तरस्य क्तिन्प्रत्ययस्य नित्त्वेन स्फाशब्दस्योदात्तत्वप्राप्तावपि उदात्तस्य णिचो लुप्तत्वादुदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता। अरातिशब्दस्य नञ् तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरत्वं। सुवरिति वृषादिः। अभीति फिट्स्वरः। वीत्युपसर्गस्वरः। इूःइन्तामिति वाक्यादित्वान्निघाताभावः। द्यावापृथिव्योरित्यत्र उदात्तयण इति (पा०६।१।१७४) विभक्तिरुदात्ता। उपस्थ-

शब्दः पृषोदरादिः ॥ इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरापो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिता स्थाग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याꣳ शुन्धध्वं दैव्याय कर्मणे देवयज्याया अवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वा ॥ १ ॥

पृथिवी वेत्त्वधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्त्वग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णाम्यद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेषमावदोर्जमावद द्युमद्वदत वयꣳ सङ्घातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयो रक्षसां भागोऽसि वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु ॥ २ ॥

त्वा भाग एकादश च ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥

चतुर्थेऽनुवाके व्रीहिनिर्वापः प्रोक्तः। निरुप्ते तुषस्य रक्षोभागत्वात्तदपनयनार्थोऽवघातः पञ्चमानुवाकेऽभिधीयते। प्रोक्षितानामेव व्रीहीणामत्रावघातयोग्यत्वात्। प्रोक्षणस्य चोत्पूतोदकसाध्यत्वादुत्पवनमन्त्रस्य चावघातस्याङ्गिन्युत्पवनेन साकाङ्क्षत्वादुत्पवनमन्त्रव्याख्यानात् प्रागेवोत्पवनं विधत्ते "इन्द्रो वृत्रमहन्। सोऽपः। अभ्यं म्रियत। तासां यन्मेध्यं यज्ञियꣳ स देवमासीत्। तदपोदक्रामत्। ते दर्भा अभवन्। यद्दर्भैरप उत्पुनाति। या एव मेध्या यज्ञियाः सदेवा आपः। ताभिरेवैना उत्पुनाति" (ब्रा० ३का०।२प्र०।५अ०) इति। इन्द्रेण हि तस्य वृत्रस्योदकाभिमुख्येन हतत्वादुदकसारं निर्गतं। तच्च सारं द्विविधं दैवं मानुषञ्च। तत्र मलप्रक्षालनोपयुक्तं मानुषं। दैवञ्च द्विविधं, स्नानादिना पापशोधकं प्रोक्षणादिना द्रव्यशोधकञ्च। तदुभयमत्र मेध्ययज्ञियशब्दाभ्यां विवक्षितं। तच्च निर्गत्य भूमौ दर्भरूपेणाविर्बभूव। तस्माद्दर्भैरुत्पुनीयात्। दर्भसंख्यां विधत्ते "द्वाभ्यामुत्पुनाति। द्विपाद्यजमानः प्रतिष्ठित्यै" (ब्रा० ३का०।२प्र०।५अ०) इति। अनेन विधीयमानद्वित्वेन विरोधात् पूर्वस्मिन् वाक्ये दर्भैरिति बहुवचनं जात्यभिप्रायं व्याख्येयं। यजमानो ह्येकेन पादेनोत्तिष्ठन् प्रतिष्ठां न लभते, द्वाभ्यान्तु लभते। ततो दर्भद्वित्वमपि प्रतिष्ठित्यै भवति। कल्पः "अथैतस्यामेव स्रुचि तिरःपवित्रमप आनीय उदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति पच्छः" इति। अत्र स्रुक्शब्देन निर्वापहेतुरग्निहोत्रह-

णी विवक्षिता। "मयूरूकायामग्निहोत्रहवण्यामप आनीय" इत्य-
त्राभिधानात्। हे आपः अध्वर्युहृदयेऽवस्थितप्रेरकान्तर्यामी
युष्मानूर्ध्वं पुनातु। केन साधनेन। आदित्यरूपत्वभावनाबलाद-
च्छिद्रेण दर्भपवित्रेण। पुनरपि केन। जगन्निवासहेतोः सूर्य्यस्य
रश्मिशब्देन भावितैर्दर्भावयवैः। यथोक्तं मन्त्रार्थं विशदयति
"देवो वः सवितोत्पुनात्वित्याह। सवितृप्रसूत एवैना उत्पुनाति।
अच्छिद्रेण पवित्रेणेत्याह। असौ वा आदित्योऽच्छिद्रं पवित्रं।
तेनैवैना उत्पुनाति। वसोः सूर्य्यस्य रश्मिभिरित्याह। प्राणा
वा आपः। प्राणा वसवः। प्राणा रश्मयः। प्राणेनैव प्राणान्त्स-
म्पृणक्ति" (ब्रा०३का०।२प्र०।५अ०) इति। उदकेनाप्यायिताः
प्राणा इत्यपां प्राणत्वं। आदित्याद्यधिष्ठातृदेवतानुग्रहैश्चक्षुरा-
दीनां प्राणानां देहे वासितत्वात् वसुशब्दाभिधेयानां देवता-
नुग्रहाणां प्राणत्वं। आदित्यरश्मीनां प्राणव्यवहारोपकारि-
त्वात् प्राणत्वं। ततः सूर्य्यरूपप्राणत्वेन भावितैर्दर्भप्राणैस्सहोदक-
रूपाः प्राणा उत्पवनकाले सम्पृक्ता भवन्ति। मन्त्रस्य सविते-
त्यनेन लिङ्गेन यत् सावित्रत्वं यच्च पादबद्धत्वात् ऋग्रूपत्वं तदुभ-
यमत्र सप्रयोजनमित्याह "सावित्रियर्चा। सवितृप्रसूतं मे कर्मा-
सदिति। सवितृप्रसूतमेवास्य कर्म्म भवति। पच्छो गायत्रिया त्रि-
ष्षमृद्धत्वाय"(ब्रा०३का०।२प्र०।५अ०) इति। ममेदं कर्म्म नि-
खिलं सवित्रा प्रेरितमस्त्वित्यभिप्रेत्य सावित्रमन्त्रेणोत्पुनीयात्।
तेन तत् तथैव सम्पद्यते। ऋग्रूपत्वेन तत्रत्यं छन्दो ज्ञातुं शक्य-
ते। छन्दसश्चात्र लक्षणतो गायत्रीत्वात् गायत्र्याश्च त्रिपात्त्वा-

प्रतिपाद्यमुत्पवने सति चिरात्वत्या शुध्यति। अतिशयेन कर्म्म-फलं सम्पूर्णं भवति। आवृत्तिप्रकारः सूत्रे दर्शितः "देवो वः सवितोत्पुनात्विति प्रथमं, अच्छिद्रेण पवित्रेणेति द्वितीयं, वसोः सूर्य्यस्य रश्मिभिरिति तृतीयं" इति। बोधायनः "अथैना उत्तानहस्तयत्नुपोत्तिष्ठति आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्य्ये यूयमिन्द्रम-वृणीध्वं वृत्रतूर्य्य इत्यङ्गिरेवापः प्रोक्षति प्रोक्षितास्थ इति त्रिः" इति। आपस्तम्बस्तु मन्त्रैक्यमभिप्रेत्याह "आपो देवीरग्रेपुव इत्यभिमंत्र्य" इति। हे जलदेव्यो यूयमिमं यज्ञमविघ्नेन परिस-माप्तिं नयत यजमानञ्च स्वर्गं स्थापयत। कीदृश्यो यूयं। शुद्धिहे-तूनां दर्भादीनामपि प्रोक्षणेन शोधकत्वादग्रे पुनन्तीत्यग्रेपुवस्तेन यज्ञं समापयितुं समर्थाः। पुनरपि कीदृश्यः। पुनः पुनः प्रवा-हरूपेण शीघ्रगामित्वाद् यन्तृभ्यो मनुष्यादिभ्योऽप्यग्रे गच्छन्ती-त्यग्रेगुवस्तेन यजमानं स्वर्गं नेतुं समर्थाः। किञ्च वृत्रासुरवधे युष्माकमिन्द्रस्य च परस्परापेक्षा जाता। अत इन्द्रसमाना यूयं किं नाम कर्त्तुमसमर्थाः। अस्य मन्त्रस्य पूर्व्वभागे तत्रत्यशब्दस्व-रूपमेवापां महिमानमभिधाय आवृत्त्या स्पष्टयति। ततो नात्र किञ्चिद्व्याख्येयमस्तीत्याह "आपो देवीरग्रेपुवा अग्रेगुव इत्याह। रूपमेवासामेतन्महिमानं व्याचष्टे" (ब्रा०३का०।२प्र०।५अ०) इति। मध्यमभागे प्रार्थितं कार्य्यमापो नोपेक्षन्त इत्याह "अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयन्ति। अग्रे यज्ञपतिं" (ब्रा०३का०।२प्र०।५अ०) इति। ब्राह्मणान्त

एतत्सिद्धं परस्परापेक्षत्वमेव तृतीयभागे दर्शयतीत्याह "युष्मा-
इन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्य इत्याह।
युवꣳह ह्यनिन्द्रमिन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। संज्ञा-
मेवासामेतत्सामानं व्याचष्टे" (ब्रा०३का०।२प्र०।५अ०) इति।
आपो वव्र इत्यत्र छान्दसो दीर्घः। वृत्रान्नीतायेन्द्राय प्रजा-
पतिर्व्वज्रमद्भिः प्रक्षाल्य ददावित्यसाविन्द्रस्योदकापेक्षत्वप्रसिद्धि-
र्युवꣳह इतिशब्देन सूच्यते। अत एव श्रूयते "तस्मादिन्द्रो
ऽबिभेत् स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳसिक्ता
प्रायच्छदेतेन जहीति तेनाभ्यायत" इति। प्रक्षालितस्यापि
वज्रस्येन्द्रेण प्रयोज्यत्वादपामिन्द्रापेक्षेत्येषा प्रसिद्धिरापो हेत्यत्र
हशब्देन सूच्यते। आपो मम सहकारिण्य इत्येतदिन्द्रस्य सम्यग्-
ज्ञानं। इन्द्रोऽस्माकं सहकारीत्येतदुक्तदेवतानां सम्यग्ज्ञानं।
तामेतामपां संज्ञामिन्द्रेण समानां मन्त्रं प्रख्यापयति। दीर्घ-
व्यत्ययश्छान्दसः। मन्त्रपाठ एवापां प्रोक्षणमित्याह "प्रोक्षि-
ता स्थेत्याह। तेनापः प्रोक्षिताः" (ब्रा०३का०।२प्र०।५अ०)
इति। "अद्भिर्ह्येव हवीꣳषि प्रोक्षति। ब्रह्मणाप इध्माबर्हिः
प्रोक्षति" इति श्रुत्यन्तरं। ब्रह्मणा अभिमन्त्रणं मन्त्रेणेत्यर्थः।
अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्यस्य शेषं पूरयित्वा
विनियोगः कल्पे दर्शितः "अथ पुरोडाशीयान् प्रोक्षति देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं
प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतं त्रिः" इति।
तमेव तात्पर्यं दर्शयति "अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमा-

भ्यामित्याह। यथा देवतमेवैनान् प्रोक्षति" (ब्रा०३का०।२प्र०। ५अ०) इति। आवृत्तिं विधत्ते "त्रिः प्रोक्षति। त्र्यावृद्धि यज्ञः। अथो रक्षसामपहत्यै" (ब्रा०३का०।२प्र०।५) इति। तिस्र आवृत्तयो यस्य यज्ञस्य असौ त्र्यावृत्। "त्रिः प्रथमामन्वाह त्रिरुत्तमां" इत्यादिश्रौतप्रसिद्धिं हिशब्दो द्योतयति। रक्षोघ्नत्वमपामसकृदुक्तं। कल्पः "उत्तानानि पात्राणि कृत्वा प्रोक्षति शुन्धध्वं दैव्याय कर्म्मणे देवयज्याया इति त्रिः" इति। पूर्ववद्व्याचष्टे "शुन्धध्वं दैव्याय कर्म्मणे देवयज्याया इत्याह। देवयज्याया एवैनानि शुन्धति। त्रिः प्रोक्षति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय" (ब्रा०३का०।२प्र०।५अ०) इति। मेध्यत्वं यज्ञार्हत्वं। कल्पः "कृष्णाजिनमादायावधूतꣳ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधुनोति" इति। अवधूतं विनाशितं। प्रत्युष्टमिति वद्व्याचष्टे "अवधूतꣳ रक्षोऽवधूता अरातय इत्याह। रक्षसामपहत्यै" (ब्रा०३।२प्र०।५अ०) इति। कल्पः "अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोम उपस्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु" इति। हे कृष्णाजिन त्वं भूमिदेवतायास्त्वग्रूपमसि ततो भूमिस्त्वां प्रतिगृह्य मदीयेयन्त्वगित्येवं जानातु। मन्त्रस्योक्तार्थपरत्वं दर्शयति "अदित्यास्त्वगसीत्याह। इयं वा अदितिः। अस्या एवैनत् त्वचं करोति। प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै" (ब्रा०३का०।२प्र०।५अ०) इति। यदि स्वकीयत्वग्रूपेण न स्वीकुर्यात् तदानीमपसारयेत् ततो न प्रतितिष्ठेत्, अतः प्रतिष्ठार्थोऽयं स्वीकारः। देशादिगुणविशिष्टमास्तरणं

विधत्ते "पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्याय। तस्मात् पुरस्तात् प्रत्यञ्चः। पशवो मेधमुपतिष्ठन्ते। तस्मात् प्रजा मृगं ग्राहुकाः" (ब्रा० ३का०।२प्र०।५ अ०) इति। यस्मादाहवनीयस्य पूर्व्वभागे कृष्णाजिनं पश्चिमशिरस्कमूर्ध्वलोमकमास्तृतं तस्मात् तादृश एव सन्तो यूपे बद्धाः पशवो यज्ञं सेवन्ते यस्मादयं पशुभिः मेध्यो यज्ञः। तस्मादेव प्रत्यवायभयरहिताः सत्यः प्रजा यज्ञार्थं मृगग्रहणशीला भवन्ति। कृष्णाजिनस्यैवोदरे हेतुं ब्रुवंस्तद्विशिष्टमवघातं विधत्ते "यज्ञो देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। यत् कृष्णाजिने हविरध्यवहन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। हविषोऽस्कन्दाय" (ब्रा० ३का०।२प्र०।५ अ०) इति। यज्ञपुरुषः केनापि निमित्तेन देवेभ्योऽभिमुखो यदागच्छत् तदा तिरोधानाय स्वयङ्कृष्णमृगो भूत्वा तदीयं रूपमात्मनः सम्पूर्णं कृतवान् ततः कृष्णाजिनस्योपरि हविरवहन्तीति यदस्ति तेन यज्ञशरीरात् कृष्णाजिनादादाय हवीरूपो यज्ञः प्रयुक्तो भवति, किञ्चिदधःपतितमपि कृष्णाजिनेनावरुद्धत्वात् हविरस्कन्नमेव भवति। कल्पः "तस्मिन्नुलूखलमधिवर्त्तयति अधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्तु" इति। हे उलूखल त्वं अधिषवणस्यावघाताधारभूतं वनस्पतिजन्यञ्चासि। तादृशं त्वां कृष्णाजिनरूपेयं भूमेस्त्वक् प्रतिगृह्य मदीयमिति जानातु। अवघाताधारं कर्त्तुमधिषवणविशेषणमित्याह "अधिषवणमसि वानस्पत्यमित्याह। अधिषवणमेवैनत् करोति" (ब्रा० ३का० २प्र०।५ अ०)

इति। अविरोधेन सम्बन्धायेयमाशीरित्याह "प्रति त्वादित्या-स्त्वग्वेत्वित्याह सयत्वाय" (ब्रा०३का०।२प्र०।५अ०) इति। सयः संबन्धवान्। षिञ् बन्धन इत्यस्माद्धातोरुत्पन्नत्वात्। कल्पः "तस्मिन् पुरोडाशीयानावपति। अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामीति"। भोः पुरोडाशीय व्रीहि-समूह त्वमग्नेः शरीरमसि। यतो दाह्यं काष्ठमिव त्वां स्वोद-रस्थोदराग्निराहवनीयाग्निश्च पटुर्भवति, किञ्च वाचः प्रवृत्ति-कारणमसि, त्वदीयरसेनोपचिताया वाचः शब्दोच्चारणे प्रवृ-त्तत्वात्, अत ईदृशं त्वां देवभक्षणाय उलूखले प्रक्षिपामि। यथोक्तं मन्त्रार्थं दर्शयति "अग्नेस्तनूरसीत्याह। अग्नेर्वा एषा तनूः। यदोषधयः। वाचो विसर्जनमित्याह। यदा हि प्रजा ओषधीनामश्नन्ति। अथ वाचं विसृजते। देववीतये त्वा गृह्णा-मीत्याह। देवताभिरेवैनत् समर्धयति" (ब्रा०३का०।२प्र०।५अ०) इति। देवैर्भक्ष्यत्वे सति "यावदेका देवता कामयते याव-देका। तावदाहुतिः प्रथते" इति न्यायेनाभिवृद्धिः। कल्पः "मुसलमवदधाति अद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳसु-शमिशमिष्व" इति। हे मुसलपदार्थ त्वं वनस्पतिजन्योऽपि दार्ढ्येन पाषाणोऽसि। स त्वं देवार्थमिदं हव्यं भक्षणविरोध्यग्रतुषाद्यप-नयनेन सुष्ठु शान्तं यथा भवति तथा शमय। एतदेवाभिप्रे-त्याह "अद्रिरसि वानस्पत्य इत्याह। ग्रावाणमेवैनत् करोति। स इदं देवेभ्यो हव्यꣳसुशमिशमिष्वेत्याह शान्त्यै" (ब्रा०३का०।२प्र०।५अ०) इति। मन्त्रमुत्थाय लिङ्गसूचितं विनियोगं

घटयति "हविष्कृदेहीत्याह। य एव देवानाꣳ हविष्कृतः। तान् ह्वयति। त्रिर्ह्वयति। त्रिषत्या हि देवाः" (ब्रा०३का०। २प्र०।५अ०) इति। कल्पः "अथ दृषदुपले दृषा रवेणोच्चैः समाहन्ति। इषमावदोर्जमावद द्युमद्वदत वयꣳ सङ्घातं जेष्म" इति। अयं प्रकारोऽन्यत्र स्पष्टीकृतः "आग्नीध्रोऽश्मानमादायेषमावदेति दृषदुपले समाहन्ति द्विर्दृषदि सकृदुपलायां त्रिः सम्पादयत्येवकृत्वः सम्पादयति" इति। हे पाषाण हविःस्वरूपमिदमन्नं त्वदीयं स्वादुतरं रसस्त्वं यजमान आनेष्यतीति देवेभ्यो वद हे यज्ञायुधानि सर्व्वाणि यूयं रसाभिव्यक्तिमदिदं हविरिति देवेभ्यो वदत। वयं त्वनेन पाषाणघोषेणाविनीतं वैरिसंघातं जेष्याम। अनेन मन्त्रेणेष्टप्राप्त्यनिष्टपरिहारौ दर्शयति "इषमावदोर्जमावदेत्याह। इषमेवोर्जं यजमाने दधाति। द्युमद्वदत वयꣳ सङ्घातं जेष्मेत्याह भ्रातृव्याभिभूत्यै (ब्रा०३का०।२प्र०। ५अ०) इति। उपाख्यानेन भ्रातृव्याभिभूतिं द्रढयति "मनोः श्रद्धादेवस्य यजमानस्यासुरघ्नी वाक्। यज्ञायुधेषु प्रविष्टाऽऽसीत्। तेऽसुराः। यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन्। ते पराभवन्। तस्मात् स्वानां मध्येऽवसाय यजेत। यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति। ते पराभवन्ति" (ब्रा०३का०।२प्र०।५अ०) इति। श्रद्धालुत्वेन यागं कुर्व्वतो मनोः प्रभावादिदं सर्व्वं सम्पन्नं। ततो ज्ञातीनामनुकूलानां प्रतिकूलानाञ्च मध्ये य इमं वृत्तान्तं निश्चित्य श्रद्धालुर्यजेत तस्य भ्रातृव्याः पराभवन्ति। प्रैषमन्त्रमुत्पाद्य विनियोगं तात्पर्य्यञ्च दर्श-

यति "उच्चैः समाहन्त वा आह विजित्यै। वृङ्क्ते एषामिन्द्रियं वीर्यं। श्रेष्ठ एषां भवति" (ब्रा० ३का०।२प्र०।५अ०) इति। हे आग्नीध्र त्वदीयहस्तगतेन पाषाणेन दृषदुपलायुग्ममुच्चैस्ताडनीयमिति मन्त्रार्थः। तं मन्त्रमध्वर्युः पठेत् स च पाषाणध्वनिर्विजयाय भवति यजमानस्तेषां वैरिणामिन्द्रियं बलञ्च विनाशयति स्वयञ्चैषां ज्ञातीनां मध्ये श्रेष्ठो भवति। कल्पः "अवहत्य वितुषान् कृत्वोत्तरतः शूर्पमुपयच्छति वर्षवृद्धमसि" इति। हे शूर्प वर्षवृद्धं वेणुनिष्पन्नतया त्वमपि वर्षवृद्धमसि। कल्पः "एतस्मिन् पुरोडाशीयानुद्वपति। प्रति त्वा वर्षवृद्धं वेत्तु" इति। हे व्रीहिसमूह वर्षवृद्धत्वात् स्वकीयत्वेन शूर्पमभिमन्यतां। मन्त्रद्वये वृद्धशब्देन समृद्धिर्विवक्षित इत्याह "वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह। वर्षवृद्धा वा ओषधयः। वर्षवृद्धा इषीकाः समृद्ध्यै" (ब्रा० ३का०। २प्र०।५अ०) इति। इषीकाः वेणवः। कल्पः "अथोदङ् पर्यावृत्य परापुनाति परापूतꣳ रक्षः परा पूता अरातय" इति। रक्षसामत्र प्रसङ्ग उपन्यस्य मन्त्रं व्याचष्टे "यज्ञꣳ रक्षाꣳस्यनुप्राविशन्। तान्यस्ना पशुभ्यो निरवादयन्त। तुषैरोषधीभ्यः। परापूतꣳ रक्षः परापूता अरातय इत्याह। रक्षसामपहत्यै" (ब्रा० ३का०। २प्र०।५अ०) इति। देवाः पशुयागेषु रुधिरं तद्भागत्वेन वहिस्त्यक्त्वा पशुयागेभ्यो रक्षांसि निष्कामितवन्तः। तुषत्यागेन च ओषध्युपलक्षितेभ्यः। कल्पः "मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीति, अधस्तात् कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशं वा निरस्य" इति "हस्तेनापवपतीति बह्वृच ब्राह्मणमिति"

निष्कामनार्थं भागप्रदानमिति दर्शयति "रक्षसां भागोऽसी-त्याह। तुषैरेव रक्षाꣳसि निरवदयते"(ब्रा०३का०।२प्र०।५अ०) इति। विधत्ते "अप उपस्पृशति मेध्यत्वाय" (ब्रा०३का०।२प्र०।५अ०) इति। कल्पः "वायुर्वो विविनक्त्विति विविच्य" इति। हे तण्डुलाः वायुर्युष्मान् कणेभ्यः पृथक् करोतु। शुद्ध्यापादकत्वेन मन्त्रमिमं व्याचष्टे "वायुर्वो विविनक्त्वित्याह। पवित्रं वै वायुः। पुनात्येवैनान्" (ब्रा०३का०।२प्र०।५अ०) इति। कल्पः "देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान् प्रस्क-न्दयित्वा" इति। हिरण्मयमङ्गुलीयकं पाणौ यस्यासौ हिरण्यपा-णिः। अन्तरिक्षात् पततां वर्षोपलादीनामिवोच्चस्थानस्थिता-च्छूर्पात् पततां तण्डुलानामितस्ततः पाते सत्यप्रतिष्ठितत्वेन हवि-र्विनाशो मा भूदित्यभिप्रेत्य सवितुः प्रतिग्रह इत्याह "अन्त-रिक्षादिव वा एते प्रस्कन्दन्ति। ये शूर्पात्। देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। हविषोऽस्कन्दाय" (ब्रा०।३का०।२प्र०।५अ०) इति। प्रैषमन्त्रमुत्पादयति "त्रि-ष्फलीकर्त्तवा आह। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय" (ब्रा० ३का०।२प्र०।५अ०) इति। हे यजमानपत्नि त्वया तण्डु-लास्त्रिवारं फलीकर्त्तव्याः। शैत्याच्छादकदोषापनयनं फली-करणं। अत्र विनियोगसङ्ग्रहः।

"देवो व उत्पुनात्यंशैस्त्रिभिरापोऽनुमन्त्रयेत्।
अग्नयेऽग्नी हविः प्रोक्ष्य शुन्धोच्चयागपात्रकं॥
अव चर्मोत्करे धुत्वा त्वदित्यास्त्वर्मसंस्तृतिः।

अध्युलूखलमादध्यादग्नेस्तत्र हविः क्षिपेत् ॥
अद्रिर्मुसलमादत्त दृषं दृषदि वादनं।
वर्षं शूर्पमुपोह्याच प्रतिला हविरावपेत् ॥
परा व्रीहीन् परापूय रक्षसामिति चर्म्मणः।
अधस्तुषं कपालेन क्षिपेद्वायुर्व्विविच्यते ॥
देवः क्षिपेद्धविः पात्र्यां मन्त्राः सप्तदशेरिताः।

अथ मीमांसा। तृतीयाध्यायस्य द्वितीपादे चिन्तितं।

हविष्कृदेहीति मन्त्रस्त्रिरवघ्नन् समाह्वयेत्।
विनियोगोऽवघाते स्यादाह्वाने वा ऽवघातके ॥
ऐन्द्रिवन्मन्त्रमाह्वानं गौणं ह्नतिर्यथान्यथा।
पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगौः ॥
त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः।
हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥
विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता।
ऐन्द्रिन्यायश्रुत्यभावाद्धर्हिर्न्यायेन मुख्यगः ॥ इति।

दर्शपूर्णमासयोः श्रूयते "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति" इति। देवानामर्थे या हविः सम्पादयति सा हविष्कृत् तामेनां सम्बोध्य अध्वर्युरेहीति ब्रूते। तथा चायं मन्त्रो ब्राह्मणेन व्याख्यायते "हविष्कृदेहीत्याह। य एव देवानाꣳ हविष्कृतः। तान् ह्वयति" इति। तमिमं मन्त्रमुच्चार्य्याध्वर्युस्त्रिवारमवघातं कुर्व्वन्नाह्वयतीर्थः। अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते न त्वाह्वाने। एहीत्येतन्मन्त्रगतं पदमाह्वाने समर्थं न

अवघात इति चेत् तस्यावघातलक्षकत्वात्। यथा पूर्वोदाहृतायामैन्द्र्यामृचि इन्द्रशब्दो गौणः तद्वदेहीति पदं मन्त्रगतत्वेनावघाते गौणं भविष्यति। अन्यथा मन्त्रब्राह्मणयोराह्वानपरत्वात् श्रूयमाणमवघ्नन्निति पदमनर्थकं स्यात्। प्राप्तमवघातमुद्दिश्य तत्र मन्त्रस्य त्रित्वविधौ वाक्यभेद इति चेत्। न। त्रित्वस्य प्राप्तत्वेनानुवादत्वात्। कस्याञ्चिच्छाखायामयमन्त्रो मन्त्रकाण्डे त्रिवारमभ्यस्याम्नातः। ह्वयतिपदं त्वेहीतिवदवघातपरतयोपचारेण नेयमिति प्राप्ते ब्रूमः। त्रिरभ्यासस्य नित्यवत् प्राप्तेः पाठमात्रेण न सिध्यति, कस्याञ्चिच्छाखायां द्विःपाठात् कस्याञ्चिच्छाखायां सकृत्पाठात्, अतोऽसौ नित्यवद्विधीयते। न चाऽवघ्नन्नित्यस्य वैयर्थ्यं तस्य काललक्षकत्वात्। कालस्यापि विधौ वाक्यभेद इति चेत्। न। अप्राप्तत्वात्। न ह्यवघाते सहायाह्वानं अन्यस्मिन् काले भवति, ततोऽर्थप्राप्तः कालः। आह्वानमपि मन्त्रसामर्थ्यादेव प्राप्तत्वान्न विधेयं। न ह्येहि इति मन्त्रपाठ आह्वानमन्तरेणोपपद्यते। मन्त्रव्याख्यानञ्चोदाहृतं। तत्रायं वाक्यार्थः सम्पन्नः, अवघातकाले यदाह्वानं तस्य त्रिरभ्यासः कर्त्तव्य इति। अतः शाखान्तरे विस्पष्टमाह्वानानुवादेन अभ्यासो विधीयते "त्रिर्ह्वयति। त्रिषत्या हि देवा" इति। एवं सति मन्त्रस्यापि विनियोगे वाक्यभेदः स्यात्। लिङ्गेन त्वाह्वाने विनियुज्यते नावघाते। न चैन्द्र्यन्यायोऽत्र प्रसरति तृतीयाश्रुत्यभावात्। बर्हिर्देवसदनं दामीत्यत्रोक्तेन तु न्यायेन मुख्य एवाह्वाने लिङ्गेन मन्त्रविनियोगो न त्ववघातरूपे गौणाह्वाने। तस्मा-

स्यावघातशेषोऽयम्मन्त्रः। द्वादशाध्यायस्य द्वितीयपादे चिन्तितं।

सवनीये पुरोडाशे स्यादाह्वतिर्हविष्कृतः।

न वातिदेशात् स्यान्नैवं पश्वाङ्गानात् प्रसञ्जितः॥ इति।

सवनीयपुरोडाशस्याग्नेयपुरोडाशविकृतित्वात्। प्रकृतिवद्विकृतिः कर्त्तव्येत्यतिदेशेन हविष्कृदाह्वानं तत्र कर्त्तव्यमिति चेत्। नैवं। पशौ कृतेन हविष्कृदाह्वानेन तत्कालीने पुरोडाशेऽपि प्रसङ्गसिद्धत्वात्। यद्यप्यौपधार्य्यं हविष्कृदाह्वानं पशौ नास्ति तथाप्येषा कृत्वाचिन्ता। तत्रैवान्यच्चिन्तितं।

अस्त्याह्वतिस्तृती सौम्ये नास्ति वा पशुपाकतः।

निवृत्तत्वादस्ति नैवमनिवृत्ते पुरोत्थितेः॥ इति।

तृतीयसवनीये सौम्यचर्व्वादयः तेषु हविष्कृदाह्वानं पुनः कर्त्तव्यं, पशावाहूतायास्तस्याः पशुपाके निवृत्तत्वादिति चेत्। नैवं। प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्या उत्थानकालत्वेन पशावपि ततः पूर्व्वं निवृत्त्यभावात्। तस्मात् तत्कालीनेषु सौम्यचर्व्वादिषु नास्ति पुनराह्वानं। एकादशाध्यायस्य प्रथमपादे चिन्तितं।

"अवघातः सकृद्भूयो वाऽसकृद्विधिसिद्धितः।

दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयं"॥ इति।

व्रीहीनवहन्तीत्यत्र सकृन्मुसलघातमात्रेण विधिप्रयुक्तस्यापूर्व्वस्य सिद्धेर्नास्त्यावृत्तिरिति चेत्। नैवं। तण्डुलनिष्पत्तेर्दृष्टप्रयोजनत्वेन तावत्पर्य्यन्तस्याभ्यासस्याश्रुतस्यापि कल्पनीयत्वात्। एवं तण्डुलपेषणादावपि द्रष्टव्यं। तत्रैवान्यच्चिन्तितं।

"सर्वौषधावघातः किमावर्त्तः सकृदेव वा।
आवृत्तिः पूर्व्ववन्नैवं दृष्टार्थत्वात्र वर्जनात्" ॥ इति।

अग्निचयने श्रूयते "उदुम्बरमुलूखलꣳ सर्वौषधस्य पूरयित्वावहन्त्यर्थैनदुपदधाति" इति। अत्रादृष्टमात्रप्रयोजनत्वात् सकृदेवावघातः। एकादशाध्यायस्य चतुर्थपादे चिन्तितं।

"अवघातार्थमन्त्रः किमसकृत् सकृदेव वा।
प्रहारभेदादावृत्तिः कर्म्मैक्येन सकृद्भवेत्" ॥ इति।

अवरक्षो दिवस्सपत्नं वध्यासमित्यवहन्तीत्यवघाते विहितो मन्त्र आवर्त्तनीयः। कुतः। अवघातस्य प्रहाररूपत्वात्। प्रहाराणाञ्च भिन्नत्वादिति प्राप्ते ब्रूमः। तण्डुलनिष्पत्तिपर्य्यन्तत्वेनाचिप्तप्रहाराभ्यासयुक्तस्यावघातस्यैकत्वात् तत्र विनियुक्तस्यावघातोपक्रमे सकृदेव पाठः। तत्रैवान्यच्चिन्तितं।

"नानाबीजेषु तन्मन्त्रः सकृद्भूयोऽथवा सकृत्।
चिकीर्षैक्यात् प्रयोगाणां भिन्नत्वादसकृद्भवेत्" ॥ इति।

राजसूयेनानाबीजेष्टिसमुदाये श्रूयते "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्व्वपति कृष्णानां व्रीहिणाꣳ सोमाय वनस्पतये श्यामाकञ्चरुं" इत्यादि। तत्र सोऽवघातमन्त्रः सकृदेव वाच्यः। कुतः। सर्व्वावघातविषयायामेकस्याञ्चिकीर्षायां प्रवृत्तत्वादिति प्राप्ते ब्रूमः। समन्त्रोऽवघातस्योदकातिदेशेन बीजेषु प्राप्यते तत्तद्बीजेषु तण्डुलनिष्पत्तौ स कृतार्थः सम्पन्नः पुनर्बीजान्तरे तण्डुलनिष्पत्तये समन्त्रस्यावघातस्य प्रयोक्तव्यादसकृन्मन्त्रपाठः। दशमाध्यायस्य प्रथमपादे चिन्तितं।

"अवघातः कृष्णलानामस्ति नो वास्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत् साकमवघाते तु नास्ति सा"॥ इति।

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते "प्राजापत्यं घृते चरुं निर्व्वपेच्छतकृष्णलमायुष्काम" इति कृष्णलशब्दः सुवर्णशकलवाचि। प्रकृतौ व्रीहीनवहन्तीति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानाञ्चोदकवशादस्ति नो वेति संशयः। अस्तीति पूर्व्वपक्षप्रतिज्ञा वितुषीकरणं तत्कृतचरूपकारः। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनं। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः। तद्वदवघातोऽप्यस्तु घृते श्रपयतीति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यावदवघातो नास्ति। नवमाध्यायस्य प्रथमपादे चिन्तितं।

"अवघाते व्रीहिरूपविवक्षोत न वा श्रुतेः।
आद्यः साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते"॥ इति।

व्रीहीनवहन्तीत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वाद्विवक्षितं। तथा सति नैवारश्चरुर्भवतीत्यत्र नीवाराणामव्रीहित्वादवघातो नास्तीत्यूहो नारभ्येत। प्राकृतानामवघातविषयाणां व्रीहीणां परित्यागेन व्रीहिस्थानेऽवघातविषयत्वेन नीवाराणां प्रयोग ऊहः। यदा व्रीहिष्वेव नियतोऽवघातो व्रीहिनिवृत्तौ निवर्त्तते तदा कुत ऊहावसर इति प्राप्ते ब्रूमः। व्रीहिस्वरूपविवक्षायामपि व्रीहिगतो पूर्व्वसाधनत्वाकारो न वर्जयितुं शक्यः, अन्यथावघातवैयर्थ्यापत्तेः। ततो पूर्व्वसाधनत्वाकारोऽवश्यं विव-

क्षितव्यः तत्र व्रीहिरूपस्यापि विवक्षायां गौरवं स्यात्। तद-विवक्षायान्तु नीवाराणामपि विहितत्वेन अपूर्व्वसाधनत्वादाकारसद्भावादवघातविषयत्वेनोहः सिध्यति। तत्रैवान्यच्चिन्तितं।

"मुसलाभ्युक्षणं हत्यै स्यादपूर्व्वायवोक्षितः।

आद्यः प्रकरणादन्त्यो व्यर्थं तस्मादिहान्यथा"॥ इति।

प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति श्रूयते, तत्र प्रोक्षणमुलूखलमुसलद्रव्यद्वारावघातार्थं। कुतः। वाक्येन तच्छेषत्व-प्रतीतेरिति चेत्। मैवं। प्रकरणेनापूर्व्वशेषत्वावगमात्। न च वाक्यं प्रकरणाद्बलीय इति वाच्यं, अपूर्व्वशेषत्वाभाववैयर्थ्यप्रसङ्गात्। पूर्व्वपक्षे यत्रावघातः तत्रैव प्रोक्षणं। तथा सति नैर्ऋतचरौ कृष्णानां व्रीहीणान्नखनिर्भिन्नमिति श्रुतेषु नखेषु प्रोक्षणं नोह्यते सिद्धान्ते त्वपूर्व्वस्य प्रयोजकत्वादस्ति तत्रोहः। तदेवमवघातसम्बन्धा विचारा उदाहृताः।

अथ व्याकरणं। देवो व इत्यादिषु स्वरागताः। अच्छिद्रेणेत्यत्र बहुव्रीहिपक्षे नञ्सुभ्यां (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तः प्राप्नोति ततस्तत्पुरुष एव कर्त्तव्यः। छिद्रं छेदनोपेतं तन्न भवतीत्यच्छिद्रं तत्राव्ययपूर्व्वपदप्रकृतिस्वरत्वं। पवित्रशब्दे प्रत्ययस्वरः। वसुसूर्य्यशब्दौ वृषादौ। अप इत्यत्र वाक्यादित्वान्नामन्त्रितस्य निघातः। देवीरित्यादीनां सोऽस्ति यज्ञपतिमित्यत्र पत्यावैश्वर्य्ये (पा० ६।२।१८) इति पूर्व्वपदप्रकृतिस्वरः। वृत्रं वृर्यते हिंस्यतेऽस्मिन्निति वृत्रतूर्यं युद्धं। तूरिधातोः स्वार्थण्यन्तस्याजन्तत्वेन अचो यदिति (पा० ३।१।९७)

यत्प्रत्यये सति प्रत्ययस्वरं बाधित्वा तित्स्वरितं (पा०६।१।१८५) इति स्वरितप्राप्तौ तदपवादः। यतो नावः (पा०६।१।२१३) नौशब्दव्यतिरिक्तस्य यत्प्रत्ययान्तस्यादिरुदात्तो भवति। ततो वृचेत्युपपदसद्भावात् समासान्तोदात्तत्वं बाधित्वा गतिकारकोपपदात्कृत्(पा०६।२।१।३९)इत्युत्तरपदप्रकृतिस्वरत्वं। प्रोक्षिता इत्यत्र गतिरनन्तरः (पा०६।२।४९) इति पूर्व्वपदप्रकृतिस्वरत्वं। अवधूतमित्यत्रापि तद्वत्। अधिषवणमित्यत्र सवनशब्दस्य ल्युट्प्रत्ययान्तत्वेन लिति (पा०६।१।१९३) इति प्रत्ययात् पूर्व्वपदस्योदात्तत्वे सति समासे कृदुत्तरपदप्रकृतिस्वरत्वं। वानस्पत्यमित्यत्र वनस्पतेर्विकार इत्यस्मिन्नर्थे विहितस्तद्धितप्रत्यय उदात्तः। वाच इत्यत्र सावेका च (पा०६।१।१६८) इति विभक्तिरुदात्ता। अधिषवणवद्विसर्जनं। देववीतय इत्यत्र दासीभारादित्वाद्दासीभाराणाञ्चेति (पा०६।२।४२) सूत्रांशेन पूर्व्वपदप्रकृतिस्वरे सति समासस्वरो बाध्यते। सुशमीत्यत्रोत्तरपदस्य प्रत्ययस्वरेणान्तोदात्तत्वात् कृदुत्तरपदत्वेनापि तदेव प्राप्तौ परादिश्छन्दसि बहुलं (पा०६।२।१९९) इत्युत्तरपदाद्युदात्तत्वं। द्युमदित्यत्र मतुपः पित्वादनुदात्तत्वे प्राप्ते तदपवादः। ह्रस्वनुड्भ्यां मतुप् (पा०६।१।१७६) ह्रस्वान्तान्नुडागमाच्चोत्तरो मतुबुदात्तः स्यात्। अवधूतवत् परा पूतं। हिरण्यपाणिरित्यत्र बहुव्रीहित्वात् पूर्व्वपदस्वरः। हिरण्यशब्दस्याद्युदात्तेषु निपातितः।

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः॥

अवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु दिवस्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्तु धिषणासि पर्व्वत्या प्रति त्वा दिवस्कम्भनिर्वेत्तु धिषणासि पार्व्वतेयी प्रति त्वा पर्व्वतिर्वेत्तु देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामधिवपामि धान्यमसि धिनुहि देवान् प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु ॥ १ ॥

प्राणाय त्वा पञ्च दश च ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥

पञ्चमेऽनुवाके व्रीह्यवघात उक्तः। अवहतानाञ्च तण्डुलानां पेषणात् पूर्वं कपालोपधानस्य निष्प्रयोजनत्वेन तदुपधानात् पूर्व्वं षष्ठे पेषणमभिधीयते। कल्पः "अथ प्रोक्षितेषु त्रिष्फलीकृतेषु तत्रैव कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदगावृत्या, अवधूतꣳ रक्षोऽवधूता अरातय इति त्रिः, अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति, अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु" इति। पूर्व्वभागे व्याचष्टे "अवधूतꣳ रक्षोऽवधूता अरातय इत्याह। रक्षसामपहत्यै। अदित्यास्त्वगसीत्याह। इयं वा अदितिः। अस्या एवैनत्त्वचं करो-

ति। प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै। पुरस्तात् प्रतीचीन-ग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय। तस्मात् पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते। तस्मात् प्रजा मृगं ग्राहुकाः। यज्ञो देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। यत् कृष्णाजिने हविरधिपिनष्टि। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। हविषोऽस्कन्दाय''(ब्रा०।३का०।२प्र०।६अ०) इति। अवधूतस्यैवात्र पेषणस्य विशिष्टविधिः। कल्पः "तस्मिन्नुदीचीनकुम्बाꣳ शम्यां निदधाति, दिवस्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्तु" इति। गदया समानाकारो व्यायामार्ध-परिमितः काष्ठविशेषः शम्या तां कृष्णाजिनस्योपर्युदीचीनशि-रस्कां निदध्यात्। सा च पेषणार्द्धेतोर्दृषदः पश्चाद्भागधारणेन तद्भागस्योन्नत्यं करोति। हे शम्ये त्वं द्युलोकस्य धारयित्र्यसि। तस्मात् कृष्णाजिनरूपा या भूमेस्त्वगियं त्वामभिमन्यतां। श-म्याया द्युलोकाधारकत्वमुपपादयति "द्यावापृथिवी सहास्तां। ते शम्यामात्रमेकमहर्व्यैताꣳ शम्यामात्रमेकमहः। दिवस्कम्भ-निरसि प्रति त्वादित्यास्त्वग्वेत्त्वित्याह। द्यावापृथिव्योर्वीत्यै" (ब्रा०।३का०।२प्र०।६अ०) इति। प्रजापतिना सृष्टे द्यावा-पृथिव्यौ पूर्वं जगत् काष्ठवत् परस्परं संश्लिष्टे अभूतां ते पश्चा-देकस्मिन् दिने शम्याप्रमाणेन परस्परं वियुक्ते अभूतां प्रति-दिनं तथेति विवक्षया वीप्सात्मा। तयोः पुनः संश्लेषे याग-स्यावकाशो न स्यात्। ततो विश्लेषार्था दिवस्कम्भनिरित्युच्यते। कल्पः "तस्यां प्राचीं दृषदमध्यूहति, धिषणासि पर्वत्या प्रति त्वा दिवस्कंभनिर्वेत्तु" इति। हे पेषणसाधनभूते दृषद्रूपे त्वं

पेष्टुमभिमततया धिषणाऽसि। दृढतया पर्वतावस्थामर्हसि। ता-दृशीं त्वां द्युलोकधारिका शम्या अभिमन्यतां सेयं दृषत् दृढतया लोकद्वयधारणाय कल्पत इत्याह "धिषणासि पर्वत्या प्रति त्वा दिवस्कम्भनिर्वेत्त्वित्याह। द्यावापृथिव्योर्विधृत्यै" (ब्रा०।३का०। २प्र०।६अ०) इति। कल्पः "दृषद्युपलामध्यूहति, धिषणासि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु" इति। पूर्ववत् पर्वतिः पर्वतसम्ब-न्धिनी दृषत्। तथैव व्याचष्टे "धिषणासि पार्वतेयी प्रति त्वा पर्व-तिर्वेत्त्वित्याह। द्यावापृथिव्योर्धृत्यै" (ब्रा०।३का०।२प्र०।६अ०) इति। बोधायनः "तस्यां पुरोडाशीयान् निर्वपति, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिव-पाम्यग्नीषोमाभ्यां, अमुष्मा अमुष्मा इति यथादेवतमधिवपति, धान्यमसि धिनुहि देवान्" इति। आपस्तम्बस्तु धान्यमसीत्य-नेन सहैकमन्त्रतामाश्रित्याह "देवस्य त्वेत्यनुमन्त्र्य, अग्नये जुष्ट-मधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थं" इति। अत्र वाक्यपूरणायाग्नय इत्यादिकमध्याहृतं। अतो यथाम्नातमेवानूद्य व्याचष्टे "देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह यत्यै। अधि-वपामीत्याह। यथादेवतमेवैनानधिवपति"(ब्रा०।३का०।२प्र०। ६अ०) इति। देवान् प्रीणयेति यदुक्तं तस्य नास्त्यनुपपत्तिः। आहुतीरूपस्य धान्यस्याल्पत्वेऽपि मन्त्रसामर्थ्येन तदभिवृद्धेरि-त्याह "धान्यमसि धिनुहि देवानित्याह। एतस्य यजुषो

वीर्य्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति" (ब्रा०।३का०।२प्र०।६अ०) इति। वीप्सा सर्व्वत्रानुगमार्था। यदिदं द्रव्यं यावज्जुहोति तावदेव देवान् प्राप्नुयात् तदा कथमिदं कल्पं देवान् प्रीणयेदित्याशङ्क्येत, न तु तावदेवेति नियमोऽस्ति, किन्तु यावत् काम्यते तावत् प्रवर्द्धते, ततः स भवत्येव प्रीणनं। बोधायनः "पिंषति, प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा" इति। आपस्तम्बः "प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति सन्ततं पिनष्टि" इति। उच्छ्वासनिश्वासतत्सन्धिगता वृत्तयः प्राणापानव्यानाः। अथ यः प्राणवायोः सन्धिः स व्यान इति श्रुत्यन्तरं। हे हविः वृत्तित्रयं यजमाने चिरं स्थापयितुं त्वां पिनष्मि। एतदेव दर्शयति "प्राणाय त्वाऽपानाय त्वेत्याह। प्राणानेव यजमाने दधाति"। (ब्रा०।३का०।२प्र०।६अ०) इति। बोधायनः "अथ बाह्य अन्ववेचते, दीर्घामनुप्रसितिमायुषे धां" इति। आपस्तम्बः "प्राचीमन्ततोऽनुप्रोह्य" इति। प्रसितिः प्रबन्धः कर्मसन्तानः। यजमानस्यायुरभिवृद्ध्यर्थमिमामविच्छिन्नकर्मसन्ततिहेतुरूपामुपलां धारितवानस्मि। तदेतदाह "दीर्घामनुप्रसितिमायुषे धामित्याह। आयुरेवास्मिन् दधाति"। (ब्रा०।३का०।२प्र०६अ०) इति। कल्पः "देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वा" इति।

पूर्व्ववद्व्याचष्टे "अन्तरिक्षादिव वा एतानि प्रस्कन्दन्ति। यानि दृषदः। देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। हविषोऽस्कन्दाय" (ब्रा०।३का०।२प्र०।६अ०) इति। पत्नीं दासीं वा प्रति प्रैषमन्त्रमुत्पाद्य व्याचष्टे "असंवपन्ती पिंष्-आणूनि कुरुतादित्याह मेध्यत्वाय" (ब्रा०।३का०।२प्र०।६अ०) इति। तथा च सूत्रितं "सम्प्रेष्यति दासी पिनष्टि पत्नी वापि वा पत्यवहन्ति शूद्रा पिनष्टि" इति। हे दासि तण्डुलेष्वन्य-द्रव्यं किमप्यप्रवेशयन्ती पेषणं कुरु तानि च पिष्टानि सूक्ष्माणि कुरु। तमिमं प्रैषमध्वर्युः पठेत्। पिष्टस्य सूक्ष्मत्वे पुरोडाश-द्वारा यज्ञयोग्यता भवति। अत्र विनियोगसङ्ग्रहः।

"अवेति पूर्व्ववत् तत्र शम्यां स्थापयते दिवः।
धिषणा द्वे तथाश्मानौ देवेत्यधिवपेद्धविः॥
प्राणायेति त्रिभिः पिष्ट्वा दीर्घेत्यन्त उपोहति।
देवोऽजिने स्कन्दयेत प्रोक्ता एकादशेह तु"॥ इति॥

अथ मीमांसा। यद्यप्यत्र विशेषाकारेण विचारा बहवो नोपलभ्यन्ते तथापि सामान्यविचाराः पूर्व्वोक्ता अनुसन्धेयाः। इषे त्वेत्यत्र वाक्यपूर्त्तये यथाध्याहारः तथैवाधिवपामीत्यत्राप्य-ग्नये जुष्टमित्यादिकमध्याहर्तव्यं अध्याहृतस्य चानाम्नातत्वेनाम-न्त्रत्वादूहादिष्विव स्वराद्यपराधो नास्ति। किञ्च नवमाध्यायस्य प्रथमपादे चिन्तितं।

"नोह्य ऊह्योऽथ वा धान्यशब्दो नासङ्गताक्षितः।
ऊह्यो लक्षणयार्थस्य गोपानस्येव सङ्गतेः"॥ इति॥

दृषदि पेषणाय तण्डुलावापेष्वयं मन्त्रो विहितः। धान्यमसि धिनुहि देवानिति। सोऽयं धान्यशब्दः समवेतमर्थं ब्रूते निस्तुषाणां तण्डुलानां धान्यशब्दार्थत्वाभावात्। ततः सवित्रादिशब्दवन्नोहनीय इति चेत्। मैवं। लक्षणावृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात्। यथा च गावः पीयन्त इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति, किन्तु पयो लक्षयित्वाऽर्थं समवेतमेव प्रतीयन्ति तद्वत्। तस्माच्छाक्यानामयने षट्त्रिंशत् संवत्सरे धान्यशब्द ऊहनीयः। तत्र स्यैवमाम्नायते संस्थितेऽहनि गृहपतिर्मृगयां याति। स तत्र यान् मृगान् हन्ति तेषां तरसा सवनीयाः पुरोडाशा भवन्तीति तत्र दृषदि पेषणाय मांसमावपन् मांसमसि धिनुहि देवान् इत्येवं मन्त्रमूहेत्। न च धान्यशब्दवल्लक्षको मृगशब्द ऊहे प्रयोक्तव्य इति वाच्यं, लक्षणावृत्तिः प्रकृतार्थत्वेन अतिदेशानर्हत्वात्। तस्मान्मांसमित्येव धान्यशब्दस्योहः।

अथ व्याकरणं। अवधूतमित्यादयो गताः। पर्व्वत्येत्यत्र पर्वतमर्हति इत्यस्मिन्नर्थे छन्दो विषये तकाररहितस्य यप्रत्ययस्य विधानात् प्रत्ययस्वरः। पार्वतेयीत्यत्र ङीषुदात्तः। पर्वतिरित्यत्र तदर्हतीत्यस्मिन्नेवार्थे छान्दस इकार प्रत्ययः। धान्यशब्दस्य तिल्य शिक्य मर्त्य कार्श्मर्य धान्य कन्या राजन्य मनुष्याणामन्तः (फि०। सि०कौ०१३९प०) इत्यन्तस्वरितत्वं। धिनुहीत्यत्र सेर्ह्यपिच्चेति (पा०३।४।८७) सिप्स्थाने आदिष्टस्य हिशब्दस्य पित्वनिषेधात् प्रत्ययस्वरः। यद्यपि विकरणप्रत्ययस्य उकारस्य

स्वरः सतिशिष्टस्तथापि व्यत्ययो द्रष्टव्यः। प्रसितिमित्यत्र छन्द-
स्युत्तरपदप्रकृतिस्वरे प्राप्ते तदपवादः। तादौ च निति कृत्यऽतौ
(पा०६।२।५०)। तु प्रत्ययव्यतिरिक्ते तकारादौ नितिकृतिप्रत्य-
ये परतः पूर्वपदप्रकृतिस्वरं भवति॥०॥ इति माधवीये वेदा-
र्थप्रकाशे प्रथमकाण्डे प्रथमपाठके षष्ठोऽनुवाकः॥०॥

धृष्टिरसि ब्रह्म यच्छापाग्ने ऽग्निमामादं जहि निष्क्र-
व्यादꣳ सेधाऽऽदेवयजं वह निर्दग्धꣳ रक्षो निर्दग्धा अ-
रातयो ध्रुवमसि पृथिवीं दृꣳहायुर्दृꣳह प्रजां दृꣳह स-
जातानस्मै यजमानाय पर्यूह धर्त्रमस्यन्तरिक्षं दृꣳह
प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूह
धरुणमसि दिवं दृꣳह चक्षुः॥१॥

दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूह ध-
र्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै
यजमानाय पर्यूह चितस्थ प्रजामस्मै रयिमस्मै सजाता-
नस्मै यजमानाय पर्यूह भृगूणामङ्गिरसां तपसा तप्यध्वं
यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि
व्रत इन्द्रवायू विमुञ्चतां॥२॥

चक्षुरष्टा चत्वारिꣳशच्च॥७॥

## इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥

षष्ठानुवाके पेषणमुक्तं। यद्यप्यनन्तरं पुरोडाशो निष्पादनीयस्तथाप्यतप्तेषु कपालेषु पुरोडाशस्य श्रपयितुमशक्यत्वात् सप्तमे कपालोपधानमभिधीयते। कल्पः "धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय" इति। पलाशशाखामूले छिन्नः प्रादेशपरिमित उपवेषः। हे उपवेष त्वं अङ्गाराणां धर्षणे समर्थोऽसि। अतो ब्रह्मशब्दोदितं पुरोडाशरूपं देवानां प्रयच्छ। धृष्टिशब्दो धैर्यद्योतनायेत्याह "धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै" (ब्रा०।३का०।२प्र०।७अ०) इति। कल्पः "अपाग्नेऽग्निमामादं जहीति गार्हपत्यादाहवनीयाद्वा प्रत्यञ्चावङ्गारौ निर्वर्त्य, निष्क्रव्यादꣳसेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं वा निरस्य, आदेवयजं वहेति दक्षिणमवस्थाप्य" इति। हे गार्हपत्याग्ने योऽग्निः शास्त्रीयपाकमन्तरेणामं द्रव्यमत्ति न तु पाकार्थस्थापितस्य पाकं करोति तमपनय मारय, यश्च लौकिकं मांसमत्ति तमपि निषेधय, यस्तु देवान् यजति तमावह। यथोक्तस्याग्न्यानयनस्य कपालोपधानार्थतां दर्शयन् प्रशंसति "अपाग्नेऽग्निमामादञ्जहि निष्क्रव्यादꣳसेधाऽऽदेवयजं वहेत्याह। य एवामात् क्रव्यात्। तमपहत्य। मेध्येऽग्नौ कपालमुपदधाति" (ब्रा०।३का०।२प्र०।७अ०) इति। "निर्दग्धꣳ रक्षो निर्दग्धा अरातयो ध्रुवमसि पृथिवीं दृꣳहायुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह"

एतयोर्मन्त्रयोरर्थक्रमेण विनियोगः कल्पे दर्शितः "ध्रुवमसीति तस्मिन् मध्यमं पुरोडाशकपालमुपदधाति, निर्दग्धꣳ रक्षो निर्दग्धा अरातयः, इति कपालेऽङ्गारमत्याधाय" इति। हे कपाल त्वं ध्रुवमसि अतः पृथिव्यादीन् दृढीकुरु। अस्य यजमानस्य ज्ञातीन् परितः सेवकान् कुरु। अस्मिन् कपालेऽवस्थितं रक्षो निःशेषेण दग्धं। आम्नानक्रमेण निर्दग्धमन्त्रमादौ व्याचष्टे "निर्दग्धꣳ रक्षो निर्दग्धा अरातय इत्याह। रक्षाꣳस्येव निर्दहति" (ब्रा० ३का०।२प्र०।७अ०) इति। कपालोपधानं विधत्ते "अग्निवत्युपदधाति। अस्मिन्नेव लोके ज्योतिर्धत्ते" (ब्रा० ३का०।२प्र०।७अ०) इति। यथोक्ताङ्गारयुक्ते प्रदेशे कपालमुपदधाति। कपालोपरि अन्यस्याङ्गारस्य स्थापनं विधत्ते "अङ्गारमधिवर्तयति। अन्तरिक्ष एव ज्योतिर्धत्ते" (ब्रा० ३का०।२प्र०।७अ०) इति। कपालस्याध ऊर्ध्वञ्च स्थिताभ्यामङ्गाराभ्यां लोकद्वयस्य सज्योतिष्ट्वे ततोऽप्यूर्ध्वमङ्गारस्थापनासम्भवात् दिवो ज्योतिर्न स्यादिति न शङ्कनीयमित्याह "आदित्यमेवामुष्मिंल्लोके ज्योतिर्धत्ते" (ब्रा० ३का०।२प्र०।७अ०) इति। एतद्विज्ञानं प्रशंसति "ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति। य एवं वेद" (ब्रा०।३का०।२प्र०।५अ०) इति। बोधायनः "अथ पूर्व्वार्ध्यमुपदधाति, धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूह इति। अथापरार्ध्यमुपदधाति, धरुणमसि दिवं दृꣳह चक्षुर्दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूह इति। अथ दक्षिणा-

र्थ्यमुपदधाति, धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह इति। अथ पूर्व्वमुपदधाति, चितस्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह" इति। आपस्तम्बः "धर्त्रमसीति पूर्व्वं द्वितीयꣳ सꣳस्पृष्टं, धरुणमसीति पूर्व्वं तृतीयमिति, धर्मासीति सप्तमं, चितस्थेत्यष्टमं" इति च। तत्र धर्त्रधर्मधरुणशब्दाधारकत्वं दृꣳहतो दृढत्वं लक्षयन्ति। हे अष्टमकपाल त्वं चितरूपोऽसि ततो यजमानस्य प्रजादिकं परितः सम्पादय। प्रजादेः प्रत्येकमुपचयविवक्षया पृथग्वाक्यत्वं द्योतयितुं अस्मा इति पदस्यावृत्तिः। चितस्थेति बहुवचनमादरार्थं। क्रमेण मन्त्रान् व्याचष्टे "ध्रुवमसि पृथिवीं दृꣳहेत्याह। पृथिवीमेवैतेन दृꣳहति। धर्त्रमस्यन्तरिक्षं दृꣳहेत्याह। अन्तरिक्षमेवैतेन दृꣳहति। धरुणमसि दिवं दृꣳहेत्याह। दिवमेवैतेन दृꣳहति। धर्मासि दिशो दृꣳहेत्याह। दिश एवैतेन दृꣳहति" (ब्रा०३का०।२प्र०।७अ०) इति। उपसंहरति "इमानेवैतैर्लोकाददृꣳहन्" (ब्रा०३का०।२प्र०।७अ०) इति। एतद्वेदनं प्रशंसति "दृꣳहन्ते स्मा इमे लोकाः प्रजया पशुभिः। य एवं वेद" (ब्रा०३का०२प्र०।७अ०) इति। सर्व्वत्र विधेयार्थं केनापि प्रकारेण स्तुत्वा श्रद्धोत्पादनीयेति व्युत्पादयितुं कपालोपधानं बहुधा स्तौति। तत्रायमेकः प्रकारः "त्रीण्यग्रे कपालान्युपदधाति। त्रय इमे लोकाः एषां लोकानामाप्त्यै" (ब्रा०३का०।२प्र०।७अ०) इति। मध्यपूर्व्वापरकपालगतत्रित्वमपीत्थं प्रशस्तं। अथापरः प्रकारः

"एकमग्रे कपालमुपदधाति। एकं वा अग्रे कपालं पुरुषस्य सम्भवति। अथ द्वे। अथ त्रीणि। अथ चत्वारि। अथाष्टौ। तस्मादष्टौ कपालं पुरुषस्य शिरः" (ब्रा०।३का०।२प्र०।७अ०) इति। प्रथमं ध्रुवमसीत्येकं कपालमुपधीयते। ततो धर्त्रम-सीत्यनेन सह द्वे। धरुणमसीत्यनेन सह त्रीणि। धर्मासी-त्यनेन सह चत्वारि। ततः केषाञ्चिन्मते चितस्थेत्यनेनैवोप-रितनानि चत्वारीत्यष्टौ भवन्ति। पुरुषस्यापि गर्भे प्रथमं शिरोरूपमखण्डं कपालमुत्पद्यते। पश्चात् क्रमेण रेखाभिरष्ट-धाभिद्यते। कपालेषु सङ्ख्यां स्तुत्वा तदुपधानं स्तौति "यदेवं कपालान्युपदधाति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजा-पतिꣳ सꣳस्करोति। आत्मानमेव तत्सꣳस्करोति। तꣳ सꣳ-स्कृतमात्मानं। अमुष्मिन् लोके ऽनुपरैति" (ब्रा०।३का०।२प्र०।७अ०) इति। उपधानेन कपालेषु संस्कृतेषु तद्द्वारा तत्साध्यो यज्ञः संस्क्रियते। यज्ञद्वारा स्रष्टुः प्रजापतेः संस्कारः। तेन कपालयज्ञप्रजापतिसंस्कारेण तेषां संस्कर्तृत्वाद्यजमानः स्वयं संस्कृतो भवति। तस्य संस्कृतं स्वर्गे लोके गच्छन्तमनु फलदा-नाय यज्ञः प्रजापतिरूपधारी कश्चित् देवो गच्छति। अपरः प्रकारः "यदष्टावुपदधाति। गायत्रिया तत्सम्मितं। यन्नव। त्रिवृता तत्। यद्दश। विराजा तत्। यदेकादश। त्रिष्टुभा तत्। यद्द्वादश। जगत्या तत्। छन्दःसम्मितानि स उपदधत् कपालानि। इमांल्लोकाननुपूर्वं दिशो विधृत्यै दृꣳहति। अथायुः प्राणान् प्रजां पशून् यजमाने दधाति। स जातानस्मा अभितो

मङ्गलान् करोति" (ब्रा०।१का०।१प्र०।७अ०) इति। त्रिवृच्छन्दः स्तोमवाचि। स च स्तोम उपास्मै गायता नर इत्याद्यृग्भिर्नवभिस्सम्पद्यते। छन्दःशब्दः स्तोममप्युपलक्षयति। गायत्री विराट् त्रिष्टुप् जगतीनां चाष्टत्वाद्यक्षरसंख्या प्रसिद्धा। संख्यायाश्छन्दःसादृश्यं। नन्वत्राग्नेयस्य अष्टौ कपालानि अग्नीषोमीयस्य चैकादश न तु नवादिसङ्ख्या लभ्यत इति चेत्। वाढं। तथापि सङ्ख्यान्यत्र विद्यमाना प्रसङ्गादिह स्तूयते। त्रयोदशादि सङ्ख्या न क्वाप्यस्ति। एकादिका सप्तपर्यन्ता सङ्ख्या अन्यत्रास्तीति चेत् तर्हि तस्याप्यनेनैव न्यायेन स्तुतिरुन्नेया। ईदृशानि कपालान्युपदधानोऽध्वर्युरनुक्रमेण पृथिव्यादीन् लोकान् प्रागादिदिशश्च दृढीकरोति, लोकबुध्या कपालानां स्थापितत्वात्। अत इदमुपधानं लोकविधृत्यै भवति। किञ्च आयुरादीन् भ्रातृपुत्रादींश्च यजमाने सम्पादितवान् भवति। क्रमप्राप्तिमन्त्रे स्पष्टार्थत्वं दर्शयति "चितस्थेत्याह। यथा यजुरेवैतत्" (ब्रा०।१का०।१प्र०।३अ०) इति। कल्पः "भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानभ्यूह्य" इति। हे कपालानि देवतातपोरूपेणानेनाग्निना तप्तानि भवत। इममेवार्थं दर्शयति "भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह। देवतानामेवैनानि तपसा तपन्ति" (ब्रा० १का०।१प्र०।५अ०)। "यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतां" इति। अयमन्त्रो यद्यपि यागसमाप्तौ पठनीयः तथापि कपालप्रसङ्गादिहाम्नातः। तद्विनियोगः सूत्रे दर्शितः "यानि

घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य सञ्चायो-द्वासयति सन्तिष्ठेते दर्शपूर्णमासौ" इति। अध्वर्युरूपा वेधसो यानि घर्मकपालानि आदीप्ते वक्री ध्रुवमसीत्यादिमन्त्रैरुपस्थापितवन्तः, पूजार्थं बहुवचनं, तादृशान्यपि कपालानि विमोक्तुं समर्थाविन्द्रवायू पोषकस्य यजमानस्य यागरूपे व्रते समाप्ते सति विमुञ्चतां। अनेकगुणविशिष्टं विमोकं विधत्ते "तानि ततः सऽस्थिते। यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा विमुञ्चति। चतुष्पादः पशवः। पशुष्वेवोपरिष्टात् प्रतितिष्ठति" (ब्रा०३का०।२प्र०।७अ०) इति। अत्र विनियोगसङ्ग्रहः।

"धृष्टिरादायोपवेषमपाङ्गारौ वियोजयेत्।
निष्क्रापसारयेदेकमादेवान्यन्तु शेषयेत्॥
ध्रुवं कपालमाधाय निर्दाङ्गारं तथोपरि।
धर्त्रद्वितीयं धरुणं तृतीयं धर्म सप्तमं॥
चितोऽष्टमं भृगू तेषु सर्व्वेष्वङ्गाररोपणं।
यानि स्वकाले सम्प्राप्ते कपालानि विमुञ्चति।
अनुवाके सप्तमेऽस्मिन्नुक्ता द्वादशमन्त्रकाः"॥ इति।

अथ मीमांसा। चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

"श्रपणं तुषवापस्य कपालस्य प्रयोजकौ।
उत श्रपणमेवाद्यो वापार्थत्वात् तृतीयया॥
पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता।
प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापे प्रसञ्जनं"॥ इति।

कपालेषु श्रपयतीति श्रपणं पुरोडाशस्य श्रुतं। तथा पुरोडाशकपालेन तुषानुपवपतीति कपाले तुषधारणं श्रुतं। ते च तुषाः सकपालाः रक्षसां भागोऽसीति मन्त्रेण कृष्णाजिनस्याधस्तादुपवापनीयाः। तत्र श्रपणं यथा कपालसम्पादनस्य प्रयोजकं एवं तुषावापोऽपि प्रयोजकः। एकहायन्येति तृतीयया यथा गोः क्रयार्थत्वं एवं कपालेनेति तृतीयया कपालस्य तुषोपवापार्थत्वावगमादिति चेत्। मैवं। नात्र कपालमात्रस्य तुषोपवापसाधनत्वं श्रुतं। किन्तर्हि। यत्कपालं पुरोडाशस्य श्रपणायोपस्थापितमासादितञ्च तस्यैव कपालस्य साधनत्वं। एतच्च पुरोडाशकपालेनेति सविशेषणनाम्ना तद्विधानादवगम्यते। तथा सति प्रथमश्रपणेन कपालं प्रयुज्यते। न च प्रयुक्तस्य पुनस्तुषवापनप्रयुक्तिः सम्भवति, तस्माच्छ्रपणेनैव प्रयुक्तं कपालं तुषोपवापे प्रसङ्गात् सिध्यति। ईदृशमेवाङ्गत्वं तृतीयाश्रुत्या बोध्यते।

– अथ व्याकरणं। दृष्टिशब्दः क्तिन् प्रत्ययान्तत्वादाद्युदात्तः। अपाच्छब्दे कृत्स्वरः। तथैव देवयज् शब्दः। निर्दग्धमिति प्रत्युष्टवत्। सजाता इत्यत्र समानं जातं जन्म येषां ते सजाताः। वा जाते (पा०६।२।१७१) जातशब्द उत्तरपदे बहुव्रीहौ समासान्तोदात्तो भवति। भृग्वङ्गिरः शब्दौ वृषादी। उपचिन्वन्तीत्यत्र यानीत्यनेन यच्छब्देन योगान्निघाताभावः। विकरणप्रत्ययस्वरस्य सतिशिष्टत्वात् उदात्तयण (पा०६।१।१७४) इति उपरितनस्योकारस्योदात्तः। पूष्ण इत्यत्र अनुदात्तस्य च यत्रोदात्तलोप (पा०६।१।१६१) इति विभक्तिरुदात्ता। इन्द्रवायू

इत्यत्र देवताद्वन्द्वे चेति (पा०६।२।१४१) उभयपदप्रकृतिस्वरे प्राप्ते तदपवादो, नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु (पा०।६।२।१४२) अनुदात्तादौ पृथिव्यादित्यादिव्यतिरिक्त उत्तरपदे देवताद्वन्द्वे स्वरो न भवति । ततः समासस्य (पा०।६।१।२२३) इत्यन्तोदात्तः ।

*इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके* सप्तमोऽनुवाकः ॥ ७ ॥

संवपामि समापो अद्भिरग्मत समोषधयो रसेन सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमद्भ्यः परि प्रजाता स्थ समद्भिः पृच्यध्वं जनयत्यै त्वा संयौम्यग्नये त्वाऽग्नीषोमाभ्यां मखस्य शिरोऽसि घर्मोऽसि विश्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथतां त्वचं गृह्णीष्वान्तरितꣳ रक्षोऽन्तरिता अरातयो देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माऽतिधाऽग्ने हव्यꣳ रक्षस्व सं ब्रह्मणा पृच्यस्वैकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा ॥ १ ॥

सविता द्वाविꣳशतिश्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः ॥

सप्तमे कपालोपधानमुक्तं। ततस्तप्तेषु कपालेषु लब्धावसरत्वादष्टमे पुरोडाशश्रपणमभिधीयते संवपामीत्यस्याम्नातस्य मन्त्रस्य शेषं पूरयित्वा विनियोगः कल्पे दर्शितः "अथोत्तरेण गार्हपत्यमुपविश्य वाचं नियम्य तिरः पवित्रं पात्र्यां कृष्णाजिनात् पिष्टानि संवपति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टꣳ संवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा" इति। अपेक्षितस्थाने प्रयोक्तव्य इत्येवमर्थं दर्शयितुमेव निर्वापपेषणयोर्देवस्य त्वेति मन्त्रो द्विराम्नातः। तत्राम्नातमप्यनेनैवाभिप्रायेण व्याचष्टे "देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह यत्यै। संवपामीत्याह। यथादेवतमेवैनानि संवपति" (ब्रा०।३का०।२प्र०।८अ०) इति। बौधायनः "प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं वान्तर्धायैवं मदन्तीभ्यस्ता उभयोरानीयमानाः प्रतिमन्त्रयते, समापो अद्भिरग्मत समोषधयो रसेन सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमिति" इति। पूर्वं चमसे सङ्गृहीता आपः प्रणीताऽऽपः तप्ता आपो मदन्त्याऽऽपः। आपस्तम्बेन तु प्रणीतामात्रे अयं मन्त्रो विनियुक्तः "स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य, समापो अद्भिरग्मतेति पिष्टेष्वानयति" इति। प्रणीता आपो मदन्तीभिरद्भिः सङ्गच्छता पिष्टरूपा ओषधयो द्विविधोदकरसेन सङ्गच्छतां। किञ्च हे आपो यूयं सर्व्वमस्याभिवृद्धिहेतुत्वात् तद्द्वारा धनवत्यः स्वभावतो माधुर्य्यवत्यश्च। ओष-

धयोऽपि जङ्गमरूपपश्वभिवृद्धिहेतुतया पशुरूपधनयुक्ताः स्वभावसिद्धत्वादनेन माधुर्य्यवत्यश्च ततः पिष्टरूपाभिस्ताभिरोषधीभिः संसृष्टा भवत। मन्त्रस्य पूर्व्वभागे जलौषधिसङ्गमफलमाह "समापो अद्भिरग्मत समोषधयो रसेनेत्याह। आपो वा ओषधीर्जिन्वन्ति। ओषधयोऽपो जिन्वन्ति। अन्या वा एतासामन्यानि जिन्वन्ति। तस्मादेवमाह"(ब्रा०३का०।२प्र०।८अ०) इति। जिन्वन्ति प्रीणयन्ति। यद्यप्यचेतनानामपामोषधीनाञ्च नास्ति प्रीतिः तथापि पुरोडाशरूपेण देवप्रियहेतुत्वात् तदुपचारः। न हि केवलेन जलेन पिष्टेन वा पुरोडाशः सम्भवति किं त्वन्योन्यमेलनरूपेण प्रीणनेन। यस्मात् तासामपामोषधीनाञ्च मध्ये अन्या आपोऽन्या ओषधीः प्रीणयन्ति, अन्याश्चौषधयो अन्या आपः प्रीणयन्ति तस्मान्मन्त्रः समोषधयोरसेनेत्येवं ब्रूते। उत्तरभागे माधुर्यसम्पादनं फलमाह "सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह। आपो वै रेवतीः। पशवो जगतीः। ओषधयो मधुमतीः। आप ओषधीः पशून्। तानेवास्मा एकधा सꣳसृज्य। मधुमतः करोति"(ब्रा०।३का०।२प्र०।८अ०) इति। बौधायनः "अथानु परिप्लावयति, अद्भ्यः परिप्रजाता स्थ समद्भिः पृच्यध्वमिति" इति। आपस्तम्बः "अद्भ्यः परिप्रजाता इति तप्ताभिरनुपरिप्लाव्य" इति। परिप्लावनं पिष्टस्य सर्व्वत आर्द्रीकरणं। हे पिष्टरूपा ओषधयो यूयं पूर्व्वमद्भ्य उत्पन्ना स्थ ततोऽद्याप्यद्भिः सम्पृक्ता भवत। मन्त्रेण परिप्लावनं विधत्ते "अद्भ्यः परिप्रजाता स्थ समद्भिः पृच्यध्वमिति पर्य्या-

स्नावयति। यथा सुवृष्ट इमामनुविसृत्य। आप ओषधीर्महयन्ति। तादृगेव तत्" (ब्रा०।३का०।२प्र०।८अ०) इति। यथा पर्जन्ये सुवृष्टे सत्यापो भूमिमनुप्रविश्य ओषधीर्वर्द्धयन्ति तथाविधमिह परिस्नावनं जलेन पिष्टे सर्व्वतः स्नाविते सति पुरोडाशनिष्पत्तिः। कल्पः "संयौति, जनयत्यै त्वा संयौमि" इति। हे परिस्नावित पिष्ट त्वां हस्ताङ्गुलिमर्दनेन सम्यक् मिश्रीकरोमि। एतच्च यजमानस्य शुक्रशोणितमिश्रणेन प्रजोत्पत्तये सम्पद्यते। एतदेव विशदयति "जनयत्यै त्वा संयौमीत्याह। प्रजा एवैतेन दाधार" (ब्रा०।३का०।२प्र०।८अ०) इति। कल्पः "संयुत्य व्यूह्याभिमृशति, अग्नये त्वाग्नीषोमाभ्या ममुष्मा अमुष्मा इति यथादेवतं" इति। त्वां अहं स्पृशामीति शेषः। मन्त्रद्वयस्य प्रयोजनमाह "अग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्यै" (ब्रा०।३का०।२प्र०।८अ०) इति। कल्पः "पिण्डं करोति, मखस्य शिरोसि" इति। विशदीकृत्य व्याचष्टे "मखस्य शिरोसीत्याह। यज्ञो वै मखः। तस्यैतच्छिरः। यत् पुरोडाशः। तस्मादेवमाह" (ब्रा०।३का०।२प्र०।८अ०) इति। कल्पः "घर्म्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टाकपालेष्वधिश्रयत्येवमुत्तरेषु" इति। हे पुरोडाश त्वं तप्तकपालावस्थानेन दीप्तो देवतायोग्यत्वेन कृत्स्नायुः प्रदस्यामि। विश्वमायुर्यस्येति बहुव्रीहेरायुःप्रदत्वमेवाचार्थं इत्याह "घर्म्मोऽसि विश्वायुरित्याह। विश्वमेवायुर्यजमाने दधाति" (ब्रा०।३का०।२प्र०।८अ०) इति। कल्पः "उरु प्रथस्वोरु ते यज्ञ-

पतिः प्रथतामिति पुरोडाशं प्रथयन् सर्व्वाणि कपालान्यभिप्रथयत्यतुङ्गमनपूपाकृतिं कूर्म्मस्येव प्रतिकृतिमश्वशफमात्रं करोति" इति। हे पुरोडाश त्वं बहु यथा भवति तथा विस्तीर्णो भव। त्वदीयो यजमानोऽपि प्रजादिभिः प्रथितोऽस्तु। यज्ञपतेर्विस्तारं दर्शयति "उरुप्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह। यजमानमेव प्रजया पशुभिः प्रथयति" (ब्रा० ३ का०।२ प्र०।८ अ०) इति। कल्पः "त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोत्यनतिचारयन्" इति। हे पुरोडाश त्वमद्भिः श्लक्ष्णीभूत्वा त्वचं स्वीकुरु। निम्नोन्नतभावपरिहारेण त्वक्सादृश्ये सति पुरोडाशः सदेहो भवतीत्याह "त्वचं गृह्णीष्वेत्याह। सर्व्वमेवैनꣳसतनुं करोति" (ब्रा०।३का०।२प्र०।८अ०) इति। श्लक्ष्णीकरणं विधत्ते "अन्याप आनीय परिमार्ष्टि। माꣳस एव तत्त्वचं दधाति। तस्मात् त्वचा माꣳसं छन्नं" (ब्रा०।३का०।२प्र०।८अ०) इति। तत् तेन मार्जनेन पिष्टरूपमांस एव श्लक्ष्णत्वरूपां त्वचं स्थापयति ततो लोकेऽपि तथा दृश्यते। कल्पः "अन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्व्वाणि हवीꣳषि त्रिः पर्य्यग्नि कृत्वा" इति। ज्वलद्भिर्दर्भैर्दीप्तैः पुरोडाशस्य परितो रक्षसां शोधनं पर्य्यग्निकरणं अनेन पर्य्यग्निकरणेन राक्षसजातिः व्यवहिता शत्रवो व्यवहिताः। तदेतद्विधत्ते "घर्म्मो वा एषो शान्तः। अर्धमासेऽर्धमासे प्रवृज्यते। यत्पुरोडाशः। स ईश्वरो यजमानꣳ शुचाऽप्रदहः। पर्य्यग्निकरोति। पशुमेवैनमकः। शान्त्या अप्रदाहाय" (ब्रा०। ३का०।२प्र०।८अ०) इति। पुरोडाशे योऽसि स एव दीप्यमा-

नोऽग्निर्भूत्वा न कदाचिदपि शाम्यति प्रतिपच्चं तप्तकपालैः स-न्तप्यमानत्वात्। स च तप्तेन यजमानं प्रदग्धुं समर्थः। ततश्च पशूपचारेण पर्यग्निकरणेन पुरोडाशे पशूकृते सति प्रदीप्ता-ग्नित्वरूपपरित्यागेन शान्तो भूत्वा यजमानं न प्रदहति। आवृ-त्तिं विधत्ते "त्रिः पर्यग्निकरोति। आवृद्धि यज्ञः। अथो रच-सामपहत्यै" (ब्रा०।३का०।२प्र०।८अ०) इति। मन्त्रं व्याचष्टे "अन्तरितꣳ रक्षोऽन्तरिता अरातय इत्याह। रक्षसामन्त-र्हित्यै" (ब्रा०।३का०।२प्र०।८अ०) इति। बोधायनः "पुरो-डाशꣳ श्रपयति, देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके। अ-ग्निस्ते तनुवं मा ऽति धाक्" इति। आपस्तम्बो मन्त्रभेदमाह "देवस्त्वा सविता श्रपयत्वित्युल्मुकैः प्रतितपति, अग्निस्ते तनुवं माति धागिति दर्भैरभिज्वलयति" इति। हे पुरोडाश अति-प्रवृद्धे नाकनाम्न्यग्नौ त्वामधिश्रित्य सविता देवः पक्वं करोतु। अयमग्निस्तव शरीरस्य भस्मीभावरूपमतिदाहं मा करोतु। स-वितृपदस्य नाकपदस्य मातिधागित्यस्य चाभिप्रायमाह "पुरो-डाशं वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳसन्। दिवि नाको नामा-ग्नी रक्षोहा। स एवास्माद्रक्षाꣳस्यपाहन्। देवस्त्वा सविता श्रप-यत्वित्याह। सवितृप्रसूत एवैनꣳ श्रपयति। वर्षिष्ठे अधिनाक इत्याह रक्षसामपहत्यै। अग्निस्ते तनुवं माऽति धागित्याहान-तिदाहाय" (ब्रा०।३का०।२प्र०।८अ०) इति। बोधायनः "गार्हपत्यमभिमन्त्रयते, अग्ने हव्यꣳ रक्षस्व" इति। आपस्तम्बस्तु पूर्वंमन्त्रस्योत्तरं शेषं मन्यते। पूर्ववद्ब्राह्मणं "अग्ने हव्यꣳ रक्षस्वेत्याह

गुप्त्यै” (ब्रा०।३का०।२प्र०।८अ०) इति। अग्नीधं प्रति प्रैष-मन्त्रमुत्पाद्य व्याचष्टे “अविदहन्तःश्रपयतेति वाचं विसृजते। यज्ञमेव हवीᳬष्यभिव्याहृत्य प्रतनुते। पुरोरुचमविदाहाय श्रुत्यै करोति” (ब्रा०।३का०।२प्र०।८अ०) इति। संवपनकाले यो वाङ्नियमस्तमिदानीं परित्यजेत्। विशेषेण दाहो मषीभावो भस्मीभावस्तं परित्यज्य सम्यक्पाकः श्रपणं। अत एवान्यत्राम्नातं “यो विदग्धः स नैर्ऋतो योऽशृतस्स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतङ्कृत्यः सदेवत्वाय” इति। अविदहन्त इति बहुवचनं पूजार्थं। अस्मिन् काले वाग्विमोके सति यज्ञमेवाभिलक्ष्य तत्रापि प्रधानभूतानि हवींष्यभिलक्ष्य वाचमुच्चार्य्य यज्ञं विस्तारितवान् भवति। किञ्च विदाहदोषनिवृत्तये सम्यक् पाकगुणसिद्धये चैतत्प्रैषमुच्चारयन् हविःस्वीकारात् पुरैव देवेभ्यो रुचिं कृतवान् भवति। पुरोडाशाच्छादनं विधत्ते “मस्तिष्को वै पुरोडाशः। तं यन्नाभिवासयेत्। आविर्मस्तिष्कः स्यात्। अभिवासयति। तस्माद्गुहा मस्तिष्कः” (ब्रा०।३का०।२प्र०।८अ०) इति। मस्तिष्कः शिरस्यवस्थितो मेदसः खण्डो गुहागूढः, आच्छादित इत्यर्थः। छादनयोग्यं द्रव्यं विधत्ते “भस्मनाऽभिवासयति। तस्मान्माᳬसेनास्थि छन्नं” (ब्रा०।३का०।२प्र०।८अ०) इति। यस्मान्मेदस्थानीयः पुरोडाशो मांसस्थानीयेन भस्मना छादितः तस्माल्लोकेऽप्यस्थिसंश्लिष्टं मेदो मांसेन छन्नं भवति। पुरोडाशस्योपरि भस्मनोद्धूनने साधनं विधत्ते “वेदेनाभिवासयति। तस्मात् केशैः शिरश्छन्नं” (ब्रा०।३का०२प्र०।

८अ०) इति। दर्भमुष्टिनिर्मितो वेदीसम्मार्जनहेतुर्व्वेदः। अस्ति हि दर्भाणां केशैः साम्यं। एतद्वेदनं प्रशंसति "अखलति भावुको भवति। य एवं वेद" (ब्रा०।३का०।२प्र०।८अ०) इति। केशरहितशिरो युक्तः खलतिः तद्भवनशीलो न भवति। कल्पः "सं ब्रह्मणा पृच्यस्व, इति वेदेन पुरोडाशे माङ्गारं भस्माध्यूहति" इति। भो पुरोडाश मन्त्रेण सम्पृक्तो भव। समन्त्रकत्वप्रकाशकं मन्त्रमन्वयव्यतिरेकाभ्यां व्याचष्टे "पशोर्वै प्रतिमा पुरोडाशः। स नायजुष्कमभिवास्यः। वृथैव स्यात्। ईश्वरा यजमानस्य पशवः प्रमेतोः। सं ब्रह्मणा पृच्यस्वेत्याह। प्राणा वै ब्रह्म। प्राणाः पशवः। प्राणैरेव पशून् सम्पृणक्ति। न प्रमायुका भवन्ति"(ब्रा०।३का०।२प्र०।८अ०) इति।पर्य्यग्निकरणेन पुरोडाशस्य पशूकृतत्वात् पशोस्च मन्त्रसंस्कार्य्यत्वाद्यजुषा विना ऽभिवासनमर्थकं स्यात्। न केवलं वैयर्थ्यं किन्तु यजमानस्य पशवश्च मर्तुं समर्था भवन्ति। सोऽयं व्यतिरेकः। उक्तदोषपरिहाराय मन्त्रेण सम्पृच्यस्वेत्येवमयं मन्त्रो ब्रूते। तत्र सम्पर्कप्रतियोगिमन्त्रः पशून् मरणात् पालयतीति प्राणस्वरूपः। पशवश्च प्राणाधारत्वात् प्राणस्वरूपाः, अतो योग्यत्वात् तत्सम्पर्के सति पशवो मरणशीला न भवन्ति सोऽयमन्वयमन्त्रेण यथा सम्पर्कस्तथा भस्मनापि सम्पर्को युक्त एवेत्याह "यजमानो वै पुरोडाशः। प्रजाः पशवः पुरीषं। यदेवमभिवासयति। यजमानमेव प्रजया पशुभिः समर्धयति" (ब्रा०।३का०।२प्र०।८अ०) इति। पुरीषं भस्म। कल्पः "तत्रैतत् पात्रीमङ्गालनं गार्हपत्यादङ्गारेणाभि-

तच्च हुत्वान्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयति, एकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा" इति। तेभ्य इदं पात्रप्रक्षालनोदकं हुतमस्तु। एकतादीनामुत्पत्तिप्रकारमाह "देवा वै हविर्भृत्वा ब्रुवन्। कस्मिन्निदं मृक्ष्यामह इति। सोऽग्निरब्रवीत्। मयि तनूः सन्निदध्वं। अहं वस्तं जनयिष्यामि। यस्मिन् मृक्ष्यध्व इति। ते देवा अग्नौ तनूः सन्यदधत। तस्मादाहुः। अग्निः सर्वा देवता इति। सोऽङ्गारेणापः। अभ्यपातयत्। तत एकतोऽजायत। स द्वितीयमभ्यपातयत्। ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्योऽजायन्त। तदाप्त्यानामाप्त्यत्वं। यदात्मभ्योऽजायन्त। तदात्म्यानामात्म्यत्वं" (ब्रा०३का०।२प्र०।८अ०) इति। देवाः पूर्वं व्रीह्यवघातादिना हविः सम्पाद्य वीजवधादिपापलेपः कस्मिन् पुरुषे मार्जनीय इति विचार्याग्निवचनेन स्ववीर्यमग्नौ स्थापितवन्तः। ततः सोऽग्निः सर्वदेववीर्यधारिणाङ्गारेणाब्देवताम् अभिलक्ष्य तद्वीर्यमपातयत्। तस्मादुत्पन्नानामेकतादिनामकानां देवविशेषाणां अपो मातरो देवा आत्मनः पितर इत्याप्त्यनामकत्वमात्म्यनामकत्वञ्च युक्तं। स च लेपः परम्परया जीवघातिनि पुरुषे पर्यवसित इत्याह "ते देवा आप्त्येष्वमृजत। आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते। सूर्याभिनिम्रुक्तः कुनखिनि। कुनखी श्यावदति। श्यावदन्नग्रदिधिषौ। अग्रदिधिषुः परिवित्ते। परिवित्तो वीरहणि। वीरहा ब्रह्महणि। तद्ब्रह्महणं नात्यच्यवत" (ब्रा०।३का०।

२प्र०।८अ०) इति। आप्या एकतादयः। उदयास्तमयकालयोः सुप्तौ पुरुषौ अभ्युदिताभिनिम्रुक्तौ। तथा चोक्तं।

"सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।
अंशुमानभिनिम्रुक्ताभ्युदितौ तौ यथाक्रमं" ॥ इति ॥

नखवक्रत्वन्दन्तमालिन्यञ्चात्र रोगविशेषकृतं। ज्येष्ठायामनूढायां कनिष्ठामूढ्वा ऽवस्थितोऽग्रदिधिषुः। ऊढवति कनिष्ठे सति विवाहरहितो ज्येष्ठः परिवित्तः। वीरः क्षत्रियस्तद्धन्ता वीरहा ब्राह्मणस्य हन्ता ब्रह्महा। एतेष्वाप्यानामेकतादीनां देवानां पापलेपमार्जनायैव सृष्टत्वात्। तेषु तन्मार्जनमुचितं। सूर्य्याभ्युदितादीनां ब्रह्महान्तानां पापप्रवणत्वान्निम्नगाजलस्येव लेपस्यापि तेषु प्रवाहो युक्तः। ब्रह्महत्यायाः पापाधिक्यतारतम्यविश्रान्तिभूमित्वाल्लेपो ब्रह्महणं नातिक्रामति। प्रक्षालनोदकस्य रेखासु निनयनं विधत्ते "अन्तर्वेदि निनयत्यवरुध्यै" (ब्रा०।३का०। २प्र०।८अ०) इति। एतेन निनयनेन कर्म्मफलप्रतिबन्धकपापलेपस्यापनीतत्वात् फलसम्पादनायेदं निनयनं सम्पद्यते। तस्य जलस्य वह्नितापं विधत्ते "उल्मुकेनाभिगृह्णाति शृतत्वाय। शृतका मा इव हि देवाः" (ब्रा०।३का०।२प्र०।८अ०) इति। शृतं पक्वं। "यः शृतस्समदेवः" इति पूर्व्वमुदाहृतं। अत्र विनियोगसङ्ग्रहः।

"संवपामि हविर्व्वापः समा तत्र जलं क्षिपेत्।
अद्भ्यः सम्प्लाव्य तप्ताभिर्जलं संयोत्यशेषतः ॥
अग्न्याग्नी निर्द्दिशेद्भागो मखपिण्डं करोति हि।

घर्म्मः कपाले निक्षिप्य प्रथयेदुरुमन्त्रतः ॥
त्वचं समत्त्रीकरोत्यग्निरन्तःपर्य्यग्नये हृतिः।
अपयत्युल्मुकैर्देवो ह्यग्निस्ते ज्वाल्यते कुशैः॥
सम्नु वेदेन साङ्गारभस्मनाच्छादयेद्धविः।
एकान्तर्व्वेदिलेखासु चालनं निनयेत् त्रिभिः॥
अनुवाकेऽष्टमे सप्तदश मन्त्राः प्रकीर्त्तिताः"। इति॥

अथ मीमांसा। अत्राविदहन्त अपयतेति कश्चिन्मन्त्र उक्तः। अतकामा इव हि देवा इत्यर्थवादश्च। एतद्विषये ब्राह्मणान्तरवाक्यमपि यो विदग्ध इत्यादिकमुदाहृतं। तत्र किञ्चित् तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

"परुषि च्छिन्नमित्युक्त्वा बर्हिषस्तु समूलतां।
घृतं देवं मस्तु पित्र्यमित्युक्त्वा नवनीतकं॥
यो विदग्धः स इत्युक्त्वा पुरोडाशस्य पक्वतां।
स्तौति पूर्व्वोत्तरौ पक्षौ योजनीयौ निवीतवत्"॥ इति।

चातुर्मास्येषु महापितृयज्ञे श्रूयते "यत् परुषि दिनं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत् समूलं तत् पितृणां, समूलं बर्हिर्भवति व्यावृत्त्यै" इति। परुः पर्व्वदिनं खण्डितं। ज्योतिष्टोमे दीक्षाभ्यङ्गे श्रूयते "घृतं देवानां मस्तु पितृणां निष्पक्कं मनुष्याणां तद्वा एतत् सर्व्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्व्वा एव देवताः प्रीणाति"(स०६का०।१प्र०।१अ०) इति। मस्तु दधिभवं मण्डं। निष्पक्कं शिरसि प्रक्षेप्तुं ईषद्विलीनं नवनीतं तक्रं वा दर्शपूर्णमासयोः पुरोडाशश्रपणे श्रूयते "यो विदग्धः स नैर्ऋतो

योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतं कृत्यः सदेवत्वाय” इति। विदग्धोऽधिकपक्वः, अशृतोऽपक्वः। तत्र बर्हिषि समूलच्छेदनस्याभ्यङ्गे नवनीतस्य पुरोडाशे यथोचितपाकस्य च विधेयतया सर्व्वमवशिष्टं स्तावकं। अत्र पूर्व्वोत्तरपक्षौ न प्रपञ्चितौ। अस्यैव पादस्य प्रथमाधिकरणे निवीतवाक्ये प्रोक्तयोरेवात्रापि योजनीयत्वात्। तस्यैवाधिकरणस्योदाहरणबाहुल्यमनेनाधिकरणेन प्रपञ्च्यते।

अथ व्याकरणं। सम्वपामीत्यादौ स्वरा गताः। आप इत्यत्र फिट्स्वरः। अद्भिरित्यत्र ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (पा० ६।१।१७१) इति। ऊडादेशादिदं शब्दात् पद्दन्नित्याद्यादेशेभ्यः अप्शब्दात् पुंशब्दात् रैशब्दाद्दिवशब्दाच्चोत्तरमसर्व्वनामस्थानमुदात्तं भवति। यद्यपि सावेकाचस्तृतीयादिः (पा० ६।१।१६८) इति सूत्रेणैतत् सिद्धं तथापि द्वितीयाबहुवचनार्थमस्य सूत्रस्यावश्यं वक्तव्यत्वादनेन विशेषसूत्रेणोदात्तो विधेयः। रेवतीरित्यत्र रैशब्दाच्चेन्मतुप उदात्तत्वं वक्तव्यं (पा० ६।१।१७६।वा०) इति मतुबाद्युदात्तः। प्रजाता इत्यत्र अन्तर्भावितण्यर्थात् कर्म्मणि निष्ठायां गतिरनन्तरः (पा० ६।२।४९) इति। पूर्व्वपदप्रकृतिस्वरत्वं। जनयत्या इत्यत्र क्विम् प्रत्ययान्तत्वेन क्निन्त्यादिर्नित्यं (पा० ६।१।१९७) इत्याद्युदात्तः। उरुशब्दस्य नित्यनपुंसकत्वाभावात् फिट्स्वरः। यज्ञपतिरित्यत्र पत्या वैश्वर्य्ये (पा० ६।२।१८) इति पूर्व्वपदप्रकृतिस्वरत्वं। अन्तरितमित्यत्रान्तःशब्दस्य गतित्वात् गतिरनन्तरः (पा० ६।२।४९) इति पूर्व्वपदप्रकृति-

स्वरत्वं। वर्षिष्ठ इत्यत्र इष्ठन् प्रत्ययस्य नित्वादाद्युदात्तः। एवं सर्व्वमुन्नेयं॥ ० ॥

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके ऽष्टमोऽनुवाकः।

आददे इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजाः पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमपहतोऽररुः पृथिव्यै व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगपहतोऽररुः पृथिव्यै देवयजन्यै व्रजं॥ १॥

गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगपहतोऽररुः पृथिव्या अदेवयजनो व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देवसवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा॥ २॥

मौगररुस्ते दिवं माऽस्कान् वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा-

ऽऽदित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा देवस्य सवितुः
सवे कर्म्म कृण्वन्ति वेधस ऋतमस्यृतसदनमस्यृतश्री-
रसि धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा
क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानु-
र्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य य-
जन्ते ॥ ३ ॥

देवयजन्य वृजं तमतो मा विरप्शिन्नेकादश च ॥९॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपा-
ठके नवमोऽनुवाकः ॥

अष्टमे पुरोडाशश्रपणमुक्तं। अथ पक्कस्य हविषो वेद्यामा-
सादनीयत्वान्नवमे वेदिरुच्यते। आदद इत्याम्नातस्य मन्त्रस्य शेषं
पूरयित्वा विनियोगः कल्पे दर्शितः "अथ जघनेन वेद्यास्तिष्ठन्
स्फ्यमादत्ते, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो ह-
स्ताभ्यामाददे" इति। यथोक्तमादानं विधत्ते "देवस्य त्वा सवितुः
प्रसव इति स्फ्यमादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह।
अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह
यत्यै" (ब्रा०।३का०।२प्र०।९अ०) इति। बौधायनः "आदा-
याभिमन्त्रयते, इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा,
इत्यथैनं बर्हिषा सं स्पृशति, वायुरसि तिग्मतेजा इति" इति।

*संस्पृशति सम्यक् तनूकरोति।* एकमन्त्रतामाहापस्तम्बः "इन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्रयते" इति। हे स्फ्य त्वमिन्द्रस्य दक्षिणतो बाहुरिव समर्थोऽसि। कीदृशो बाहुः। सहस्रसङ्ख्याकानां शत्रूणां भृष्टिः पाको मारणं यस्मात् सहस्रभृष्टिः। पुनः कीदृशः। शतसङ्ख्याकान्यायुधानि तेजोयुक्तानि यस्मात् शततेजाः। न केवलमिन्द्रस्य बाहुसदृशः किन्तु वायुसदृशोऽप्यसि। यथा वायुस्तीक्ष्णामग्निज्वालामुत्पादयंस्तिग्मतेजाः तथा स्फ्योऽपि वक्ष्यमाणस्तम्बच्छेदरूपं तीव्रङ्कर्म्म कुर्व्वंस्तिग्मतेजा इत्युच्यते। मन्त्रस्य प्रथमभाग इन्द्रशब्दस्य विवक्षामाह "आदद इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति" (ब्रा०।३का०।२प्र०।६अ०) इति। अत्रादद इतिपदं पूर्व्वमन्त्रस्वरूपं तच्च स्पष्टार्थं। इन्द्रस्येति मन्त्रादिः। द्वितीयभागे मन्त्रगतशब्दस्वरूपमेव बाहुसदृशस्य स्फ्यस्य महिमानं ख्यापयतीत्याह "सहस्रभृष्टिः शततेजा इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे" (ब्रा०।३का०।२प्र०।६अ०) इति। तृतीयभागे तेजोजनकतया तेजोरूपेण वायुना बाहुतुल्यस्वरूप उपमिते सति यजमाने तेजो भवतीत्याह "वायुरसि तिग्मतेजा इत्याह। तेजो वै वायुः। तेज एवास्मिन् दधाति" (ब्रा०।३का०।२प्र०।६अ०) इति। कल्पः "अथान्तर्व्वेद्युदीचीनाग्रं दर्भं निधाय तस्मिंस्फ्येन प्रहरति, पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषं" इति। हे देवयागाश्रयभूते पृथिवि त्वदीयाया ओषध्या मूलमविनाशयामि। अत्र देवयजनीति विशेषणेन शान्तलोहिताभ्यामापादितम-

प्रदुष्टिलं निवारयतीत्याह "विमार्दे नामाऽसुर आसीत्। सो ऽबिभेत्। यज्ञेन मा देवा अभिभविष्यन्तीति। स पृथिवीमभ्यव-मीत्। सा ऽमेध्याभवत्। अथो यदिन्द्रो वृत्रमहन्। तस्य लोहितं पृथिवीमनुव्यधावत्। सा ऽमेध्याभवत्। पृथिवि देवयजनीत्याह। मेध्यामेवैनां देवयजनीं करोति" (ब्रा०।३का०।२प्र०।९अ०) इति। विषमत्तीति विषात्। उत्तरभागस्य प्रयोजनमाह "ओषध्यास्ते मूलं मा हिंसिषमित्याह। ओषधीनामहिंसायै" (ब्रा०।३का०।२प्र०।९अ०) इति। कल्पः "अपहतोऽररुः पृथिव्या इति स्फ्येन मदुणान् पांसूनपादाय" इति। अररुर्नाम को-ऽसुरः सोऽत्र रजोऽपनयनेन पृथिव्याः सकाशादपहतः। कल्पः "व्रजं गच्छ गोस्थानमिति हरति" इति। अस्तु श्रौषडित्यनेन म-न्त्रेणाग्नीध्रः प्रत्याश्रावणं वक्ति। सेयं वागत्र गोशब्देन विवक्षिता। तस्या वाचः स्थानभूत उत्करदेशो व्रजः। हे तृणमिश्रितपांसो तं व्रजं गच्छ। अपहतोऽररुः पृथिव्या इत्येवं पूर्वमन्त्रस्पष्टार्थत्वा-दुपेक्ष्यैतन्मन्त्रं व्याचष्टे "व्रजं गच्छ गोस्थानमित्याह। छन्दांसि वै व्रजो गोस्थानः। छन्दांस्येवास्मै व्रजं गोस्थानं करोति" (ब्रा०।३का०।२प्र०।९अ०) इति। गायत्र्यादीनि छन्दांस्येव गो-शब्दाभिधेयानां वाचामवस्थानयोग्यो व्रजशब्दाभिधेयो देशवि-शेषः। तत्रार्थद्वयसाधारणशब्दोपेतं मन्त्रं पठन्नुत्तरदेशं छन्दो-रूपं सम्पादितवान् भवति। कल्पः "वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते" इति। हे वेदे तवाक्रानाय द्युशब्दोपलक्षितः पर्ज-न्यो वर्षतु। पर्जन्याधारतया तद्रूपत्वोपचारो दिव इत्याह

"वर्षतु ते द्यौरित्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे" (ब्रा० ३का०।२प्र०।९अ०) इति। वर्षतीति वृष्टिः पर्जन्यः। कल्पः "द्दलोत्करे निवपति,बधान देवसवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगिति" इति। हे सवितर्देव अनेन मृत्पांसुरूपेणावस्थितं द्वेष्टारं द्वेष्यञ्च पाशशतेनात्यन्तदूरदेशे बधान तत् पुरुषद्वयमतो बन्धनान्मा मुञ्च अत्र योऽस्मान् यञ्चेति न पुनरुक्तिः। द्वेषं प्रति कर्त्तृत्वेन कर्म्मत्वेन पुरुषभेदादित्याह "बधान देवसवितः परमस्यां परावतीत्याह। द्वौ वाव पुरुषौ। यञ्चैव द्वेष्टि। यश्चैनं द्वेष्टि। तावुभौ बध्नाति। परमस्यां परावति शतेन पाशैः। योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगित्याहानिर्मुक्त्यै" (ब्रा०।३का०।२प्र०। ९अ०) इति। परावति दूरभूमौ अनिर्मुक्तिरनिर्मोचः। व्याख्यातान् मन्त्रत्रयात् पूर्वभावीयो मन्त्रः स्पष्टार्थबुद्ध्योपेक्षितः। तं पुनः सिंहावलोकनन्यायेन अनिर्मुक्तः स्यादिति मत्वा व्याचष्टे "अररुर्वै नामासुर आसीत्। स पृथिव्यामुपम्लुप्तोऽशयत्। तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन्। भ्रातृव्यो वा अररुः। अपहतोऽररुः पृथिव्या इति यदाह। भ्रातृव्यमेव पृथिव्या अपहन्ति" (ब्रा०।३का०।२प्र०।९अ०) इति। उपम्लुप्तस्तिरोहितः। यज्ञविघाताय गूढरूपेण भूमौ शयानत्वात्। अत एवायं भ्रातृव्यः शत्रुः। तस्य देवाः तन्मन्त्रोच्चारणपूर्व्वकेन मृत्पांसूनामपनयनेन अपहन्ति। कल्पः "द्वितीयं प्रहरति, पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंꣳ-

भिषमिति, अपहतोऽररुः पृथिव्यै देवयजन्यै इत्यररुस्ते, व्रजं गच्छ गोस्थानमिति हरति, वेदिं प्रत्यवेक्षते, वर्षतु ते द्यौरिति उत्तोत्करे निवपति, बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगिति" इति। अनयोः द्वितीयतृतीययोः पृथिविदेवयजनीत्ययमाम्नायो नाम्नातः, तथापि प्रथमपर्य्यायादनुषञ्जनीयः। यथा वाक्यस्य परिपूर्त्तये शब्दान्तरमनुषज्यते तथा प्रयोगपरिपूर्त्यर्थं मन्त्रानुषङ्गो न्याय्यः। अररुशयनेनोपहता वेदीभूमिपांसवः कियन्तोऽपि प्रथपर्य्यायेऽपनीताः। तावता वेदिभूम्येकदेशो यागयोग्यः सम्पन्नः। अनेनैवाभिप्रायेण द्वितीयपर्य्यायेऽपहतोऽररुः पृथिव्यै देवयजन्या इति पृथिवी विशेष्यते। तृतीयपर्य्याये त्वदेवयजन इत्यररुविशेषणं। तदेवमुपहतास्तृणपांसवो यज्ञभूमेरुद्धृत्य यस्मिन्नुदग्देशे निरस्यन्ते स देश उत्कर इत्युच्यते। कल्पः "अररुस्ते दिवं मास्कानिति न्युप्तमाग्नीध्रोऽञ्जलिनाभिगृह्णाति" इति। हे पांसुसमूहरूपोत्कर तव सम्बन्धि योऽयमररुः स स्वर्गं मा गच्छतु। द्वितीयतृतीयपर्य्याययोः प्रथमपर्य्यायवद् बोद्धुं शक्यतया तानुपेक्ष्य मन्त्रमेतं व्याचष्टे "ते मन्यन्त। दिवं वा अयमितः पतिष्यतीति। तमररुस्ते दिवं मास्कानिति दिवः पर्य्यबाधन्त। भ्रातृव्यो वा अररुः। अररुस्ते दिवं मास्कानिति यदाह। भ्रातृव्यमेव दिवः परिबाधते" (ब्रा०।३का०।२प्र०।८अ०) इति। ते देवाः केनाप्युपायेन अररुर्बन्धनं छित्वा फलविघाताय स्वर्गं गमिष्यतीति

मन्त्रेण बन्धनं कृतीत्य दिवः सकाशात् यथा परितो बाधितो भवति तथा यत्नं कृतवन्तः। तस्मात् आग्नीध्रोऽध्वर्युणा पांसुराशौ निरुद्धे सति भ्रातृव्यः स्वर्गाद्बाधितो भवति। अस्मात् व्याख्यायानुष्ठानं विधत्ते "स्तम्बयजुर्हरति। पृथिव्या एव भ्रातृव्यमपहन्ति। द्वितीयँ हरति। अन्तरिक्षादेवैनमपहन्ति। तृतीयँ हरति। दिव एवैनमपहन्ति। तूष्णीं चतुर्थँ हरति। अपरिमितादेवैनमपहन्ति" (ब्रा०।२का०२प्रा०।६अ०) इति। *यजुर्मन्त्रको दर्भस्तम्बयजुः तच्च स्तम्बरूपं स्फ्येन भित्वोत्करदेशे* हरेत्। त्रिवारमेवंहरणे लोकत्रये भ्रातृव्यो हतो भवति। अमन्त्रकेण चतुर्थहरणेनापरिमितात् ब्रह्माण्डात् सर्वस्मात् भ्रातृव्यस्यावघातः। कल्पः "अथ पूर्वं परिग्राहं परिगृह्णाति, वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो, रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसेति पश्चात्, आदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसेत्युत्तरतः" इति। आहवनीयगार्हपत्ययोर्मध्ये वेदिं जनयितुं वेदिनाम्नोऽवबोधाय वेदिमानाय स्फ्येन दिक्त्रये रेखात्रयं कर्त्तव्यं। सोऽयं वेदेः परिग्राहः। परिग्रहीताऽध्वर्युः दिक्त्रये क्रमेण भावनया वस्वादिरूपः परिग्रहणसाधनभूतः स्फ्यश्च छन्दस्त्रयरूपः। तमिमं परिग्राहं विधत्ते "असुराणां वा इयमग्र आसीत्। यावदासीनः परापश्यति। तावद्देवानां। ते देवा अब्रुवन्। अस्त्वेव नोऽस्यामपीति। कियन्नो दास्यथेति। यावत् स्वयं परिगृह्णीथेति। वसवस्त्वेति दक्षिणतः पर्यगृह्णन्। रुद्रास्त्वेति पश्चात्। आदित्यास्त्वेत्युत्तरतः। तेऽग्निना प्राञ्चोऽभ्-

यन्। वसुभिर्दक्षिणा। रुद्रैः प्रत्यञ्चः। आदित्यैरुदञ्चः। यस्यैवं विदुषो वेदिं परिगृह्णन्ति। भवत्यात्मना। परास्य भ्रातृव्यो भवति" (ब्रा०।३का०।२प्र०।९अ०) इति। पुरा कदाचिदसुराणां विजये सत्येषा पृथिवी कृत्स्नापि तेषामेव स्वभूता आसीत्, देवानान्तु कोऽपि भूम्यंशो नाभूत्। किन्तु यो देवो यत्र यत्रोपविष्टो, यावद्दूरं पश्यति तत्र तावान्देशस्तस्य देवस्य तदा स्वाधीनोऽभवत्। ततो देवा असुरान् अयाचन्त। युष्मदधीनायामस्यां पृथिव्यां कोऽप्यंशोऽस्माकं नियतोऽपेक्षितः। तत्र कियन्तमस्मभ्यं दास्यथेति। ततोऽसुरैरनुज्ञाता देवा मन्त्रैर्वेदिं स्वकीयत्वेन स्वीकृतवन्तः। तस्याश्च वेदेः प्राच्यामाहवनीयोऽग्निः पालकः, दक्षिणादिषु वस्वादयः, ततश्चतुर्दिक्षु अवस्थितानां देवानामग्न्यादिमुखेन विजय एव। तस्मादेवंविदुषो यस्य यजमानस्य अध्वर्य्यवो यथोक्तमन्त्रेण वेदिं परिगृह्णीयुः स यजमानः स्वेनैव रूपेणाभिप्रख्यातो भवति। तस्य भ्रातृव्यः पराभवति। परिगृह्णन्तीति बहुवचनं पूजार्थं प्रयोगभेदाभिप्रायो वा। बौधायनः "अथ प्राचीं स्फ्येन वेदिमुद्धन्ति," "देवस्य सवितुः सवे कर्म्म कृण्वन्ति वेधस इति" इति। आपस्तम्बस्तु शाखान्तरमन्त्रेण भूमेः उपरिभागावस्थितायास्तृणसहिताया मृद उद्धननमभिधाय ब्रूते "देवस्य सवितुः सव इति खनति" इति। परमेश्वरस्यानुज्ञायां सत्यां वेधसः समाना अध्वर्य्यव इदमुद्धननरूपं खननरूपं हि कर्म्म कुर्व्वन्ति। ईश्वरानुज्ञया जनैः स्वाभीष्टकर्म्म क्रियत इत्येतत् विदुषां प्रसिद्धमित्याह

"देवस्य सवितुः सव इत्याह प्रसूत्यै। कर्म्म कृण्वन्ति वेधस इत्याह। इषितꣳहि कर्म्म क्रियते" (ब्रा०।३का०।२प्र०।अ०९) इति। वेदेर्दिक्द्वये निम्नतां विधत्ते "पृथिव्यै मेध्यञ्चामेध्यञ्च व्युदक्रामतां। प्राचीनमुदीचीनं मेध्यं। प्रतीचीनं दक्षिणामेध्यं। प्राचीमुदीचीं प्रवणां करोति। मेध्यामेवैनां देवयजनीं करोति" (ब्रा०।३का०।२प्र०।९ अ०) इति। व्युदक्रामतां विभागमाप्नुतां अंसाकारेण श्रोण्याकारेण च कोणेषु चतुर्षु श्रोन्नत्यं विधत्ते "प्राञ्चौ वेद्यꣳसावुन्नयति। आहवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी। गार्हपत्यस्य परिगृहीत्यै। अथो मिथुनत्वाय" (ब्रा०। ३का०।२प्र०।९ अ०)इति। अंसयोः श्रोण्योश्च प्रत्येकं युग्मतया मिथुनत्वं। यद्वा पुमानंसो स्त्री श्रोणिरिति मिथुनत्वं। भूमेरूर्ध्वभागस्य त्वक्स्थानीयस्य स्फ्येनापसारणं विधत्ते "उद्धन्ति। यदेवास्या अमेध्यं। तदपहन्ति" (ब्रा०।३का०।२प्र०।९ अ०) इति। तदेवंविधिमनूद्यार्थवादान्तरमाह "उद्धन्ति। तस्मादोषधयः पराभवन्ति" (ब्रा०३का०।२प्र०।९ अ०) इति। तस्मादुद्धननाद्भूमिष्ठास्तृणस्तम्बा बर्हिरास्तरणहविरासादनविरोधिनो विनश्यन्ति। भूमावत्यन्तं निरूढानां तृणमूलानां उद्धननमात्रेण अपगमाभावात्। पृथग्यत्नेन भेदनं विधत्ते "मूलं छिनत्ति। भ्रातृव्यस्यैव मूलं छिनत्ति। मूलं वा अतितिष्ठद्रक्षाꣳस्यनूत्पिबते (ब्रा०।३का०।२प्र०।९ अ०) इति। वैरिणो मूलं निवासाधिकरणं गृहादिकं। यदि तृणमूलं भूमिमतीत्य किञ्चिदवतिष्ठेत तदा तदनु रक्षांस्युद्भवेयुः। तस्मान्मूलं छेदनीयं। छेदनसाधनं

विधत्ते "यत्सूत्वेन छिन्द्यात्। कुनखिनीः प्रजाः स्युः। स्फ्येन छिनत्ति। वज्रो वै स्फ्यः। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति (ब्रा०।३का०।२प्र०।८अ०) इति। स्फ्यस्य वज्रत्वमन्यत्रापि स्पष्टमान्नातं "इन्द्रो वृत्राय वज्रं प्राहरत्। स त्रेधा व्यभवत्। स्फ्यस्तृतीयं। रथस्तृतीयं। यूपस्तृतीयं" इति। प्रादेशपरिमितं वेदिखननं विधत्ते "पितृदेवत्या निखाता। इयतीं खनति। प्रजापतिना यज्ञमुखेन सम्मितां" (ब्रा०।३का०।२प्र०।८अ०) इति। यदेयं वेदेः प्रादेशपरिमाणमतीत्य खाता स्यात् तदा पितृदैवत्यत्वात् इयं दैविकी न भवेत्। इयतीमिति प्रादेशपरिमाणस्याभिप्रायः। प्रजापतिः स्रष्टतया तद्रूपं यज्ञपुरुषस्य मुखं, तच्च प्रादेशपरिमितं, अतस्तत्सम्मितां वेदिं खनेत्। पश्चान्तरं विधत्ते "वेदिर्देवेभ्यो निलायत। तां चतुरङ्गुले ऽन्वविन्दन्। तस्माच्चतुरङ्गुलं खेया" (ब्रा०।३का०।२प्र०।८अ०) इति। केनापि निमित्तेन देवेभ्यो विमुखा वेदीदेवता भूमौ निलीना सती चतुरङ्गुलमात्रं खननेन लब्धा तस्माच्चतुरङ्गुलं खनेत्। तं विधिमनूद्यार्थवादान्तरमाह "चतुरङ्गुलं खनति। चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति (ब्रा०।३का०।२प्र०।८अ०) इति। ओषधिमूले भूमेरन्तश्चतुरङ्गुलं प्रसृते सति ता ओषधयो न वायुनोन्मूल्यन्ते। पक्षान्तरं विधत्ते "आ प्रतिष्ठायै खनति। यजमानमेव प्रतिष्ठां गमयति" (ब्रा०।३का०।२प्र०।८अ०) इति। यदि चतुरङ्गुलप्रमाणेन प्रादेशप्रमाणेन वा सिकतादियुक्तप्रस्तररहिता भूमिर्न लभ्येत तदा तल्लाभपर्यन्तं

खनेत्। दक्षिणस्यां दिशि औन्नत्यं विधत्ते "दक्षिणतो वर्षीयसीं करोति। देवयजनस्यैव रूपमकः" (ब्रा०।३का०।२प्र०।९अ०) इति। प्राचीमुदीचीं प्रवणां करोतीत्यनेनैव सिद्धेऽप्यौन्नत्ये पुनरपि कुद्दालकरेण मृत्तिकाप्रक्षेपो विधीयते अतः कृतवान् भवति। लोष्टभावरहितां सिकतासदृशीं मृत्तिकां वेद्यां सर्व्वत्र विकिरेदित्याह "पुरीषवतीं करोति। प्रजा वै पशवः पुरीषं। प्रजयैवेनं पशुभिः पुरीषवन्तं करोति" (ब्रा०।३का०।२प्र०।९अ०) इति। कल्पः "उत्तरं परिग्राहं परिगृह्णाति, ऋतमसीति दक्षिणतः, ऋतसदनमसीति पश्चात्, ऋतश्रीरसीत्युत्तरतः" इति। ऋतं सत्यं। तच्च सत्यत्वं त्रिष्वस्ति वेद्यां हविषि फले च। असुरदानात् पूर्व्वमासीनो देवो यावन्तं भूदेशं पश्यति तस्य देवयजनत्वं नियतं, ततोऽनृतत्वं वेदेरदत्तत्वात् तन्न परावर्त्तत इत्यृतत्वं। ततो हे वेदे त्वं ऋतमसि। हविषः फलहेतुत्वं न कदाचिद्व्यभिचरति इत्यस्ति सत्यत्वं। तच्च सत्यं हविरस्यां वेद्यां सीदति। ततो हे वेदे त्वं ऋतसदनमसि, फलस्यावश्यम्भावित्वादस्त्यृतत्वं। तच्च फलं हविर्द्वारेण वेद्याश्रयते। ततो हे वेदे त्वं ऋतश्रीरसि। विधत्ते "उत्तरं परिग्राहं परिगृह्णाति। एतावती वै पृथिवी। यावती वेदिः। तस्या एतावत एव भ्रातृव्यं निर्भज्य। आत्मन उत्तरं परिग्राहं परिगृह्णाति" (ब्रा०।३का०।२प्र०।९अ०) इति। वेदिव्यतिरिक्ताया भूमेरासुरत्वेन कर्म्मण्यनुपयोगादुपयुक्ता भूमिर्व्वेदिरेव। तथा सति पूर्व्वपरिग्राहेण महाभूमिसम्बन्धिनो वेदिरूपादेव तावतः

प्रदेशादेरिणं निस्सार्य सार्धमुत्तरपरिग्राहं कुर्यात्। मन्त्रार्थो मन्त्रपदेष्वेवाभिव्यक्त इत्याह "ऋतमस्यृतसदनमस्यृतश्रीरसी-त्याह। यथा यजुरेवैतत्" (ब्रा०।३का०।२प्र०९अ०) इति। बोधायनः "अथ प्रतीचीं वेदिꣳ स्फ्येन योयुप्यते, धा असि स्वधा असुर्वीचासि वस्वीचासि पुरा क्रूरस्य विसृपो विरप्शि-न्नुदादाय पृथिवीं जीरदानुर्यामैरयन् चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्त" इति। आपस्तम्बो मन्त्रभेदमाह "धा असि स्वधा असीति प्रतीचीं वेदिꣳ स्फ्येन योयुप्यते, उदादाय पृथिवीं जीरदानुरिति वेदिमनवीक्षते" इति। यो-युप्यते समीकरोति। विविधं रेरणं शब्दमुच्चैस्त्वांशुत्वादिभेदेन मन्त्रोच्चारणं विरप्शि तद्वन्तः ऋत्विजो विरप्शाः लोमशश-ब्दवद्द्रष्टव्यं। ते विरप्शाः ऋत्विजो यस्यां वेद्यां सा वेदिर्वि-रप्शिनी तत्सम्बोधनं छान्दसं विरप्शिन्निति। हे वेदे क्रूर-स्योत्करे पार्श्वे बद्धस्य अररोर्विसर्पणान्निर्गमनात् पुरा त्वं देवि-कहविषां धारयित्र्यसि। स्वधाशब्देन एतत् ते तत ये च त्वाम-न्वित्यादिनोक्तं पैतृकपिण्डादिकमुपलक्ष्यते। तेनापि युक्तासि। अत एव कृत्स्नधारणाद् विस्तीर्णा चासि। पुरोडाशादिरूप-धनवत्वाद्वस्वी चासि द्रव्यवत्यसि। जराजीवनशीला दानवो हविषां दातारो यावज्जीवादिशास्त्रप्रेरिता यजमाना यस्यां पृथिव्यां सा पृथिवी जीरदानुः। द्वितीयार्थे प्रथमा। यद्वा जराश्च ते दानवश्च। छान्दसो वचनव्यत्ययः तादृशाः पूर्व्वे यजमाना वेदिरूपत्वेनानीय यां पृथिवीं कृत्स्नभूमेराहुर्यादः

सकाशात् ऊर्ध्वमादाय चन्द्रमस्यमृतकिरणैः सार्धं स्थापितवन्तः, इदानीन्तनास्तु धीमन्तस्तामिमां वेदिं मनसा विचिन्त्य तस्यां यजन्ते। समीकरणं विधत्ते "क्रूरमिव वा एतत् करोति। यद्वेदिं करोति। धा असि स्वधा असीति योयुप्यते शान्त्यै" (ब्रा०।३का०।२प्र०।६अ०) इति। विशेषणद्वयेन कृत्स्नभूमिरूपत्वमशेषधनोपेतत्वञ्च सम्पाद्यत इत्याह "उर्वी चासि वस्वी चासीत्याह। उर्वीमेवैनां वस्वीं करोति" (ब्रा०३का०।२प्र०।६अ०) इति। विरूपः पुरेत्युक्त्या क्रूरप्रयुक्तमशुद्धिलं निवार्यत इत्याह "पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय" (ब्रा०।३का०।२प्र०६अ०) इति। चन्द्रमस्यैरयन्नित्यनुसन्धानस्य प्रयोजनमाह "उदादाय पृथिवीं जीरदानुर्यामैरयन् चन्द्रमसि स्वधाभिरित्याह। यदेवास्या अमेध्यं। तदपहत्य। मेध्यां देवयजनीं कृत्वा। यददश्चन्द्रमसि मेध्यं। तदस्यामेरयति" (ब्रा०।३का०।२प्र०।६अ०) इति। एरयत्यानयतीत्यर्थः। अनुदृश्येति पदस्याभिप्रायमाह "तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै" (ब्रा०।३का०।२प्र०।६अ०) इति। अनुसन्धानायेत्यर्थः। आग्नीध्रं प्रति प्रैषमन्त्रमुत्पादयति। "प्रोक्षणीरासादय। इध्माबर्हिरुपसादय। स्रुवञ्च स्रुचश्च सम्मृड्ढि। पत्नीꣳ सन्नह्य। आज्येन देहीत्याहानुपूर्व्यतायै" (ब्रा०।३का०।२प्रा०।६अ०) इति। बह्वर्थविषयः प्रैषानुक्रमेणानुष्ठानायोपयुज्यते। आग्नीध्रस्यानुष्ठानं विधत्ते "प्रोक्षणीरासादयति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै। स्फ्यस्य वर्त्म-

न्नाशयति। यज्ञस्य सन्तत्यै" (ब्रा०।३का०।२प्र०।८अ०) इति। प्रोक्षणीनामपां बाहुल्यं विधत्ते "उवाच हासितो देवलः। एतावतीर्वा अमुष्मिन् लोक आप आसन्। यावतीः प्रोक्षणीरिति। तस्माद्बह्वीरासाद्याः" (ब्रा०।३का०।२प्र०।८अ०) इति। अस्मिन् यागे यावत्यः प्रोक्षण्य आसाद्यन्ते तावत्य एवामुष्मिँल्लोक आपो भवन्तीति देवलेनोक्तत्वात्। बाहुल्यमत्र कर्त्तव्यं। उत्करे स्फ्यस्य परित्यागं ध्यानविशिष्टं विधत्ते "स्फ्यमुद्स्यन्। यं द्विष्यात् तं ध्यायेत्। शुचैवैनमर्प्पयति" (ब्रा०।३का०।२प्र०८अ०) इति। यथोक्तप्रैषकाले स्फ्यस्य तिर्य्यग्धारणं विधत्ते "वज्रो वै स्फ्यः। यदन्वञ्चं धारयेत्। वज्रोऽध्वर्युं क्षण्वीत। पुरस्तात् तिर्य्यञ्चं धारयति। वज्रो वै स्फ्यः। वज्रेणैव यज्ञस्य दक्षिणतो रक्षांस्यप हन्ति। अग्निभ्यां प्राचश्च प्रतीचश्च। स्फ्येनोदीचश्चाधराचश्च। स्फ्येन वा एष वज्रेणास्मै पाप्मानं भ्रातृव्यमपहत्य। उत्करेऽधि प्रहरति। यथोपधाय वृश्चत्येवं" (ब्रा०।३का०२प्र०।१०अ०) इति। स्फ्यस्य वज्रत्वप्रतिपादकश्रुत्यन्तरं पूर्व्वमुदाहृतं। अन्वञ्चमभिमुखं। क्षण्वीत म्रियेत। तत्परिहाराय वेद्यां पूर्व्वभागे तिर्य्यञ्चं धारयेत्। तथा सति दक्षिणाग्रत्वेन वेदेर्दक्षिणदिग्व्यवस्थितानि रक्षांसि हतानि भवन्ति। आहवनीयाग्निना पूर्व्वदिगवस्थितान् असुरान् हन्ति। गार्हपत्याग्निना पश्चिमदिगवस्थितान्। स्फ्यस्य मूलेन उत्तरदिगवस्थितान् असुरान् हन्ति। स्फ्यस्याधो धारणया अधस्तनान्। ऊर्ध्वधारणया उपरितनान् इत्यपि द्रष्टव्यं। एवं तिर्य्यञ्चन्धारयन्नध्वर्युः पापरूपं

वैरिणमस्या वेदेरपहत्योत्करे छिनत्ति। यथा काष्ठं कस्मिंश्चिदाधारे ऽवस्थाप्य लोकाश्छिन्दन्ति तद्वत्। हस्तप्रक्षालनं विधत्ते "हस्तावववनेनिक्ते। आत्मानमेव पवयते" (ब्रा०।३का०।२प्र०।१०अ०) इति। स्फ्यस्यापि तद्विधत्ते "स्फ्यं प्रक्षालयति मेध्यत्वाय। अथो पाप्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति" (ब्रा०।३का०।२प्र०।१०अ०) इति। प्रक्षालितस्फ्यो यज्ञयोग्यो भवति। किञ्चानेन पापरूपस्य वैरिणः शरीरं छिन्नं भवति। आग्नीध्रस्याऽनुष्ठानं विधत्ते "इध्माबर्हिरुपसादयति युक्त्यै। यज्ञस्य मिथुनत्वाय। अथो पुरोरुचमेवैतां दधाति। उत्तरस्य कर्मणोऽनुख्यात्यै"(ब्रा०।३का०।२प्र०।१०अ०) इति। इध्मस्य बर्हिषश्चोभयोः सहैव सादनं परस्परं योगाय। तेन च योगेन यज्ञसम्बन्धि मिथुनं भवति। किञ्च एषां उपसादनरूपां दीप्तिं पुरः करोति। तया दीप्त्योत्तरं कर्त्तव्यं ख्यापितं भवति। तयोरुपसादने प्रागग्रत्वं विधत्ते "न पुरस्तात् प्रत्यगुपसादयेत्। यत् पुरस्तात् प्रत्यगुपसादयेत्। अन्यत्राहुतिपथादिध्मं प्रतिपादयेत्। प्रजा वै बर्हिः। अपराभ्रुयाद्बर्हिषा प्रजानां प्रजननं। पश्चात् प्रागुपसादयति। आहुतिपथेनेध्मं प्रतिपादयति। सम्प्रत्येव बर्हिषा प्रजानां प्रजननमुपैति"(ब्रा०।३का०।२प्र०।१०अ०) इति। इध्मस्याहुतिपथः प्रागग्रत्वं। प्रत्यगग्रेण बर्हिषा प्रजानामुत्पत्तिर्विनश्येत्। ततः स्वयं पश्चादवस्थाय उभयं प्रागग्रमुपसादयेत्। तथा सति इध्मस्याहुतिपथो नापैति। सम्प्रत्येव समीचीनेन बर्हिषा प्रजोत्पत्तिं प्राप्नोति। इध्मा बर्हिः। परस्परं दिग्भेदं विधत्ते

"दक्षिणमिध्मं। उत्तरं बर्हिः। आत्मा वा इध्मः। प्रजा बर्हिः। प्रजा ह्यात्मन उत्तरतरा तीर्थे। ततो मेधमुपनीय। यथादेवतमेवैनत् प्रतिष्ठापयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः" (ब्रा॰।३का॰।३प्र॰।९॰अ॰) इति। पितुर्यजमानस्य दक्षिणभागो युक्तः। प्रजाया उत्तरभागः। तथा सत्युभयं तीर्थे योग्यस्थाने सम्पद्यते। ततस्तदुभयं यज्ञं नीत्वा तत्तद्देवतामनतिक्रम्य स्थापितवान् भवति। एतेन च यजमानस्य प्रजापशुसमृद्धिर्भवति। अत्र विनियोगसङ्ग्रहः।

"आददे स्फ्यं समादत्त इन्द्रस्येत्यभिमन्त्रयेत्।
पृथ्वीस्तम्बयजुश्छित्वा ह्यपगृह्णाति भूरजः॥
व्रजं गच्छेद्दुदग्देशं वर्षं वेदिं समीक्षते।
बधा धूलिं क्षिपेदेवं पुनस्तम्बहतिं द्वयं॥
अथात्र पूर्ववन्मन्त्रा अराग्नीध्राऽञ्जलौ धरेत्।
वस त्रिभिर्ग्रहो वेदेर्देव वेदिं खनेदमुं॥
स्वतोत्तरपरिग्राहो धा असीति समी कृतिः।
उदादायेति वेदीचामन्त्रोक्ताः पञ्चविंशतिः"॥ इति।

अथ मीमांसा। तृतीयाध्यायस्य प्रथमपादे चिन्तितं।

"मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गताऽपि वा।
तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बाधकं॥
मुख्याङ्गस्यापि वेद्यादि प्रयाजादिषु चाङ्गता।
मुख्यार्थत्वात् प्रयाजादेस्तापूर्व्वव्यवधानतः" इति॥

दर्शपूर्णमासयोः श्रूयते। वेद्यां हवींष्यासादयति बर्हिषि

हवींष्यासादयतीति च। तथा तद्धर्म्माः श्रूयन्ते। वेदिं खनति बर्हिर्लुनाति इत्यादयः। मुख्यानि हवींष्याग्नेय पुरोडाशादीनि। अमुख्यहवींषि तु प्रयाजाद्यर्थानि। तत्र स्वस्वधर्मसहितानि वेद्यादीनि प्रकरणबलान्मुख्यहविषामेवाङ्गानि। वेद्यां हवींष्यासादयतीति वाक्यात् सर्वहविरङ्गतेति चेत्, प्रकरणेन वाक्यस्य सङ्कोचनीयत्वात्। यदि वाक्यं प्रकरणनैरपेक्ष्येण स्वतन्त्रं स्यात् तदा सादनमात्रपर्य्यवसानेन यागाभावे वैयर्थ्यं स्यात्, सौमिकहविषामप्येतद्वेद्यासादनं प्रसज्येत, तस्मान्मुख्यं हविः अङ्गं वेद्यादिकमिति प्राप्ते ब्रूमः। अस्तु वैयर्थ्यातिप्रसङ्गपरिहारेण प्रकृतापूर्व्वसाधनभूतहविष्षु वेद्यादेरङ्गत्वं। प्रयाजादिहविष्ष्वपि स्वकीयापूर्व्वद्वारामुख्यापूर्व्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तं। एवञ्च सति वाक्यस्यात्यन्तसङ्कोचो न भविष्यति। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

“पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके।
न वाद्योस्वपकृष्टाया वेदेर्वैगुण्यहानये॥
अभिवासात् परा वेदिरिति तत्क्रमबाधितः।
प्रागेव विहितादर्शे वेदिर्नातोपकर्षणं” इति॥

दर्शपूर्णमासयोः पुरोडाशस्य कपालेषु अर्पितस्याच्छादनमाम्नातं भस्मनाऽभिवासयतीति। तत ऊर्द्धं वेदिराम्नाता। तेनैव क्रमेण पौर्णमास्ये यागे प्रतिपद्यनुष्ठानं कृतं, दर्शयागे तु वेदेरपकर्ष आम्नातः। पूर्व्वेद्युरमावास्यायां वेदिं करोतीति। तत्र वेदेः पूर्व्वभाविनोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः क-

र्त्तव्यः, अन्यथा वेदेर्वैगुण्यप्रसङ्गादिति प्राप्ते ब्रूमः। यदि दर्शः पूर्णमासविकारः स्यात् तदा पौर्णमास्यां क्लृप्तःक्रमो दर्शेऽतिदिश्येत, न त्वसौ विकारः। तस्मात् कश्चित्क्रमोऽत्र स्यातव्येऽपेक्षयः। क्रमोन्नयनञ्च सर्व्वेषु पदार्थेषु आम्नातेषु पश्चात्पाठादिभिः सम्पद्यते। वेदिपदार्थस्याभिवासनादूर्ध्वं दर्शपूर्णमाससाधारण्येनाम्नातः, विशेषतस्तु दर्शयागे वेदिः पूर्व्वद्युरेवाम्नायते। तथा सत्यभिवासनवेद्योः क्रमात्प्रागेव दार्शिकवेदेः पूर्व्वदिनसम्बन्धावगमात् तदेव तस्याः स्थानमिति वेदेरपि तावन्मात्र्यपकर्षः। ततोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"प्रोक्षणी संस्कृतिर्जातिर्योगो वा सर्व्वभूमिषु।
तयोक्ते संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः॥
अन्योन्याश्रयतो नाद्यो न जातिः क्लृप्तशक्तितः।
योगस्याक्लृप्तशक्तित्वात् क्लृप्तिर्व्याकरणाद्भवेत्"॥ इति।

दर्शपूर्णमासयोः श्रूयते प्रोक्षणीरासादयति। तत्र प्रोक्षणीशब्दस्याभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तं। कुतः। सर्व्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनाख्यमानत्वात्। इत्येवं लोके जलक्रीडायां प्रोक्षणीभिरुद्वेजिता स्म इत्यसंस्कृतास्वप्सु प्रयोगदर्शनात् बर्हिरादिशब्दवज्जातौ रूढित्वात् उदकत्वजातिः प्रवृत्तिनिमित्तं। न च प्रकर्षेणोक्ष्यते सिच्यते आभिरिति योगोऽत्र शङ्कनीयः। रूढेः प्रबलत्वादिति पक्षान्तरं। तत्र न तावत् संस्कारो युक्तः, अन्योन्याश्रयत्वात्। विहिते-

ऽभिमन्त्रणादिसंस्कारेष्वनुष्ठितेषु पश्चात् संजातास्वप्सु प्रोक्षणीशब्दप्रवृत्तिः । तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽनूद्याभिमन्त्रणादिविधिरित्यन्योन्याश्रयत्वं । नापि जातिपक्षो युक्तः । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्व्वमक्लृप्तत्वेनेतः परं कल्पनीयत्वात् ततो गोशब्दवदश्वकर्णशब्दवच्च रूढ़ो न भवति । योगस्तु व्याकरणे क्लृप्तः सोपसर्गाद्धातोः करणे ल्युट् प्रत्ययेन व्युत्पादनात् । तस्मात् प्रोक्षणीशब्दो यौगिकः । घृतादेः प्रोक्षणत्वं प्रयोजनं । द्वितीयाध्यायस्य प्रथमपादे चिन्तितं ।

"प्रोक्षणीरासादयेति निगदस्त्रिविदाद्यृचिः ।
यजुर्व्वोच्चैस्त्वधर्म्मस्य भेदादस्य चतुर्थता ॥
परप्रत्ययनार्थत्वादुच्चत्वं यजुरेव सः ।
तल्लक्षणेन युक्तत्वात्त्रैविध्यमिति सुस्थितं" ॥ इति ।

प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । अग्नीदग्नीन्विहर । बर्हिस्तृणीहीत्यादये निगदा आम्नाताः । परसम्बाधनार्था मन्त्रा निगदाः । ते च पूर्व्वेभ्य ऋग्यजुःसामभ्यो बहिर्भूताश्चतुर्थप्रकाराः । कुतः । पादगीत्योर्ऋक्सामलक्षणयोरभावात् प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्वेऽपि धर्म्मभेदेन यजुष्यन्तर्भावानुपपत्तेः । उपांशु यजुषा उच्चैर्निगदेनेति हि धर्म्मभेद इति प्राप्ते ब्रूमः । बहिर्ब्राह्मणा भोज्यन्तां परिव्राजकास्त्वन्तरित्यत्र यथैव परिव्राजकानां ब्राह्मणत्वे पूजानिमित्तो विशेषो यथा तथा निगदानां यजुर्लक्षणोपेतत्वेन यजुषामेव सतां परप्रत्यायननिमित्त उच्चत्वधर्म्मः । ततो मन्त्राणां त्रैविध्यं सुस्थितं ।

अथ व्याकरणं। आदद इत्यादौ स्वराः प्रसिद्धाः। दक्षिण इत्यत्र स्वाङ्गाख्यायामादिर्वा (फि०सू०फि०।२३०) इति। इत्याद्युदात्तः। पृथिवीत्यत्र वाक्यादित्वेन षाष्ठिकामन्त्रिताद्युदात्तत्वं। अररुरित्यत्र अर्त्तिधातोःररुप्रत्यय आद्युदात्तः। गोस्थानमित्यत्र कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादः। मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः (पा०६।२।१५१) इति। मन्नन्तं क्तिन्नन्तं व्याख्यानादिचतुष्टयं याजकादिगणः क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवतीत्यन्तोदात्तत्वे प्राप्ते, परादिश्छन्दसि बहुलं (पा०६।२।१९९) इति। उत्तरपदाद्युदात्तः। वर्षत्विति वाक्यादिः। तथा बधानेत्यत्रापि शानजादेशस्य चित्वादन्तोदात्तः। पाशशब्दो घञन्तः। द्वेष्टीत्यत्र यच्छब्दयोगान्न निघातः। गायत्रशब्दस्य घप्रत्ययान्तत्वात् प्रत्ययस्वरः। त्रैष्टुभजागतशब्दयोरण्प्रत्यये सति आद्युदात्तः। उर्वीशब्दो ङीषन्तः। वस्त्रीशब्दो वृषादिः। पुराशब्दस्य निपातत्वाभावादन्तोदात्तः। विस्तृप इत्यत्रोत्तरपदस्य कसुन् प्रत्ययान्तत्वादादिरुदात्तः। उदादायेत्यत्र ल्यपः पित्वाद्धातुस्वराविशेषे कृत्स्वरः। जीरदानुशब्दो दासीभारादिः। एरयन्नित्यत्र यच्छब्दयोगान्निघाताभावे सति आडागमस्य विहितमुदात्तत्वं सति शिष्टं। चन्द्रमसेति पृषोदरादिः। अनुदृश्येति कृत्स्वरः ॥०॥

इतिमाधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ सम्मार्ज्मि वाचं प्राणं चक्षुः श्रोत्रं प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ सम्मार्ज्म्याशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूं। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कं। सुप्रजसस्त्वा वयꣳ सुपत्नीरुप ॥ १ ॥

सेदिमा। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यं। इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि। समायुषा सम्प्रजया समग्ने वर्चसा पुनः। सम्पत्नी पत्याहं गच्छे समात्मा तनुवा मम। महीनां पयोस्योषधीनाꣳ रसस्तस्य तेक्षीयमाणस्य निः ॥ २ ॥

वपामि महीनां पयोस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय तेजोऽसि तेजोऽनुप्रेह्यग्निस्ते तेजो मा विनैदग्नेर्जिह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव शुक्रमसि ज्योतिरसि तेजोऽसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः शुक्रन्त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे य-

जुषे यच्छामि ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वार्चिषि धाम्ने
धाम्ने देवेभ्यो यजुषे यजुषे यच्छामि ॥ ३ ॥

उपनी रश्मिभिः शुक्रꣳ षोडश च ॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके
दशमोऽनुवाकः ॥

नवमे वेदिरुक्ता। दशमे वेद्यामासादनीयस्याज्यस्य हविषो
ग्रहणमभिधीयते। बोधायनः "अथैतान् स्रुचः सम्मादत्ते
दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्राहरणं वेदपरि-
वासनानीति गार्हपत्ये प्रतितपति, प्रत्युष्टꣳ रक्षः प्रत्युष्टा
अरातयोऽग्नेर्व्वस्तेजिष्ठेन तेजसा निष्टपामि" इति। आपस्तम्बस्य
मते प्रत्युष्टमग्नेर्व्व इत्येतौ द्वौ मन्त्रौ तौ च सम्मार्जनात् प्राक्
पश्चाच्च क्रमेण स्रुचान्तापने विनियुज्येते। प्रत्युष्टमन्त्रो व्या-
ख्यातः। हे स्रुचो युष्मानतितीक्ष्णेनाग्नेस्तेजसा निःशेषेण तपा-
मि। अनिष्टपरिहारायेष्टसिद्धये चोभौ मन्त्रावित्याह "प्रत्यु-
ष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह रक्षसामपहत्यै। अग्नेर्वस्ते
जिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय" (ब्रा०।३का०।२प्र०।
१अ०) इति। कल्पः "अथ स्रुवं सम्मार्ष्टि, गोष्ठं मा निर्मृक्षं वा-
जिनं त्वा सपत्नसाहꣳ सम्मार्ज्मीत्यथ जुहूं सम्मार्ष्टि, वाचं प्राणं मा
निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ सम्मार्ज्मीत्यथोपभृतं सम्मार्ष्टि,
चक्षुश्श्रोत्रं मानिर्मृक्षं वाजित्वासपत्नसाहꣳ सम्मार्ज्मीत्यथ ध्रुवां

ष्टिं, प्रजां योनिं मानिर्मृक्षं वाजिनीं त्वा सपत्नसाहीᳪं
र्जिमि" इति। हे स्रुव गवां स्थानं मा विनाशयामीत्यभिप्रेत्य
वन्तं वैरिणामभिभवितारं त्वां सम्यक् शोधयामि। एव-
षु योज्यं। द्वितीयतृतीययोर्मन्त्रयोर्मानिर्मृक्षमित्यादिर-
नुष्यते। मन्त्राणां स्पष्टार्थत्वमभिप्रेत्य तद्व्याख्यानमुपेक्ष्यानुष्ठानं
विधत्ते "स्रुचः सम्मार्ष्टि" (ब्रा०।३का०।३प्र०।अ०१) इति। तत्र
क्रमं विधत्ते "स्रुवमग्रे पुमाᳪंसमेवाभ्यः सᳪंश्यति मिथुनत्वाय"
(ब्रा०।३का०।३प्र०।१अ०) इति। स्रुवः पुमान् जुह्वाद्याः स्त्रियः।
ततस्ताभ्यः पूर्व्वभावित्वं स्रुवस्य युक्तं। संश्यति सम्यक् तनूक-
रोति व्यवहारार्थं संस्करोतीत्यर्थः। जुह्वादीनां पौर्व्वापर्य्यं
विधत्ते "अथ जुहूं। अथोपभृतं। अथ ध्रुवाम्" (ब्रा०।३का०।
३प्र०।१अ०) इति। प्रशंसति "असौ वै जुहूः। अन्तरिक्षमुप-
भृत्। पृथिवी ध्रुवा। इमे वै लोकाः स्रुचः। वृष्टिः सम्मार्ज-
नानि। वृष्टिर्वा इमाँल्लोकाननुपूर्व्वं कल्पयति। ते ततः क्लृप्ताः
समेधन्ते" (ब्रा०।३का०।३प्र०।१अ०) इति। क्रमावस्थानसा-
म्येन स्रुचां लोकत्वं। सम्मृज्यन्ते स्रुचो यैर्वेदाग्रैस्तानि सम्मा-
र्जनानि। पूर्व्वं दर्भैर्वेदं कृत्वा तदग्राणि परिवास्य तानि वेद-
परिवासनानि स्रुचां सम्मार्जनाय स्थापितानि। तेषां वृष्टिज-
नकतया वृष्टिरूपत्वं। वृष्टिरूपैर्दर्भाग्रैर्लोकरूपाणां जुह्वादीनां
क्रमेण सम्मार्जने सति वृष्टिरेवानुक्रमवर्त्तिनो लोकान् धान्या-
दिसम्पन्नान् करोति। ततस्ते लोकाः सम्पन्नाः सम्यगभिवर्धन्ते।
मार्जनं प्रशंसति "स मेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः।

य एवं वेद" (ब्रा०।३का०।३प्र०।१अ०) इति। वेदपरिवासनानामग्रमूलभागयोर्व्यवस्थां दर्शयति "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति। अग्रतः सम्मृज्यात्। वृष्टिमेव नियच्छति। अवाचीनाग्रा हि वृष्टिः। यदि कामयेताऽवर्षुकः स्यादिति। मूलतः सम्मृज्यात्। वृष्टिमेवोद्यच्छति"(ब्रा०।३का०।३प्र०।१अ०) इति। नियच्छति न्यग्भावेन प्रवर्त्तयति। उद्यच्छति। ऊर्द्ध्वाकर्षणेन वारयति। तस्मिन्नेव विषये सम्प्रदायविदां मतमाह "तदु वा आहुः। अग्रत एवोपरिष्टात् सम्मृज्यात्। मूलतोऽधस्तात्। तदनुपूर्व्वं कल्पते। वर्षुको भवति" (ब्रा०।३का०।३प्र०। १अ०) इति। उपरिष्टादिति स्रुचो बिलभागः। अधस्तादिति तद्दण्डभागः। एवं सति परिवासनानां स्रुवस्रुचां अग्रमग्रेण सम्बध्यते, मूलं मूलेनेत्यनुपूर्व्वी समा भवति। पर्जन्यश्च वर्षति। बिलभागे निःशेषमाह "प्राचीमभ्याकारं। अग्रेरन्तः। एवमिव ह्यन्नमद्यते। अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति। ऊर्जं एवान्नाद्यस्यावरुध्यै" (ब्रा०।३का०।३प्र०। १अ०) इति। बिलभागे पश्चिमोपक्रमां प्रागवसानां सकृत्सम्मार्जनक्रियां कृत्वा बिलबिलस्याभ्यन्तरे सन्तत आकृष्याकृष्य सम्मृज्यात्। यथा भुञ्जानः पुमान् हस्तं पुरतः पात्रे प्रसार्य्याभितो भोज्यान्याकृष्य मुखबिले प्रक्षिपति तद्वत्। किञ्च प्रजा ओषधीनामग्रभागादानीय तं समुपजीवन्ति तद्वत्। तत्र परिवासनाग्रैः सम्मार्जनस्वरूपस्यात्तुं योग्यस्यान्नस्य सम्पत्त्यै भवति। दण्डभागे विशेषमाह "अधस्तात् प्रतीचीं। दण्डमुत्तरतः। मूलेन मूलं

प्रतिष्ठित्यै" (ब्रा०।३का०।३प्र०।१अ०) इति। अधस्तादवस्थितं दण्डं प्रति प्रागुपक्रमां पश्चिमावसानां सम्मार्जनक्रियां अग्रतमेन दर्भभागेन कुर्य्यात्। तथा सति दर्भमूलेन स्रुचो मूलं सम्बध्यते। तच्च प्रतिष्ठायै भवति। विलदण्डयोरुक्तां व्यवस्थां लौकिकलिङ्गेन द्रढयति "तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि। प्रत्यञ्च्यधस्तात्। स्रुग्घ्येषः" (ब्रा०।३का०।३प्र०।१अ०) इति। मणिबन्धादूर्ध्वं सूक्ष्मलोमानि प्राङ्मुखानि। अधस्तात्तु प्रत्यङ्मुखानि। एषा हि लौकिकस्रुक् तद्दृष्टान्तेन वैदिक्यामपि स्रुचो यथोक्तप्रकारो द्रष्टव्यः। अत्र केचिदाहुः ऊर्ध्वविलत्वेन हस्तधृतायाः स्रुच ऊर्ध्वाधोभागौ कृत्स्नावप्युपरिष्टादधस्ताच्छब्दाभ्यां विवक्षितौ। न तु विलभागदण्डभागौ। एवं धारकहस्तेऽप्यूर्ध्वाधोदेशौ। तथा सत्युक्तं लोमलिङ्गमनुकूलमिति। तर्हि तथैवास्तु। स्रुचस्य प्रथमतः सम्मार्जनं रूपकल्पनयोपपादयति "प्राणो वै स्रुवः। जुहूर्दक्षिणो हस्तः। उपभृत् सव्यः। आत्मा ध्रुवा। अन्नꣳ सम्मार्जनानि। मुखतो वै प्राणोऽपानो भूत्वा। आत्मानमन्नं प्रविश्य। वाह्यतस्तनुवꣳ शुम्भयति। तस्मात् स्रुवमेवाग्रे सम्मार्ष्टि। मुखतो हि प्राणोऽपानो भूत्वा। आत्मानमन्नमाविशति" (ब्रा०।३का०।३प्र०।१अ०) इति। आत्महस्तयोर्मध्यवर्त्तिशरीरं। मुखसञ्चारिणो वायोः प्राणापानाभिधे द्वे वृत्ती। उच्छ्वासरूपेण वहिर्निर्गच्छन्ती प्राणवृत्तिः, निःश्वासरूपेणान्तःप्रविशत्यपानवृत्तिः। तत्र प्राणरूपो वायुः प्राणतां परित्यज्य स्वयमपानो भूत्वा मुखे प्रक्षिप्तमन्नग्रासं म-

घ्यशरीरे प्रवेश्य हस्तादिरूपं शरीरं पुष्ट्वा शोभितं करोति। तस्मादन्नरूपैर्वेदाग्रैः प्राणरूपस्य स्रुवस्यादौ सम्मार्जनं कर्त्तव्यं। तथा कृते सति प्रथमतोऽन्नप्रवेशः, पश्चाद् वाह्यहस्तरूपस्य जुह्वादेः शोभेत्येतदुपपन्नं। प्रसङ्गात् प्राणापानवेदनं प्रशंसति "तौ प्राणापानौ। अव्यर्धुकः प्राणापानाभ्यां भवति। य एवं वेद" (ब्रा०।३का०।३प्र०।१अ०) इति। प्रकर्षेण वहिरनितीति प्राणः। अपकर्षेणान्तरनित्यपान इत्येवं वृत्तिभेदात् तौ प्राणापानौ सम्पन्नाविति वेदितुरकाले प्राणापानाभ्यां वियोगो मृत्युरूपो न भवति। मन्त्रमुत्पाद्य विनियुङ्क्ते "दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं। तेन वयꣳ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेति स्रुक्सम्मार्जनान्यग्नौ प्रहरति" (ब्रा०।३का०।३प्र०।२अ०) इति। दिवः सकाशाद्वृष्टिरूपेणाधः प्रसृतमिदं दर्भरूपं चित्रवस्तु भूमेरुपरि आश्रितं शतशाखेन तेन दर्भेण वयं वैरिणं नाशयामः। इदं दर्भरूपं हुतमस्तु, अनेन मन्त्रेण वेदपरिवासनान्यग्नौ प्रक्षिपेत्। अस्मिन् मन्त्रे सम्मार्जनानि न प्रतीयन्त इति शङ्कां वारयति "आपो वै दर्भाः। रूपमेवैषामेतन्महिमानं व्याचष्टे" (ब्रा०।३का०।३प्र०।२अ०) इति। अत्र दिवोऽवततमित्यनेन वृष्टिरूपा आपः प्रतीयन्ते, अपाञ्च दर्भरूपेणोत्पत्तिः पूर्व्वमेवोत्पवनब्राह्मणेन दर्शिता। तस्मादेतन्मन्त्रगतशब्दस्वरूपमेवैषां दर्भाणां दिवः शिल्पत्वादिलक्षणं महिमानं प्रख्यापयति। अस्य मन्त्रस्यानुष्टुप्छन्दस्त्वस्यापूपलक्ष्यानुसन्धेयमित्याह "आनुष्टुभर्चा" (ब्रा०।३का०।३प्र०।२अ०) इति।

सम्मृज्यादिति शेषः। विधेयमनुष्टुप्त्वं स्तौति "आनुष्टुभः प्रजापतिः। प्राजापत्यो वेदः। वेदस्याग्रꣳ स्रुक्सम्मार्जनानि। स्वेनैवैना छन्दसा। स्वया देवतया समर्धयति" (ब्रा०।३का०।३प्र०।२अ०) इति। जगत्सृष्टौ प्रजापतेरनुष्टुप्सहकारिणीति तापनीयोपनिषदि श्रूयते "सदा तं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत्। तेन वै सर्व्वमिदमसृजत" इति। तस्मात् प्रजापतेरानुष्टुभत्वं। "प्रजापतेर्वा एतानि श्मश्रूणि। यद्वेदः" इति वक्ष्यति। तस्माद्वेदस्य प्राजापत्यत्वं। तथा सति वेदाग्रस्य स्वकीयं छन्दः स्वकीया च देवतेत्युभयं समृद्धिहेतुर्भवति। न केवलं छन्दसः प्राशस्त्यं किन्त्वृचोऽपीत्याह "अथो पत्न्यावै योषा। दर्भा वृषा। तन्मिथुनं। मिथुनमेवास्य तद्यज्ञे करोति प्रजनाय। प्रजायते प्रजया पशुभिर्यजमानः" (ब्रा०।३का०।३प्र०।२अ०) इति। वृषा सेचनसमर्थः पुमान्। अत्र स्रुक्सम्मार्जनानामुक्तमन्त्रेणाग्नौ प्रक्षेप इत्येकः पक्षः। अद्भिः प्रक्षाल्योदक् परित्यजेदित्यपरः पक्षः। अत एव सूत्रकारोऽग्नौ प्रहरतीत्युक्त्वा पुनरप्याह "उत्करे वा न्यस्यति" इति। इमं पक्षं विधत्ते "तान्येके वृथैवापास्यन्ति। तत् तथा न कार्य्यं। आरब्धस्य यज्ञियस्य कर्म्मणः स विदोहः। यद्येनानि पशवोऽभितिष्ठेयुः। न तत् पशुभ्यः कं। अद्भिर्मार्जयित्वोत्करे न्यस्येत्। यद्वै यज्ञियस्य कर्म्मणोऽन्यत्राहुतीभ्यः सन्तिष्ठते। उत्करे वाव तस्य प्रतिष्ठा। एताꣳ हि तस्मै प्रतिष्ठां देवाः समभरन्। यदद्भिर्मार्जयति। तेन शान्तं। यदुत्करे न्यस्यति। प्रतिष्ठामेवैनानि तद्गमयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः"

(ब्रा०।३का०।३प्र०।३अ०) इति । केचित् प्रक्षालनमकृत्वैव यत्र क्वापि परित्यजन्ति तदयुक्तं । य एषोऽनुष्ठानप्रकारः स कर्म्मणो विपरीतफलं दोग्धि। अप्रक्षालितदर्भाक्रमणे पशूनां रोगोत्पत्त्या सुखं न भवेत्। मार्जनेन तच्छान्तं भवति । आहुतिव्यतिरिक्तस्य यज्ञीयद्रव्यस्योत्करः समाप्तिस्थानमिति देवैः सम्पादितत्वात् तत्रैव परित्यागे प्रतिष्ठा भवति। अग्नौ प्रहरणपक्षमेव द्रढयितुं उत्करे परित्यागं दूषयति "अथो स्तम्बस्य वा एतद्रूपं । यत् स्रुक्सम्मार्जनानि । स्तम्बशो वा ओषधयः । तासां जरत्कक्षे पशवो न रमन्ते। अप्रियो ह्येषां जरत्कक्षः । यावदप्रियो ह वै जरत्कक्षः पशूनां । तावदप्रियः पशूनां भवति । यस्यैनान्यन्यत्राग्नेर्दधति"(ब्रा०।३क०।३प्र०।२अ०) इति। अथोशब्द उत्करपक्षव्यावृत्त्यर्थः। ओषधयो द्विविधाः। स्तम्बरूपा नवदाव्यरूपाश्च । कोमलतृणाभावादस्वादुर्जरत्कक्षस्तम्बः। दावाग्निदग्धप्रदेशे वृष्ट्या समुत्पन्नः कोमलः स्वादुतरस्तृणसमूहो नवदाव्यः। तत्र स्रुक्सम्मार्जनानि स्तम्बे लूनतया स्तम्बरूपाणि। यद्येतान्यग्नेरन्यत्रोत्करे त्यजेरन् तदा तत्र तत्र विकीर्णानि तानि बहुस्तम्बा ओषधयः सम्पद्यन्ते। तासामोषधीनां सम्बन्धीनि जरत्कक्षे प्रीत्यभावात् जरत्कक्षवद् यजमानोऽपि पशूनामप्रिय इत्यपशुरेव स्यात्। अग्नौ प्रहरणपक्षं द्रढयति "नवदाव्या सुवा ओषधीषु पशवो रमन्ते। नवदावो ह्येषां प्रियः। यावत् प्रियो ह वै नवदावः पशूनां। तावत् प्रियः पशूनां भवति। यस्यैतान्यग्नौ प्रहरन्ति। तस्मादेतान्य-

ग्रावेव प्रहरेत्। यतरस्मिन्त्सम्मृज्यात्। पशूनां धृत्यै" (ब्रा०। ३का०।३प्र०।२अ०) इति। नवः प्रत्यासन्न पूर्व्वकालभावि दावाग्निर्यस्य कोमलस्यौषधिसमूहस्य सोऽयं नवदावः तादृशौषधिवद्यजमानोऽपि सम्मार्जनानामग्नौ प्रहरणे पशूनां प्रियो भवति। तस्मादाहवनीये गार्हपत्ये वा यस्मिन्नग्नौ स्रुचः प्रतितप्य सम्मृष्टास्तस्मिन्नेव प्रहरणं यजमानगृहे पशूनां बहूनां धारणाय भवति। स्रुक्सम्मार्जनप्रसङ्गादग्निसम्मार्जनानामपि कञ्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते "यो भूतानामधिपतिः। रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिꣳसीः। एतदस्तु हुतं तव स्वाहेत्यग्निसम्मार्जनान्यग्नौ प्रहरति" (ब्रा०।३का०३प्र०।२अ०) इति। तन्तिः कर्म्मसन्तानं तत्र चरतीति तन्तिचरः। वृषा देवेषु श्रेष्ठः। हे रुद्र स त्वमस्माकं पशून् मा हिंसीः। एतदग्निसम्मार्जनद्रव्यं तव हुतमस्तु। तस्यैवार्थस्यानुवादकः स्वाहेति शब्दः। यैर्दर्भैरिध्मः सन्नद्धस्तैरेवाग्निं सम्मृज्य स्वकाले सम्प्राप्ते तानि सम्मार्जनान्यग्नौ प्रहरेत्। प्रथमतोऽग्नीत्परिधीनग्निञ्च त्रिस्त्रिः सम्मृष्टे सति प्रधानयागादूर्ध्वमन्वाहार्य्यरूपायां दक्षिणायामृत्विग्भ्यो दत्तायां अनूयाजहोमात् पूर्व्वं द्वितीयमग्नौ सम्मृष्टे सति तत् प्रहरणकालः। अग्निदग्धप्रदेशे पुनरुत्पद्य सम्यग्वर्द्धमानत्वादग्नौ दर्भाणां प्रहरणं युक्तमित्याह "एषा वा एतेषां योनिः। एषा प्रतिष्ठा। स्वामेवैनानि योनिं। स्वां प्रतिष्ठां गमयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः" (ब्रा०।३का०।३प्र०।२अ०) इति। एषा वह्निरूपा। न चाग्निप्रहरणे रुद्रविषयो मन्त्रो व्यधि-

करण इति वाच्यं, अग्नेरेवात्र रुद्रत्वात्, "रुद्रो वा एषः। यद-ग्निः" इति श्रुत्यन्तरात्। "सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं" इति निर्वचनाच्च। कल्पः "अथैनां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण सन्नह्यति, आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूं। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कं" इति। या पत्नी वह्नेरनुसरणी भूत्वा सौम-नस्यादिफलान्याशासाना वर्त्तते तामेतां शोभनकर्म्मणे सुखं यथा भवति तथा बध्नामि। योक्त्रबन्धनाय गार्हपत्यसमीपे पत्न्या उपवेशनं विधत्ते "अयज्ञो वा एषः। यो पत्नीकः। न प्रजाः प्रजायेरन्। पत्न्यन्वास्ते। यज्ञमेवाकः प्रजानां प्रजननाय" (ब्रा०। ३का०।३प्र०।२अ०) इति। अकः अनुकृतवान् भवति। बन्धनका-लेऽप्युपवेशनमेव न तूत्थानमित्याह "यत् तिष्ठन्ती सन्नह्येत। प्रियं ज्ञातिꣳ रुन्ध्यात्। आसीना सन्नह्यते। आसीना ह्येषा वीर्यं करोति" (ब्रा०।३का०।३प्र०।२अ०) इति। रुन्ध्यात् नाशयेत्। चिरमप्यवस्थातुं शक्यत्वादासीनायाः सामर्थ्यमस्ति। दिग्देशं विधत्ते "यत् पश्चात् प्राच्यन्वासीत। अनया समदं दधीत। देवानां पत्निया समदं दधीत। देशाद्दक्षिणत उदीच्यन्वास्ते। आत्मनो गोपीथाय" (ब्रा०।३का०।३प्र०।२अ०) इति। समदः कलहः। सा गार्हपत्यस्य पश्चाद्भागे प्राङ्मुखत्वे सति प्राचीनप्रव-णया वेदिरूपया पृथिव्या सह कलहः स्यात्। पत्नीसंयाजहोमेषु तृतीयाहुतेर्या देवता देवपत्नी तस्या अपि तदेव स्थानमिति तया सह कलहं कुर्य्यात्। अतो दक्षिणदेशे स्वरचार्थमुदङ्मुखा

तिष्ठेत्। ननु सर्व्वा अपि योषितः सौमनस्यादिकमाशासते। तत्र को विशेषोऽस्या इत्याशङ्क्य मन्त्रे पूर्व्वार्द्धस्याभिप्रायमाह "आशासाना सौमनसमित्याह। मेध्यामेवैनां केवलीं कृत्वा। आशिषा समर्द्धयति" (ब्रा०।३का०।३प्र०।३अ०) इति। देवयजनप्रवेशेन यज्ञयोग्यां पापक्षयेण केवलीं कृत्वा पश्चादाशासानेति ब्रुवन् सत्ययाऽऽशिषा समृद्धां करोति। अनुव्रतशब्दोपेतमर्थमाह "अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कमित्याह। एतद्वै पत्निये व्रतोपनयनं। तेनैवैनां व्रतमुपनयति" (ब्रा०।३का०।३प्र०।३अ०) इति। पत्न्याः स्वातन्त्र्येण कर्म्माधिकाराभावात् पत्या सह तदधिकारे सत्येतदेव योक्त्रं तस्या अनुव्रतस्वीकारे लिङ्गं। यथा विवाहे स्त्रियाः कण्ठे मङ्गलसूत्रधारणं तद्वत्। अस्मिन् पक्षे लौकिकवैदिकप्रसिद्धिं दर्शयति "तस्मादाहुः। यश्चैवं वेद यश्च न। योक्त्रमेव युते। यमन्वास्ते। तस्यामुष्मिँल्लोके भवतीति योक्त्रेण" (ब्रा०।३का०।३प्र०।३अ०) इति। यस्मात् सूत्रधारणं लोकवेदयोर्नियमस्वीकारलिङ्गं, लोके हि दूरदेशवर्त्तिदेवतादर्शनं सङ्कल्पयन्तः सूत्रं बध्नन्ति, वेदेऽपि उपनयनव्रते मौञ्जीं बध्नन्ति, तस्माद् यो यागं जानाति यश्च न जानाति तादृशाः सर्व्वेऽप्येवमाहुः। इयं पत्नी योक्त्रमवश्यं युते मिश्रयति बध्नाति यं पतिमन्वेषा व्रतं स्वीकृत्यास्ते तस्य सम्बन्धिना मङ्गलसूत्रेणामुष्मिँल्लोके युक्ता भवतीति। प्रकारान्तरेण योक्त्रबन्धनं स्तौति "यद्योक्त्रं। स योगः। यदास्ते। स क्षेमः। योगक्षेमस्य क्लृप्त्यै" (ब्रा०।३का०।३प्र०।३अ०) इति। अप्राप्तस्य वस्तुनः प्राप्तिर्योगः,

प्राप्तस्य रक्षणं क्षेमः। अतो योक्त्रबन्धनमुदक्पुखासनञ्चोभयसि-द्धये भवति। मनसि किमभिप्रेत्य असौ बध्यत इत्याशङ्क्याह "युक्तं क्रियाता आशीः कामे युज्याता इति। आशिषः समृध्यै" (ब्रा०।३का०।३प्र०।३अ०) इति। मया शास्त्रीयं कर्म्म क्रियते, अतः सौमनस्यादिरूपा ममेयमाशीः फले युज्यतां, अनेनाभि-प्रायेणाशीः समृद्धा भवति। विधत्ते "ग्रन्थिं ग्रथ्नाति। आ-शिष एवास्यां परिगृह्णाति। पुमान् वै ग्रन्थिः। स्त्री पत्नी। त-न्मिथुनं। मिथुनमेवास्य तद्यज्ञे करोति प्रजनाय। प्रजायते प्रजया पशुभिर्यजमानः। अथो अर्द्धो वा एष आत्मनः। यत् पत्नी। यज्ञस्य धृत्या अशिथिलत्वं भावाय" (ब्रा०।३का०।३प्र०। ३अ०)इति। सौमनस्याद्याशिषः सर्व्वा अपि योक्त्रग्रन्थिना तस्यां परिगृहीता भवन्ति। यज्ञकर्त्तुरर्द्धस्वरूपभूता पत्नी ततस्तदीय-ग्रन्थिना यज्ञो भ्रीयते न तु शिथिलो भवति। कल्पः "जघनेन गार्हपत्यमुपविशति, सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यं" इति। हे अग्ने वयं त्वां उपसी-दामः। कीदृश्यो वयं। सुप्रजसः शोभनप्रजोपेताः शोभनः पति-र्यासां ताः सुपत्न्यः त्वत्प्रसादात् अदब्धासः केनाप्यतिरस्कृताः। कीदृशं त्वां। सपत्नदम्भनं वैरिविनाशिनं अदाभ्यं केनाप्यतिर-स्कार्य्यं। पत्न्या उपसीदने प्रयोजनं दर्शयति "सुप्रजसस्त्वा वयꣳ सु-पत्नीरुपसेदिमेत्याह। यज्ञमेव तन्मिथुनी करोति। ऊनेऽतिरिक्तं धीयाता इति प्रजात्यै" (ब्रा०।३का०।३प्र०।३अ०) इति। शोभनः पतिर्यस्या इत्यभिधानाद्यज्ञं मिथुनवन्तं करोति। यस्मिन्मिथुने

पत्न्या कर्म्मण्यनुष्ठीयमाने सति यद्यस्याङ्गं तेन अननुष्ठितं समानं* भवति तत्रोनप्रदेशे तदङ्गमतिरिक्तं तेनाननुष्ठितं अनया पत्न्या भ्रियते अनुष्ठीयते। अत एव पत्नीकर्त्तव्यं पूर्णपात्रधारणमाम्नायते† "अञ्जलौ पूर्णपात्रमानयति। रेत एवास्यां प्रजां दधाति" इति। एवमन्यदपि तत्कर्त्तव्यमुदाहार्य्यं। अत ऊनं पत्नी परिपूरयतीतिप्रयोजनेन पत्न्याः प्रवेशने सति तन्मिथुनं प्रजननाय सम्पद्यते। यथा सप्तमानुवाके कपालोपधानप्रसङ्गेन तद्विमोचनमन्त्रोऽप्याम्नातः, एवमत्रापि योक्त्रबन्धनप्रसङ्गेन योक्त्रविमोकमन्त्र आम्नायते "इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्न्या करोमि" इति। विष्यामि मुञ्चामि सुकेतः सुप्रज्ञः। सविता। बद्धेऽस्मिन् योक्त्ररूपे वरुणपाशे विमुक्ते सति धातुः ब्रह्मणो योनौ स्थाने अनुष्ठितस्य कर्म्मणः फलभूते लोके पत्न्या सह मे सुखं करोमि। अस्य च योक्त्रस्य विमोकः स्वकाले कर्त्तव्यः। पिष्टलेपफलीकरणहोमाभ्यामूर्द्धं प्रायश्चित्तहोमेभ्यः पूर्व्वमस्य स्वकालः। अत एव कल्पसूत्रकारस्तस्मिन् प्रदेशे पठति "इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते, तस्याः स योक्त्रोऽञ्जलौ पूर्णपात्रमानयति, समायुषा सम्प्रजयेत्यानीयमाने जपति" इति। सोऽपि मन्त्रोऽत्रैवानन्तरमाम्नातः "समायुषा सम्प्रजया समग्ने वर्चसा पुनः। सम्पत्नी पत्याहं गच्छे समात्मा तनुवा मम" इति। हे अग्ने अहमायुषा सङ्गच्छे प्रजया सङ्गच्छे पातिव्रत्य-

* सङ्गतं भवति। इति का०। † निनयनमाम्नायते। इति का०।

लक्षणेन वर्चसा सङ्गच्छे अनेन पत्या पुनः पुनः पत्नी भूत्वा सङ्गच्छे वियोगः कदाचिदपि मा भूदित्यर्थः। मम शरीरेण जीवात्मा चिरं सङ्गच्छतां। कल्पः "महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवज्यायै" इति। तस्यां पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्येति। यद्यप्यत्र मन्त्रकाण्डे देवयज्यायै इति पदं नाम्नातं तथापि ब्राह्मणानुसारेण तत् पठितं। महीशब्दस्य गौरर्थः। अत एव सप्तमकाण्डे गां प्रस्तुत्याम्नायते "तथा उपोत्थाय कर्णमाजपेदिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" इति। हे आज्य त्वं महीनां गवां पयोऽसि साक्षात् तज्जन्यत्वादोषधीनां रसश्चासि परम्परया तज्जन्यत्वात्। तादृशस्य क्षयरहितस्य तव स्वरूपं देवयागार्थं पात्र्यां निर्वपामि। इमं विष्यामि समायुषेति मन्त्रद्वयस्यात्राप्रासङ्गिकत्वात् तद्व्याख्यानमुपेक्ष्य अनन्तरस्य मन्त्रस्य पूर्व्वभागे स्पष्टार्थतां दर्शयति "महीनां पयोस्योषधीनाꣳ रस इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे" (ब्रा०।३का०।३प्र०।३अ०) इति। उत्तरभागे त्वक्षीयमाणस्येति पदस्याभिप्रायमाह "तस्य तेऽक्षीयमाणस्य निर्वपामि देवयाज्याया इत्याह। आशिषमेवैतामाशास्ते" (ब्रा०। ३का०।३प्र०।३अ०) इति। आज्यस्य यागाङ्गतां* विधत्ते "घृतञ्च वै मधु च प्रजापतिरासीत्। यतो मध्वासीत्। ततः प्रजा असृजत। तस्मान्मधुषि प्रजननमिवास्ति। तस्मान्मधुषा

* आज्यभागाङ्गतां। इति का०।

न प्रचरन्ति। यातयाम हि। आज्येन प्रचरन्ति। यज्ञो वा आज्यं। यज्ञेनैव यज्ञं प्रचरन्त्ययातयामत्वाय" (ब्रा०।३का०। ३प्र०।४अ०) इति। प्रजापतिः पूर्वं यागसाधनं सृष्टिसाधनञ्चाभिप्रेत्य स्वयमेव सत्यसङ्कल्पतया घृतरूपेण मधुरूपेण च परिणतोऽभूत्। यस्मादुत्पत्तिबीजत्वमभिप्रेत्य मध्वभूत् तस्मान्मधुबीजेन प्रजा असृजत। अत एव मधुनि नानाजन्तूत्पादनं* विद्यते, तेनोत्पादनेन यतो गतसारं ततो मधुना यागं न कुर्व्वन्ति। सारवत्वादाज्येन यागं कुर्य्युः। सर्व्वयज्ञहेतुत्वादाज्यस्य यज्ञत्वं तद्धेतुत्वञ्च वच्यते "सर्व्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यं" इति। अतो यज्ञयोग्यसाधनेनैव यज्ञस्यानुष्ठानान्नास्ति गतसारत्वदोषः। कल्पः "अथैनामाज्यमवेक्षयति, महीनां पयोऽस्योषधीनाꣳ रसो दब्धेन त्वा चक्षुषा वेक्षे सुप्रजास्त्वाय" इति। अदब्धेन रोगानुपहतेन। विधत्ते "पत्न्यवेक्षते। मिथुनत्वाय प्रजात्यै। यद्वै पत्नी यज्ञस्य करोति। मिथुनं तत्। अथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (ब्रा०। ३का०।३प्र०।४अ०) इति। यज्ञस्य पुरुषत्वात् तेन सह पत्न्या मिथुनत्वं। किञ्च पत्न्या आज्यावेक्षणरूप एव यजमानमनु यज्ञारम्भः। दम्पत्योर्द्वयोरप्यारम्भे सति यज्ञो न विच्छिद्यते। कल्पः "अथैनद्गार्हपत्येऽधिश्रयति, तेजोऽसीति समिधमुपयत्य प्रागुद्धरति, तेजोऽनुप्रेहीत्यथैनदाहवनीयेऽधिश्रयति, अग्निस्ते तेजो मा विनैत्" इति। हे आज्य त्वं तेजोरूपमसि तेजोरूप-

---

* मधुना नानाबीजोत्पादनं। इति का०।

माहवनीयमनुप्रवेष्टुं गच्छ, अयमाहवनीयोऽग्निस्त्वदीयं तेजोरूपं मा ऽपनयतु। अनुष्ठानविधिपूर्व्वकं मन्त्रान् व्याचष्टे "अमेध्यं वा एतत् करोति। यत् पत्न्यवेक्षते। गार्हपत्येऽधिश्रयति मेध्यत्वाय। आहवनीयमभ्युद्द्रवति। यज्ञस्य सन्तत्यै। तेजोऽसि तेजो ऽनुप्रेहीत्याह। तेजो वा अग्निः। तेज आज्यं। तेजसैव तेजः समर्द्धयति। अग्निस्ते तेजो मा विनैदित्याहाहिꣳसायै" (ब्रा०।३का०।३प्र०।४अ०) इति। बोधायनः "अथैनद्यथाहृतं प्रति परिहृत्य उत्तरार्द्धे वेद्यै निधायाध्वर्य्युरवेक्षते, अग्नेर्जिह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव" इति। आपस्तम्बः "अग्नेर्जिह्वासीति स्फ्यस्य वर्त्मन्त्सादयति" इति। आहवनीये स्थितस्याज्यस्योदग्देशे समानेतुं स्फ्येन काञ्चिद्रेखां कृत्वा तस्यां सादयेत्। हे आज्य ज्वालारूपाया जिह्वाया उत्पादकत्वादग्नेर्जिह्वासि। देवानां सुखाय भवसीति सुभूः। ईदृशस्त्वमसि। विधत्ते "स्फ्यस्य वर्त्मन्त्सादयति। यज्ञस्य सन्तत्यै"(ब्रा०।३का०।३प्र०।४अ०) इति। तत्तदाहुतिस्थानाय तत्तन्मन्त्रपूर्व्वकग्रहणाय पर्य्याप्तं भवत्विति व्याचष्टे "अग्नेर्जिह्वासि सुभूर्देवानामित्याह। यथा यजुरेवैतत्। धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भवेत्याह। आशिषमेवैतामाशास्ते" (ब्रा०।३का०।३प्र०।४अ०) इति। कल्पः "अथैनदुदग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति, शुक्रमसीति प्रथमं, ज्योतिरसीति द्वितीयं, तेजोसीति तृतीयं" इति। शुक्रं दीप्तिमत्। आज्यस्योत्पवनं विधत्ते "तद्वा अतः पवित्राभ्यामेवोत्पुनाति। यजमानो वा

आज्यं। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति" (ब्रा०।३का०।३प्र०।४अ०) इति। यतो योषिद्वीक्षणेनामेध्यस्याज्यस्य मेध्यत्वाय गार्हपत्याद्यधिश्रयणं कृतं अत एवात्यन्तशुद्ध्यर्थमुत्पुनीयात्। प्रकारविशेषं विधत्ते "पुनराहारं। एवमिव हि प्राणापानौ सञ्चरतः" (ब्रा०।३का०।३प्र०।४अ०) इति। आज्ये स्थापिते पवित्रे प्राच्यां प्रोह्य पुनः पश्चादाहृत्य मध्यादूर्द्ध्वमुत्पुनीयात्। एवं त्रिवारमित्यभिप्रायेण वीप्सार्थो णमुल्प्रत्ययः प्रयुक्तः। मन्त्राणां स्पष्टार्थतां दर्शयति "शुक्रमसि ज्योतिरसि तेजोऽसीत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे" (ब्रा०।३का०।३प्र०।४अ०) इति। प्रतिमन्त्रं पृथक्क्रियां विधत्ते "त्रिर्यजुषा। त्रय इमे लोकाः। एषां लोकानामाप्त्यै" (ब्रा०।३का०।३प्र०।४अ०) इति। त्रित्वमनूद्यार्थवादान्तरमाह "त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय" (ब्रा०।३का०।३प्र०।४अ०) इति। कल्पः "अथ प्रोक्षणीरुत्पुनाति, देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः" इति। तदेतदुत्पवनं पवित्रविशिष्टं विधत्ते "अथाज्यवतीभ्यामपः। रूपमेवासामेतद्वर्णं दधाति। अपि वा उताहुः। यथा ह वै योषा सुवर्णꣳ हिरण्यं पेशलं बिभ्रती रूपिण्यास्ते। एवमेता एतर्हीति" (ब्रा०।३का०।३प्र०।४अ०) इति। याभ्यां पवित्राभ्यामाज्यमुत्पूतं ताभ्यामेवालिप्ताभ्यामप उत्पुनीयात्। व्यत्ययेन स्त्रीलिङ्गत्वं। एतदाज्यं स्वबिन्दुभिरासामपां वर्णविशेषोपेतं सुरूपं सम्पादयति। अथ च ताम्रादिकालुष्यरा-

हित्येन शोभनवर्णोपेतं कटकाद्याकारसौकर्य्येण पेशलं हिरण्यं बिभ्रती योषेवेमा आप आज्यबिन्दुयुक्ता नेत्रप्रिया भवन्ति। मन्त्रगतच्छन्दःप्रभृतिकमनुसन्धेयतया विधत्ते "आपो वै सर्व्वा देवताः। एषा हि विश्वेषां देवानां तनूः। यदाज्यं। तत्रोभयो-र्मीमाꣳसा। जामि स्यात्। यद्यजुषाज्यं यजुषाप उत्पुनीयात्। छन्दसाप उत्पुनात्यजामित्वाय। अथो मिथुनत्वाय। सावि-त्रियर्चा। सवितृप्रसूतं मे कर्मासदिति। सवितृप्रसूतमेवास्य कर्म भवति। पच्छो गायत्रिया त्रिष्षमृद्धत्वाय। अद्भिरेवौष-धीः सन्नयति। ओषधीभिः पशून्। पशुभिर्यजमानं" (ब्रा०। ३का०।३प्र०।४अ०) इति। उदकरूपेण वीर्य्येण देवता शरी-रमुत्पाद्यते। आहुतिरूपेणाज्येन तत् पोष्यते। तस्मादाज्यो-दकयोः सर्व्वदेवतारूपत्वे समे सति किमेतदुभयं यजुषैवोत्पुनी-यात्। उत आप ऋचेति मीमांसायां आलस्यनिवारणार्थमृचेति युक्तं। ऋग्यजुर्भ्यां मिथुनत्वमपि सम्पद्यते। त्रिवारमुत्पूतास्वप्स्वा-दरातिशयात् ताभिरद्भिः क्रमेणौषधिपशुयजमानाः समृद्धा भवन्ति। कल्पः "आदत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रति-ष्ठाप्य तस्यां गृह्णाति। * शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा सम्मृश्यो-त्प्रयच्छति। अथोपभृति गृह्णीते, ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीत्येतेन यजुषाऽष्टगृहीतं गृहीत्वा भूयसो ग्रहान् गृह्णानः कनीय आज्यं गृह्णीते, तथैव सम्मृश्यो-

* गृह्णाति। इति का०।

त्प्रयच्छति। अथ ध्रुवायां गृह्णीते, अर्चिरसि अर्चिषे त्वा धाम्ने धाम्ने दे-
वेभ्यो यजुषे यजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा-
भिपूर्य्य तथैव सम्मृश्योत्प्रयच्छति" इति। अत्र मध्यममन्त्रे धाम्ने
धाम्न इत्यादिकमनुषज्यते। हे आज्य दीप्तं त्वां दीप्तायां तत्त-
न्मन्त्रपूर्व्वकग्रहणाय तत्तद्धाम स्थानाय पर्य्याप्तं गृह्णामि, एवमि-
तरयोर्योज्यं। त्रिष्वपि मन्त्रेषु धामयजुःशब्दयोर्वीप्सायास्तात्प-
र्य्यमाह "शुक्रं त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वार्चिषीत्याह
सर्व्वत्वाय। पर्य्याप्त्या अनन्तरायाय"(ब्रा०।३का०।१प्र०।४अ०)
इति। आहुतिबाहुल्यं सर्व्वत्वं एकैकस्यामाहुतावाज्यबाहुल्यं
पर्य्याप्तिः। आहुतेः कस्या अप्यलोपोऽनन्तरायः। यदेतदा-
ज्यावेक्षणं पूर्व्वमुक्तं, तत्र विशेषं वक्तुं तत् प्रस्तौति "देवासुराः
संयत्ता आसन्। स एतमिन्द्र आज्यस्यावकाशमपश्यत्। तेना-
वैक्षत। ततो देवा अभवन्। परासुराः। य एवंविद्वानाज्य-
मवेक्षते। भवत्यात्मना। परास्य भ्रातृव्यो भवति" (ब्रा०।३का०।
३प्र०।५अ०) इति। अवकाशः प्रकाशको मन्त्रः स चाग्नेर्जि-
ह्वासीत्यादिकः। अभिघारणरूपलकथनेनावेक्षणं प्रशंसति "ब्र-
ह्मवादिनो वदन्ति। यदाज्येनान्यानि हवींष्यभिघारयति।
अथ केनाज्यमिति। सत्येनेति ब्रूयात्। चक्षुर्वै सत्यं। सत्येने-
वैनदभिघारयति" (ब्रा०।३का०।३प्र०।५अ०) इति। वक्तु-
र्विप्रलम्भसम्भवाच्छ्रुतोऽर्थः कदाचिद्व्यभिचरत्यपि द्रष्टुस्तु न
तथेति। द्रष्टुश्चक्षुः सत्यं। शुक्तिरजतरज्जुसर्पादिव्यभिचारस्तु
काचकामलादिदोषप्रयुक्तः। अवेक्षणे निमीलनरूपं विशेषं

विधत्ते "ईश्वरो वा एषोऽन्धो भवितोः। यश्चक्षुषाज्यमवेक्षते। निमील्यावेक्षेत। दाधारात्मंश्चक्षुः। अभ्याज्यं घारयति" (ब्रा०।३का०।३प्र०।५अ०) इति। आज्यस्यादित्यमण्डलवत्तेजस्वित्वा-त्तैरन्तर्य्येवीक्षणेनान्धो भवितुं प्रभुर्भवति। तत्र निमीलनेन स्वात्मन्यविनष्टचक्षुषो* धारणादन्धो न भवति। वीक्षणेनाज्यम-भिघारयति। विधत्ते "आज्यं गृह्णाति। छन्दाꣳसि वा आज्यं। छन्दाꣳस्येव प्रीणाति" (ब्रा०।३का०।३प्र०।५अ०) इति। आज्यस्य यज्ञसाधनत्वेन छन्दस्साहृश्यं। स्रुग्विशेषेणावृत्तिवि-शेषं विधत्ते "चतुर्जुह्वां गृह्णाति। चतुष्पादः पशवः। पशू-नेवावरुन्धे। अष्टावुपभृति। अष्टाक्षरा गायत्री। गायत्रः प्राणः। प्राणमेव पशुषु दधाति। चतुर्ध्रुवायां। चतुष्पादः पशवः। पशुष्वेवोपरिष्टात् प्रतितिष्ठति" (ब्रा०।३का०।३प्र०।५अ०) इति। गायत्र्या रक्षितत्वात् प्राणो गायत्रः। तथा च वाजसनेयिनः समामनन्ति "प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्रीनाम" इति। स्वाधीनत्वेनावरुद्धेषु पशुषु पश्चात्प्रयोगेन प्रतितिष्ठति। ग्राह्यस्याज्यस्य स्रुग्विशेषेण अल्पाधिकपरिमाणं विधत्ते "यजमानदेवत्या वै जुहूः। भ्रा-तृव्यदेवत्योपभृत्। चतुर्जुह्वां गृह्णन् भूयो गृह्णीयात्। अष्टा-वुपभृति गृह्णन् कनीयः। यजमानायैव भ्रातृव्यमुपस्तिं क-रोति" (ब्रा०।३का०।३प्र०।५अ०) इति। उपसमीपे भृत्य-त्वेनास्ति तिष्ठतीत्युपभृत्। सङ्ख्यां पुनः प्रकारान्तरेण स्तौति

* स्वात्मप्रविष्टचक्षुषो० इति का०।

"गौर्वै स्रुचः। चतुर्जुह्वां गृह्णाति। तस्माच्चतुष्पदी। अष्टावुपभृति। तस्मादष्टा शफा। चतुर्ध्रुवायां। तस्माच्चतुःस्तना। गामेव तत्सꣳस्करोति। सास्मै सꣳस्कृतेषमूर्जं दुहे"(ब्रा०।३का०।३प्र०।५अ०) इति। अभिमतदोहनात् स्रुचां गोरूपत्वं सङ्ख्या तदवयवसाम्यं च। ततः स्रुचामाज्यपूर्त्तिरूपो.यः संस्कारस्तेन गामेव संस्करोति। सा च गौः पयोरूपमन्नमाज्यरूपं रसञ्च दुग्धे। गृहीतस्याज्यस्य यथोचितमाकृत्यङ्गत्वं दर्शयति "यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति। प्रयाजानूयाजेभ्यस्तत्। सर्व्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यं" (ब्रा०।३का०।३प्र०।५अ०) इति। पञ्चसु प्रयाजेषु त्रयं जौह्वाज्येन निष्पाद्यं, द्वयं लौपभृतार्द्धेन, शिष्टेन त्वनूयाजाः। यत्र द्रव्यापेक्षा तत्र सर्व्वत्र ध्रौवं। अत्र विनियोगसङ्ग्रहः।

"प्रत्यु स्रुचस्तपेदग्नेर्मृष्टेरूर्द्ध्वं पुनस्तपेत्।
गोष्ठं वाचं तथा चक्षुः प्रजां मार्ष्टि क्रमात् स्रुचः॥
जुहूपभृद्ध्रुवा आशा पत्नीं योक्त्रेण नह्यति।
सुप्रेति पत्न्युपविशेदिमं काले विमोचनं॥
समायुषा* पूर्णपात्रं जपेदथ महिद्वयात्।
घृतं निरूप्य वीक्षेत तेजोऽधिश्रित्य पश्चिमे॥
वह्नौ तेजो हरेदग्निः पूर्व्वाग्नावधिसंश्रयेत्।
अग्ने स्फ्यवर्त्मनि क्षिप्त्वा शुक्ज्योते त्रिभिराज्यकं॥
उत्पूय देवोजलमुत्पुनात्याज्यपवित्रतः।

* समापत्नी इति का० पा०।

पृतज्योर्चिस्त्रिभिराज्यस्य ग्रहो जुह्वादिके त्रये॥

दशमे त्वनुवाकेऽस्मिन् त्रयोविंशतिरीरिताः" इति।

अथ मीमांसा। द्वितीयाध्यायस्य प्रथमपादे चिन्तितं।

"सम्मार्ष्टि स्रुच इत्यत्र किम्प्रधानाख्यकर्म्मता।

गुणकर्म्मत्वमथ वा दृष्टो भावेऽवघातवत्॥

गुणत्वं न हि सम्भाव्यं प्राधान्यन्तु प्रयाजवत्।

अदृष्टकल्पनेनापि गुणत्वं स्याद्द्वितीयया"॥ इति।

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः सम्मार्जनमाम्नायते स्रुचः सम्मार्ष्टीति। तत्र सम्मार्जनं प्रधानकर्म्म। कुतः। गुणकर्म्मलक्षणरहितत्वात् प्रधानकर्म्मलक्षणयुक्तत्वाच्च। तथा हि अवघातेन व्रीहीणां तुषविमोको दृष्टः संस्कारः तथा सम्मार्जनेन जुह्वादिषु कश्चिदतिशयं न पश्यामः। अतोऽवघातवद्गुणकर्म्मत्वं नास्ति। यैस्तु द्रव्यञ्चिकीर्ष्यते गुणस्तत्र प्रतीयत इति गुणकर्म्मलक्षणस्याभावात् प्रयाजादिवददृष्टार्थत्वेन प्रधानकर्म्मत्वमस्ति। यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि इत्यस्य प्रधानकर्म्मलक्षणस्य सम्भवादिति प्राप्ते ब्रूमः। स्रुच इति द्वितीया कर्म्मकारकविहिता। कर्म्मत्वञ्च ईप्सिततमत्वे सति भवति। कर्तुरीप्सिततमं कर्म्म (पा०१।४।४९) इति। कर्म्मसञ्ज्ञाविधानात् क्रतुसाधनत्वेन च स्रुचां युक्तमीप्सिततमत्वं। अतः प्रधानभूताः स्रुचः। तथा सति सम्मार्जनक्रियाया गुणकर्म्मत्वमवघातवद्भविष्यति। यदि स्रुक्षु दृष्टार्थो न स्यात् तर्ह्यपूर्व्वं कल्पनीयं। द्वादशाध्यायस्य प्रथमपादे चिन्तितं।

"पत्नीसन्नहनं कार्य्यं चोदकादिति चेन्न तत्।
बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः" ॥ इति।

दर्शपूर्णमासविकारेषु सौमिकेषु प्रायणीयादिषु चोदकातिदेशात् पत्नीसन्नहनं कार्य्यमिति चेत्। मैवं। प्रसङ्गसिद्धत्वात्। यद्यदृष्टाय बन्धः, यदि वा वासोधारणं दृष्टप्रयोजनं, उभयथापि सौमिकेन योक्त्रबन्धनेनैव तत् सिध्यति, योक्त्रेण पत्नीं सन्नह्यतीति हि सोमे विधीयते। तस्मादिष्टं पत्नीसन्नहनं पृथङ्न कार्य्यं। नवमाध्यायस्य तृतीयपादे चिन्तितं।

"पत्नीमिति द्विपत्न्यादावूह्यं नो वोह्यतेऽर्थतः।
नोपदेशस्य सामान्यादतिदेशात् प्रवृत्तितः" ॥ इति।

दर्शपूर्णमासयोर्मन्त्र आम्नायते पत्नीं सन्नह्येति। तत्रैकपत्नीकस्य यजमानस्य प्रयोगे समवेतार्थ एकवचनान्तः पत्नीशब्दः। स च द्विपत्नीकस्य बहुपत्नीकस्य च प्रयोगेऽर्थवशादूहनीय इति चेत्। मैवं। किमुपदेशप्राप्तस्योहः, अतिदेशप्राप्तस्य वा। नाद्यः। उपदेशस्य सर्व्वप्रयोगसाधारणत्वात्। यद्येकपत्नीकप्रयोगार्थमेवायं मन्त्रोपदेशः स्यात् तदानीमेकवचनं विवक्ष्येत। न त्वेवमस्ति। अन्यथा द्विबहुपत्नीकप्रयोगयोर्मन्त्र एव नोपदिश्येत। तत्र कुत ऊहानूह चिन्तावकाशः। साधारणोपदेशे सर्व्वप्रयोगसमवेतार्थतया पत्नीमितिपदे प्रातिपदिकं कर्म्मकारकविभक्तिश्चेत्युभयमेव विवक्षितं। एकवचनं त्वदृष्टार्थतया सर्व्वप्रयोगेषु यथावस्थितमेव पठनीयं। नाप्यतिदेशप्राप्तस्योह इति द्वितीयः पक्षः।

द्विबहुपत्नीकप्रयोगयोरविकृतित्वेनातिदेशायोगात्। तस्मादत्र नास्त्यूहः। तत्रैवान्यच्चिन्तितं।

"ऊह्यो नो वैष विकृतावूह्यो पाठो न पाशवत्।
नादृष्टछान्दसत्वाभ्यां पाठे छान्दसता न हि"॥इति।

एकवचनान्तः पत्नीमन्त्रो विकृतौ द्विबहुपत्नीकप्रयोगयोरर्थानुसारेण ऊहनीयः। कुतः। पाठाभावात्। प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्व्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः। विकृतौ तु बाधकस्य पाठस्याभावेन अस्मदायत्ते प्रयोगे अर्थानुसारेणोहो युक्तः। अत एव पूर्व्वत्र द्विपशुयुक्तायां विकृतौ "अदितिः पाशं प्रमुमोक्तु अदितिः पाशान् प्रमुमोक्तु"इत्येकवचनान्तो बहुवचनान्तस्य पाशमन्त्र ऊहित इति चेत्। मैवं। पत्नीमित्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितपाठे सति विकृतावप्यदृष्टार्थं यथावस्थितस्यैव पठितव्यत्वात्। अथोच्येत। प्रकृतौ छान्दसत्वेनैकवचनमेव, व्यत्ययेन द्वित्वबहुत्वयोरर्थयोर्वर्त्तत इति। एवं तर्हि विकृतावप्यूहमन्तरेणैव द्वित्वबहुत्ववाचित्वान्मा भूदूहः। न चैवं पाशेऽप्यूहो मा भूदिति शङ्कनीयं, प्रकृतावेकवचनबहुवचनयोरेकस्मिन्नेव पाशे वैदिकप्रयोगदर्शनात्, द्वित्वे तु तदभावात्। तस्मात् पाशस्योहो विकृतावस्ति न तु पत्नीशब्दस्य। यद्यप्यस्मिन्ननुवाके पत्नीं सन्नह्येत्ययं प्रैषमन्त्रो नाम्नातः तथापि दर्व्वानुवाकब्राह्मणे तदाम्नानादिह पत्नीसन्नहनप्रसङ्गेन विचारद्वयं दर्शितं। चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

"जुह्वूपभृद्ध्रुवास्थाज्यं सर्व्वार्थं वा व्यवस्थितं।
सर्व्वार्थमविशेषात् स्यात् प्रयाजार्थं हि जौहवं॥
प्रयाजानूयाजहेतुःस्यादौपभृतमाज्यकं।
शेषमन्यार्थमित्येषा व्यवस्था वचनैर्मता"॥ इति।

"चतुर्जुह्वां गृह्णाति। अष्टावुपभृति। चतुर्ध्रुवायां" इत्येतेषु ग्रहणवाक्येषु एतदर्थमिति विशेषनियामकस्याश्रवणात् पात्रत्रयगतमाज्यं सर्व्वार्थमिति चेत्। मैवं। "यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्" इत्यादिभिर्वाक्यैर्व्यवस्थावगमात्। तत्रैवान्यच्चिन्तितं।

"अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधिः।
चतुर्द्वयग्रहो वाद्यः स्यादष्टश्रुतिमुख्यता॥
चतुर्गृहीतं होमाङ्गं फलवत्वान्न बाध्यते।
चतुर्द्वित्वं लक्ष्यतेऽतः सहानीत्यर्थमष्टता"॥ इति।

ग्रहणवाक्ये चतुर्जुह्वां गृह्णातीत्यत्र यथा चतुःसङ्ख्याविशिष्टमेकहविर्ग्रहणं विवक्षितं। तथैव अष्टावुपभृतीत्यत्रापि अष्टसङ्ख्याविशिष्टमेकहविर्ग्रहणं विधातव्यं। तथा सत्यष्टत्वश्रुतेर्मुख्यत्वलाभात् अष्टसङ्ख्यावयवभूतयोश्चतुःसङ्ख्ययोर्विधाने सति अष्टत्वशब्दस्यावयवलक्षणा प्रसज्यतेति प्राप्ते ब्रूमः। प्रसज्यतां नाम लक्षणा। मुख्यार्थस्वीकारे होम*वाक्यविरोधापत्तेः। चतुर्गृहीतं जुहोतीत्यनारभ्यश्रुतं वाक्यं होममात्रोद्देशेन चतुर्गृहीतं विदधाति। यद्यप्येतत् सर्व्वं होमविषयतया सामान्यरूपं, औपभृतन्तु प्रयाजानूयाजविषयतया विशेषरूपं, तथापि होमस्य फलवत्वेन

* होवं इति का० पा०।

प्राधान्यात् ग्रहणस्य होमार्थत्वेनोपसर्जनत्वात् प्रधानानुसारेण चतुर्गृहीतमेव युक्तं। न तूपसर्जनानुसारेणाष्टगृहीतं। तस्मादुपभृति चतुर्गृहीतद्वयं विधीयते। तत्रैकं चतुर्गृहीतं हविस्त्वतुर्थपञ्चमप्रयाजार्थं अवशिष्टं त्वनूयाजार्थं। नन्वेवं सति चतुर्गृहीतं न सिध्येत्। अथ तदपि वाक्यान्तरेण विधीयेत। तदानीमुपभृतः प्रथमेन चतुर्गृहीतेनावरुद्धत्वात् द्वितीयस्मै पात्रान्तरमन्विष्येत। यद्युपभृति चतुर्गृहीतं विधीयेत तदा चतुर्गृहीतद्वयस्य पृथगेवानुष्ठानात् उपभृत्येकप्रयत्नानयनं न सिध्येत्। अत उभयस्य सहोपभृत्यानयनार्थं अष्टावुपभृतीत्युच्यते। तस्मात् साहित्यार्थमष्टशब्दप्रयोगेऽपि हविष्टसिद्धये द्वे चतुर्गृहीते अत्र विधीयते।

अथात्र व्याकरणं। प्रत्युष्टमित्यादिषु स्वरागताः। वाजिनमित्यत्र प्रत्ययस्वरः। सपत्नान् सहत इति सपत्नसाह इत्यत्राणो प्रत्ययान्तत्वात् प्रत्ययस्वरः। सपत्नसाहीमित्यत्र उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। आशासानेत्यत्र शानचश्चित्वादन्तोदात्तत्वे प्राप्ते लसार्व्वधातुकानुदात्तत्वे (पा० ६।१।१८६) यासादि (पा० ६।२।१४४) स्वरशेषे समासे कृत्स्वरः। सौभाग्यशब्दस्य यञ्प्रत्ययान्तस्य ञित्स्वरः। व्रतमनुगता अनुव्रतेत्यत्राव्ययपूर्व्वपदप्रकृतिस्वरः। सुकृतायेत्यत्र गतिरनन्तर (पा० ६।२।४९) इति गतिस्वरत्वे प्राप्ते तदपवादः। सूपमानात् क्तः (पा० ६।२।१४५)। सु इत्येतस्मादुपमानात् परं क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुप्रजस इत्यत्राभिच्प्रत्ययान्तस्य चि-

स्वरे समासे कृत्स्वरः। शोभनः पतिर्यासां ताः सुपत्नीरित्यत्र नञ्सुभ्यां (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तस्यापवादः। आद्युदात्तं द्व्यच्छन्दसि (पा० ६।२।११९)। आद्युदात्तं यद्व्यचकं यदुत्तरपदं तद्बहुव्रीहौ समासे सोरुत्तरमाद्युदात्तं भवति। सुकेत इत्यत्रापि तद्वत्। महीनामित्यत्र ह्रस्वाच्छन्दसि बहुलं (पा० ६।१।१७८) ह्रस्वान्ताच्छन्दसि विषये बहुलं नाम् उदात्तो भवति। धाम्ने धाम्न इत्यत्र अनुदात्तञ्च (पा० ८।१।३) इत्याम्रेडितमनुदात्तं। ज्योतिरित्यस्य असुन्प्रत्ययान्तत्वान्नित्स्वरः॥

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः॥

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा वेदिरसि बर्हिषे त्वा स्वाहा बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत विष्णोःस्तूपोऽस्यूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यो गन्धर्वोऽसि विश्वावसुर्विश्वस्माद्दीषतो यजमानस्य परिधिरिड ईडित इन्द्रस्य बाहुरसि॥ १॥

दक्षिणो यजमानस्य परिधिरिड ईडितो मित्राव-

हस्तौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्म्मणा यजमानस्य परिधिरसि इडितः सूर्य्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्या वीतिहोत्रं त्वा कवे द्युमन्त सर्मिधीमह्यग्ने बृहन्तमध्वरे विशो यन्त्रे स्थो वसूनाँ रुद्राणामादित्यानाँ सदसि सीद जुहूरुपभृद्ध्रुवासि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदैता असदन् सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियं ॥ २ ॥

बाहुरसि प्रिये सदसि पञ्चदश च ॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥

दशमेऽनुवाके आज्यहविषोर्ग्रहणमुक्तं। एकादशे इध्मा बर्हिःपूर्वकं वेद्यां हविरासादनमुच्यते। तत्र कृष्णोऽस्याखरेष्ठ इति आद्यो मन्त्रः। ततः पूर्वमापो देवीरित्ययमुदकाभिमन्त्रणमन्त्र आम्नातव्य इत्यभिप्रेत्य पूर्ववद्व्याचष्टे "आपो देवीरग्रे पुवा अग्रे गुव इत्याह। रूपमेवासामेतन्महिमानं व्याचष्टे। अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयति। अग्रे यज्ञपतिं। युष्मानिन्द्रो वृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्य इत्याह। वृत्रँ ह हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। संज्ञामेवासामेतन्महिमानं व्या-

चष्टे । प्रोक्षितास्थेत्याह । तेनापः प्रोक्षिताः" ब्रा०।३का०।३-प्र०।६अ०) इति। कल्पः "अथैध्मं विस्रस्य प्रोक्षति, कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा" इति। हे इध्म वह्निप्रियतमत्वात् तदभेदोपचारेण कृष्णो मृगोऽसि। तथा वनस्पतिस्थोऽसि। अतोऽग्नये प्रियं त्वां प्रोक्षामि तदेतत् कर्त्तव्यमिति स्वकीया सरस्वती ब्रूते। सोऽयमर्थः स्वाहाशब्दवाच्यः। अतएवाग्निहोत्रब्राह्मणे प्रजापतिः स्वकीयया वाचा सह संवाद एवमाम्नायते "तं वागभ्यवदज्जुहुधीति। सोऽब्रवीत्। कस्त्वमसीति। सैव ते वागित्यब्रवीत्। सोऽजुहोत् स्वाहेति। तत्स्वाहाकारस्य जन्म" इति। अथ वा नानार्थवाची स्वाहाशब्दोऽत्र प्रोक्षणं ब्रूते। अथोक्तमन्त्रार्थं दर्शयति "अग्निर्देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। स वनस्पतीन् प्राविशत्। कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह। अग्नय एवैनं जुष्टं करोति। अथो अग्नेरेव मेधमवरुन्धे" (ब्रा०।३-का०।३प्र०।६च०) इति। कल्पः "वेदिं प्रोक्षति, वेदिरसि बर्हिषे त्वा स्वाहा" इति। हे वेदे त्वं लब्धासि। "तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वं" इति श्रुतेः। अथो बर्हिर्धारयितुं त्वां प्रोक्षामि। रूपकेणाधाराधेयभावं दर्शयति। "वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै बर्हिः। पृथिवी वेदिः। प्रजा एव पृथिव्यां प्रतिष्ठापयति" (ब्रा०।३का०।३प्र०।६अ०) इति। कल्पः "बर्हिः प्रोक्षति, बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा" इति। हे दर्भ त्वं वेदेर्बृंहणमसि। अतस्त्वयि स्रुचः स्थापयितुं त्वां प्रोक्षामि। पूर्ववदाधारत्वं दर्शयति "बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह।

प्रजा वै बर्हिः। यजमानः स्रुचः। यजमानमेव प्रजासु प्रतिष्ठापयति" (ब्रा०।३का०।३प्र०।६अ०) इति। कल्पः "अन्तर्वेदि पुरो ग्रन्थि बर्हिरासाद्य, दिवे त्वा इत्यग्रं प्रोक्षति, अन्तरिक्षाय त्वा इति मध्यं, पृथिव्यै त्वा इति मूलं" इति। बर्हिष्येव लोकत्रयं भावयित्वा लोकार्थता प्रोक्षणस्येत्याह "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षति। एभ्य एवैनं लोकेभ्यः प्रोक्षति" (ब्रा०।३का०।३प्र०।६अ०) इति। विधत्ते "अथ ततः सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। प्रजा वै बर्हिः। यथा सूत्यै काल आपः पुरस्ताद्यन्ति। तादृगेव तत्" (ब्रा०।३का०।३प्र०।६अ०) इति। अग्रादित्रयप्रोक्षणानन्तरं यः शेषस्तेन प्रोक्षणशेषेणोदकेन स्वयं हस्तस्थितप्रोक्षणपात्रेण सह बर्हिषः पुरस्ताद्धस्तं प्रसार्य्य उदकं यथा प्रत्यक् सिच्यते तथा क्षिपेत्। यथा मनुष्याणां गवादीनाञ्च प्रसूतिकाले प्रथमत आपो निर्गच्छन्ति तत्प्रत्युक्षणं* तादृगेव भवति। कल्पः "अतिशिष्टाः प्रोक्षणीर्दक्षिणायै श्रोणेरोत्तरस्याः श्रोणेः सन्ततं निनयति, स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत" इति। हे जल मया त्वं पितृभ्यो दत्तमसि, अतो बर्हिष्यवस्थितेभ्यः पितृभ्यो रसरूपं भव। हे जलावयवा भवदीयेन रसरूपेण पृथिवीं गच्छत। मन्त्रव्याख्यानपूर्व्वकं विधत्ते "स्वधा पितृभ्य इत्याह। स्वधाकारो हि पितृणां। ऊर्ग्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति सन्तत्यै। मासा वै पितरो बर्हिषदः।

* तत्प्रोक्षणं इति का०।

मासानेव प्रीणाति। मासा वा ओषधीर्वर्द्धयन्ति। मासाः पचन्ति समृध्यै। अनतिस्कन्दन् ह पर्जन्यो वर्षति। यत्रैतदेवं क्रियते। ऊर्जा पृथिवीं गच्छेतेत्याह। पृथिव्यामेवोर्जं दधाति। तस्मात् पृथिव्या ऊर्जा भुञ्जते" (ब्रा०।३का०।३प्र०।६अ०) इति। स्वधाकारः पितॄणां प्रिय इत्ययमर्थो वाजसनेयिशाखायां प्रसिद्धः "देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च हन्तकारं मनुष्याः स्वधाकारं पितरः" इति श्रुतिः। पूर्वमुदाहृता वेदर्दक्षिणश्रोणीमारभ्योत्तरश्रोणीपर्यन्तेन निनयनेन यजमानस्य अविच्छिन्ना प्रजा भवति। मासाभिमानिनो देवा एव बर्हिषदः पितर इति। तत्प्रीतौ सत्यामभिमन्तव्यः कालात्मका मासा ओषधीर्वर्द्धयित्वा फलं सम्पादयन्ति। ततोऽन्नसमृद्धिः। यस्मिन् देशे निनयनमेवं क्रियते तस्मिन् देशे पर्जन्योऽतिवृष्ट्या सस्यमविनाशयन् यथाकालं यथोचितं वर्षति। उदकसस्ययोः पृथिवीगतत्वात् पृथिवीजन्येन अन्नरसेन भोगं सम्पादयन्ति। शैथिल्यं विधत्ते "ग्रन्थिं विस्रꣳसयति। प्रजनयत्येव तत्" (ब्रा०।३का०।३प्र०।६अ०) इति। बन्धनरूपगर्भेऽवस्थितस्य बर्हिषो विस्रंसनमेवोत्पादनं। शिथिलस्य विमोचनं विधत्ते "ऊर्द्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्च मा यच्छति। तस्मात् प्राचीनꣳ रेतो धीयते। प्रतीचीः प्रजाजायन्ते" (ब्रा०। ३का०।३प्र०।६अ०) इति। पश्चात् प्राञ्चमुपगूहतीति हि पूर्वं विहितस्य प्राञ्च उपगूढस्य ग्रन्थेरयं धृत्वोर्द्ध्वमुत्क्षिप्य प्रत्यङ्मुखत्वेन कर्षेत्। कल्पः "विष्णोःस्तूपोऽसि, इति कर्षन्निवाहवनीयं

प्रतिप्रस्तरमुपादत्ते” इति। हे प्रस्तर त्वं व्यापिनो यज्ञस्य म-ज्ञातरूपो धारकोऽसि। तदेतद्दर्शयति “विष्णोस्तूपोऽसीत्याह। यज्ञो वै विष्णुः। यज्ञस्य धृत्यै” (ब्रा०।३का०।३प्र०।६अ०) इति। विधत्ते “पुरस्तात् प्रस्तरं गृह्णाति। मुख्यमेवैनं करोति” (ब्रा०।३का०।३प्र०।६अ०) इति। वेदेः पूर्वभागे ब्रह्मा यजमानो वा प्रस्तरं धारयेत्। तच्च सूत्रेऽभिहितं “ब्रह्मा प्रस्तरं धारयति यजमानो वा” इति। धारणाय मुखमभानीन्नत्यं हस्तेनाभिनीयं विधत्ते “इयन्तं गृह्णाति। प्रजापतिना यज्ञमुखेन सम्मितं” (ब्रा०।३का०।३प्र०।६अ०) इति। वेदिखननवाक्य इवायमभिनयः प्रादेशमात्रपरत्वेन व्याख्येयः। तदेवानूद्य प्रशंसति “इयन्तं गृह्णाति। यज्ञपरुषा सम्मितं। इयन्तं गृह्णाति। एतावद्वै पुरुषे वीर्य्यं। वीर्य्यसम्मितं” (ब्रा०।३का०।३प्र०।६अ०) इति। परुः पर्व्व। तच्च यज्ञपुरुषस्य हस्तकूर्परयोरुभयतः प्रादेशमात्रं भवति। प्रसारितयोरङ्गुष्ठकनिष्ठिकयोरङ्गुल्योर्यावन्मध्यं तावदेव पुरुषे सामर्थ्यं। हानोपादानाद्यशेषव्यापाराणां तत्रैव निष्पत्तेः। पचान्तरं विधत्ते “अपरिमितं गृह्णाति। अपरिमितस्यावरुध्यै” (ब्रा०।३का०।३प्र०।६अ०) इति। यावदोन्नत्ये स्वस्य सौकर्य्यं तावदेव गृह्णीयात्। तत्रापरिमितफलसम्प्राप्तये भवति। उत्पवनहेतोः पवित्रयोः प्रस्तरे स्थापनं विधत्ते “तस्मिन् पवित्रे अपि सृजति। यजमानो वै प्रस्तरः। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति” (ब्रा०।३का०।३प्र०।६अ०) इति। प्रस्तरस्य यजमानत्वयज्ञसिद्धिहेतुत्वात

तदभेदोपचारः। कल्पः "बर्हिर्वेद्याᳪँस्तृणाति, देव बर्हिः, ऊर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः" इति। अत्र शाखान्तरानुसारेण देवबर्हिरित्येतत् पदं पूरितं। हे देव बर्हिः त्वं कम्बलवन्मृदुरोमरूपः देवानां सुखे नासितुं स्थानभूतं त्वां वेद्यां स्तृणामि। व्याचष्टे "ऊर्णाम्रदसं त्वा स्तृणामीत्याह। यथा यजुरेवैतत्। स्वासस्थं देवेभ्य इत्याह। देवेभ्य एवैनत्स्वासस्थं करोति" (ब्रा०। ३का०।३प्र०।६अ०) इति। विधत्ते "बर्हिस्तृणाति। प्रजा वै बर्हिः। पृथिवी वेदिः। प्रजा एव पृथिव्यां प्रतिष्ठापयन्ति"(ब्रा०।३का०। ३प्र०।६अ०) इति। तत्रैव विशेषं विधत्ते "अनतिदृश्नᳪँ स्तृणाति। प्रजयैवैनं पशुभिरनतिदृश्नं करोति" (ब्रा०।३का०।३प्र०।६अ०) इति। भूमिस्वरूपमत्यन्तं यथा न दृश्यते तथा बहुलं स्तृणीयात्। बहुप्रजा पश्वावृतो यजमानोऽपि वैदेशिकैरदृश्यः प्रभुर्भवति। कल्पः "अथ प्रस्तरपाणिः प्रागभिसृत्य परिधीन् परिदधाति 'गन्धर्व्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इति मध्यमं, 'इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडित इति दक्षिणं, 'मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्म्मणा यजमानस्य परिधिरिड ईडित इत्युत्तरं" इति। हे मध्यमपरिधे त्वं विश्वावसुनामको गन्धर्व्वोऽसि तद्वद्रक्षकत्वात्। तेन सर्व्वस्माद्धिंसकाद्यजमानस्य परिपोषकोऽन्नरूपस्त्वं भव, एवमुत्तरयोर्योज्यं। ध्रुवेण धर्म्मणा अनुष्ठीयमाननित्यकर्म्मनिमित्तं। विधिपूर्व्वकं व्याचष्टे "धारयन् प्रस्तरं परिधीन् परिदधाति। यजमानो वै प्रस्तरः।

यजमान एव तत् स्वयं परिधीन् परिदधाति। गन्धर्व्वोऽसि विश्वावसुरित्याह। विश्वमेवायुर्यजमाने दधाति। इन्द्रस्य बाहु-रसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। मित्रा-वरुणौ त्वोत्तरतः परिधत्तामित्याह। प्राणापानौ मित्राव-रुणौ। प्राणापानावेवास्मिन् दधाति" (ब्रा०।३का०।३प्र०।६अ०) इति। बोधायनः "अथ सूर्य्येण पुरस्तात् परिदधाति, सू-र्य्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै" इति। आपस्तम्बः "आहवनीयमभिमन्त्र्य, कस्याश्चिदभिशस्त्यै" इति। सर्व्वस्या अपि हिंसाया अनेनैवाभिप्रायेण व्याचष्टे "सूर्य्यस्त्वा पुरस्तात् पात्वित्याह। रक्षसामपहत्यै। कस्याश्चिदभिशस्त्या इत्याह। अपरिमितमेवैनं पाति" (ब्रा०।३का०।३प्र०।६अ०) इति। कल्पः "ऊर्द्ध्वे आघारसमिधावादधाति, वीतिहोत्रं त्वा कवेद्युमन्तꣳ समिधीमह्यग्ने बृहन्तमध्वरे" इति। हे विद्वन्नग्ने त्वामध्वरं नि-मित्तीकृत्य समिधीमहि। कीदृशं त्वां। वीतये व्याप्तये समृद्धये होत्रं होमो यस्य तं वीतिहोत्रं। एवमेवार्थं दर्शयति "वीति-होत्रं त्वा कव इत्याह। अग्निमेव होत्रेण समर्द्धयति। द्युम-न्तꣳ समिधीमहीत्याह समिध्यै। अग्ने बृहन्तमध्वर इत्याह वृध्यै" (ब्रा०।३का०।३प्र०।६अ०) इति। कल्पः "अन्तर्वेद्युदी-चीनाग्रे विधृती तिरश्ची आसादयति, विशो यन्त्रे स्थः" इति। हे दर्भरूपे विधृत्यौ युवां प्रजाया नियामिके भवथः। एत-देव दर्शयति "विशो यन्त्रे स्थ इत्याह। विशां धृत्यै" (ब्रा०। ३का०।३प्र०।६अ०) इति। विधत्ते "उदीचीनाग्रे निदधाति

प्रतिष्ठित्यै" (ब्रा०।३का०।३प्र०।६ अ०) इति। कल्पः "वसूनाᳬ रुद्राणामादित्यानाᳬ सदसि सीद, इति तयोः प्रस्तरमत्या द-धाति" इति। विधृतिद्वयमेव सद इत्यभिप्रेत्याह "वसूनाᳬ रुद्राणामादित्यानाᳬ सदसि सीदेत्याह। देवतानामेव सदने प्रस्तरᳬ सादयति" (ब्रा०।३का०।३प्र०।६ अ०) इति। कल्पः "प्रस्तरे जुहूᳬ सादयति, जुहूरसि घृताचीनाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेति। उत्तरां उपभृतं उपभृदसि घृताचीनाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेति। उत्तरां ध्रुवां ध्रुवासि घृ-ताचीनाम्ना प्रियेण नाम्ना प्रिये सदसि सीद" इति। प्रथमद्वि-तीययोरपि घृताचीत्यादिकमनुषज्यते। व्याचष्टे "जुहूरसि घृ-ताचीनामेत्याह। असौ वै जुहूः। अन्तरिक्षमुपभृत्। पृथिवी ध्रुवा। तासामेतदेव प्रियं नाम। यद्घृताचीति। यद्घृताची-त्याह। प्रियेणैवैना नाम्ना सादयति" (ब्रा०।३का०।३प्र०।६ अ०) इति। कल्पः "अथ स्रुचः मन्त्रा अभिमृशति, एता अस-दन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञ-पतिं पाहि मां यज्ञनियं" इति। लोके अवश्यम्भावित्रिफलं त-द्रूपत्वेन भावीति प्रस्तरे स्रुचोऽवस्थिताः। एतदेव दर्शयति "एता असदन्त्सुकृतस्य लोक इत्याह। सत्यं वै सुकृतस्य लोकः। सत्य एवैनाः सुकृतस्य लोके सादयति। ता विष्णो पाहीत्याह। यज्ञो वै विष्णुः। यज्ञस्य धृत्यै। पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह। यज्ञाय यजमानायात्मने। तेभ्य एवाशिषमाशास्तेऽनार्त्यै" (ब्रा०।३का०।३प्र०।६ अ०)

इति। धृतिर्यज्ञपुरुषकर्तृकं स्रुचां पोषणं। अत्र विनियोगसङ्ग्रहः।

"कृष्ण इध्मं वेदिर्वेदिं बर्हिर्बर्हिः समुच्चति।
दिवे त्रिभिर्बर्हिषोऽग्रमध्यमूलानि चोच्चति॥
स्वधा शेषं चिपेद्भूमौ विष्णोः प्रस्तरमुन्नयेत्।
ऊर्णाम्रदस्तृतिर्गन्धस्त्रिभिस्त्रीन् परिधीन् चिपेत्॥
सूर्य्योऽभिमन्त्र्य पूर्व्वाग्निं वीत्याघारसमित्स्थितिः।
विशो आधाय विधृती वसु प्रस्तरमादनं॥
जुह्वपभृभिरासाद्य स्रुच एतास्तु मन्त्रयेत्।
एकादशानुवाकेऽस्मिन्नीरिता मन्त्रविंशतिः"॥ इति।

अथ मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः।
सामानाधिकरण्येन स्यादेकस्यान्यनामता॥
गुणो वा यजमानोऽस्तु कार्य्ये प्रस्तरलक्षिते।
अंशांशित्वाद्यभावेन पूर्व्ववन्नात्र संस्तुतिः॥
अर्थभेदादनामत्वं गुणश्चेत् प्रच्छियेत सः।
यागसाधकताद्वारा विधेयः प्रस्तरस्तुतिः"॥ इति।

इदमाम्नायते यजमानः प्रस्तर इति। अत्र यजमानस्य प्रस्तरशब्दो नामधेयं प्रस्तरस्य वा यजमानशब्दो नामधेयं। कुतः। उद्भिद्यागेनेत्यादाविव सामानाधिकरण्यादित्येकःपक्षः। गुणविधिरेष इत्यपरः। तथापि यजमानकार्य्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावात् प्रस्तरगुणकार्य्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद्यजमानरूपो गुणो विधीयते। एवं सति

पश्चात्कृतस्य प्रस्तरशब्दस्य कार्य्यालक्षकत्वेऽपि प्रथमश्रुतौ यजमानशब्दो मुख्यवृत्तिर्भविष्यति। न चात्र पूर्व्वन्यायेन स्तुतिः सम्भवति। अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात्। "वायुर्वै क्षेपिष्ठा देवता ऊर्जोऽवरुध्यै" इत्यादिवत् स्तुतिरिति चेत्। न। क्षिप्रत्वादिधर्म्मवत् कस्यचिदुत्कर्षस्याप्रतीतेः। तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः। गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्न नामत्वं युक्तं। गुणपक्षे त्वग्नौ प्रहरणस्य प्रस्तरविषयत्वाद्यजमाने प्रहृते सति कर्मलोपः स्यात्। तस्माद्विधेयः प्रस्तरो यजमानशब्देन स्तूयते। यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्य्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते। एवं यजमानो वा एककपाल इत्यादिषु द्रष्टव्यं।

अथ व्याकरणं। कृष्णस्यामृगाख्या चेत् (फि०कौ०फि०१पा०) इति कृष्णशब्द आद्युदात्तः। आखरेष्ठ इत्यत्र प्रातिपदिकस्वरेण वा समासस्वरेण वा कृत्स्वरेण वा कृत्प्रत्ययान्तत्वेन थाथादिस्वरेण वा अन्तोदात्तत्वं। वेदिशब्द इन्प्रत्ययान्तत्वेन नित्स्वरः। विष्णुशब्दोऽनुप्रत्ययान्तः। स्तुपशब्दो वृषादिः। ऊर्णाशब्दस्य वृषादित्वादाद्युदात्तत्वे सति उपमानपूर्व्वपदप्रकृतिस्वरत्वं। स्वासस्थमित्यत्र नञ्सुभ्यां (पा०६।२।१७२) इत्यन्तोदात्तः। विश्वावसुरित्यत्र बहुव्रीहौ विश्वं संज्ञायां (पा०६।२।१०६) इति पूर्व्वपदान्तोदात्तत्वं। ईवतो यजमानस्येत्युभयत्र सर्वार्व्व-

धातुकस्वरः। मित्रावरुणावित्यत्र देवताद्वन्द्वस्वरः। उत्तरत इत्यत्र अतसुच् प्रत्ययान्तत्वेन चित्स्वरः। धर्मणेत्यत्र मनिन् प्रत्ययान्तत्वान्नित्स्वरः। सूर्यशब्दो निपातत्वादाद्युदात्तः। कस्या इत्यत्र साबेकाचः० (पा०६।१।१६८) इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्त्साववर्ण० (पा०६।१।१८२) इति प्रथमैकवचने साववर्णान्तत्वेन निषिध्यते। अभिशस्त्या इत्यत्र तादौ च निति० (पा०६।२।५०) इति गतेः प्रकृतिस्वरः। वीतिहोत्रमित्यत्र मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (पा०३।३।९६) इति। विधातोरुदात्तत्वे क्तिन्प्रत्यये सति बहुव्रीहि स्वरः। घृताचीत्यत्र कृत्स्वरः।

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः॥ ॥

भुवनमसि विप्रथस्वाऽग्ने यष्टरिदं नमः। जुह्वे ह्यग्निस्त्वाह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविताह्वयति देवयज्याया अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतं विष्णोः स्थानमसीत इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा बृहद्भाः।पाहि माग्ने दुश्चरितादामा सुच-

रिते भज मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् ॥ १ ॥

अह्रुत एकविंशतिश्च ॥ १२ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः ॥

एकादशेऽनुवाके इध्माबर्हिःस्रुचां प्रोक्षणादितन्त्रमुक्तं। तथाज्यस्य हविषा पूर्णानां स्रुचां यदासादनमुक्तं तेन पुरोडाशसान्नाय्ययोरपि वेद्यामासादनमुपलक्ष्यते। तन्मन्त्रास्तच्छिद्रकाण्डादौ द्रष्टव्याः। सर्व्वेषु हविष्वासादितेष्वग्नावभ्याहितानामिध्मकाष्ठानामुपरि होतुमाघारो द्वादशेऽभिधीयते। कल्पः "अथाग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति, भुवनमसि विप्रथस्वाग्ने यष्टरिदं नमः" इति। जुहूपभृतोः पूर्व्वस्मिन् देशे आहवनीयं प्रत्ययमञ्जलिः। हे यागनिष्पादकाग्ने त्वं भुवनमसि, भवन्त्यस्माद्भूतानीति भुवनं, अतो भूतकारणत्वाद्विस्तृतो भव। तुभ्यमिदमञ्जलिरूपं नमोऽस्तु। अस्य मन्त्रस्य द्वितीयाघारशेषत्वादमन्त्रकस्य प्रथमाघारस्य पूर्व्वमनुष्ठेयत्वात् तं विधित्सुः ततः पूर्व्वं होतारं प्रति प्रैषमन्त्रमुत्पादयति "अग्निना वै होत्रा देवा असुरानभ्यभवन्। अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै" (ब्रा०।३का०।२प्र०।७अ०) इति। हे होतरिध्मकाष्ठैः समिध्यमानस्याग्नेरनुरूपान् मन्त्रान् ब्रूहि। तमिमं

प्रैषमध्वर्य्युर्ब्रूयात्। देवाः पूर्व्वं स्वकीयेषु यागेषु वह्निं होतारं कृत्वा तन्मुखेनासुरानजयन्। अतोऽद्यापि वैरितिरस्काराय समन्त्रकैः काष्ठैरग्निः प्रज्वलितः कार्य्यः। संख्याविशिष्टमिध्मं विधत्ते "एकविंꣳशतिमिध्मदारूणि भवन्ति। एकविंꣳशो वै पुरुषः। पुरुषस्याप्त्यै" (ब्रा०।३का०।३प्र०।७अ०) इति। "दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविंꣳशः" इत्यन्यत्राम्नातं। होता प्र वो वाजा अभिद्यव इत्यादिषु ऋक्षु सामिधेनीसंज्ञकास्वनूच्यमानासु काष्ठानामग्नौ प्रक्षेपं विधत्ते "पञ्चदशेध्मदारूण्यभ्या दधाति। पञ्चदश वा अर्द्धमासस्य रात्रयः। अर्द्धमासशः संवत्सर आप्यते" (ब्रा०।३का०।३प्र०।७अ०) इति। कियत्संख्यैरर्द्धमासैश्चतुर्विंशतिसङ्ख्याकैरित्यर्थः। अवशिष्टानां षण्णां काष्ठानां विनियोगमाह "त्रीन् परिधीन् परिदधाति। ऊर्द्ध्वे समिधावादधाति। अनूयाजेभ्यः समिधमतिशिनष्टि। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति" (ब्रा०।३का०। ३प्र०।७अ०) इति। गन्धर्व्वोऽसीत्यादयः परिधिमन्त्राः। वीतिहोत्रमित्यादिरूर्द्ध्वसमिन्मन्त्रः। ते च पूर्व्वानुवाकेऽभिहिताः। अग्निप्रज्वालनाय वायूत्पादनं विधत्ते "वेदेनोपवाजयति। प्राजापत्यो वै वेदः। प्राजापत्यः प्राणः। यजमान आहवनीयः। यजमान एव प्राणं दधाति" (ब्रा०।३का०।३प्र०।७अ०) इति। वेदस्य प्रजापतिसृष्टत्वात् प्राजापत्यत्वं। प्राणवायोः प्रजापतिसृष्टतया प्राजापत्यत्वं। आहवनीयस्य प्रस्तरन्यायेन यजमानत्वं। आवृत्तिं विधत्ते "त्रिरुपवाजयति। त्रयो वै प्राणाः।

प्राणमेवास्मिन् दधाति" (ब्रा०।३का०।३प्र०।१अ०) इति।
प्राणोऽपानो व्यानश्चेति प्राणानां त्रित्वं। अनेकगुणविशिष्टं
प्रथमाघारं विधत्ते "वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमा-
घारयति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं मुखत
आरभते। अथो प्रजापतिः सर्व्वादेवताः। सर्व्वा एव देवताः
प्रीणाति" (ब्रा०।३का०।३प्र०।७अ०) इति। उपयत्य वेदस्यो-
परि स्रुवमवस्थाप्येत्यर्थः। आहुतीनामादित्वादयमाघारो यज्ञस्य मुखं। तस्मिन् मुखे यज्ञसद्दृत्वेन यज्ञरूपं प्रजापतिमेवार-
ब्धवान् भवति। प्रजापतेः सर्व्वदेवतारूपत्वोपपादनं वाजसने-
यिन एवमामनन्ति "तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देव-
मेतस्यैव सा विसृष्टिरेष उ ह्येव सर्व्वे देवाः" इति। आग्नीध्रं
प्रति प्रैषमन्त्रमुत्पादयति "अग्निमग्नीत्त्रिस्त्रिः सम्मृड्ढीत्याह।
त्र्यावृद्धि यज्ञः। अथो रक्षसामपहत्यै" (ब्रा०।३का०।१प्र०।
७अ०) इति। यैर्दर्भैरिध्मः पूर्व्वं सन्नद्धः तैरग्निज्वालायां
सम्मार्जनमभिनेतव्यं। हे अग्नीदिति सम्बोध्य तत्रासौ प्रेष्यते।
त्रिस्त्रिरिति वीप्सा परिधिसम्मार्जनापेक्षा। तद्विधत्ते "परिधीन्
सम्मार्ष्टि। पुनात्येवैनान्" (ब्रा०।३का०।३प्र०।२अ०) इति।
प्रतिपरिधि त्रिरावृत्तिं विधत्ते "त्रिस्त्रिः सम्मार्ष्टि। त्र्यावृद्धि
यज्ञः। अथो मेध्यत्वाय। अथो एते वै देवाश्वाः। देवाश्वानेव
तत्सम्मार्ष्टि। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०।३का०।३प्र०।
७अ०) इति। देवाश्वत्वेन भाविताः स्वर्गप्राप्तये भवन्ति। द्वयो-
राघारयोः क्रमेण गुणभेदं विधत्ते "आसीनोऽन्यमाघारमा-

धारयति। तिष्ठन्नन्यं। अथाऽनो वा रथं व युञ्ज्यात्। एवमेव तदध्वर्युर्यज्ञं युनक्ति। सुवर्गस्य लोकस्याभ्यूढ्यै" (ब्रा०।३का०। ३प्र०।७अ०) इति। शकटस्य प्राथमिकं बलीवर्दयुगमुपरि आसीनेन प्रेर्यते द्वितीयतृतीयादिकन्तु भूमौ स्थितेन। तद्वदाघाररथः स्वर्गलोकमभिलक्ष्य वहनाय भवति। एतद्रथवेदनं प्रशंसति "वहत्येनं ग्राम्याः पशवः। य एवं वेद" (ब्रा०।३का०। ३प्र०।७अ०) इति। बलीवर्दाश्वादयो ग्राम्याः। तिष्ठन्नन्यमिति विहितस्य द्वितीयाघारस्य सम्बन्धिषु मन्त्रेषु प्रथममन्त्रं व्याचष्टे "भुवनमसि विप्रथस्वेत्याह। यज्ञो वै भुवनं। यज्ञ एव यजमानं प्रजया पशुभिः प्रथयति। अग्ने यष्टरिदं नम इत्याह। अग्निर्वै देवानां यष्टा। य एव देवानां यष्टा। तस्मा एव नमस्करोति" (ब्रा०।३का०।३प्र०।७अ०) इति। पूर्वोक्तनिर्वचनेन भूतोत्पत्तिकारणत्वादग्न्यभिन्नो यज्ञो भुवनं यष्टा देवपूजकः अग्निस्तु हव्यवहनेन देवान् पूजयति। कल्पः "अथादत्ते दक्षिणेन जुहूं, जुह्वे ह्यग्निस्त्वाह्वयति देवयज्यायै" इति। "सव्येनोपभृतं, उपभृदेहि देवस्त्वा सविताह्वयति देवयज्यायै" इति। अनयोर्मन्त्रयोरग्निसवितृव्यवस्था युक्तेत्याह "जुह्वे ह्यग्निस्त्वाह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविताह्वयति देवयज्याया इत्याह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैने प्रसूत आदत्ते" (ब्रा०।३का०। ३प्र०।७अ०) इति। अग्निसवितारौ जुहूपभृतोः स्रुचोरभिमानि देवते। बौधायनः "अत्यक्रामन् जपति, अग्नाविष्णूमा-

वामवक्रमिषं विजिहाथां मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतं" इति। अत्याक्रमणप्रकार आपस्तम्बेन दर्शितः "अग्ना-विष्णूमावामवक्रमिषमित्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनतिक्रामन् प्रस्तरं दक्षिणेन पदा दक्षिणातिक्रामत्युदक्सव्येन" मध्यमपरिधेः पुरतोऽवस्थितः आहवनीयोऽग्निः, ततः पश्चात् स्रुचामग्रभागेन प्राक्तदृष्ट्याऽवस्थितो यज्ञाभिमानी विष्णुः। हे अग्नाविष्णू आघारहोमार्थं युवयोर्मध्ये गच्छन्नहं पादेन युवां मावक्रमिषं मम गमनावकाशाय युवां वियुक्तौ भवतं। मां प्रति सन्तापं मा कुरुत। किञ्च स्थानकारिणौ युवां मम गमनस्थानं कुरुतं। यथोक्तमर्थं दर्शयति। "अग्ना विष्णू मावामवक्रमिषमित्याह। अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात्। ताभ्यामेव प्रतिप्रोच्यात्याक्रामति। विजिहाथां मा मा सन्ताप्तमित्याहाहिंसायै। लोकं मे लोककृतौ कृणुतमित्याह। आशिष मेवैतामाशास्ते"(ब्रा०।३का०।३प्र०।७अ०) इति। बोधायनः "स्थानं कल्पयति, विष्णो स्थानमसि" इति। आपस्तम्बः "विष्णो स्थानमसीत्यवतिष्ठतेऽन्तर्वेदि दक्षिणः पादो भवत्यवघ्नः सव्योऽर्ध्वस्तिष्ठन् दक्षिणं परिधिसन्धिमन्ववहृत्य" इति। हे भूप्रदेश त्वं यज्ञपुरुषस्य स्थानमसि। यज्ञपुरुष प्रयुक्तमतिशयं दर्शयति "विष्णोः स्थानमसीत्याह। यज्ञो वै विष्णुः। एतत् खलु वै देवानामपराजितमायतनं। यद्यज्ञः। देवानामेवापराजित आयतने तिष्ठति"(ब्रा०।३का०।३प्र०।७अ०) इति। देवयजनभूव्यतिरिक्तभूमेरसुराधीनतया तत्र देवानां पराजयेऽपि यज्ञ

प्रदेशोऽपराजितः। बौधायनः "अन्वारब्धे यजमाने मध्यमे परिधौ संस्पृशन् ऋजुतिष्ठन् ऋजुमाघारयति सन्ततं प्राञ्चमव्यवच्छिन्दन्, इत इन्द्रो अकृणोद्वीर्याणि समारभ्योऽर्ध्वो अध्वरो दिविस्पृशम-ह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् त्स्वाहा" इति। आपस्तम्बः "समारभ्योऽर्ध्वो अध्वर इति प्राञ्चमुदञ्चं ऋजुं सन्ततं ज्योतिष्मत्याऽऽघारमाघारयन् सर्व्वाणीध्मकाष्ठानि संस्पर्शयति" इति। अस्य मते इत इन्द्र इति वाक्यं पूर्व्वमन्त्रशेषः। इतो देवयजनस्थान-बलादिन्द्रोऽसुरवधरूपाणि वीर्याणि अकरोत्। यज्ञपतेर्यज-मानस्य यज्ञ आघारः स्वाहा देवतायै दत्तः। कीदृशो यज्ञः। इन्द्रदेवताकत्वेन इन्द्रवान् नैर्ऋतीं राक्षसोन्दिशं समारभ्योऽर्ध्वो दीर्घो अध्वरो हिंसारूपेण विच्छेदेन रहितः ऐशानीं दैविकीं दिशं स्पृशति। अह्रुतोऽकुटिलः। इन्द्रशब्दसूचितं दर्शयति "इत इन्द्रो अकृणोद्वीर्याणीत्याह। इन्द्रियमेव यजमाने दधाति" (ब्रा०।२का०।२प्र०।७अ०) इति। ऊर्द्ध्वशब्देन वृद्धिः सूचि-तेत्याह "समारभ्योऽर्ध्वो अध्वरो दिविस्पृशमित्याह वृध्यै" (ब्रा० २का०।२प्र०।७अ०) इति। समारभ्येति पदसूचितं* दर्शयति "आघारमाघार्यमाणमनुसमारभ्य। एतस्मिन् काले देवाः सुवर्गं लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति। अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति" (ब्रा०।२का०। २प्र०।७अ०) इति। देवाः स्वयं यागं कुर्व्वन्तोऽध्वर्युमनु तमाघारं स्पृष्ट्वा विलम्बमन्तरेण स्वर्गङ्गताः साक्षादेवाविलम्बेनैव। किञ्च

* सुवर्गपदसूचितं इति का० पा०।

मव्यगारभ्येत्यनेन समृद्धिः सूचिता। अहुतशब्दार्थं दर्शयति "अहुतो यज्ञो यज्ञपतेरित्याहानार्त्यै" (ब्रा०।१का०।३प्र०।७अ०) इति। इन्द्रशब्दार्थमाह "इन्द्रावान्स्वाहेत्याह। इन्द्रियमेव यजमाने दधाति" (ब्रा०।१का०।३प्र०।७अ०) इति। कल्पः "बृहद्भा इति स्रुचमुद्गृह्णाति" इति। अनेनाघारेण ज्वालारूपं यथा बृहद्भवति तथायमग्निर्भासते ततो जुहूमादस्यतामित्युद्गृह्णाति। अधिकभासनेन स्वर्गं प्राप्यत इत्याह "बृहद्भा इत्याह। सुवर्गो वै लोको बृहद्भाः। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०।३का०।३प्र०।७अ०) इति। कल्पः "अयामःस्पर्शयन्स्रुचावुदङ्प्रत्याक्रमन् जपति, पाहि माग्ने दुश्चरितादामा सुचरिते भज" इति। भज स्थापय। जुहूपभृतोः परस्परमस्पर्शयन् विशिष्टं प्रतिनिवृत्यागमनं विधत्ते "यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। प्राण आघारः। यत्सःस्पर्शयेत्। भ्रातृव्येऽस्य प्राणान् दध्यात्। असःस्पर्शयन् प्रत्याक्रामति। यजमान एव प्राणं दधाति" (ब्रा०।३का०।३प्र०।७अ०) इति। यजमानव्यागे प्रत्यामन्नत्वात् जुहूः यजमानोऽभिमन्यते। औपभृतस्याज्यस्य जुहूद्वारा होम इति व्यवहितत्वमुपभृतः। ततो भ्रातृव्यो देवता। अर्थवादान्तरे वा एतदेव द्रष्टव्यं। मन्त्रस्य पदार्थवाक्यार्थौ दर्शयति "पाहि माऽग्ने दुश्चरितादामा सुचरिते भजेत्याह। अग्निर्वाव पवित्रं। वृजिनमनृतं दुश्चरितं। ऋजुकर्मः सत्यः सुचरितं। अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति। ऋजुकर्मे सत्ये सुचरिते भजति। तस्मादेवमाशास्ते।

आत्मनो गोपीथाय" (ब्रा०।१का०।१प्र०।७अ०) इति। कायिकं निषिद्धाचरणं वृजिनं विहिताचरणमृजुकर्म्म। वाचिके सत्यानृते। कल्पः "जुह्वा ध्रुवां समनक्ति, मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामिति त्रिः" इति। हे आघारशेष त्वं यज्ञस्य शिरोवदुत्तममङ्गमसि। अतस्तद्रूपेण ज्योतिषा ध्रौवाज्यरूपं ज्योतिः समङ्क्तां संयुज्यतां। समञ्जनं विधत्ते "शिरो वा एतद्यज्ञस्य। यदाघारः। आत्मा ध्रुवा। आघारमाघार्य्य ध्रुवाꣳ समनक्ति। आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति" (ब्रा०।१का०।१प्र०।७अ०) इति। ग्रीवादधस्तनो देश आत्मा। पूर्व्वपक्षत्वेन द्विरावृत्तिं विधत्ते "द्विः समनक्ति। द्वौ हि प्राणापानौ" (ब्रा०।१का०।प्र०।७अ०) इति। सिद्धान्तमाह "तदाहुः। त्रिरेव समंज्यात्। त्रिधातु हि शिर इति। शिर एवैतद्यज्ञस्य। अथो त्रयो वै प्राणाः। प्राणानेवास्मिन् दधाति" (ब्रा०।१का०।३प्र०।७अ०) इति। त्वगसृगस्थिरूपा विस्पष्टास्त्रयो धातवो यस्य स त्रिधातुः। मन्त्रगतज्योतिःशब्दविवक्षां दर्शयति "मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामित्याह। ज्योतिरेवास्मा उपरिष्टाद्दधाति। सुवर्गस्य लोकस्यानुख्यात्यै" (ब्रा०।१का०।३प्र०।७अ०) इति। अस्य ध्रौवाज्यशेषस्योपरि स्थापितेनाघारशिष्टाज्येनात्युज्ज्वलं सत् प्रदीपेनेव स्वर्गलोकः प्रकाशितो भवति। अत्र विनियोगसङ्ग्रहः।

"ध्रुवोऽग्निरञ्जलिं कृत्वा जुप द्वाभ्यां तयोर्ग्रहः।
अग्ना दक्षिणदिग्गामि विष्णो स्थित्वा समाहृतिः॥
वृहद्भाः स्रुचमुद्धृत्य पाहि प्रतिनिवर्त्तते।

मख भुवामनक्तिचिर्नवमन्वा इहेरिता” इति॥

अथ मीमांसा। “अग्ने यष्टरिदं नमः” “अग्निर्वै देवानां यष्टा” इत्यनयोर्मन्त्रब्राह्मणयोरग्निदेवताया यागाधिकारः प्रतीयते। तदयुक्तं। नवमाध्याय प्रथमपादोक्त देवताधिकरणविरोधप्रसङ्गात्। तत्र ह्येवं चिन्तितं।

“देवः प्रयोजको पूर्व्वं वाद्योस्य फलदत्वतः।
न विधेयो गुणो ह्येषो पूर्व्वस्य फलतोचिता” इति॥

आग्नेयोऽष्टाकपाल इत्यादिषु कर्म्मसु मन्त्रतन्त्ररूपाणामनुष्ठेयानामङ्गानामग्न्यादिर्देवः प्रयोजकः। कुतः। यागेन पूजिताया देवतायाः फलप्रदत्वात् सम्भवति फलप्रदत्वं मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात्। विग्रहो हविः स्वीकारस्तद्भोजनं तृप्तिः प्रसादश्चेत्येतच्चेतनस्योचितं पञ्चकं। ‘महस्ताचो गोत्रभिद्वज्रबाहुरिति विग्रहः, ‘अग्निरिदꣳ हविरजुषतेति हविः स्वीकारः, ‘अद्धीदिन्द्रप्रस्थिते मा हवींषीति हविर्भोजनं, ‘तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति तृप्ति प्रसादौ, ततः सेवितराजादिवत् पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात् तेनैवाङ्गानां प्रयोजकतेति प्राप्ते ब्रूमः। किं देवतायाः फलप्रदत्वलक्षणं प्राधान्यं शब्दादापाद्यते वस्तुसामर्थ्याद्वा। नाद्यः। स्वर्गकामो यजेतेति शब्दे विधेयस्य यागस्यैव फलप्रदत्वावगमात्। द्रव्यदेवते तु सिद्धत्वेन विध्यनर्हे। तत्र यथा द्रव्यस्य विधेयं प्रतिगुणभावः तथा देवताया अपि। यदि यागस्य कालान्तरभाविफलंप्रति व्यवहितत्वं तर्हि तत्साधनभूता देवता ततोऽपि

व्यवहिता। का तर्हि फलस्य गतिः। अपूर्वमिति वदामः। तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वाच्छाब्दमिति तस्य फलप्रदत्वमुचितं। न हि* वस्तुसामर्थ्याद्देवस्य फलप्रदत्वं। विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्य्याभावात्। अन्यथा 'वनस्पतिभ्यः स्वाहा' 'मूलेभ्यः स्वाहा'। 'तूलेभ्यः स्वाहा' इत्यादि मन्त्रेष्वपि देवत्वं विग्रहादियुक्तं कल्प्येत। तच्च प्रत्यक्षविरुद्धं। अतो न राजादिवत्फलप्रदत्वं। किञ्च विग्रहादिमद्देवताया अपि विना कर्म्मणा फलमभ्युपगच्छति। ततः प्राप्ताप्राप्तविधिकेन उभयवादिसिद्धस्य यागस्यैव फलप्रदत्वमस्तु। किञ्च मातापितृगुर्वादिशुश्रूषाया देवतां विनैव फलप्रदत्वमुभयवादिसिद्धं। तस्मात् फलप्रदत्वमपूर्वमेवाङ्गानुष्ठाने प्रयोजकं। देवस्य प्रयोजकत्वे सति आग्नेय यागे उपदिष्टानि प्रयाजाद्यङ्गानि सौर्य्यादियागेष्वन्यभावादनूह्यानि। अपूर्वस्य प्रयोजकत्वे तत्सत्त्वादूह्यानीति विशेषः। तदिदं देवताधिकरणमन्यादिदेवानां कर्म्माधिकारे विरुध्यते। अतएव वैयासिकदेवताधिकरणसूत्रेषु जैमिनिपक्ष एवमुपन्यस्तः "मध्वादिष्वसम्भवादनधिकारं जैमिनिरिति"। अस्यायमर्थः। अस्ति हि काचिन्मधुविद्या छन्दोगैराम्नातत्वात्। तस्यामादित्यो मधुत्वेन ध्यातव्यः। वसवो रुद्रा आदित्या मरुतस्साध्यास्चेत्येते देवगणाः। परित उपविश्य तन्मधूपजीवन्ति। ईदृशेनोपासनेन वस्वादिमहिमानं प्राप्नुवन्तीति श्रूयते। तस्यां विद्यायां 'मनुष्याणाम-

* नापि इति का०।

धिकारः सम्भवति। वस्वादिदेवतास्तु कानन्यान् वस्वादीनुपासीरन् कस्मान्यं वस्वादिमहिमानं प्राप्नुयुः। आदित्यश्च कममन्यमादित्यं मधुत्वेनोपासीत। तस्माद्देवानामनधिकारं जैमिनिर्मनुत इति। तर्हि विद्यान्तरेऽधिकारोऽस्ति इत्याशङ्क्य उत्तरमेवं सूचितं। "ज्योतिषि भावाच्चेति"। न खल्वादित्यो नाम कश्चिच्चेतनो विग्रहवान् देवोऽस्ति। किन्त्वस्मिन् दृश्यमाने ज्योतिर्मण्डले भवत्यादित्यशब्दप्रयोगः। एवमङ्गारेष्वग्निशब्दः यदि विग्रहवती देवता स्यात्तदानीमृत्विगादिवत्कर्मण्युपलभ्येत। किञ्चैकस्य यजमानस्य यागे हविः स्वीकर्तृत्वात् तदानीमेव अन्येषां यागेषु गन्तुं न शक्नुयात्। अत एवाम्नायते। "कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां" इति। किञ्च। विग्रहवत्सु देवेषु मृतेषु वैदिकानामग्नीन्द्रादिशब्दानामभिधेयाभावः स्यात्। वेदस्याप्रामाण्यं प्रसज्येत। तस्मान् मृगतृष्णादिवाक्येष्विव सहस्राक्षो गोत्रभिदित्यादिवाक्येषु कश्चिद्विकल्पप्रत्ययो जायते। शब्दज्ञानानुपपत्तिवस्तुशून्यो विकल्प इति। तल्लक्षणं।

> "मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः।
> एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः" इति॥

अत्र विनैव बाह्यवस्तुना यथा कश्चिदाकारविशेषो मनसि प्रतिभासते तथैव देवतावाक्येषु। तस्मादग्निर्वै देवानां यष्टेति वाक्यबलाद्देवानां यागाधिकारं वक्तुं न शक्यः। अत्रोच्यते। देवानामधिकाराभावः कुत इति वक्तव्यं। देहाद्यभावाद्वा सत्यपि

देहादौ वर्धिष्णुत्वसामर्थ्यविग्रहरूपाणामधिकारहेतूनामभावात्। सत्स्वपि तेषु शास्त्रेण निषिद्धत्वात्। प्रथमपक्षेऽपि देहाद्यभावः कुत इति वाच्यं। प्रमाणाभावाद्बाधकसद्भावाद्वा। नाद्यः। मन्त्रार्थवादेतिहासपुराणयौगिकप्रत्यक्षलोकप्रसिद्धीनां तत्प्रमाणत्वात्।"देवेर वः सविता प्रार्पयतु"। "रुद्रस्य हेतिः परिवो वृणक्तु"इत्यादयश्चेतनोचितो व्यवहाराभिधायिनो बहवो मन्त्राः पूर्व्वमुदाहृताः। "अग्ने यष्टरिदं नमः"। "इत इन्द्रो अकृणोद्वीर्याणि" इत्यादय उदाह्रियन्ते। "अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यतां"। "अग्ने त्वꣳ सुजागृहि" इत्यादय उदाहरिष्यन्ते। "तं गायत्र्या हरत्"। "पुरुषं वै देवाः पशुमालभन्त" "देवासुराः सन्ता आसन्"इत्यादयोऽर्थवादाः। इतिहासो भारतादिः। पुराणं ब्राह्मपाद्मवैष्णवादिः। योगिप्रत्यक्षं योगशास्त्रप्रसिद्धं मूर्द्धन् ज्योतिषमित्यादिसूत्रेषु प्रसिद्धं। लोकप्रसिद्धिश्च चित्रकारादिषु तत्तन्मूर्त्तिलेखनादिभिर्द्रष्टव्याः। न द्वितीयः। बाधकस्यानुपलम्भात्। वनस्पतितन्मूलादीनामपि विग्रहादिमत्व प्रसङ्गो बाधक इति चेत् तन्न। तस्येष्टत्वात्। प्रत्यक्षविरोध इति चेत्। न। स्थावररूपस्य प्रत्यक्षत्वेऽपि तदभिमानिदेवतानामप्रत्यक्षत्वात्। सन्ति हि सर्व्वेषु वस्तुष्वभिमानिदेवताः। अत एव श्रूयते। "अन्तरिक्षदेवत्याः खलु वै पशवः" "यजमान देवत्या वै जुहूः" भ्रातृव्यदेवत्योपभृत्" इति। नात्र दृश्यमाना अन्तरिक्षयजमानभ्रातृव्या सविवक्षिताः किन्तु तदभिमानिदेवताः। एवञ्च सत्यभिमानिनीभिः सहाभेदविवक्षया "वायवस्थोपायवस्थ""शुक्रेऽमि-

त्वाक्रयति देवयज्याया उपह्वदेहि देवत्वा सविता क्रयति" इ-त्यादीनि चेतनोचितानि सम्बोधनान्युपपद्यन्ते। किन्निमित्तोऽयं देवताभक्त्यभिनिवेश इति चेत्। तत्र किं निमित्तो यन्देवता प्रवे-शाभिनिवेशः। "ज्योतिषि भावाच्च" इति जैमिनिमतस्य सूचित-त्वादिति चेत्। किं बादरायणस्य मतं न पश्यसि। स ह्येवं सूत्रया-मास "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां" इति। अस्यायम-र्थः। वाक्चक्षुरादीन्द्रियाणां परस्परकलहश्रुतिषु "मृदब्रवीत्" "आपोऽब्रुवन्" इत्यादिश्रुतिषु चाभिमानिदेवता व्यपदिश्यन्ते। इन्द्रियसम्पातवाक्यस्यादावेवाग्नैता देवता इति देवताशब्देन विशे-षितत्वात्। अन्यत्र च "अग्निर्वाग्भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इत्या-दिना सर्व्वेषु इन्द्रियेषु देवतानुगतिश्रवणादिति। बाधकान्तरन्तु बादरायण एवाशङ्क्य निराचष्टे। तदीयं सूत्रमेतत् "विरोधः कर्म-णीति चेत् न। अनेकप्रतिपत्तिदर्शनात्" इति। स्थलिगदृष्टान्तेन यः कर्मणि विरोधः सोऽपि नास्ति। एकस्य युगपद्बहुगृहभोजनास-म्भवेऽपि बहुकर्तृकनमस्कारस्वीकारः सम्भवतीत्यनेकप्रकारदर्श-नात्। इह च यागस्योद्देशत्यागात्मकत्वान्नमस्कारन्यायेन बहवो यजमाना युगपदेकां देवतामुद्दिश्य हवींषि त्यजेयुः। अथ वा देव-तानां योगसामर्थ्याद्युगपदनेकशरीरप्राप्तिः श्रुतिस्मृत्योर्दृश्यते। तैश्च शरीरैर्युगपद्बहुषु यागेषु युगपद्गच्छेयुः। न चानुभववि-रोधः तासामन्तर्धानादिशक्तिमत्त्वेन अयोग्यानुपलम्भेः। नापि विग्रहवतीषु देवव्यक्तिषु सतासु वैदिकशब्दस्यार्थाभावः। जाते-

देवशब्दार्थत्वात्। अतो वनस्पतिमूलकगुल्मपमृदाद्यचेतनद्रव्येषु सर्व्वेष्वभिमानिनीनां विग्रहवतीनां चेतनानां देवतानामभ्युपगमेऽपि न बाधः। कश्चिन्मृगतृष्णिकाखपुष्पादिष्वपि वनस्पत्यादिष्विव देवताभ्युपगमः प्रसज्येतेति चेत्। यदा खपुष्पाय स्वाहा मृगतृष्णायै स्वाहेति वेदवाक्यं दर्शयिष्यसि तदाभ्युपगमिष्यामः। अतः प्रमाणसद्भावाद्बाधकाभावाच्च सन्त्येव देवतानां विग्रहादयः। नाप्यर्थित्वाद्यधिकारिकारणाभावादिति द्वितीयः पक्षो युक्तः। आदित्यवस्वादीनां स्वस्वपदस्य प्राप्तत्वेन तत्प्राप्तिहेतावुपासने यागे वाऽर्थित्वाभावेऽपि फलान्तरहेतौ तत्सद्भावात्। सत्यसङ्कल्पानां तेषां सङ्कल्पादेव फलसिद्धौ न यागादिप्रवृत्तिरिति चेत्। न। सङ्कल्प इव यागादावपि प्रायो बुध्यभावेन प्रवृत्तिसम्भवात्। श्रूयन्ते हि बहूनि वेदवाक्यानि "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत", "अग्निष्टोमेनैव पर्य्यगृह्णात्" इति "बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतञ्चतुर्विंꣳशतिरात्रमपश्यत् तमाहरत् तेनायजत ततो वै तस्मै श्रद्देवा अदधतागच्छत्पुरोधा" इति। इदानीं मुख्य* एव सन् भाविन्या सञ्ज्ञया प्रजापतिबृहस्पत्यादिशब्दैरुच्यत इति चेत्। अस्त्येवं मत्रचेष्टौ। तत्र हि यजमानो देवता चेत्युभयं एकेनैव शब्देन व्यवहृतं "अग्निर्वा अकामयत अन्नादो देवानाꣳस्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्व्वपत्" इति। इह तु बाधकाभावात् मुख्या एव प्रजापतिबृहस्पत्यादयः।

* मनुष्य इति का० पा०

अन्यथा वसिष्ठविशेषणं विरुध्येत। तथैवमाम्नायते "वसिष्ठो हतपुत्रो कामयत विन्देय प्रजां" इति तस्मादर्थिनो देवा यागादिषु प्रवर्त्तेरन्। सामर्थ्यमपि धनवत्त्वं तेषामस्त्येव उपनयनपूर्व्वकाध्ययनाभावेऽपि स्वयम्भूतवेदानामपौरुषेयत्वमस्त्येव। निषेधञ्च न पश्यामः। तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इतिवद्देवा अनवक्लृप्ता इत्यश्रवणात्। प्रत्युत "देवा वै यज्ञमकुर्व्वत तदसुरा अकुर्व्वत" इति बहुशः श्रुतं। आघारब्राह्मणेऽपि प्रदेशान्तर एवं श्रूयते "देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्स प्रजापतिस्तूष्णीमाघारमाघारयत् ततो वै देवा यज्ञमन्वपश्यन्" इति "असुरेषु वै यज्ञ आसीत् तं देवास्तूष्णीꣳ होमेनावृञ्जत" इति सर्व्वोऽप्ययमर्थवाद इति चेत्। वाढं। न खलु वयमप्येतमनर्थवादं ब्रूमः। महातात्पर्य्येण विधिं प्रशंसन् अवान्तरतात्पर्य्येण स्वार्थेऽपि प्रामाण्यात् भूतार्थवादत्वे का तव हानिः। यदा प्रजापतिरमन्त्रकं प्रथममाघारं प्राजापत्यमनुतिष्ठति तदा कमन्यं प्रजापतिं मनसा ध्यायेदिति चेत् पूर्व्वकल्पेऽतीतं ब्रह्माण्डान्तरे वर्त्तमानं वा ध्यायतु। यथा देवदत्तः स्वयमन्यस्य पितापि सन् विद्याधनदानादिभिः स्वपित्रासमानोऽपि सन् स्वपितरं नमस्करोति यथा वा ब्राह्मणकर्त्तृके श्राद्धे ब्राह्मणान्तरं भोज्यते तद्वत्। यदि तत्र स्वसमानस्य पितुर्ब्राह्मणान्तरस्य च पूजया तुष्टः परमेश्वरः फलं दद्यात् तर्हि स इह प्रजापतिः फलदाने विस्मरिष्यति निद्रास्यति वा। "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यत्रापीन्द्रविग्रहेऽवस्थितोऽन्तर्य्याम्येव फलप्रदाता। अत एव

बादरायणः "फलमत उपपत्तेः" इति सूत्रयामास। ईश्वरस्य फलदातृत्वेऽपि नाऽपूर्व्ववैयर्थ्यं, फलविशेषे तत्तारतम्ये वा अपूर्व्वस्यैव नियामकत्वात्। जैमिनिस्त्वापूर्व्वाङ्गीकारेण परितुष्टो न देवतां द्वेष्टि तावतैव स्वापेक्षितो ह्यध्यायस्यारम्भसिद्धिः। न च प्रजापतिकर्तृके यागे ऋत्विजामभावः, देवान्तराणामृत्विक्त्वात्। नन्वार्त्विज्यं विप्रस्यैव। तथा च द्वादशाध्यायस्यावसाने चिन्तितं।

"आर्त्विज्यं किं त्रिवर्णस्थं विप्रगास्यैव नाग्रिमः।
विद्यावत्त्वान्न तद्युक्तं ब्राह्मणस्यैव तत् स्मृतेः" ॥ इति।

प्रतिग्रहाधिको विप्रो याजनाध्यापने तथेति स्मृतिः। नायं दोषः। तत्र क्षत्रियवैश्ययोरार्त्विज्यं नास्तीत्येतावदेव विवक्षितं न तु देवानां तन्निवार्य्यते, मन्त्रब्राह्मणयोस्तदवगमात्। "पृथिवी होता। द्यौरध्वर्य्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता"। "अग्निर्होता। अश्विनाध्वर्य्यू। त्वष्टाग्नीत्। मित्र उपवक्ता" इति मन्त्रे। "अश्विनौ हि देवानामध्वर्य्यू आस्तां" इति ब्राह्मणं। त्रैवर्णिकानामेव वसन्तादिकालेष्वाधानविधानाद्देवानां वर्णाश्रमाभावान्नास्त्याधानमिति चेत्। न। तद्विधानस्य मनुष्यविषयत्वात्। वर्णाश्रमप्रयुक्ता विधयो मनुष्याणामेव सन्ति देवास्तु न वर्णाश्रमधर्म्ममनुतिष्ठन्ति। किन्तु काम्यकर्म्मणि आधानमपि देवानामाम्नातं "प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। तं पूषाधत्त। तं त्वष्टाधत्त। तं मनुराधत्त। तं धाताधत्त" इति। देवानां यागाधिकारे विघ्नाभावात् "अग्निर्वै देवानां यष्टा" इत्येतदिह

सुस्थितं। सर्व्वत्र च मन्त्रब्राह्मणेतिहासपुराणादिवादाः सुतरामुज्जीविताः। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू।
विधेयौ गुणसंस्कारावाहोस्वित् कर्म्मनामनी॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः।
गुणो विधेयो नामत्वे रूपं न स्यात् चरद्धृते॥
संक्रियाघारमाघारयतीत्युक्ता द्वितीयया।
आघारेत्यग्निहोत्रेति यौगिके कर्म्मनामनी॥
अग्निर्ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तथा घृतं।
चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियङ्गतिः॥
नामाधिते हि धात्वर्थे करणत्वन्ततोऽस्य सा।
साध्यतां वक्ति संस्कारो नैवाशङ्क्यः क्रियात्वतः"॥ इति।

अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य कर्म्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्य स्वरूपमेव न सिध्येत्। ततोऽग्निदेवतारूपो गुणोऽनेन दर्विहोमे विधीयते। आघारशब्दस्य घृक्षरणदीप्त्योरित्यस्माद्धातोरुत्पन्नः चरद्धृतमाचष्टे। तस्मिंश्च घृते द्वितीयाविभक्त्या संस्कार्य्यत्वं प्रतीयते। तच्च संस्कृतं घृतमुपांशुयागे द्रव्यं भवति। तस्मादग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकाविति प्राप्ते ब्रूमः। "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति सायं जुहोति "सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा" इति प्रातरिति विहितेन मन्त्रेण प्राप्तत्वाद्देवता न विधेया। ततोऽग्निसूर्य्यदेवताकस्य सायम्प्रातःकालयोर्नियमेनानुष्ठेयस्य कर्म्मणो

ऽग्निहोत्रमिति यौगिकं नामधेयं। योगस्य बहुव्रीहिणा दर्शितः। चतुर्गृहीतं वा एतदभूत् तस्याघार्य्यमाघार्य्यैत्याज्यद्रव्यस्य प्राप्ततया स्वरूपतसंस्कारस्य विधेयत्वात्। आघारशब्दोऽपि यौगिकं कर्म्मनामधेयं। यस्मिन् कर्म्मणि नैर्ऋतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा सन्तत्या घृतं चार्य्यते तस्य कर्म्मण एतन्नाम। ननु नामत्वे सति उद्भिदा यजेत। ज्योतिष्टोमेन यजेत" इत्यादाविव धात्वर्थेन करणेन सामानाधिकरण्यायाग्निहोत्रेण जुहोतीत्याघारेणाघारयतीति तृतीयया भवितव्यं। नैष दोषः। अनुष्ठानादूर्द्ध्वं धात्वर्थस्यासिद्धत्वकारणकरणत्वेऽपि ततः पूर्व्वं साध्यत्वाकारं वक्तुमग्निहोत्रं आघारमिति द्वितीयाया युक्तत्वात्। न चात्र द्वितीयानुसारेण व्रीहीन् प्रोक्षतीत्यादाविव संस्कारः शङ्कनीयः। व्रीहिशब्दवदग्निहोत्राघारशब्दयोः प्रसिद्धद्रव्यवाचकत्वाभावेन क्रियावाचित्वाभ्युपगमात्। तस्मादग्निहोत्राघारशब्दौ दर्विहोमोपांशुयागयोर्गुणसंस्कारविधायिनौ न भवतः किन्तु कर्म्मान्तरयोर्नामनी। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

"अग्निहोत्राघारवाक्यमनुवादोऽथ वा विधिः।
अरूपत्वात् तु दध्यादिवाक्येनास्यमनूद्यते॥
गुणसिद्धौ न दध्यादिगुणो दृष्टो विशिष्टता।
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः"॥ इति।

इदमाम्नायते "अग्निहोत्रं जुहोति"। "पयसा जुहोति"। "दध्ना जुहोति"। इदमपरमाम्नायते "आघारमाघारयति"।

"ऊर्द्धमाघारयति"। "ऋजुमाघारयति" इति च। तत्राग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्म्मसमुदायस्यानुवादः। आघारवाक्यञ्च ऊर्द्धादिवाक्यविहितस्य तस्येति। न हि तद्वाक्यद्वयं कर्म्मविधायकं। कुतः। द्रव्यदेवतालक्षणस्य यागरूपस्याभावादिति चेत् तत्र वक्तव्यं। किं दध्यादिवाक्येन गुणमात्रं विधीयते, किंवा गुणविशिष्टं कर्म्म। नाद्यः। अग्निहोत्रादिवाक्यस्य लभ्यते कर्म्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुणानुवादपुरःसरस्य गुणमात्रविधानस्यासम्भवात्। द्वितीये विधिगौरवं स्यात्। तच्च सत्याङ्गतावयुक्तं। अतोऽग्निहोत्रादिवाक्यं कर्म्मविधायकं, तच्च द्रव्यं दध्यादिवाक्यैर्लभ्यते। देवता तु मान्त्रवर्णिकी आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये। दशमाध्यायस्य तृतीयपादे चिन्तितं।

"हिरण्यगर्भ आघारे पूर्व्वस्मिन्नुत्तरेऽथ वा।

लिङ्गादाद्ये समं लिङ्गं क्लृप्तकार्य्यत्वतोऽन्तिमः"॥ इति।

वायव्यपशौ "हिरण्यगर्भस्समवर्त्तताग्रे" इति। "आघारमाघारयति" इति श्रुतो मन्त्रः पूर्व्वस्मिन्नाघारे स्यात्। कुतः। मन्त्रलिङ्गात्। प्रकृतौ प्राजापत्यः पूर्व्व आघारः। अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते। प्रजापतिर्वै हिरण्यगर्भ इति वाक्यशेषादिति प्राप्ते ब्रूमः। अन्तिम आघारेऽयं मन्त्रः। कुतः। क्लृप्तकार्य्यत्वात्। प्रकृतावमन्त्रकः प्रथम आघारः प्रजापतिं मनसा ध्यायन् आघारमाघारयतीति ध्यानमात्रस्याऽभिधानात् तूष्णीमाघारयतीत्यमन्त्रत्वं साक्षादेव श्रुतं। द्वितीये त्वाघारे "समारभ्योर्द्धोऽध्वरः" इत्यादिर्मन्त्रोऽविहितः। अतो

बर्हिषि मादयध्वमग्नेर्वाममपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्य्यौ पातमग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहा देवा गातुविदो गातुं वित्वा गातुमितमनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहावाचि स्वाहा वातेधाः ॥ ३ ॥

दिवश्च वित्वा गातुं त्रयोदश च ॥ १३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥

द्वादशेऽनुवाके आघारावुक्तौ। अथ पञ्च प्रयाजाः। द्वावाज्यभागौ। त्रयः प्रधानयागाः। एकः स्विष्टकृत्। इडाभागभक्षणं। त्रयोऽनूयाजाः। इत्येतावदक्तव्यं*। तन्मन्त्रास्तु होतृत्वादध्वर्युकाण्ड एतस्मिन्नाम्नाताः। उपरितनास्तु स्रुग्व्यूहनादिमन्त्रा आध्वर्य्यत्वादिह त्रयोदशेऽनुवाके आम्नायन्ते। कल्पः "अथोदङ्ङध्वर्य्युः प्रत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति, वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदिति दक्षिणेन जुहूमुद्गृह्णाति। अथाऽसपत्नाꣳ इन्द्रो मे

---

* इत्येतावदनुष्ठातव्यं इति का० पा०।

निग्राभेणाधरा९ँ अकरिति सव्येनोपभृतं निगृह्णाति। उद्ग्राभश्चेति जुहूमुद्यच्छति। निग्राभश्चेत्युपभृतं। ब्रह्मदेवा अवीवृधन्निति प्राचीं जुहूमूहति। अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यतामिति प्रतीचीमुपभृतं प्रत्यूहति"। अस्य मन्त्रस्य प्रसवहेतुनाऽमुय्या जुह्वा ऊर्द्ध्वग्रहणेनेन्द्रो मां मामूर्द्ध्वमग्रहीत्। अथोपभृता नीचग्रहणेन मम वैरिणो निकृष्टान् बद्धानकरोत्। पूर्व्वं ब्रह्म देवाश्च वैरिणो निकर्षेश्च ममोत्कर्षं वर्द्धितवन्तः। अथेन्द्राग्नी मम सपत्नान् विष्वग्गतया स्वस्थानभ्रष्टा यथा भवन्ति तथा विप्रेषेण प्रवर्त्तयतां। एतन्मन्त्रव्याख्यानात् पूर्व्वमिडाभक्षणादिकं विधीयते तस्य स्रुग्व्यूहनात् प्रागनुष्ठेयत्वात्। तत्रेडाभागस्य पुरोडाशादपच्छेदं विधत्ते "धिष्णिया वा एते न्युप्यन्ते। यद्ब्रह्मा। यद्धोता। यदध्वर्य्युः। यदग्नीत्। यद्यजमानः। तान् यदन्तरेयात्। यजमानस्य प्राणान्त्संकर्षेत्। प्रमायुकः स्यात्। पुरोडाशमपगृह्य सञ्चरत्यध्वर्य्युः। यजमानायैव तल्लोकꣳ शिꣳषति। नास्य प्राणान्त्संकर्षति। न प्रमायुको भवति" (ब्रा० ३का०।३प्र०।८अ०) इति। धिष्णिया नामकाः केचन देवाः सोमस्य रक्षकाः। तथा च श्रूयते "धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्" इति। ते च धिष्णियाः सोमयागे वेदिकासदृशा मृन्मयाः क्रियन्ते* "चात्वाला धिष्णियानुपवपति" इति श्रुतेः। तेषाञ्च धिष्णियानामतिक्रमणं तत्रैव निषिद्धं "प्राणा वा एते। यद्धिष्णियाः। यदध्वर्य्युः प्रत्यङ्धिष्णियानतिसर्पेत्। प्राणा-

* आसाद्यन्ते इति का० पा०।

न्मन्त्रयेत्'' इति। तद्वदत्रापीडाभागभक्षणार्थं वेद्या उत्तरभागे स्थितानां ब्रह्मादीनां मध्ये मन्त्रारे प्राणापहारं बाधकमुपन्यस्य तत्परिहाराय भक्ष्यं पुरोडाशभागमपच्छिद्य तेभ्यः प्रदानाय हस्ते धृत्वा मन्त्रयेदिति विधीयते। तेन यज्ञविघ्नाभावाद्यजमानस्य स्वर्गलोकमवशेषयति। इह लोके प्राणबाधो न भवति। अत्र सूत्रं ''इडापात्र उपस्तीर्य सर्व्वेभ्यो हविर्भ्य इडामवद्यति''। अवान्तरेडां विधत्ते ''पुरस्तात् प्रत्यङ्ङासीनः। इडाया इडामादधाति। हस्त्याᳪ होत्रे। पशवो वा इडा। पशवः पुरुषः। पशुष्वेव पशून् प्रतिष्ठापयति। इडायै वा एषा प्रजातिः। तां प्रजातिं यजमानोऽनुप्रजायते''(ब्रा०३का०।३प्र०८अ०) इति। पात्रस्थिताया इडायाः पूर्व्वभागे प्रत्यङ्मुख उपविश्य सर्व्वसाधारण्या इडायाः सकाशाद्धोत्रे विभज्य प्रदातुं तद्धस्तयोग्यामल्पामिडामवदाय होतुर्हस्त आदध्यात्। गौर्वा अस्य शरीरमिति इडाभिमानीदेवतारूपश्रवणात् पशुत्वं। नरमेधे पुरुषस्याऽऽलभ्यत्वात् सोऽपि पशुः। महत्या इडाया एषा अवान्तरेडा प्रजाता। ततो यजमानस्य प्रजा भवति। अत्र सूत्रं ''पुरस्तात् प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति'' इति। होतुः प्रदेशिन्याः द्वयोः पर्व्वणोराज्येनाञ्जनं विधत्ते ''द्विरङ्गुलावनक्ति पर्व्वणोः। द्विपाद्यजमानः प्रतिष्ठित्यै''(ब्रा०।३का०।३प्र०।८अ०) इति। द्वाभ्यां पादाभ्यां स्थैर्य्येणाऽवस्थानं प्रतिष्ठितिः। अवान्तरेडायां प्रकारविशेषं विधत्ते ''सकृदुपस्तृणाति। द्विरादधाति। सकृदभिघारयति। चतुः सम्पद्यते। च-

त्वारि वै पशोः प्रतिष्ठानानि। यावानेव पशुः। तमुपह्वयते" (ब्रा०।३का०।३प्र०।८अ०) इति। प्रतिष्ठानं पादः। अनेन चतुरवत्तेन तच्चतुष्पादं पशुमुपाह्वयते। इडाभागभक्षणाय अनुज्ञापितवान् भवति। अत्र चतुरवत्तं पुरोडाशभागं होता हस्ते धृत्वा भक्षणानुज्ञार्थं होत्रकाण्डे पठितमनुवाकमुपहूतं रथन्तरमित्यादि पठेत्। तन्मध्येऽध्वर्युर्यजमानस्य प्रत्युपह्वानरूपं मन्त्रान्तरं पठेत्। तदिदं विधत्ते "मुखमिव प्रत्युपह्वयेत। सम्मुखानेव पशूनुपह्वयते" (ब्रा०।३का०।३प्र०।८अ०) इति। होतुर्मुखमेव अभिवीक्ष्य पठेदित्यर्थः। अध्वर्युयजमानयोर्होतृहस्तगतेडास्पर्शनं विधत्ते "पशवो वा इडा। तस्मात् साऽन्वारभ्या। अध्वर्युणा च यजमानेन च" (ब्रा०।३का०।३प्र०।८अ०) इति। पाद्यं तन्मन्त्रान्तरमुत्पादयति "उपहूतः पशुमानसानीत्याह। उपहूतो ह्येष यते होता। इडायै देवतानामुपहवे" (ब्रा०।३का०। ३प्र०।८अ०) इति। अहमध्वर्युर्देवैरनुज्ञातः। तत इडाभक्षणेन पशुमान् भवानि। यजमानेऽप्येवं योज्यं। कस्मिन् काले अयं मन्त्रपाठः। इडार्थं देवतानामनुज्ञापने होत्रा क्रियमाणे सति तन्मध्य एवाध्वर्युयजमानौ यदोपह्वयते तदा पठेत्। "दैव्या अध्वर्यव उपहूताः। उपहूतोऽयं यजमानः" इति मन्त्रावयवाभ्यामाभ्यां तयोरुपहवः तदनन्तरं पठेदित्यर्थः। वेदनं प्रशंसति "उपहूतः पशुमान् भवति। य एवं वेद" (ब्रा०।३का०। ३प्र०।८अ०) इति। अवान्तरेडाया अवदानं तदुपाह्वानस्य वाक्प्राणदेवतयोः प्रियमिति स्तौति "यां वै हस्त्यामिड़ामा-

दधाति। वाचः सा भागधेयं। यामुपह्वयति। प्राणानाꣳ सा वाचमेव प्राणाꣳश्चावरुन्धे" (ब्रा०।३का०।३प्र०।८अ०) इति। पुरोडाशस्य बर्हिषि स्थापनं विधातुं प्रस्तौति "अथ वा एतर्हुं-पह्वतायामिडायां। पुरोडाशस्यैव बर्हिषदो मीमाꣳसा" (ब्रा०। ३का०।३प्र०।८अ०) इति। इडावदानानन्तरं होत्रा तस्यामि-डायामुपह्वतायां सत्यां अवशिष्टस्य पुरोडाशस्यैतस्मिन्नेव काले बर्हिस्थापनसम्बन्धिनी काचिन्मीमांसा भवति। किं पुरोडाशो बर्हिषि स्थापनीयो न वेति। तत्र प्रयोजनाभावादस्थापनमिति प्राप्ते प्रयोजनं देवतानां सभागत्वमिति मत्वा विधत्ते "यज-मानं देवा अब्रुवन्। हविर्नो निर्वपेति। नाहमभागो निर्वप्स्या-मीत्यब्रवीत्। न मया भागयाऽनुवक्ष्यथेति वागब्रवीत्। नाहम-भागा पुरोनुवाक्या भविष्यामीति पुरोनुवाक्या। नाहमभागा याज्या भविष्यामीति याज्या। न मया भागेन वषट्करिष्यथेति वषट्कारः। यद्यजमानभागं निधाय पुरोडाशं बर्हिषदं क-रोति। तानेव तद्भागिनः करोति" (ब्रा०।३का०।३प्र०।८अ०) इति। यजमानभागाद्यभिमानिदेवता भागरहिताः स्वस्वव्या-पारं न कुर्व्वन्ति। ततो यजमानस्यैकं पुरोडाशभागं पृथङ्नि-धायावशिष्टं पुरोडाशं बर्हिषि स्थापयेत्। तेन स्थापनमात्रेण वयं भागिन इति देवानां तुष्टिर्भवति। स्थापितस्य विभागं विधत्ते "चतुर्धा करोति। चतस्रो दिशः। दिक्ष्वेव प्रतितिष्ठति" (ब्रा०। ३का०।३प्र०।८अ०) इति। पुनः पूर्व्वविधिमनूद्य प्रशंसति "ब-र्हिषदं करोति। यजमानो वै पुरोडाशः। प्रजा बर्हिः। यज-

मानमेव प्रजासु प्रतिष्ठापयति। तस्मादस्थ्नान्याः प्रजाः प्रतितिष्ठन्ति। माꣳसेनान्याः'' (ब्रा०।३का०।३प्र०।८अ०) इति। यस्मात् कठिनस्य बर्हिषि स्थापितस्य पुरोडाशस्य मृदुनो बर्हिषश्च संयोगः तस्मात् कृशदेहाः काश्चित् कठिनेनास्थ्ना प्रतितिष्ठति। स्थूलकायास्तु मांसेन। प्रकारान्तरेण तमेव विधिं प्रशंसति "अथो खल्वाहुः। दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते। यत्पुरोडाशं बर्हिषदं करोति'' (ब्रा०।३का०।३प्र०।८अ०) इति। पुरोडाशहविषो हविर्यज्ञः। यस्य बर्हिषि पुरोडाशस्थापनं यत् एता ऋत्विजो वेदिमध्ये दक्षिणा एव अवरुद्धाः। विध्यन्तरमनूद्य प्रशंसति "चतुर्धा करोति। चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः। ब्रह्मा होताध्वर्युरग्नीत्'' (ब्रा०।३का०।३प्र०।८अ०) इति। तत्तद्भागस्य निर्देशं विधत्ते "तमभिमृशेत्। इदं ब्रह्मणः। इदꣳ होतुः। इदमध्वर्योः। इदमग्नीध इति। यथैवादः सौम्येऽध्वरे। आदेशमृत्विग्भ्यो दक्षिणानीयन्ते। तादृगेव तत्'' (ब्रा०।३का०।३प्र०।८अ०) इति। यथा सोमयागे माध्यन्दिनसवने दक्षिणार्थानि द्रव्याणि वेद्यां कृष्णाजिने प्रसार्येदमस्येदमस्येत्यादिश्यादिश्य दक्षिणा नीयन्ते तद्वदिदं निर्देशनं द्रष्टव्यं। निर्दिष्टानां भागानां यौगपद्यनिवारणाय क्रमं विधत्ते "अग्नीधे प्रथममादधाति। अग्निमुखा ह्यृद्धिः। अग्निमुखामेवर्द्धिं यजमान ऋध्नोति'' (ब्रा०।३का०।३प्र०।८अ०) इति। अग्नेः कृत्स्नयागनिष्पादकहेतुत्वात् समृद्धिहेतुः। तमग्निं इन्ध इत्यग्नीत्। अतोऽस्य प्राथम्यं युक्तं। आ-

ग्नीध्रस्य हस्ते भागाधानप्रकारं विधत्ते "सकृदुपस्तीर्य्य द्विराद-
धत्। उपस्तीर्य्य द्विरभिघारयति। षट् सम्पद्यन्ते। षड्वा ऋतवः।
ऋतूनेव प्रीणाति" (ब्रा०।३का०।३प्र०।८अ०) इति। अस्य
विधेस्तात्पर्य्यं बोधायनः एकप्रकारेणाह "उपहूतायामिडा-
यामग्नीध आदधाति षडवत्तमुपस्तृणात्यादधात्यभिघारयति"
इति। आपस्तम्बस्तु अन्यथा ब्रूते "द्विरुपस्तृणाति। द्विराद-
धाति। द्विरभिघारयति" इति। विधत्ते "वेदेन ब्रह्मणे ब्रह्म-
भागं परिहरति। प्राजापत्यो वै वेदः। प्राजापत्यो ब्रह्मा। सविता
यज्ञस्य प्रसूत्यै" (ब्रा०।३का०।३प्र०।८अ०) इति। परिहारः
प्रदानं। यथा प्रजापतिरन्तर्य्यामितया प्रेरकः एवं ब्रह्मापि
तदनुज्ञया यज्ञस्य प्रवर्त्तक इति ब्रह्मणः प्राजापत्यत्वं। वेदव्य-
तिरिक्तसाधनेन येन केनापि प्रक्रान्तपात्रेण भागान्तरं देय-
मित्याह "अथ काममन्येन" (ब्रा०।३का०।३प्र०।८अ०) इति।
होतुर्ब्रह्मणोऽनन्तर्य्यं विधत्ते "ततो होत्रे। मध्यं वा एतद्य-
ज्ञस्य। यद्धोता। मध्यत एव यज्ञं प्रीणाति" (ब्रा०।३का०।
३प्र०।८अ०) इति। सामिधेनीरारभ्योपरिष्टादेव होतुर्व्या-
पाराद्यज्ञमध्यत्वं। अध्वर्य्योर्होत्रानन्तर्य्यं विधत्ते "अथाध्वर्य्यवे।
प्रतिष्ठा वा एषा यज्ञस्य। यदध्वर्य्युः" (ब्रा०।३का०।३प्र०।८अ०)
इति। प्रतिष्ठा समाप्तिः। समिष्टयजुर्होमपर्य्यन्तं यज्ञमध्वर्य्युः
समापयति। आग्नीध्रमारभ्याध्वर्य्युपर्य्यन्तं क्रममन्वाहार्य्यादि द-
क्षिणायामतिदिशति "तस्माद्धविर्यज्ञस्यैतामेवावृतमनु। अन्या
दक्षिणा नीयन्ते। यज्ञस्य प्रतिष्ठित्यै" (ब्रा०।३का०।३प्र०।८अ०)

इति। आहृत्प्रकारः। आग्नीध्रं प्रति प्रैषमन्त्रमुत्पादयति। अग्नि-मग्नीत्संमृड्ढीत्याह। पराङिव ह्येतर्हि यज्ञः'' (ब्रा०१का०।३प्र०।८अ०) इति। वीप्सया परिधिसम्मार्जनमपि ल-भ्यते। अस्मिन् काले समाप्तप्रायत्वाद्यज्ञः पराङ्मुख इव वर्त्तत इति सकृत्सम्मार्जनं पर्य्याप्तं। अथ होतारं प्रत्यस्ति कश्चित् प्रैष-मन्त्रः "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" इति। भद्रं फलं तस्य वाच्यं वचनं। तदर्थमग्निर्होता। पृथिवी होता इत्यादिश्रुतिसिद्धा दैव्या होतारः परमेश्वरेण प्रेरिताः। इदं द्यावापृथिवी भद्रमभूदि-त्याद्यनुवाकः सूक्तं। तस्य वाको वचनं। तदर्थं मानुषो होता प्रेषितः। अतो हेतोः हे होतस्तत् सूक्तं ब्रूहि। तमिमं मन्त्रमु-त्पाद्य तत्रेषितपदस्य भद्रवाच्यायेति पदस्य च अभिप्रायं व्या-चष्टे "इषिता दैव्या होतार इत्याह। इषितꣳ हि कर्म्म क्रियते। भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह। आशिषमेवैतामाशास्ते" (ब्रा०।३का०।३प्र०।८अ०) इति। अस्ति होतारं प्रत्यपरः प्रैषमन्त्रः "स्वगा दैव्या होतृभ्यः स्वस्ति-र्मानुषेभ्यः शंयोर्ब्रूहि" इति। दैव्यानां होतॄणामयं यज्ञः स्वाधी-नो मानुषेभ्यो होतृभ्यः स्वस्त्यस्तु। हे होतस्त्वं शंयुदेवस्य सम्ब-न्धिनं तच्छंयोरावृणीमह इत्यनुवाकं ब्रूहि। अस्मिन् मन्त्रे स्व-गाशब्दस्वस्तिशब्दशंयुशब्दानामभिप्रायं क्रमेण दर्शयति "स्वगा दैव्या होतृभ्य इत्याह। यज्ञमेव तत्स्वगा करोति। स्वस्तिर्मानु-षेभ्य इत्याह। आशिषमेवैतामाशास्ते। शंयोर्ब्रूहीत्याह। शंयुमेव

बार्हस्पत्यं भागधेयेन समर्धयति" इति। (ब्रा०।३का०।१प्र०। ८अ०) शंयुर्बृहस्पतेः पुत्रः। इत्थमिडाभागाद्यनुष्ठानं विधायास्मिन् काण्डे आम्नाताभ्यां वाजस्य मेत्येताभ्यामृग्भ्यां स्रुग्व्यूहनं विधत्ते "अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्यां व्यूहति। प्रतिष्ठा वा अनुष्टुक्। अन्नं वाजः प्रतिष्ठित्यै। अन्नाद्यस्यावरुद्ध्यै" (ब्रा०। ३का०।३प्र०।९अ०) इति। चतुर्भिः पादैर्गवादीनां प्रतिष्ठितत्वात् तद्वदनुष्टुग्भ्यः प्रतिष्ठाहेतुत्वं। वाजशब्दस्यान्नवाचित्वात् तद्युक्तावृचावन्नं योग्यस्यान्नस्यावरोधाय भवतः। सामान्याकारेण विहितं स्रुग्व्यूहनं विशेषाकारेण विशदयति "प्राचीं जुहूमूहति। जातानेव भ्रातृव्यान् प्रणुदते। प्रतीचीमुपभृतं। जनिष्यमाणानेव प्रतिनुदते। सविषूच एवापोह्य सपत्नान् यजमानः। अस्मिँल्लोके प्रतितिष्ठति" (ब्रा०।३का०।३प्र०।९अ०) इति। वैरिणः परस्परवियुक्ता विविधदिक्पलायिता एव यथा भवन्ति तथा तानपोह्य प्रतितिष्ठति। वाजवतीभ्यामित्येतद्द्विवचनार्थमनूद्य प्रशंसति "द्वाभ्यां द्विप्रतिष्ठो हि" (ब्रा०।३का०।३प्र०।९अ०) इति। द्वाभ्यां पादाभ्यां प्रतिष्ठा यस्यासौ द्विप्रतिष्ठः। कल्पः "जुह्वा परिधीनक्ति। वसुभ्यस्त्वा इति मध्यमं। रुद्रेभ्यस्त्वा इति दक्षिणं। आदित्येभ्यस्त्वा इत्युत्तरं" इति। त्रिस्त्वपनक्तीत्यध्याहारः। स्पष्टार्थतां दर्शयति "वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वेत्याह। यथा यजुरेवैतत्" (ब्रा०।३का०।३प्र०।९अ०) इति। बोधायनः "स्रुचं प्रस्तरमनक्ति। अक्तꣳ रिहाणा इति जुह्वामग्राणि। वियन्तु वय इत्युपभृति मध्यानि। प्रजां योनिं

मानिर्मृक्षमिति भुवायां मूलानि" इति। आपस्तम्बस्तावद्विती-यमन्त्रावेकीकृत्याह "अक्तꣳ रिहाणा वियन्तु वय इति जुह्वा-मग्रं। प्रजां योनिं मानिर्मृक्षमित्युपभृति मध्यं। आप्यायन्तामाप ओषधय इति भुवायां मूलं" इति। आज्येनाक्तं प्रस्तराग्रं लेलिहाना विविधं मार्गं गच्छन्तु। अहं तु प्रजां तत्कारणञ्च मा विनाशयामि। आज्यरूपा आपः प्रस्तरमूलरूपा ओष-धीराप्याययन्तु। विधत्ते "स्रुक्षु प्रस्तरमनक्ति। इमे वै लोकाः स्रुचः। यजमानः प्रस्तरः। यजमानमेव तेजसाऽनक्ति। त्रेधा ऽनक्ति। त्रय इमे लोकाः। एभ्य एवैनं लोकेभ्योऽनक्ति। अभि-पूर्वमनक्ति। अभिपूर्वमेव यजमानं तेजसाऽनक्ति" (ब्रा०।३का०। ३प्र०।८अ०) इति। अभिमुखमग्रं पूर्वं यथा भवति तथा प्रस्तरमञ्ज्यात्। यजमानोऽपि मुख एव सभासु वक्तृत्वेन ते-जस्वी भवति। मन्त्रगतस्याक्तशब्दस्याभिप्रायमाह "अक्तꣳ रि-हाणा इत्याह। तेजो वा आज्यं। यजमानः प्रस्तरः। यज-मानमेव तेजसाऽनक्ति" (ब्रा०।३का०।३प्र०।८अ०) इति। वि-शब्दसूचितं दर्शयति "वियन्तु वय इत्याह। वय एवैनं कृत्वा। सुवर्गं लोकं गमयति" (ब्रा०।३का०।३प्र०।८अ०) इति। मन्त्रे प्रथमाबहुवचनान्तो विशब्दः पक्षिवाची। ब्राह्मणे तु द्विती-यैकवचनान्तो वयःशब्दः। मा निर्मृक्षमित्येतस्याभिप्रायं दर्श-यति "प्रजां योनिं मा निर्मृक्षमित्याह। प्रजाया गोपीथाय" (ब्रा०।३का०।३प्र०।८अ०) इति। ओषधय इति द्वितीया विवक्षितेत्याह "आप्यायन्तामाप ओषधय इत्याह। आप

एवौषधीराप्याययति" (ब्रा०।१का०।३प्र०।८अ०) इति। अत्र मन्त्रवचनं द्रष्टव्यं। बौधायनः "तमुपरीव प्रहरति नात्यग्रं प्रहरति न पुरस्तात् प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं वियौत्यूर्द्ध्वमुद्यौति आप्यायंतामाप ओषधयो मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरयेति" इति। आपस्तम्बः "अनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति" इति। अत्र प्रस्तरप्रहृतौ नात्यग्रमित्यादयो नियमविशेषाः। आहवनीयात्ययः प्रस्तराग्रस्य न कार्य्यः। प्रस्तरस्य पुरस्तादन्यत् किमपि न प्रक्षिपेत्। दर्भस्य कस्यचिच्छेदरूपा हिंसा न कार्य्या। दर्भाणां परस्परवियोगो न कार्य्यः। किन्तु कृत्स्नं प्रस्तरमुद्यच्छेत्। आपस्तम्बस्य तु मरुतामिति प्रस्तरमन्त्रादिः। सह शाखया वत्सापाकरणहेतुभूतया हे प्रस्तरावयवा दर्भा यूयं वायुप्रेरितवृष्टिजन्यतया वायूनां बिन्दवः स्थ। हे प्रस्तर त्वं दिवं गत्वा वृष्टिं प्रेरय। व्याचष्टे "मरुतां पृषतयः स्थेत्याह। मरुतो वै वृष्ट्या ईशते। वृष्टिमेवावरुन्धे। दिवं गच्छ ततो नो वृष्टिमेरयेत्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे" (ब्रा०।३का०।३प्र०।८अ०) इति। कल्पः "अथोपोत्थायाहवनीयमुपतिष्ठते। आयुष्पा अग्नेऽस्यायुर्मे पाहि। चक्षुष्पा अग्नेऽसि। चक्षुर्मे पाहि" इति। आयुश्चक्षुषोः पालनीयतां दर्शयति "यावद्वा अध्वर्य्युः प्रस्तरं प्रहरति। तावदस्यायुर्मीयते। आयुष्पा अग्नेऽस्यायुर्मे पाहीत्याह। आयुरेवात्मन् धत्ते। यावद्वा अध्वर्य्युः प्रस्तरं प्रहरति। तावदस्य चक्षुर्मीयते। चक्षुष्पा अग्नेऽसि चक्षुर्मे

पाहीत्याह। चक्षुरेवास्मिन् धत्ते" (ब्रा०।२का०।२प्र०।९अ०) इति। कल्पः "ध्रुवासीत्यन्तर्वेदि पृथिवीमभिमृशति" इति। ब्राह्मणे "ध्रुवासीत्याह प्रतिष्ठित्यै" (ब्रा०।१का०।१प्र०।९अ०) इति। कल्पः "मध्यमं परिधिमनुप्रहरति। यं परिधिं पर्य्यधत्था अग्ने देव पणिभिर्वीयमाणः तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै। इत्यथेतरावुपसमस्यति। यज्ञस्य पाथ उपसमितं" इति। हे अग्ने देव स्तुतिभिः प्राप्यस्त्वं स्वयं यं मध्यमपरिधिं पश्चिमभागे स्थापितवानसि तवानुकूलतया प्रियन्तमेतं परिधिं त्वयि भरामि। एष त्वत्तोऽपरक्तो नैव। हे दक्षिणोत्तरपरिधी यज्ञस्य फलरूपमन्नं युवामुपसम्प्राप्नुतं। पर्य्यधत्था इत्येतत् सत्यमित्याह "यं परिधिं पर्य्यधत्था इत्याह। यथा यजुरेवैतत्" (ब्रा०।२का०।२प्र०।९अ०) इति। परिधावग्नेः प्रीत्युत्पादनायाग्निसम्बोधनमित्याह "अग्ने देवपणिभिर्वीयमाण इत्याह। अग्नय एवैनं जुष्टं करोति" (ब्रा०।२का०।१प्र०।९अ०) इति। अनुशब्देन ज्ञातीनामनुरक्तत्वं सूच्यत इत्याह "तन्त एतमनुजोषं भरामीत्याह। सजातानेवास्मा अनुकान् करोति" (ब्रा०।१का०।१प्र०।९अ०) इति। अपराधनिषेध आनुकूल्यार्थ इत्याह "नेदेष त्वदपचेतयाता इत्याहानुख्यात्यै" (ब्रा०। १का०।१प्र०।९अ०) इति। अनेकयोः परिध्योः सह कथनं बहुदिव्यानुकूलायेत्याह "यज्ञस्य पाथ उपसमितमित्याह। भूमानमेवोपैति" (ब्रा०।२का०।१प्र०।९अ०) इति। विधत्ते "परिधीन् प्रहरति। यज्ञस्य समिद्ध्यै" (ब्रा०।१का०।१प्र०।

८अ०) इति। समिष्टिः सम्पूर्त्तिः। सूत्रं "अथैनान् सं स्रावे-णाभिजुहोति जुह्वामुपभृतं सं स्रावयति। सं स्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभिविश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वं" इति। हे विश्वेदेवा यूयं संस्राव-भागा स्थ। जुहूपभृतोर्भ्रियमान आज्यशेषः संस्रावः। स एव भागो येषां ते संस्रावभागाः। कीदृशा देवाः। तं भागं बभुमिच्छावन्तो बृहन्तो महान्तः सर्व्वैराराधनीयाः। तत्र केचित् प्रस्तरमुष्टा तिष्ठन्ति। अन्ये त्वास्तीर्णे बर्हिषि सीदन्ति। अस्माभिः क्रियमाणामिमां स्तुतिमभिलक्ष्य समीचीनेयमिति गृणन्तो यूयमस्मिन् यज्ञे उपविश्य हृष्टा भवत। विधत्ते "स्रुचौ सम्प्रस्रावयति। यदेव तत्र क्रूरं। तत्तेन शमयति। जुह्वामुपभृतं। यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। यजमानायैव भ्रातृव्यमुपस्तिं करोति" (ब्रा०।३का०।३प्र०।८अ०) इति। व्याचष्टे "सं स्रावभागा स्थेत्याह। वसवो वै रुद्रा आदित्याः सं स्रावभागाः। तेषां तद्भागधेयं। तानेव तेन प्रीणाति" (ब्रा०।३का०।३प्र०।८अ०) इति। अस्मिन्मन्त्रे देव-तासम्बन्धमृचश्छन्दोविशेषञ्च प्रशंसति "वैश्वदेव्यर्चा। एते हि विश्वेदेवाः। त्रिष्टुग्भवति। इन्द्रियं वै त्रिष्टुक्। इन्द्रियमेव यज-माने दधाति" (ब्रा०।३का०।३प्र०।८अ०) इति। एते वस्वादि-रूपाः। बौधायनः "अथ प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य धुरि स्रुचौ विमुञ्चति। अग्नेर्वामपन्नगृहस्य सदसि सादयामि। सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातं" इति। हे जुहूपभृतौ

युवां अविनश्वरगृहस्य पृथिव्यभिमानिनो वह्नेः स्थाने शकट-रूपे यजमानस्य सुखाय स्थापयामि। हे सुखवत्यौ सुखे मा स्थापयतं। यज्ञभारवाहिनावेतौ दम्पती रक्षतं। यथोक्तं मन्त्रार्थं दर्शयति "अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह। अयं वा अग्निरपन्नगृहः। अस्या एवैने सदने सादयति। सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह। प्रजा वै पशवः सुम्नं। प्रजा-मेव पशूनात्मन्धत्ते। धुरि धुर्यौ पातमित्याह। जायापत्योर्गो-पीथाय" (ब्रा०।३का०।१प्र०।६अ०) इति। अत्रापस्तम्बो मन्त्रभे-दमाश्रित्याग्नेर्वामिति शकटस्य पूर्वभागे स्रुचौ सादयित्वा धुरि धुर्याविति युगधुरोः प्रोहेदिति मन्यते। कल्पः "अपरं चतुर्गृ-हीतं गृहीत्वा अन्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फली-करणानीप्य फलीकरणं जुहोति। अग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिं स्वाहा" इति। तण्डुलेषु गृहे क्रियमाणेष्वपनेया मालिन्यांशाः फलीकरणाः। हे अग्ने मां दिवः पाहि। द्युलोकवासिनो देवा मय्यपराधं यथा न गृह्णन्ति तथा कुरु। अदब्धायो अहिंसितजीवित अशीततनो उ-ष्णशरीर प्रसित्यै प्रकृष्टाद् बन्धात् फलविघ्नात् पाहि। दुरिष्ट्यै दु-ष्टात् अयथाशास्त्रानुष्ठानात् पाहि। दुरद्मन्यै यागाधिकारविरो-धिदुष्टहेतुभोजनात् पाहि। दुश्चरितात् निषिद्धाचरणात् पाहि। पितुं अन्नं अस्मदीयं अविषं अमृतं कुरु सुषदा सुखोपवेशनेन निमित्तेन योनिं स्थानं कुरु। इदं फलीकरणद्रव्यं तुभ्यं स्वाहा

कृतमस्तु। मन्त्रस्य व्याख्यानपूर्वकं होमं विधत्ते "अग्नेऽदब्धायो ऽशीततनो इत्याह। यथा यजुरेवैतत्। पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्यादि-त्याह। आशिषमेवैतामाशास्ते। अविषं नः पितुं कृणु सुषदा योनिᳪं स्वाहेतीध्मसंनहनान्यन्वाहार्यपचनेऽभ्याधाय फलीकरण-होमं जुहोति। अतिरिक्तानि वा इध्म संनहनानि। अतिरिक्ताः फलीकरणाः। अतिरिक्तमाज्योच्छेषणं। अतिरिक्त एवातिरिक्तं दधाति। अथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽवरुन्धे"(ब्रा०।३का०। ३प्र०।८अ०) इति। इध्मे शास्त्रोक्तप्रमाणेन छिन्ने सति तच्छेष-काष्ठानि इध्मसंनहनानि। तानि दक्षिणाग्नौ प्रक्षिप्य तेषामुपरि जुह्वगताज्ये स्थापितान् फलीकरणान् जुहुयात्। यागोपयुक्त-द्रव्याद्धिकत्वमतिरिक्तत्वं अधिकद्रव्यहोमेनाधिकं फलं प्राप्य स्वाधीनं करोतीत्यर्थः। इत्थं फलीकरणहोमे निष्पन्ने सत्य-नन्तरं पत्न्याः समीपे वेदप्रासनं विधातव्यं। तद्विधौ बुद्धिस्थे सति तत्प्रसङ्गाद्वेदस्य प्रशंसकः कश्चिन्मन्त्र उत्पाद्यते। स च प्रदेशान्तरविषयतया विनियुज्यते "वेदिर्देवेभ्योऽनिलायत। तां वेदेनान्वविन्दन्। वेदेन वेदिं विविदुः पृथिवीं। सापप्रथे पृ-थिवी पार्थिवानि। गर्भं बिभर्त्ति भुवनेष्वन्तः। ततो यज्ञो जायते विश्वदानिरिति पुरस्तात् स्तम्बयजुषो वेदेन वेदिᳪं संमार्ष्ट्यनुवित्त्यै। अथो यद्वेदश्च वेदिश्च भवतः। मिथुनत्वाय प्रजात्यै" (ब्रा०।३का०।३प्र०।९अ०) इति। केनापि कार-णेन देवेभ्यस्तिरोहिता वेद्यभिमानिदेवता वेदाभिमानिदेवता-

मुखेन देवा अलभन्त। तमेतं वेदस्य महिमानं वेदेनेत्यादिको मन्त्रः प्रकाशयति। अस्यायमर्थः। असुरैर्दत्तां पृथिवीं देवाः पूर्व्वोत्तरभागाभ्यां संस्कृत्य वेदिमकुर्व्वन्। तां वेदिं देवाः पुनर्वेदेनालभन्त। सा च वेदिः पृथिवीरूपा सती पार्थिवानि ओषध्यादीनि विस्तारितवती। किञ्च सा पृथिवीदेवता सर्व्वेषु भुवनेष्वन्तरुदरान्तर्य्यं गर्भं बिभर्त्ति। तस्माद्गर्भात् सर्व्वस्य फलस्य दाता यज्ञपुरुष उत्पन्न इति। अनेन मन्त्रेणाष्टमानुवाकोक्तात् पुरोडाशनिष्पादनादूर्द्ध्वं नवमानुवाके वक्ष्यमाणात् सामधेनीकरणात् पुरस्ताद् दर्भमयेन वेदेन वेदिस्थानं सम्मृज्यात् तस्य वेदिस्वाभाय। किञ्च वेदवेदिरूपं मिथुनं प्रजननाय भवति। प्राचश्चिकं समाख्य प्रकृतमनुसरति "प्रजापतेर्वा एतानि श्मश्रूणि। यद्वेदः। पत्निया उपस्थ आस्यति। मिथुनमेव करोति। विन्दते प्रजां" (ब्रा०।३का०।३प्र०।९अ०) इति। पत्नीसमीपे प्राप्तस्य वेदस्य पुनरास्तरणं विधत्ते "वेदꣳ होताऽऽहवनीयात् स्तृणन्नेति। यज्ञमेव तत्सन्तनोत्योत्तरस्मादर्द्धमासात्। तꣳ सन्ततमुत्तरेऽर्द्धमास आलभते। तं काले काल आगते यजते" (ब्रा०।३का०।३प्र०।९अ०) इति। वेदस्य सन्धनं विमुच्य गार्हपत्यमारभ्याहवनीयपर्य्यन्तास्तरणेन आगामिपर्व्वपर्य्यन्तं यज्ञः सन्ततो भवति। पुनः पर्व्वण्यन्वाधानादिकं कृत्वा प्रतिपदि तं सन्ततं यज्ञं कर्त्तुमारभेत। एवं पुनः पुनस्तत्तत्काले समागते सति यजत इत्यविच्छिन्नो यज्ञो भवति। बोधायनः "अथोत्थाय दक्षिणेन पदा वेदिमवक्रम्य भुवया समिष्टयजुर्जुहोति, मध्यमे स्वाहा-

कारे बर्हिरनुप्रहरति, देवा गातुविदो गातुं वित्वा गातु-मितमनसस्पत इमं नो देवदेवेषु यज्ञꣳ स्वाहा वाचि स्वाहा-वाते धाः स्वाहा” इति। आपस्तम्बः “देवा गातुविद इत्यन्तर्वे-द्यूर्द्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति, मध्यमे स्वाहाकारे बर्हि-रनुप्रहरति” इति। अन्तेऽपि बोधायनेन स्वाहाकारस्याध्याह-रणात् तत्रावशिष्टं सर्व्वं होतव्यमिति लभ्यते। जुह्वादीनि तु यजमानेन यावदायुः सन्धार्य्याणि। तमाहिताग्निमग्निभिर्दह-न्ति यज्ञपात्रैश्चेति शास्त्रात्। हे गातुविदो मार्गविदो देवाः यूयं गातुं मार्गं लब्ध्वा समागताः पुनः प्रतिनिवृत्य तं गातुं मार्गं गच्छत। हे मनसस्पते देव भवतास्मेषु देवेषु इमं नो यज्ञं निधेहि इदमाज्यं हुतमस्तु। सर्व्वक्रियाप्रवर्त्तके वायौ निधेहि इदमाज्यं हुतमस्तु। वायुविषयेणानेन मन्त्रेण यज्ञ-समाप्तिमुपपादयति “ब्रह्मवादिनो वदन्ति। सत्वा अध्वर्य्युः स्यात्। यो यतो यज्ञं प्रयुङ्क्ते। तदेनं प्रतिष्ठापयतीति। वा-ताद्वा अध्वर्य्युर्यज्ञं प्रयुङ्क्ते। देवा गातुविदो गातुं वित्वा गा-तुमितेत्याह। यत एव यज्ञं प्रयुङ्क्ते। तदेनं प्रतिष्ठापयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः” (ब्रा०।३का०।३प्र०।९अ०) इति। योऽध्वर्य्युर्यस्माद्देवाद्यज्ञमुपक्रमते तस्मिन्नेव देवे यज्ञं यदि समापयेत् तर्हि स एव मुख्योऽध्वर्य्युः स्यादिति ब्रह्मवा-दिनामुक्तिः। अयाप्यध्वर्य्युः सर्व्वक्रियाप्रवर्त्तकाद्वायोरेव यज्ञ-मुपक्रमते “देवा गातुविदो गातुं यज्ञाय विन्दत। मनसस्प-तिना देवेन वाताद्यज्ञः प्रयुज्यताम्” इत्येतस्याच्छिद्रकाण्डगतस्य

मन्त्रस्य प्रथमं जपितत्वात् अतः समाप्तावपि देवा गातुविद इत्येष वायुविषयो मन्त्रो युक्तः। यद्यप्येतावता चयोदशानुवाकोक्तानां मन्त्राणां व्याख्यानं समाप्तं तथापि दशमानुवाके पत्नीसन्नहनप्रसङ्गेन पत्नीविषयौ द्वौ मन्त्रावाम्नातौ। तदानीमनुपयोगात् ब्राह्मणे न तौ तत्र न व्याख्यातौ उपवेषत्यागार्थं मन्त्रोत्पत्तिरपि कर्त्तव्येति। तदुभयमत्र व्याक्रियते। प्रथमं तावद्योक्त्रविमोकमन्त्रस्य पूर्व्वार्द्धं व्याचष्टे "यो वा अयथा देवतं यज्ञमुपचरति। आ देवताभ्यो वृश्च्यते। पापीयान् भवति। यो यथादेवतं। न देवताभ्य आवृश्च्यते। वसीयान् भवति। वरुणो वै पाशः। इमं विष्यामि वरुणस्य पाशमित्याह। वरुणपाशादेवैनं मुञ्चति। सवितृप्रसूतो यथादेवतं। न देवताभ्य आवृश्च्यते। वसीयान् भवति" (ब्रा०।३का०।३प्र०।१०अ०) इति। योक्त्रपाशस्य वरुणो देवता तदन्धस्य च सविता देवता। ततो "वरुणस्य पाशं यमबध्नीत सविता" इति पदाभ्यां यथादेवतं यज्ञोपचाराान्न देवताभ्य आवृश्च्यते। न विच्छिन्नो भवति। नापि दरिद्रा भवन्ति। सवितृप्रसूतो यथादेवतमुपचरतीति शेषः। तृतीयपादे पदार्थवाक्यार्थौ दर्शयति "धातुश्च योनौ सुकृतस्य लोक इत्याह। अग्निर्वै धाता। पुण्यकर्म्म सुकृतस्य लोकः। अग्निरेवैनां धाता। पुण्ये कर्म्मणि सुकृतस्य लोके दधाति" (ब्रा०।३का०।३प्र०।१०अ०) इति। दुःखनाशाय सुखप्राप्तये चतुर्थपादोक्तिरित्याह "स्योनं मे सह पत्या करोमीत्याह। आत्मनश्च यजमानस्य चामार्त्यै सन्त्वाय" (ब्रा०।३का०।

३प्र०।१०अ०) इति। पत्न्याः पूर्णपात्रविमोकार्थो यो मन्त्रस्तं व्याचष्टे "समायुषा सम्प्रजयेत्याह। आशिषमेवैतामाशास्ते पूर्णपात्रे" (ब्रा०।३का०।३प्र०।१०अ०) इति। समानीयमाने इति शेषः। मन्त्रगतं छन्दः प्रशंसति "अन्ततोऽनुष्टुभा। चतुष्पदा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति। अस्मिन् लोके प्रतितिष्ठानीति। अस्मिन्नेव लोके प्रतितिष्ठति" (ब्रा०।३का०।३प्र०।१०अ०) इति। पत्नीकर्त्तव्यस्यावसाने विहितं यदिदं पूर्णपात्राभिमन्त्रणं अनुष्टुभा क्रियते तदिदं छन्दः पादचतुष्टयोपेतत्वाद्गौरिव प्रतिष्ठितं भवति। कस्मिन् विषये। पत्न्या सम्बन्धिनि पूर्णपात्रे विषये मन्त्रं जपन्त्याः कोऽभिप्रायः। इहलोके प्रतिष्ठितास्यामित्यभिप्रायः। तच्च मन्त्रसामर्थ्यात् सा प्रतितिष्ठत्येव। प्रकारान्तरेण प्रशंसति "अथो वाग्वा अनुष्टुक्। वाङ्मिथुनं। आपो रेतः प्रजननं। एतस्माद्वै मिथुनाद्विद्योतमानः स्तनयन् वर्षति। रेतः सिञ्चन्। प्रजाः प्रजनयन्" (ब्रा०।३का०।३प्र०।१०अ०) इति। न केवलमनुष्टुभः छन्दोरूपत्वं किन्तु वाग्रूपत्वमप्यस्ति। सा च वाग्योषिच्छन्दोरूपेण पुरुषेण सह मिथुनं सम्पद्यते। यास्तु पूर्णपात्रगता आपस्ताः प्रजोत्पत्तिसाधनं रेतः। एतस्मादेव यागानुष्ठानगतान्मिथुनादुत्पन्न आदित्यप्रेरितो मेघो वृष्टिद्वारेण प्रजोत्पत्तौ पर्य्यवस्यति। तथा च स्मर्य्यते।

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" ॥ इति।

विमुक्तयोक्त्रस्य पूर्णपात्रोदकस्य च सहकारः पत्न्या कर्त्तव्य इत्याह "यद्वै यज्ञस्य ब्रह्मणा युज्यते। ब्रह्मणा वै तस्य विमोकः। अद्भिः शान्तिः। विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा। आदायैनत् पत्नी सहाप उपगृह्णीते शान्त्यै" (ब्रा०।३का०।३प्र०।१०अ०) इति। यथा मन्त्रेणोपहितानां कपालानां मन्त्रेणैव विमोकः कर्तव्यः तथा योक्त्रस्यापि योगविमोकवत्या रज्वा कृतस्योपद्रवस्य अद्भिः शान्तिर्युक्ता। योक्त्रञ्चेदानीं मन्त्रेण मुक्तं। अतोऽञ्जलौ सद्योक्त्रमादाय तेन सहापो गृह्णीयात्। तद्ग्रहणायानयनं विधत्ते "अञ्जलौ पूर्णपात्रमानयति। रेत एवास्यां प्रजां दधाति। प्रजया हि मनुष्यः पूर्णः" (ब्रा०।३का०।३प्र०।१०अ०) इति। शोभत इति शेषः। पूर्णपात्रोदकेन पत्न्या मुखप्रक्षालनं विधत्ते "मुखं विमृष्टे। अवभृथस्यैव रूपं कृत्वोत्तिष्ठति" (ब्रा०। ३का०।३प्र०।१०अ०) इति। उत्तिष्ठेदिति विधिः। अथोपवेषो मन्त्रेण परित्यक्तव्यः। अतः प्रस्तौति "परिवेषो वा एष वनस्पतीनां। यदुपवेषः" (ब्रा०।३का०।३प्र०।११अ०) इति। पलाशशाखामूले त्यक्तभाग उपवेषः। स च सर्व्वेषां वनस्पतीनां परितो व्याप्नोति। वनस्पतिभिर्दुःसाध्यस्याङ्गारवियोजनस्य कपालोपधानादेरनेन कृतत्वात्। वेदनं प्रशंसति "य एवं वेद विन्दते परिवेष्टारं" (ब्रा०।३का०।३प्र०।११अ०) इति। सेवकजनमित्यर्थः। मन्त्रोत्पादनपुरस्सरमुपवेषत्यागं विधत्ते "तमुत्करे। यं देवा मनुष्येषु। उपवेषमधारयन्। ये अस्माभ्यमपचेतसः। तानस्मभ्यमिहा कुरु। उपवेषोपविड्ढि नः। प्रजां पुष्टिमथो

धनं। द्विपदो न चतुष्पदः। ध्रुवाननपगान् कुर्व्वीति पुरस्तात् प्रत्यञ्चमुपगूहति। तस्मात् पुरस्तात् प्रत्यञ्चः शूद्रा अवस्थन्ति" (ब्रा०।१का०।३प्र०।११अ०) इति। तमुत्करमुपगूहतीत्यन्वयः। धमित्यादिर्मन्त्रः। यं पलाशशाखामूलभागं देवा मनुष्यसम्बन्धियज्ञेषु कपालोपधानाद्युग्रकर्म्मकारिणमुपवेषमकल्पयन्। हे उपवेष स त्वं ये पुत्रभार्यादयोऽस्मत्तोऽपरक्रास्तानस्मदर्थमिधाभीयानुरस्मान् कुरु। हे उपवेष अस्माकं समीपे प्रजादिकं विद्धिं व्याप्तं कुरु। मनुष्यान् पंपूंश्च चिरजीविनो वियोगरहितांश्च कुरु। अनेन मन्त्रेण उपवेषमुत्करे मृत्खननादिरूपे तृणादित्यागस्थाने पूर्व्वभागे प्रत्यङ्मुखं गूढं कुर्य्यात्। यस्मादेवं तस्माल्लोकेऽपि उपवेषवत् कर्म्मकराः शूद्राः स्वाम्यभिमुखाः स्वामिनः पुरस्तात् सर्व्वदा अवतिष्ठन्ते। निःशेषेण गूहनं विधत्ते "स्वविमत उपगूहति। अप्रतिवादिन एवैनान् कुरुते" (ब्रा०।१का०।३प्र०।११अ०) इति। अग्रमुत्करे प्रवेश्य मूलं वहिर्नावशेषयेत् किन्तु स्वविष्ठान् मूलादारभ्य कृत्स्नं प्रवेशयेत्। तथा सत्येतान् भृत्यान् अप्रतिवादिनः उक्तकारिणः कुरुते। अभिचाराय मन्त्रान्तरमुत्पादयितुं प्रस्तौति "धृष्टिर्वा उपवेषः। प्रुष्वर्णो वज्रो ब्रह्मणा संशितः" (ब्रा०।१का०।१प्र०।११अ०) इति। अयमुपवेषः स्वत एव धार्ष्ट्ययुक्तः। तत ऊर्द्धं वह्निसन्तापेन युक्तः। पुनरपि मन्त्रेण तीक्ष्णीकृतत्वाद्वज्रः सम्पन्नः। अतोऽभिचारयोग्यः। तत्र मन्त्रमुत्पाद्य विनियुङ्क्ते "योऽपवेषे शुक्। सा ऽमुमृच्छतु यं द्विष्म इति। अथास्मै नाम

गृहस्य प्रचरति" (ब्रा०।३का०।१प्र०।११अ०) इति। शत्रुसम्बन्धाय मुमित्यच यो द्वेष्यः तस्य नाम गृहीत्वा तमुपवेषमग्नौ प्रहरेत्। पुनरप्यृचां त्रयमभिचारार्थमेवोत्पादयति "निरमुं नुद ओकसः। सपत्नो यः पृतन्यति। निर्बाध्येन हविषा। इन्द्र एणं पराशरीत्। इह तिस्रः परावतः। इह पञ्चजनाँ अति। इह तिस्रोऽतिरोचना यावत्। सूर्यो असद्दिवि। परमां त्वा परावतं। इन्द्रो नयतु वृत्रहा। यतो न पुनरायसि। शश्वतीभ्यः समाभ्य इति" (ब्रा०।३का०।१प्र०।११अ०) इति। यः शत्रुर्युद्धमिच्छति अमुं स्वगृहात् त्वं निःसारय निःशेषेण जगद्बाध्यं येन तन्निर्बाध्यं तादृशं हविरुपवेषरूपं तेन इन्द्र एनं शत्रुं परावृत्य हिंसितवान्। परावृच्छब्दो दूरदेशवाचि स्त्रीलिङ्गः। हे शत्रो त्वं त्रिभ्यो लोकेभ्यो निर्गत्य त्रीन् दूरदेशान् ब्राह्मणादीनतिक्रम्य चण्डालादिषु गच्छ। यावत् सूर्यो दिव्यस्ति तावन्तं कालं अग्निसूर्यचन्द्ररूपास्तिस्रो दीप्तीरतिक्रम्य महत्यन्धकारे गच्छ। वृत्रहेन्द्रस्त्वामत्यन्तदूरदेशं नयतु। दूरदेशं यस्मात्। दूरदेशादनेकेभ्यः संवत्सरेभ्य ऊर्द्धमपि न पुनरागमिष्यसि। एताभिस्तिसृभिः ऋग्भिरुपवेषं गृहात् दूरतो निरस्येत्। इत्येवं विधिस्तावकं मार्थवादेनोन्नयति "त्रिवृद्वा एष वज्रो ब्रह्मणा सꣳशितः। सुपैवैनं विध्वा। एभ्यो लोकेभ्यो निर्णुद्य। वज्रेण ब्रह्मणस्तृणुते" (ब्रा०।३का०।१प्र०।११०) इति। मन्त्रत्रयेण तीक्ष्णीकृत एष उपवेषरूपो वज्रस्त्रिगुणो भवति। एतत्त्रिष्ठेन शोकेन एनं वैरिणं लोकत्रयात् निःसार्य मन्त्रात्मकेन वज्रेण अभिहिनस्ति। निर्दहति

ज्ञात्वा तत्रोपवेषं प्रक्षेप्तुं यजुर्दृष्टरूपं मन्त्रमुत्पादयति "हतो ऽसाववधिषमामुमित्याह स्तृत्यै" (ब्रा०।३का०।३प्र०।११अ०) इति। स्तृतिर्हिंसा। अत्र सूत्रं "पञ्चभिर्निरस्येन्निखनेद्वा" इति। उपवेषस्याग्नौ प्रहरणे दूरदेशे निरसने भूमौ खनने च ध्यानं विधत्ते "यं द्विष्यात् तं ध्यायेत्। शुचैवैनमर्पयति" (ब्रा०। ३का०।३प्र०।११अ०) इति। अत्र विनियोगसङ्ग्रहः॥

"वाजद्वाभ्यां स्रुचौ व्यूह्य वसङ्ग्यात् परिधीं स्त्रिभिः।
अक्त प्राऽस्याच्त्रिभिः स्रुग्भ्यः प्रस्तराग्रादिकाञ्जनं॥
मरु प्रस्तरहोमोऽयमायुरग्न्यभिमन्त्रणं।
भुवा भूमिं स्पृशेद्धाम्य मध्यस्य परिधेर्हुतिः॥
यज्ञान्ययोर्द्वयोर्होमः संस्रावं स्रावकाहुतिः।
अग्ने स्रुचौ सादयित्वा धुरितौ प्रोक्षयेत् स्रुचौ॥
अग्ने फलीकृतेर्होमो देवा इष्टयजुर्हुतिः।
वाचि बर्हिर्हुतिर्वाते सर्पिर्होमोऽत्र विंशतिः"॥ इति।

अथ मीमांसा। दशमाध्यायस्य तृतीयपादे चिन्तितं।

"क्रियायाः प्रतिपत्त्यै वा चमसेडादिभक्षणं।
क्रियायाः पूर्व्ववन्नैवं यागीये स्वत्ववर्जनात्॥
अक्रीत यजमानस्य भक्षसत्वाच तेन सा।
प्रतिपत्तेः संस्कृतित्वात् सत्रेषु न निवर्त्तते" इति॥

अस्ति सोमे चमसभक्षणं अस्ति चेष्टौ इडाप्राशित्रादिभक्षः। तत्र भक्षेण प्रीतानामृत्विजां स्वाधीनत्वसम्भवात्। दक्षिणेन क्रयार्थं भक्षणमिति पूर्व्वः पक्षः। यागदेवतायै सङ्कल्पितेऽपि द्रव्ये

स्वत्वमलभमानो यजमानो न तेन क्रेतुं शक्नोति। किञ्च यजमानपञ्चमाः समुपहूयेडां भक्षयन्तीत्यक्रीतस्यापि यजमानस्य भक्षः श्रूयते। तस्मादृत्विजामपि भक्षणं न क्रयार्थमिति गम्यते। तस्मात् प्रतिपत्त्यर्थो भक्ष इति। तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्यागोपयुक्तद्रव्यसंस्कारत्वेन सत्रेषु न बाध्यते। तृतीयाध्यायस्य चतुर्थपादे* चिन्तितं।

"चतुर्धा कार्य्य आग्नेयः पुरोडाश इतीरितं।
चतुर्धा करणं सर्व्वशेषो वाऽऽग्नेयमात्रगः॥
उपलक्षणताऽऽग्नेये युक्ताऽतः सर्व्वशेषता।
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः॥
नाग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात्।
तेनैकस्मिन् पुरोडाशे चतुर्धा करणस्थितिः"॥ इति।

दर्शपूर्णमासयोः श्रूयते "आग्नेयं चतुर्धा करोति" इति। तत्राग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसम्बन्धात् आग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते। ततस्त्रयाणां शेष इति चेत्। मैवं। न ह्याग्नेय इत्ययं तद्धितः सम्बन्धमात्रे ऽभिहितः किन्तु देवतासम्बन्धे अग्निश्च केवलः। द्विदेवत्ययोः पुरोडाशयोर्नैकदेवतात्वं। अतो देवतैकदेशेन कृत्स्नदेवतोपलक्षणाभावादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाग्नेये चतुर्धाकरणं व्यवतिष्ठते। तत्रैव चतुर्थपादे चिन्तितं।

"इदं ब्रह्मण इत्युक्तिः क्रयार्थं भक्षणाय वा।

---

* प्रथमपादे इति तै० पा०।

भक्षाश्रुतेः क्रयार्थोऽतो यथेष्टं तैर्नियुज्यतां ॥
देवतायै समस्तस्य क्लृप्तत्वात् स्वामिता न हि।
शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते" ॥ इति।

चतुर्धाकृतस्य पुरोडाशस्य भागान् यजमान एव निर्दिशेत् "इदं ब्रह्मणः, इदं होतुः, इदमध्वर्य्योः, इदमग्नीधः" इति। सोऽयं निर्देशो न भक्षणार्थः भक्षणस्याश्रुतत्वात्। ततो भृतिदानेन तानृत्विजः परिक्रेतुमयं निर्देशः। क्रयस्तु तदङ्गीकारानुसारेण स्वल्पेनाप्युपपद्यते। तस्मात् स्वकीयभागस्तैरिच्छयोपयोक्तुं शक्य इति प्राप्ते ब्रूमः।"अग्नये जुष्टं निर्वपामि" इति कृत्स्नस्य हविषो देवतायै सङ्कल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावान्न युक्तः परिक्रयः। भक्षणन्तु प्रतिपत्त्यर्थत्वाद्युक्तं। अवशिष्टस्य यः कोऽप्युपयोगः प्रतिपत्तिः। पुरोडाशस्य भक्षणार्हत्वाद्भक्षणेन कर्मकराणामुत्साहजननाच्च तद्भक्षणार्थो निर्देशो युज्यते। तत्रैवाष्टमपादे चिन्तितं।

"वाजस्य मेत्यमुं ब्रूयादेको द्वौ वैकताऽर्थतः।
एकः काण्डद्वये पाठादध्वर्य्युस्वामिनावुभौ" ॥ इति।

दर्शपूर्णमासयोर्वाजस्य मेत्ययं मन्त्रोऽध्वर्य्युकाण्डे याजमानकाण्डे चाम्नातः। तत्रैकेन पठने सति मन्त्रस्य चरितार्थत्वादितरस्तं न पठेदिति चेत्। मैवं। काण्डान्तरपाठवैयर्थ्यप्रसङ्गात्। तस्मादुभाभ्यां पठनीयः। तयोः पठतोराशयभेदोऽस्ति। अनेन मन्त्रेण यजमानप्रकाशितमर्थं अनुष्ठानस्वामीत्यध्वर्य्युर्मनुते। अत्र न प्रमदिष्यामीति यजमानः। चतुर्थस्य द्वितीयपादे चिन्तितं।

"प्रस्तरं शाखया साकं प्रहृतिः प्रहृतिस्त्वियं।
शाखायामर्थकर्म स्यात् प्रतिपत्तिरथोचिता॥
प्रहृतिः प्रस्तरे यागः शाखायाः साहचर्य्यतः।
तथा स्यादर्थकर्मत्वे हृते शाखां प्रयोजयेत्॥
हरतिर्य्यागवाची नो प्रतिपत्तिस्ततो भवेत्।
पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत्"॥ इति

दर्शपूर्णमासयोः श्रूयते "सह शाखया प्रस्तरं प्रहरति" इति। तत्र शाखाहरणमर्थकर्म्मकः, प्रहरतिशब्देन यागस्याभिधानात्। कुतः। सूक्तवाकेन प्रस्तरं प्रहरतीत्येतद्वाक्यमुदाहृत्य चिन्तितं। प्रस्तरप्रहरणस्य यागत्वे तत्साहचर्य्याच्छाखाप्रहरणमपि याग एवेत्यर्थकर्म्म स्यात्। अर्थाय क्रतुसाकल्यप्रयोजनाय क्रियमाणमर्थकर्म्म। ततः प्रहरणेन पौर्णमास्यामपि पलाशशाखा प्रयुज्यत इति प्राप्ते ब्रूमः। सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र हरतिधातोर्यागवाचित्वं नोक्तं, किन्तु मान्त्रवर्णिकदेवतामुपलभ्य द्रव्यदेवताभ्यां यागः कल्पितः। शाखाप्रहरणे तु नास्ति देवता। ततो यागस्य कल्पयितुमशक्यतया हरतिधातुरत्र स्ववाच्यार्थपरित्यागमेवाचष्टे। तथा सति वत्सापाकरणोपयुक्तायाः पलाशशाखाया उपयोगान्तराभावाद् यागदेशेऽवकाशलाभाय यत्र क्वाप्यवश्यं परित्यागे प्राप्ते शास्त्रेणाहवनीये त्यागो नियम्यते तेन च शास्त्रीयत्यागेन शाखायाः प्रतिपत्तिर्भवति। प्रतिपत्तिर्नाम संस्काररूपो दृष्टार्थः। यथा राज्ञा चर्वितस्य ताम्बूलस्य सौवर्णे पतद्ग्रहे प्रक्षेपस्तद्वत्। ततः प्रहरणं प्रतिपत्तिकर्मतया

तदभावेऽपि क्रतुवैकल्याभावात् पौर्णमास्यां स्वसिद्धहेतुभूतां शाखां न प्रयोजयति। षष्ठाध्यायस्य प्रथमपादे चिन्तितं।

"स्त्रिया नास्ति स्वामिभावः पुंलिङ्गेन तदीरणात्।
प्रकृत्यर्थतया लिङ्गं सङ्ख्यावन्नाविवक्षितं॥
अस्त्युद्देश्यगतत्वेन सङ्ख्यया सदृशत्वतः।
तद् विभक्तिविकारादे*रर्थस्तत् प्रकृतेर्न तु"॥ इति।

स्वर्गकामो यजेतेति पुंलिङ्गशब्देनाधिकारिणो विधानात् सोऽधिकारः स्त्रिया नास्ति। न च शब्दैकत्ववल्लिङ्गमविवक्षितमिति वाच्यं। एकत्ववल्लिङ्गस्य प्रत्ययार्थत्वाभावात् प्रकृत्यर्थतया तु शब्दत्ववद्विवक्षितं पुंलिङ्गमिति प्राप्ते ब्रूमः। अस्ति स्त्रियाः कर्म्मण्यधिकारः। कुतः। पुंलिङ्गस्याविवक्षितत्वात्। न हि एकत्वस्य प्रत्ययार्थत्वमविवक्षायां निमित्तं, किन्तु उद्देश्यगतत्वं। इहापि यदीयस्वर्गकामः स यजेतेति वचनव्यक्तौ पुंलिङ्गस्योद्देश्यगतत्वेनैकत्वसदृशत्वात् नास्ति विवक्षितत्वं। न च प्रकृत्यर्थो लिङ्गं। स्त्रीलिङ्गत्वाच्च टाबादिभिः स्त्रीप्रत्ययैरभिधीयते। पुंलिङ्गं तु वृक्षानित्यस्मिन् द्वितीयाबहुवचने विभक्तिविकारेण नकारादेशलक्षणेनाभिव्यज्यते। एवं कुलमित्यस्मिन् प्रथमैकवचने नपुंसकाऽभिव्यक्तिः। तस्माल्लिङ्गस्य प्रकृत्यर्थत्वाभावादुद्देश्यगतत्वेनाविवक्षितत्वाच्च स्त्रिया अस्त्यधिकारः। तत्रैवान्यच्चिन्तितं।

"दम्पतीभ्यां पृथक्कार्य्यं सह वाऽऽख्यातसङ्ख्यया।
पृथगेवमवैगुण्यात् कर्त्रैक्याद्देवतैक्यवत्"॥ इति।

---

* टाब्विभक्तिविकारादे इति का० पा०।

यजेतेत्याख्यातगतप्रत्ययगतायाः सङ्ख्याया उद्देश्यगतत्वाभावेन विवचाया वारयितुमशक्यत्वात्। एककर्त्तृत्वाय दम्पतीभ्यां पृथगेव कर्म्मानुष्ठेयमिति चेत्। मैवं। वैगुण्यप्रसङ्गात्। कर्म्मणि तत्र तत्र पत्न्यवेचणं यजमानावेचणं चेत्युभयमप्याम्नातं। तत्र यजमानप्रयोगे पत्न्यवेचणं लुप्येत, पत्नीप्रयोगे यजमानावेचणं लुप्येतेत्यवैगुण्याय द्वयोः सहाधिकारः। न च यजेतेत्येकत्वं विरुद्धं। अग्नीषोमौ देवतेत्यत्र यथा व्यासक्तयोर्द्वित्वाद्देवतैक्यं तथा दम्पत्योरेकमेव कर्त्तृत्वमित्यङ्गीकारात्। तस्माद् दम्पत्योः सहाधिकारः। तथा सत्यूनेऽतिरिक्तं धीय्याता इति वाक्येन कर्म्मणि ऊनाङ्गपूरणं पत्न्या क्रियत इति यदुक्तं तत् सुस्थितं।

अथ व्याकरणं। वाजस्येत्यत्र वजव्रजगतौ इत्येतस्माद्धातोरुत्पन्नः कर्म्मणि घञन्तः ततो ञ्नित्वादाद्युदात्तः।प्रसवशब्दोऽप्रत्ययान्तः। ततस्तत्र थाथादि स्वरः। एवं सर्व्वं यथायोग्यमुन्नेयं।

"इषे त्वाद्या यजुर्मन्त्राः काचित् काचिदृगीरिता।
तान्तामृचं विविच्यात्र वच्मि छन्दोऽवबुद्धये"॥ इति।

सावित्र्यर्चा अनुष्टुभर्चा वैश्वदेव्यर्चेति ब्राह्मणेन व्याख्यातत्वात् सर्वयजुषां मध्ये समाम्नाता ऋचः। देवो वः सविता प्रार्पयत्विति द्विपदा विराट् गायत्री। आप्यायध्वमिति मध्ये ज्योतिस्त्रिष्टुप् रुद्रस्य हेतिरित्येकपदा त्रिष्टुप्। ध्रुवा अस्मिन् इत्यपि तद्वत्। प्रेयमगादिति त्रिष्टुप्। महस्रवल्शा इत्येकपदा त्रिष्टुप्। उर्व्वन्तरिचमित्येकपदा गायत्री। सम्पृच्यध्वमिति गायत्री। देवो वः सवितोत्पुनात्विति गायत्री। अवधूतमित्येकपदा गायत्री।

परापूता इत्यपि। दीर्घामन्विति एकपदात् त्रिष्टुप्। यानि घर्मे इत्यनुष्टुप्। समापो अद्भिरित्युपरिष्टाद् बृहती। अग्ने: परीत्येकपदा गायत्री। अन्तरितमित्येकपदा गायत्री। देवस्य सवितुः सव इति द्विपदा गायत्री। पुरा क्रूरस्येत्येकपदा त्रिष्टुप्। उदादायेति त्रिपदा त्रिष्टुप्। आशासाना। सुप्रजसस्त्वेत्यनुष्टुभौ। इमं विष्यामीति त्रिष्टुप्। समायुषेत्यनुष्टुप्। देवो वः सवितोत्पुनात्विति गायत्री। वीतिहोत्रमिति गायत्री। एता असदन्नित्येकपदा त्रिष्टुप्। अग्ने यष्टरित्येकपदा गायत्री। पाहि माग्न इति द्विपदा गायत्री। वाजस्य मोद्भाभस्येत्यनुष्टुभौ। यं परिधिमिति पुरस्ताज्ज्योतिस्त्रिष्टुप्। सꣳस्रावभागा इति त्रिष्टुप्। नन्वितरेषामपि मन्त्राणामनेन न्यायेनाक्षरमात्रासङ्ख्याविशेषमुपजीव्य यत् किञ्चिच्छन्दः कल्प्यतामिति चेत्। न। यजुषां छन्दः कल्पने श्रुतिविरोधप्रसङ्गात्। तथा च ब्राह्मणं पूर्व्वमेवोदाहृतं "तत्रोभयोर्मीमाꣳसा। जामि स्यात्। यद्यजुषाज्यं। यजुषाप उत्पुनीयात्। छन्दसाप उत्पुनात्यजामित्वाय" इति। तत्र यजुर्निषेध्य छन्दो विधीयते। ततो यजुषां छन्दो न श्रुतेरभिमतं। तथा सति स्वशक्त्या किञ्चिन्नूतनं छन्दः कल्पयितुं न शक्यते। किन्तु पूर्व्वसिद्धसम्प्रदायागतछन्दो लक्षणं यत्र यत्रास्ति तस्यां तस्यामृचि छन्दो जानीयात् ऋचामेव छन्दोविधानात्।

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः॥

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दातारा विषां रयीणामुभा वाजस्य सातये हुवे वां। अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं। इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतं। साकमेकेन कर्म्मणा। शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथां॥ १॥

उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा। वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्न युज्महि। पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कं। स नो रासच्छुरुधश्चन्द्राग्रा धियं धियं सीषधाति प्रपूषा। क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्वा स नः॥

॥ २ ॥

मृडातीदृशे। क्षेत्रस्य पते मधुमन्तमूर्म्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्च्युतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु। अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम। आ देवानामपि

पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुं। अग्निर्विद्वान्त्स-
यजात् ॥ ३ ॥

सेदु होता सो अध्वरान् स ऋतून् कल्पयाति। य-
द्वाहिष्ठं तदग्नये बृहदर्च विभावसो। महिषीव त्वद्र-
यिस्त्वद्वाजा उदीरते। अग्ने त्वं पारया नव्यो अस्मा-
न्त्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न
उर्वी भवा तोकाय तनयाय शंयोः। त्वमग्ने व्रतपा अ-
सि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः। यद्दो वयं प्रमिनाम
व्रतानि विदुषां देवा अविदुष्टरासः। अग्निष्टद्विश्वमा-
पृणाति विद्वान् येभिर्देवाꣳ ऋतुभिः कल्पयाति ॥ ४ ॥

जुषेथामासनो यजादात् चयो विꣳशतिश्च ॥ १४ ॥

इषे त्वा यज्ञस्य शुन्धध्वं कर्मणे वां देवोऽवधूतं धृ-
ष्टिः संवपाम्यादद प्रत्युष्टं कृष्णोऽसि भुवनमसि वाज-
स्योभा वां चतुर्दश ॥ १४ ॥

इषे हꣳह भुवनमष्टाविꣳशतिः ॥ २८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपा-
ठके चतुर्दशोऽनुवाकः ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपा-
ठकः सम्पूर्णः ॥

त्रयोदशभिरनुवाकैर्दर्शपूर्णमासमन्त्राः समापिताः। अथ तद्विकृतिमन्त्रा वक्तव्याः। विकृतिषु च आध्वर्य्यवमन्त्राणामतिदेशे वैधप्राप्तत्वाद्धौत्रा एवानुशिष्यन्ते। ततः प्रपाठकानामन्त्यानुवाकेषु काम्येष्टीनां याज्यापुरोऽनुवाक्याः क्रमेणोच्यन्ते। तास्विष्टयो द्वितीयकाण्डस्य द्वितीयतृतीयचतुर्थप्रपाठकेषु क्रमेण विधीयन्ते। तत्रास्मिन्ननुवाके द्वितीयकाण्डस्थद्वितीयप्रपाठकस्य सार्द्धप्रथमानुवाकोक्तकाम्येष्टीनां याज्यापुरोऽनुवाक्ये उच्यन्ते। काम्या याज्या इति याज्ञिकसमाख्याबलादिष्टिकाण्डस्य याज्याकाण्डस्य च परस्परं सम्बन्धः। इष्टिविशेषमन्त्रविशेषसम्बन्धस्तु लिङ्गक्रमाभ्यामवगन्तव्यः। यद्यप्येकैक एव मन्त्रः स्वस्वदेवताप्रकाशकः तथापि दर्वीहोमत्वव्यावृत्तये प्रतीष्टिमन्त्रद्वयं प्रयोक्तव्यं। एतच्च वास्तोष्पतीयहोमप्रस्तावे समाम्नायते "यदेकया जुहुयाद्दर्विहोमं कुर्य्यात्। पुरोऽनुवाक्यामनूच्य याज्यया जुहोति स देवत्वाय" इति। एतयोश्च लक्षणमाज्यभागब्राह्मणे पठ्यते "पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति। जातानेव भ्रातृव्यान् प्रणुदते। उपरिष्टाल्लक्ष्मा याज्या। जनिष्यमाणानेव प्रतिनुदते" इति। यस्या ऋचः पूर्व्वार्धे देवतालिङ्गं सा पुरोऽनुवाक्या। उत्तरार्धे तल्लिङ्गञ्चेत् सा याज्या भवति एतस्य लक्षणस्य प्रदर्शनार्थत्वात्। क्वचित् क्वचित् व्यभिचरति। तत्र सर्व्वत्राम्नानक्रमो नियामकः। पुरस्तादाम्नाता पुरोऽनुवाक्या। पश्चादाम्नाता याज्या। तस्मादिष्टिक्रमं मन्त्रक्रमञ्च परीक्ष्यैकैकस्यामिष्टौ एकैकं मन्त्रयुग्मं प्रयोज्यं। ननु यत्र युग्मादधिक-

स्युग्मसमानलिङ्गको मन्त्र आम्नायते तत्र क्रमानुसारेणोक्त-रेऽष्टौ मन्त्रयोजने लिङ्गं बाध्यते। पूर्व्वेष्टौ तद्योजने क्रमो बाधे-दिति चेत्। न। बाध्यतां नाम क्रमस्य दुर्बलत्वात्। यदि पूर्व्वे ऽष्टौ तृतीयमन्त्रस्य पृथक् प्रयोजनाभावः तर्हि तत्र याज्या विकल्प्यतां। यत्र तु युग्मान्तरं पूर्व्वयुग्मेन समानलिङ्गं तत्र याज्यापुरोऽनुवाक्या युग्मस्यैव विकल्पोऽस्तु। यद्वदिष्ट्यैक्ये मन्त्र-युग्माधिक्ये युग्मविकल्पः तद्वन्मन्त्रयुग्मस्यैकत्वे सति तदीयदे-वताविषयाणामिष्टीनामाधिक्ये ता इष्टयोऽपि विकल्प्यन्तां। तद्यथा। इहैव तावत् तादृशमुपलभ्यते। उभा वामिन्द्राग्नी-त्यादय इन्द्राग्नीलिङ्गकाश्चत्वारो मन्त्राः। ऐन्द्राग्न इष्टयस्तु फ-लभेदेन षडाम्नाताः। तत्र प्रथममन्त्रयुग्मविषये तिस्र आद्या इष्टयो विकल्प्यन्ते। तासु तिसृषु प्रथमामिष्टिं विधातुं प्र-स्तौति "प्रजापतिः प्रजा असृजत ताः सृष्टा इन्द्राग्नी अपागू-हताꣳ सोऽचायत् प्रजापतिरिन्द्राग्नी वै मे प्रजाऽपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत् तं निरवपत् तावस्मै प्रजाः प्रासाधयतां" (सं०।२कां०।२प्र०।१अ०) इति। "अपागूह-तामाच्छादितवन्तौ। अचायत् अचिन्तयत्। प्रासाधयतां प्रक-टीकृतवन्तौ। प्रस्तुतामिष्टिं विधत्ते "इन्द्राग्नी वा एतस्य प्रजा-मुपगूहतो योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेका-दशकपालं निर्व्वपेत् प्रजाकाम इन्द्राग्नी एव स्वेन भागधेयेनो-पधावति तावेवास्मै प्रजां प्रसाधयतो विन्दते प्रजां" (सं०। २कां०।२प्र०।१अ०) इति। यः पुरुषो यौवनादिना प्रजोत्पा-

दनसमर्थोऽपि सन् प्रजां न लभते तयोरिन्द्राग्नी प्रतिबन्धकौ। तयोर्भाग उक्तः पुरोडाशस्तेन तौ सेवते। द्वितीयामिष्टिं विधत्ते "ऐन्द्राग्नमेकादशकपालं निर्व्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते विपाप्मना भ्रातृव्येण जयते" (सं०।२कां०।२प्र०।१अ०) इति। सजाताः समानजन्मानो बन्धुभृत्यादयः। अचेतनं क्षेत्रविषयं चेतनं भृत्यविषयञ्च वैरिणो यत्सामर्थ्यं तदुभयमिन्द्राग्नी बलाद्विनाशयतः स्वयञ्च पापिष्ठेनैव वैरिणा विरुध्यमानो जयं प्राप्नोति। तृतीयामिष्टिं विधत्ते "अप वा एतस्मादिन्द्रियं वीर्यं क्रामति यः सङ्ग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वपेत् सङ्ग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येणोपप्रयाति जयति तꣳ सङ्ग्रामं" (सं०।२कां०।२प्र०।१अ०) इति। युद्धार्थं परसैन्यसमीपं प्रयास्यतो भयावेशाद्धृस्पादादीन्द्रियगता शक्तिरपक्रामति इन्द्राग्नी तस्य धैर्य्यमुत्पाद्य इन्द्रियशक्तिं समाधत्तः। एतासु तिसृष्विष्टिषु पुरोऽनुवाक्यामाह "उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दातारा विषाꣳ रयीणामुभा वाजस्य सातये हुवे वां" इति। हे इन्द्राग्नी युवामुभौ हुवे आह्वयामि। किमर्थं। आहुवध्यै साकल्येन होतुं। न चात्राश्वमेधपुरुषमेधादावश्वादेरिव युवयोर्होमद्रव्यत्वं शङ्कनीयं। अस्ति ह्यत्र राधःशब्दवाच्यं पुरोडाशद्रव्यरूपमन्नं। तेनान्नेन युवामुभौ परस्परं

युवां भोजयितुं हर्षयितुं आह्वयामि। हृष्टाभ्यामावाभ्यां किं तवेति चेत्। युवामुभावन्नानां धनानाञ्च दातारौ। अतोऽन्नस्य लाभाय युवामुभावाह्वयामि। अथ याज्यामाह "अश्रवꣳ हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं" इति। लोके हि स्वदुहितुरत्यन्तप्रियविशिष्टो जामाता दौहित्ररूपा बह्वीः प्रजाः प्रददाति स्यालश्च स्वयं दत्तो भगिनीस्नेहेन गृहधनरक्षणाय दासदासीरूपा बह्वीः प्रजाः प्रददाति। ताभ्यामपि वां भूरिदावत्तरौ अतिशयेन बहुप्रजाप्रदौ युवामित्यशृणवं। अथा अतो हे इन्द्राग्नी युवभ्यां युवाभ्यां सोमस्य प्रयती सोमसदृशस्यास्य पुरोडाशस्य प्रदानेन भवदीये चित्ते नूतनं हर्षरूपचित्तवृत्तीनां स्तोमं सारं सम्पादयामि। अत्रोदाहृतयोराद्यो मन्त्रः पुरोऽनुवाक्या। यागात् पुरस्ताद्देवताह्वानाय अध्वर्युप्रेषमनु होत्रा वक्तव्यत्वात्। इन्द्राग्निभ्यामनुब्रूहीत्येतादृशोऽध्वर्युप्रेषः। द्वितीयो मन्त्रो याज्या, इज्यते अनयेति तद्व्युत्पत्तेः। अत एवात्र यजेति प्रेषः पठ्यते। उत्तरासु तिसृष्विष्टिषु प्रथमां विधत्ते "वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सङ्ग्रामं जयत्यैन्द्राग्नमेकादशकपालं निर्व्वपेत् सङ्ग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तो नेन्द्रियेण वीर्येण व्यृध्यते"(सं०।२कां०।२प्र०।१अ०) इति। युद्धश्रमेणेन्द्रियगतस्य वीर्यस्य हानिः। द्वितीयामिष्टिं विधत्ते "अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेकादशकपालं

निर्व्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति ता-वेवास्मिन्निन्द्रियं वीर्य्यं धत्तः सहेन्द्रियेण वीर्य्येण जनतामेति" (सं०।२कां०।२प्र०।१अ०) इति। विजिगीषुः कथासु स्वविद्या-प्रकटनाय वा सभां जिगमिषेर्धैर्य्यभंशरूपं वीर्य्यापक्रमणं भव-ति। तृतीया त्वैन्द्राग्नेष्टिः पौष्णचरुक्षैत्रपत्यचरुभ्यामूर्ध्वं विधा-स्यते। तासु तिसृष्विष्टिषु पुरोऽनुवाक्यामाह "इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतं। साकमेकेन कर्म्मणा" इति। दासाः प्रजानामुपक्षपयितारः तस्करप्रभवाः, ते पतयो यासां ना-रीणां पुरीणां वा ता दासपत्न्यः। हे इन्द्राग्नी तादृशीर्नवतिं नवतिसङ्ख्याकाः पुरो युगपदेकेनैव प्रहारेण कर्म्मणा युवां अ-धूनुतं क्षपयतं। याज्यामाह "शुचिं नु स्तोमं नवजातमद्ये-न्द्राग्नी वृत्रहणा जुषेथां। उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ सद्य उशते धेष्ठा" इति। हे वृत्रहणौ इन्द्राग्नी अद्य स्तोमं जुषेथां सेवतां। कीदृशं शुचिं। निर्दोषं नवजातं नवैः अन्नविशेषैर्जननं जन्म यस्य तत् नवजातं। सुहवा रोषगर्व्वादिर-हिततया सुखेन होतुं शक्यौ युवामुभौ यस्मात् जोहवीमि आ-ह्वयामि तस्मात् तौ उभौ युवां कामयमानाय यजमानाय वाजं सद्यो धत्तं दत्तं तदिदमुत्तरार्धोक्तं नूतनं अन्नं नस्तोत्रं। यथोक्तकर्म्मप्रयोगान्तःपातिनमपरं यागं विधत्ते "पौष्णं चरु-मनु निर्व्वपेत् पूषा वा इन्द्रियस्य वीर्य्यस्यानुप्रदाता पूषणमेव स्वेन भागधेयेनोपधावति स एवास्मा इन्द्रियं वीर्य्यमनुप्रय-च्छति" (सं०२।कां०।२प्र०।१अ०) इति। वीर्य्यं प्रददाना-

विन्द्राग्नी अनु पूषा प्रयच्छति। तत्र पुरोऽनुवाक्यामाह "वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्न युज्महि" इति। हे सन्मार्गपते पूषन् वयमेव त्वां रथमिव योजयामः। किमर्थं। धिये धीयतेऽनुष्ठीयत इति धीः कर्म्म। कीदृश्यै धिये। वाजस्यान्नस्य सातिर्लाभो यस्याः सा वाजसातिः तस्यै। याज्यामाह "पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कं। स नो रासच्छुरुधश्चन्द्राग्रा धियं धियꣳ सीषधाति प्रपूषा" इति। कामेन कृतः फलकामेन प्रेरितोऽहं तस्य तस्य मार्गस्य परिपतिं परिपालकं पूषापरपर्य्यायमर्कं वचस्या स्तोत्ररूपेण वचसा अभ्यानट् अभिव्याप्तवानस्मि। सः नोऽस्मभ्यं शुरुधः शोकनिरोधिका रासत् प्रयच्छतु। कास्ताः। चन्द्राग्राः चन्द्रवदाह्लादनसाधनमग्रं यासां ता ओषधीः। किञ्च पूषा धियं धियं तत्तद्विषयां प्रज्ञां प्रसीषधाति प्रकर्षेण साधयतु। इष्ट्यन्तरं विधत्ते "क्षैत्रपत्यं चरुं निर्व्वपेज्जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतितिष्ठति"(सं०। २कां०।२प्र०।१अ०) इति। क्षेत्राणां भूभागलाङ्गूमेः क्षेत्रपतित्वं अर्थवादगतप्रतिष्ठाकामोऽत्राधिकारी। तत्र पुरोऽनुवाक्यामाह "क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृडातीदृशे" इति। हितेन पुत्रादिना यथा गवादिजयस्तथा क्षेत्रस्य पतिना गामश्वं पोषकमन्नादिकञ्च वयं आसमन्ताज्जयामः। सः क्षेत्रस्य पतिः ईदृशे गवादौ नः मां मृडाति सुखयतु। याज्यामाह "क्षेत्रस्य पते मधुमन्तमूर्म्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु" इति।

हे क्षेत्रस्य पते धेनुः पय इव त्वमस्मासु मधुमन्तं माधुर्य्यरसोपेतमूर्मिवत् पुनः पुनरावृत्त्युपेतं द्रव्यान्तरेष्वपि स्वमाधुर्य्यस्राविणं घृतमिव पर्य्युषितत्वदोषाभावेन सुपूतं नारिकेलफलेक्षुदण्डगुडादिभोग्यपदार्थसमूहं धुक्ष्व। ऋतस्य पतयोऽस्मान् मृडयन्तु सुखयन्तु। अवशिष्टामैन्द्राग्नेष्टिं विधत्ते "ऐन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्य्यमुपरिष्टादात्मन्धत्ते" (सं०२का०।२प्र०।१अ०) इति। क्षेत्रपत्यचरोरूर्द्धमेवेयमिष्टिः। अत्रापि वीर्य्यकामोऽधिकारी। जनतामागत्येति क्षेत्रपत्यस्य कालः उपरिष्टादित्यस्य कालः। अत्र याज्यानुवाक्ये पूर्वमेवोक्ते। इष्ट्यन्तरं विधत्ते "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोपधावति स एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वही ह्येष समृद्ध्यै" (सं०२का०।२प्र०।२अ०) इति। पर्व्वणि पर्व्वण्यप्रमादेन तदिष्टेरनुष्ठानं विद्यमानः पन्थाः कस्मिंश्चित् पर्व्वणि प्रमादेनानुष्ठानाभावोऽपथः। तस्मिन् विषये प्रायश्चित्तरूपेयमिष्टिः यस्मादेषोऽनड्वान् भारं वहति तस्मात् समृद्ध्यै भवति। तत्र पुरोऽनुवाक्यामाह "अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम" इति। हे अग्ने त्वं दर्शपूर्णमासेष्टिफलरूपाय राये धनाय अस्मान् अतिपादितो-

यरहितेन सुपथा सुमार्गेण नय। हे देव त्वं विश्वान् वयुनानि मार्गान् विद्वान् वेत्सि। नरकहेतुत्वेन जुहुराणं कुटिलमतिपादरूपं एनः पापं अस्मत् अस्मत्तो युयुधि वियोजय भूयिष्ठां बहुतमां नम उक्तिं नमस्कारोक्तिं ते तव विधेम करवाम। तत्र याज्यामाह "आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुं। अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति" इति। यस्मात् पथो वयं पूर्व्वं भ्रष्टाः तमपि देवानां पन्थां पन्थानं इदानीं अगन्म आगताः। किं कर्त्तुं। यत् कर्म्मानुष्ठातुं शक्नवाम शक्नुवामः तदनु क्रमेण प्रवोढुं अविच्छेदेनानुष्ठानं प्रवाहः यद्यप्यहं न जानामि तथाप्ययं पथिकृदग्निरपराधं समाधातुं विद्वान् वेत्ति। अतोऽस्मदर्थं यजात् यक्ष्यति स इत् उ स एव होता देवानामाह्वाता। स एवातिपन्नान् अध्वरान् यज्ञान् स ऋतून् कलादिकालांश्च कल्पयाति कल्पयिष्यति। इष्ट्यन्तरं विधत्ते "अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति स एवैनं व्रतमालम्भयति व्रत्यो भवति" इति। अव्रत्यं यागव्रतविरोध्यनृतवदनादिकं सोऽग्निरेवैनमव्रत्यचारिणं व्रतं प्रापयति। तत उत्तरेषु यागव्रतेषु योग्यो भवति। अत्र मन्त्रकाण्डे पथिकृल्लिङ्गकं मन्त्रयुग्मं पूर्व्वमाम्नातमुदाहृतं। व्रतलिङ्गकमुपर्य्युदाहरिष्यते। मध्यवर्त्तिनं तु इग्मे विशेषलिङ्गाभावेऽप्युभयसाधारणलिङ्गदर्शनात् केचित् पूर्व्वत्र विकल्पितमिदमित्याहुः। अपरे तु उत्तरत्र विकल्पित-

मिति मन्यन्ते। आचार्य्यास्तु पूर्व्वत्रैव स्विष्टकृतः संयाज्ये इति मन्यन्ते। तत्र पुरोऽनुवाक्यामाह "यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो। महिषीव त्वद्रयिस्त्वद्वाजा उदीरते" इति। यत् प्रापणीयं हविः तदग्नये बृहद्भवतु। हे विभावसो फलप्रदानेन मां पूजय, यथा महिषी मया दत्तं कार्पासबीजं तिलपिष्टादिकं खादित्वा बहुक्षीरादिना पूजयति तद्वत्। तथा सति त्वदनुग्रहाद्धनं लभ्यते। अन्नानि चोत्कर्षेण सम्पद्यन्ते। याज्यामाह "अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः" इति। हे अग्ने मदीयापराधपरिहारायेदानीं प्रवृत्तत्वात् नव्यो नूतनस्त्वमस्मान् फलपर्य्यन्तानां कर्म्मणां पारया पारं नय। किं कृत्वा। स्वस्तिभिर्यथाशास्त्रानुष्ठानैरतिपादरूपाण्यत्ययरूपाणि वा दुर्गाणि पापानि विश्वान्यति अतिक्रमय। किञ्चास्माकं निवासार्थं पूश्च नगरी पृथिवी विस्तृता भवतु सस्यनिष्पत्त्यर्थमुर्वी बहुला भवतु। किञ्च त्वमस्मदीयाय तनयाय पुत्राय तोकाय दुहितृरूपापत्याय च शंयोः सुखप्रदो भव। अथ व्रतपत्ययागस्यासाधारणे युग्मे पुरोऽनुवाक्यामाह "त्वमग्ने व्रतपा असि देव आमर्त्येष्वा। त्वं यज्ञेष्वीड्यः" इति। हे अग्ने त्वमागत्य मनुष्येषु व्रतपा व्रतपालको देवोऽसि। आसमन्ताद्यज्ञेषु त्वं स्तुत्योऽसि। याज्यामाह "यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः। अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति" इति। हे देवा विदुषां युष्माकं सम्बन्धी-

न्यस्मदनुष्ठेयव्रतानि अविदुष्टरासः अत्यन्तमविद्वांसो वयं प्रमि-
नाम प्रकर्षेण विनाशयाम इति यत् तद्विश्वं तत्सर्व्वं विद्वानग्निः
आपृणाति आपूरयतु। येभिः यैः ऋतुभिः ऋतूपलक्षितकाल-
विशेषैर्द्देवान् हविर्भाजः कल्पयाति कल्पयति तैः कालविशेषै-
र्व्रतं पूरयतु। अत्र विनियोगसङ्ग्रहः।

"अन्त्यानुवाके याज्याऽनुवाक्याः काम्येष्टिसङ्गताः।
काण्डस्य तु द्वितीयस्य द्वितीये प्रश्न इष्टयः॥
उभैन्द्राग्नत्रये युग्ममिन्द्रैन्द्राग्नत्रये तथा।
त्रयं पौष्णे चरौ क्षेत्र क्षेत्रपत्ये चरौ तथा॥
अग्ने पाथिकृते यद्वा व्रातपत्ये द्वियुग्मकं।
विकल्पेनेति मन्त्राः स्युरनुवाके चतुर्दशे"॥

अथ मीमांसा। तृतीयाध्यायस्य द्वितीयपादे चिन्तितं।

"ऐन्द्राग्नादीष्टयः काम्या याज्या अप्युदिताः क्रमात्।
काण्डयोस्ता यथालिङ्गं सञ्चार्य्या नियमोऽथ वा॥
लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः।
अकाम्यास्वपि सञ्चार्य्या याज्याः सर्व्वत्र का क्षतिः॥
समाख्यानात् काण्डयोगःक्रमादिष्टिषु योजनं।
अपेक्षते दैवमात्रशक्तिः काम्यैकतास्ततः"॥ इति।

काम्येष्टयस्तत्काण्डक्रमेणाम्नाताः "ऐन्द्राग्नमेकादशकपालं
निर्वपेद्यस्य सजाता वियुः" इत्यादिना। सजाता ज्ञातयः।
वियुर्विमता विप्रतिपन्ना इत्यर्थः। इन्द्राग्नीरोचनेत्यादिके मन्त्र-
काण्डे याज्यानुवाक्याःक्रमेणाम्नाताः। तत्रेदं काम्ययाज्यानुवा-

ज्याकाण्डमिति याज्ञिकानां समाख्यया अवगम्यते। तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था। कर्मस्वरूपमात्रप्रकाशनं लिङ्गं। न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः। ततः समाख्याबलान्मन्त्रकाण्डकर्मकाण्डयोः सम्बन्धावगमेन सामान्येन मन्त्रकर्मणोः सम्बन्धोऽवगम्यते। विशेषतस्त्वस्मिन् प्रथमे कर्मण्ययं प्रथमो मन्त्र इति क्रमादवगम्यते। ऐन्द्राग्नेष्टौ ऐन्द्राग्नमन्त्रो वैश्वानरेष्टौ वैश्वानरमन्त्र इत्येतादृशो विशेषो लिङ्गेनैव अवगम्यत इति चेत्। न। लिङ्गासाधारण्ये क्रमापेक्षणात्। "ऐन्द्राग्नमेकादशकपालं निर्वपेद् भ्रातृव्यवान्" इति द्वितीयेष्टिरपि। तत्रैन्द्राग्नी पठितं। मन्त्रकाण्डेऽपि इन्द्राग्नीनवतिमित्यादिकमपरमैन्द्राग्नं याज्याऽनुवाक्यायुगलमाम्नातं। न हि तत्र क्रममन्तरेण निर्णेतुं शक्यते। न च क्रमेणैव तत्सिद्धेर्लिङ्गमप्रयोजकमिति वाच्यं, क्वचिल्लिङ्गस्यैव व्यवस्थापकत्वात्। ऐन्द्राबार्हस्पत्येष्टिरेकैवाम्नाता "यं कामयेत राजन्यमनपोद्धो जायेत वृत्राण्ंस्घ्नरेदिति तस्मा एतमैन्द्रा बार्हस्पत्यं चरुं निर्वपेत्" इति। यं राजपुत्रं जायमानं, राज्ञः पुरोहितस्य वा काम एवं भवति, अयं मातृगर्भे देवकृतविघ्नेन केनाप्यप्रतिबद्धो जायतां जातश्च शत्रून् मारयन् सञ्चरेदिति तद्राजपुत्रार्थेऽयमिष्टिः। मन्त्रकाण्डे तदिष्टिक्रमे याज्यापुरोऽनुवाक्ये ऐन्द्रा बार्हस्पत्ये द्विविधे आम्नाते "इदं वा मास्ये हविः" इत्येकं युगलं। "अस्मे इन्द्रा बृहस्पती" इत्यादिकमपरं। तयोः प्रथमयुगलस्य क्रमेण विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव वि-

नियोक्तव्यं। तस्मात् क्रमसमाख्यासंदष्टतेन लिङ्गेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते। द्वादशाध्यायस्य च द्वितीयपादे *चिन्तितं।

"इदं वा युग्मयोः किं स्यात् साहित्यं वा विकल्पनं।
साहित्यं पूर्व्ववन्मैवं देवताबोधनैक्यतः" ॥ इति।

ऐन्द्राबार्हस्पत्ये कर्म्मणि "इदं वा मास्मे हविःप्रियमिन्द्राबृहस्पती" इति याज्याऽनुवाक्ये द्विविधे आम्नाते। तयोः सारस्वत्यादिवत् समुच्चयः। यथा सारस्वतीमनूच्य वाग्यन्तव्या धिषणावीमनूच्य वाग्यन्तव्येत्यत्र अदृष्टार्थत्वात् समुच्चयस्तद्वदिति चेत्। मैवं। दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात् तस्माद्विकल्पः। तत्रैवान्यच्चिन्तितं।

"पुरोऽनुवाक्यया याज्या विकल्प्या वा समुच्चिता।
पुरे वाक्यसमाख्यानाद् वचनात् तु समुच्चयः" ॥ इति।

देवताप्रकाशनरूपकार्य्यस्यैकत्वाद्युग्मयोर्यथा न समुच्चयः किन्तु विकल्प एव तथैवैकयुग्मगतयोरिति चेत्। मैवं। पुरोऽनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः। किञ्च "पुरोऽनुवाक्यामनूच्य याज्यया जुहोति" इति प्रत्यक्षवचनेन देवतोपलक्षणं हविः प्रदानकार्य्यभेदोक्तिपुरस्सरं साहित्यं विधीयते। तस्मात् समुच्चयः। दशमाध्यायस्य चतुर्थपादे चिन्तितं।

"पर्य्यायेणापि देवोक्तिर्विधेनैव पदेन वा।
अर्थाभेदादादिमोऽन्त्यः शब्दपूर्व्वान्वयित्वतः" ॥ इति।

दर्शपूर्णमासयोर्ये निगमास्तेष्वग्न्यादिदेवताः किं पावक-

---

*चतुर्थपाद इति का० पुस्तकान्तर०।

शुच्यादिना येन केनापि पर्य्यायेणाभिधातव्याः, किं वा तत्त-
द्विध्युद्देशगतेन यागेन अग्न्यादिपदेनैवेति संशयः। तत्र शब्दार्थ-
प्रत्यायनार्थत्वात् पर्य्यायाणां स्वरूपेण भेदेऽप्यर्थाभेदाद्येन केना-
प्यभिधानमिति पूर्वः पक्षः। यत्र ह्यर्थे कार्य्यमाम्नायते तत्र शब्दो
ऽर्थप्रत्ययनार्थो भवति। यत्र पुनः शब्द एव कार्य्यं तत्र कार्य्यस-
म्बन्धार्थं शब्द एव प्रत्यायितव्यः। तद्यथा। देवदत्तो गौरवातिश-
यमापादयितुं राजसभायामाचार्य्योपाध्यायादिशब्दैस्सं व्यवहर-
न्ति पितृमातृमातुलादयस्तु तत्तत्सम्बन्धविशेषवाचिशब्देन यथा
तुष्यन्ति तथा तन्नामग्रहणेन प्रत्युत कुप्यन्त्येव। तद्वदत्रापि अग्न्या-
दिवैधशब्द एव कार्य्यमासक्तं, विधिं विना यागदेवतयोः सम्बन्धा-
भावात्। विधिकृते तु तत्सम्बन्धे वैधशब्दस्य प्रयोजकत्वं दुर्वारं।
अत एव अयाट् स्वाहाकारोज्जित्यादिनिगमेषु नियमेन वैधा
एवाग्न्यादिशब्दाः प्रयुज्यन्ते "अयाडग्नेः प्रिया धामानि","अ-
याट् सोमस्य प्रिया धामानि","स्वाहाग्निं स्वाहा सोमं" "अग्ने-
रहमुज्जितिमनूज्जेषं","सोमस्याहमुज्जितिमनूज्जेषं" इत्यादि-
ना। तस्माद् वैधपदैरेव तत्तद्देवताभिधानं। तत्रैवान्यदभिहितं।

"नियमे पावकाग्न्योः किमग्निः स्यादथवोभयं।
अग्निश्चोदकतो नैवं वैधोऽग्निः सगुणो यतः"॥ इति।

आधाने श्रूयते "अग्नये पवमानाय पुरोडाशमष्टाकपालं
निर्वपेदग्नये पावकायाग्नये शुचये" इति। तत्र गुणगुणिनोः
पावकाग्न्योर्मध्येऽग्निशब्द एव निगमेषु प्रयोक्तव्यः। कुतः। तस्यैव
चोदकप्राप्तमन्त्रपठितत्वात्। नैवं। पावकगुणयुक्तस्याग्नेर्वैधत्वेन

सर्व्वप्रयोगेषु तथैव प्राप्तत्वात्। तस्माच्छब्दद्वयं पठितव्यं। अनेन न्यायेन प्रकृतेऽप्यैन्द्राग्नयागे इन्द्राग्नीशब्देनैव निगदेषु देवताऽभिधातव्या, पथिकृतयागे त्वग्निपथिकृच्छब्दद्वयेनेति द्रष्टव्यं।

अथ व्याकरणं। उभेत्यत्र टाप्स्वरैकादेशस्वरौ। इन्द्राग्नीशब्दे त्वाष्टमिकामन्त्रितनिघातः। आकुवध्या इत्यत्र तुमर्थे विहितस्य कध्यैप्रत्ययस्यादिरकार उदात्तः। ततः समासे कृत्स्वरः। एवं सर्व्वमूह्यं। अस्मिन् प्रथमप्रपाठके शब्दस्वरप्रक्रिया लेशतः प्रदर्शिता। कार्त्स्न्येन तु प्रकृतिप्रत्ययविकरणतत्तदादेशादिपरिज्ञानमन्तरेण दुर्बोधत्वात् तस्य च सर्व्वस्यास्माभिर्वैदिकशब्दप्रकाशे निरूपितत्वादत्रापि तन्निरूपणे ग्रन्थगौरवप्रसङ्गात तत्रैव सर्व्वमवगन्तव्यं। तदिदं याज्याकाण्डं वैश्वदेवं। तथा चानुक्रमणिकायामुक्तं।

"राजसूयस्य ब्राह्मणः पशुबन्धः सहेष्टिकः।
उपानुवाक्यं याज्यास्य अश्वमेधः सब्राह्मणः॥
स चायणस्य होमास्य सूक्तानि च सहेष्टिभिः।
सौत्रामणी सहाच्छिद्रैः पशुर्मेधस्य षोडश"॥ इति।

अनुमत्यै पुरोडाशमित्यादिको मन्त्रकाण्डस्योऽष्टमप्रपाठको राजसूयः। अनुमत्या इत्यादिका विधिकाण्डस्थाः षष्ठसप्तमाष्टमप्रपाठकास्तेयोऽपि राजसूयः सब्राह्मणं। वायव्यं श्वेतमालभेतेत्यादिप्रपाठकोक्ताः पशुबन्धाः। प्रजापतिः प्रजा असृजत ताः सृष्टा इत्यादिप्रपाठकत्रयोक्ता इष्टयः। प्रजापतिरकामयत प्रजाः सृजेयेत्यादिकमुपानुवाक्यं। उभावामिन्द्राग्नी इत्यादयो याज्याः। जीमूतस्येत्यादिकस्तत्र तत्रोक्तो।

ऽश्वमेधः। माङ्गृहण्ण्वेन्द्या इत्यादिकं तद्ब्राह्मणं। प्रजकन्नं ज्योतिरित्यादिप्रपाठकपञ्चकं सत्रायणं। जुष्टोदमूना इत्यादिप्रपाठकद्वयोक्ता मन्त्रा होमाः। पीवोन्नाꣳ रयिवृधः सुमेधा इत्यादिसार्द्धप्रपाठकोक्तानि सूक्तानि। अग्निर्वा अकामयतेत्याद्यर्द्धप्रपाठकोक्ता इष्टयः। स्वाद्वीं त्वा स्वादुनेत्यादिः सौत्रामणिः। सर्व्वान् वा एषोऽग्नौ कामान् प्रवेशयतीत्यादीन्यच्छिद्राणि। अञ्जन्ति त्वामित्यादिकः पशुः। ब्रह्मणे ब्राह्मणमालभत इत्यादिर्नरमेध इति। अत्र याज्यानां विश्वे देवा ऋषयः। उभा वामिति द्वे त्रिष्टुभौ। इन्द्राग्नी नवतिमिति गायत्री। शुचिन्नु स्तोममिति त्रिष्टुप्। वयमु त्वेति गायत्री। पयस्वत्य इति त्रिष्टुप्। क्षेत्रस्य पतिनेत्यनुष्टुप्। क्षेत्रस्य पत इति तिस्रः त्रिष्टुभः। यद्वाहिष्ठमित्यनुष्टुप्। अग्ने त्वमिति त्रिष्टुप्। त्वमग्ने व्रतपा इति गायत्री। यद्वो वयमिति त्रिष्टुप्। देवतास्तु तत्तन्मन्त्रव्याख्यानेनैव प्रकाशिताः। ता एता ऋषिच्छन्दोदेवता अनुष्ठानकाले स्मरणीयाः। इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीविद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याज्ञापरिपालकेन माधवाचार्य्येण विरचिते वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठकः सम्पूर्णः॥ ० ॥

श्रीवेदव्यासाय नमः ॥

# अथ तैत्तिरीयसंहिताभाष्ये

## प्रथमकाण्डे द्वितीयप्रपाठकः ।

हरिः ॐ ॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्देवश्रू रेतानि प्रवपे स्वस्त्युत्तराण्यशीयाऽऽपो अस्मान् मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत् प्रवहन्तु रिप्रमुदाभ्यः शुचिरा पूत एमि सोमस्य तनूरसि तनुवं मे पाहि महीनां पयोऽसि वर्चोधा असि वर्चः ॥ १ ॥

मयि धेहि वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिस्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमा वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इन्द्राग्नी द्यावापृथिवी आप ओषधीस्त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि ॥ २ ॥

वर्चं ओषधीरष्टौ च ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥

श्रीगणाधिपतये नमः ॥ ॐ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥
आद्यप्रपाठके दर्शपूर्णमासेष्टिरीरिता।
प्रपाठकत्रयेणाथ सोमयागः प्रवक्ष्यते ॥ २ ॥

तदिदं सौम्यकाण्डं। तथाचानुक्रमणिकायामुक्तं।

"अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयकौ।
सवाः शुक्रियकाण्डे च नवेन्दोरिति धारणा" ॥ इति।

आप उन्दन्त्वित्यादिकमध्वरकाण्डं। आददे ग्रावासीत्यादिकं ग्रहकाण्डं। उदुत्यं जातवेदसमित्यादिकं दक्षिणाकाण्डं। तान्येतानि त्रीणि। प्राचीनवंशं करोतीत्यादिकं त्रयाणामेतेषां विधिः। देव सवितः प्रसुवेत्यादिकं वाजपेयस्य मन्त्रकाण्डं। देवा वै यथादर्शं यज्ञानाहरन्नित्यादिकं वाजपेयस्य विधिकाण्डं। त्रिवृत् स्तोमो भवतीत्यादिकाः सवाः। नमो वाचे या चोदितेत्यादिकं शुक्रियमन्त्रकाण्डं। देवा वै सत्रमासतेत्यादिकं तद्विधिकाण्डं। तान्येतानि नव सङ्ख्याकानि चन्द्रस्य काण्डानि। अतस्तेषु चन्द्र ऋषिरिति ध्यायेत्।

"सोमाङ्गे दीक्षणीयादौ दर्शमन्त्रातिदेशनात्।
दर्शोद्भवं तस्य युक्तमग्निष्टोमोऽत्र वर्ण्यते" ॥

त्रिविधः सोमयागः। एकाहाहीनसत्त्रनामकः। एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः। द्विरात्रमारभ्य एकादशरात्रपर्य्यन्ता अहीनाः। त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्य्यन्तानि सत्राणि। द्वादशाहस्तु द्विरूपः। तत्र अहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्त्ररूपेण त्रयोदशरात्रादीनां। तस्य च द्वादशाहस्य एकाहरूपो ज्योतिष्टोमः प्रकृतिः। अत एवाम्नायते "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इति। यद्यपि सप्तसंस्थो ज्योतिष्टोमः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्र अप्तोर्यामो वाजपेयश्चेति तथाप्यग्निष्टोमे कृत्स्नाङ्गजातस्योपदिष्टत्वात् स एवेतरेषां प्रकृतिः। अतः प्रथमं स एवाभिधीयते। तत्र प्रपाठकत्रयस्यानुवाकानां चार्थभेदो विनियोगसङ्ग्रहे दर्शितः।

"द्वितीयप्रश्नमारभ्य प्रश्नत्रय उदीर्य्यते।
सोमयागे मन्त्रजातं तत्रावान्तरभेदतः॥
क्रयः पशुर्ग्रहश्चेति प्रश्नभेदोऽवगम्यतां।
क्रयप्रश्नेऽनुवाकाः स्युरर्थभेदाच्चतुर्दश॥
प्राग्वंशावेशनं दीक्षा स्याद्देवयजनग्रहः।
सोमक्रयण्यानयनं तदीयपदसङ्ग्रहः॥
सोमोन्मानं क्रयस्तस्य शकटारोपणं गतिः;
आतिथ्योपसदस्तद्वद्वेदुत्तरवेदिका॥
हविर्धानं काम्ययाज्या इत्यर्थां अनुवाकगाः"॥ तत्र
तत्र प्रथमानुवाके क्षौरादिभिः संस्कृतस्य यजमानस्य प्र

चीनवंशाख्यशालाप्रवेशोऽभिधीयते । आप उन्दन्त्वित्यादयः चौरमन्त्राः । चौरात् प्रागेव शाला निर्मातव्या । ततो बोधायनो दीक्षासाधनद्रव्यसम्पादनपूर्व्वकं शालानिर्माणमाह "अग्निष्टोमेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनञ्च कृष्णविषाणञ्च वासश्च मेखलाञ्च" इति। "जुष्टे देवयजने शाला कारिता भवति" इति च । आपस्तम्बोऽपि "सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयान् ऋत्विजो वृणीते" इत्युपक्रम्य वरणं देवयजनाध्यवसानं दीक्षणीयेष्टिञ्चाभिधायेदमाह "प्राचीनवꣳशं करोति पुरस्तादुन्नतं पश्चान्निनतꣳ सर्व्वतः परिश्रितं" इति। एतदेवाभिप्रेत्य वपनविधेः पूर्व्वं शालां विधत्ते "प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीनꣳ रुद्रा यत् प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्त्तते" (मं०।६का०।१प्र०।१अ०) इति। प्रागायतः पृष्ठवंशो यस्य गृहविशेषस्य स प्राचीनवंशः । केचित् तु यस्य देवयजनस्येति विगृह्य कृत्स्नदेवयजनविधिमेतमाहुः । देवयजनैकदेशरूपगृहसम्बद्धो वंशो देवयजनसम्बन्धो भवति । वंशस्य प्रागग्रत्वेन तद्रूपं यजमानो देवलोकं करोति । गृहस्य कुड्यस्थानीयमावरणं विधत्ते "परिश्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकात्" (मं०।६कां०।१प्र०।१अ०) इति। स्वर्गस्य मनुष्यैरदृश्यत्वादत्रापि तदर्थं परिश्रयणं। द्वाराणि विधत्ते "नास्माल्लोकात् स्वेतव्यमिवेत्याहुः को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान् करोत्युभयो-

लोकयोरभिजित्यै"(सं०।६का०।१प्र०।१अ०) इति। इह लोके तावत् सुखं प्रत्यक्षसिद्धं, गृहक्षेत्रपुत्रमित्रादिभिस्तदुत्पादात्। स्वर्गे तु सन्दिग्धं। यद्यविघ्नेनेदं कर्म्म साङ्गं समाप्येत तदा सुखमस्ति नान्यथा तदपि तत् सुखं नेदानीं भवति, किन्तु मरणादूर्द्धं। तथापि प्रबलेन केनचिन्नरकप्रदेन कर्म्मणा प्रतिबन्धे सति ततोऽपि विलम्ब्येत। तस्मादिदानीमेवास्माल्लोकात् न सर्व्वात्मना निर्गन्तव्यमिति बुद्धिमन्त आहुः। तत एतल्लोकदर्शनाय द्वारेषु कृतेषु लोकद्वयजयो भवति। कल्पः "अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरनुबध्य, आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे" इति। गोदानं शिरसो भागः। जीवनायुर्वृद्धिब्रह्मवर्चसेभ्य आपः शिर आर्द्रीं कुर्व्वन्तु। कल्पः "ऊर्द्धाग्रं बर्हिरभ्युच्छ्रयति ओषधे त्रायस्वैनं" इति। "स्वधितिं तिर्य्यञ्चं निदधाति "स्वधिते मैनꣳ हिꣳसीः" इति। "प्रवपते देवश्रूरेतानि प्रवपे' इति। स्वधितिः क्षुरः देवेषु प्रसिद्धत्वेन श्रूयत इति देवश्रूः देवनापितः तद्रूपोऽहं वपनं कुर्व्वे एतानि केशादीनि। बोधायनः "स्वस्त्युत्तराण्यशीय इत्युक्त्वा तं प्रत्यभिमृशते"। आपस्तम्ब "स्वस्त्युत्तराण्यशीयेति यजमानो जपति" इति। अविघ्नेनोत्तराणि कर्म्माणि प्राप्नुयां। विधत्ते "केशश्मश्रु वपते नखानि निकृन्तं मृता वा एषा त्वगमेध्या यत् केशश्मश्रु मृतामेव त्वचममेध्यामप हत्य यज्ञियो भूत्वा मेधमुपैति" (सं०।६का०।१प्र०।१अ० इति। बोधायनः "अथैनमद्भिरभिषिञ्चति आपो अस्मान् मातरः शुन्धन्तु घृतेन नो घृतप्वः पुनन्तु" इति। "सम्प्रधाव्य र

प्रक्षालयति विश्वमस्मत् प्रवहन्तु रिप्रमिति" इति। आपस्तम्बस्त्वे-कमन्त्रतां मन्यते। अस्मानस्मदीयान् यजमानान्। घृतदुहक-मत्र घृतं। तेन पुनन्ति पर्जन्यादयो घृतप्वः। रिप्रं पापं। इमा आपः सर्व्वं पापं अस्मत्तोऽपनयन्तु। कल्पः "उदाभ्यः शुचिरा-पूत एमि इत्युद्राहमानो जपति"। स्नानाचमनाभ्यां वहिरन्तश्च शुद्धः सन् अद्भ्य उद्गम्यागच्छामि। विधत्ते "अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षा तपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षा तपसी अवरुन्धे" (सं०।६का०।१प्र०।१अ०) इति। मुण्डनादि-संस्कारो दीक्षा। आहारादिनियमस्तपः। अप्सु स्नानेन तदुभ-यमव्यवधानेनैव प्राप्नोति। अवतरणप्रदेशं विधत्ते "तीर्थे स्नाति तीर्थे हि ते तां प्रावेशयन्" (सं०।६का०।१प्र०।१अ०) इति। तामेव दीक्षां उक्तमेवार्थमनूद्य स्तौति "तीर्थे स्नाति तीर्थमेव स-मानानां भवति" (सं०।६का०।१प्र०।१अ०) इति। ज्ञातिसख्या-दीनां समानानां तीर्थवत् सेव्यो भवति। आचमनं विधत्ते "अपोऽश्नात्यन्तरत एव मेध्यो भवति (सं०।६का०।१प्र०।१अ०) इति। कल्पः "अथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनू-रसि तनुवं मे पाहि" इति। क्षौमवस्त्रस्य सोमोऽभिमानी देव इति तस्य वस्त्रं शरीरं। विधत्ते "वाससा दीक्षयति सौम्यं वै क्षौमं देवं तया सोममेव देवतामुपैति यो दीक्षते" (सं०।६का०। १प्र०।१अ०) इति। दीक्षयति संस्करोति। मन्त्रस्य पूर्व्वोत्तर-भागौ व्याचष्टे "सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामाशास्ते" (सं०।६का०।१प्र०।

१अ०) इति। वस्त्रपरिहितस्य सोम एव स्वा देवता। प्रकारान्तरेण प्रशंसति "अग्नेस्तूषाधानं वायोर्वातपानं पितॄणां नीविरोषधीनां प्रघात आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत् सर्व्वदेवत्यं यद्वासो यद्वाससा दीक्षयति सर्व्वाभिरेवैनं देवताभिर्दीक्षयति" (सं०। ६का०।१प्र०।१अ०) इति। शलाकोपधानं तूषाः। तत्र तन्तूनां पूरणं तूषाधानं। वायुना शोषणं वातपानं। नीविर्बन्धनविशेषः। प्रघातो दण्डेन शलाकोपधानेन वा प्रहारः। प्राचीनतानो दीर्घतन्तुप्रसारणं। ओतुः तिर्यक्तन्तुप्रसारणं। अतीकाशाश्छिद्राणि। एतेषु क्रमेणाग्न्यादयोऽभिमानिदेवताः। भोजनं विधत्ते "वह्निः प्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति स प्राण एव दीक्षते" (सं०।६का०।१प्र०।१अ०) इति। प्राणस्थितिहेतुत्वादशनस्य प्राणत्वं। मित्रबन्ध्वादिभिः प्रार्थितो बहु भुञ्जीतेति। विधत्ते "आशितो भवति यावानेवास्य प्राणस्तेन सह मेधमुपैति" (सं०।६का०।१प्र०।१अ०) इति। बोधायनः "अथास्मैतन्नवनीतं विचितमुदशराव उपशेरते तस्य पाणिभ्यां सम्प्रस्नाय मुखमेव प्रथममभ्यङ्क्ते महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहि इत्यनुलोममापादाभ्यां" इति। आपस्तम्बो मन्त्रभेदमाह "महीनां पयोऽसीति दर्भपुञ्जीलाभ्यां नवनीतमुद्यौति वर्चोधा असीति तेन पराचीनं त्रिरभ्यङ्क्ते" इति। हे नवनीत त्वं गवां पयःकार्य्यमसि। स्निग्धतारूपं वर्चोधा असि धारयसि अतो मयि ब्रह्मवर्चसं धेहि। अभ्यङ्गं विधत्ते "घृतं देवानां

मस्तु पितृणां निष्पक्वं मनुष्याणां तद्वा एतत् सर्व्वदेवत्यं यन्न-वनीतं यन्नवनीतेनाभ्यङ्क्ते सर्व्वा एव देवताः प्रीणाति" (सं०। ६का०।१प्र०।१अ०) इति। नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः पक्वं ईषत्पक्वं निःशेषपक्वञ्च। द्रव्यान्तरप्रक्षेपेण सुरभि निःशेष-पक्वं। अत एव बह्वृचः पठन्ति "आज्यं वै देवानां सुरभि घृतं मनुष्याणामायुतं पितृणां नवनीतं गर्भाणां" इति। प्रका-रान्तरेण नवनीताभ्यञ्जनं स्तौति "प्रच्युतो वा एषोऽस्माल्लो-कादगतो देवलोकं यो दीक्षितोऽन्तरेव नवनीतं तस्मान्नवनीते-नाभ्यङ्क्ते" (सं०।६का०।१प्र०।१अ०) इति। दीक्षितस्य स्वर्गसा-धने प्रवृत्तत्वादेतल्लोकप्रच्युतिः। यागस्यासमाप्तत्वाद्देवलोकप्रा-प्त्यभावः। नवनीतमपि क्षीरभावात् प्रच्युत्य घृतभावं न प्रा-प्नोति। अतोऽन्तरालवर्त्तित्वसाम्यात् तेन तस्याभ्यङ्गो युक्तः। गुणद्वयं विधत्ते "अनुलोमं यजुषा व्यावृत्त्यै" (सं०।६का०।१प्र०। १अ०) इति। मनुष्याणां नास्त्यानुलोम्ये नियमः। न चाभ्यङ्गे मन्त्रोऽस्ति। तस्माद्व्यावृत्त्यै तदुभयमत्रेति नियम्यते। कल्पः "अ-थास्यैतदाञ्जनं पिष्टं दृषदुपले सतूलया च शरेषीकया चास्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्य-नक्ति "वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि" इति। मन्त्रार्थं विशदयन्नञ्जनं विधत्ते "इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत् तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" (सं०। ६का०।१प्र०।१अ०) इति। विनाशयतीत्यर्थः। क्रमेण गुणाव् विधत्ते "दक्षिणं पूर्व्वमाङ्क्ते सव्यं हि पूर्व्वं मनुष्या आञ्जते न

निधावते नीव हि मनुष्या धावन्ते पञ्चकृत्व आङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे ऽपरिमितमाङ्क्ते ऽपरिमितꣳ हि मनुष्या आञ्जते सतूलयाङ्क्ते ऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै" (सं०।६का०।१प्र०।१अ०) इति। मनुष्येषु योषित्सु अञ्जने वामभागपूर्व्वत्वं प्रसिद्धं। अञ्जनोपेताङ्गुलेः चक्षुषि सकृत्सां पुनः पुनः पर्य्यावर्त्तनं निधावनं। तच्च मनुष्याः कुर्व्वन्ति। यज्ञे सवनीयपुरोडाशद्रव्याणां सवनीयसम्बन्धिनां पञ्चसङ्ख्याकत्वात् पङ्क्तिच्छन्दोगताचरसाम्याद्यज्ञस्यपाङ्क्तत्वं। तथा च पञ्चमप्रपाठके वक्ष्यते "ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यते ऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वं" (सं०।६का०।५प्र०।१०अ०) इति। परिमितमल्पं पञ्चसङ्ख्यानि यमो वा। न त्वयं नियमो मनुष्येष्वस्ति। अग्रसहिता शरेषीका सतूला। मनुष्याणामिषीकानियम एव नास्ति कुतः सतूलत्वनियमः। विपक्षे बाधकपूर्व्वकं स्वपक्षं निगमयति "यदपतूलया ऽञ्जीत वज्र इव स्यात् सतूलयाङ्क्ते मित्रत्वाय" (सं०। ६का०।१प्र०।१अ०)। तूलरहितशरकाष्ठस्य तीक्ष्णाग्रत्वाद्वज्रसमत्वं। कल्पः "अथैनमेकविꣳशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इति। प्रथमद्वितीयमन्त्रयोरच्छिद्रेणेत्यनुषज्यते। हे यजमान चितां प्रज्ञानानां पतिर्मनो देवस्त्वां शोधयतु। वाचां शब्दानां पतिः सर-

स्तौ असौ वा आदित्योऽछिद्रं पवित्रं तद्रूपोऽयं दर्भस्तोमः। जगन्निवासहेतोः सूर्य्यस्य रश्मिरूपा दर्भाः। दर्भस्तोमविशिष्टं मार्जनं विधत्ते "इन्द्रो वृत्रमहन्त्सो३ऽपोऽ३भ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् तदपोदक्रामत्ते दर्भा अभवन् यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः स देवा आपस्ताभिरेवैनं पवयति" (सं०६का०।१प्र०।१अ०) इति। मेध्यं शुद्धं यज्ञियं यज्ञार्हं सदेवं देवताप्रियं। उत्पवनब्राह्मणे दर्भोत्पत्तिर्व्याख्याता। दर्भस्तोमस्य सङ्ख्याविशेषान् विधत्ते "द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति पञ्चभिः पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्तछन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः स प्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं पवयति (सं०६का०।१प्र०।१अ०)। गायत्री त्रिष्टुप् जगत्यनुष्टुप् पङ्क्त्या सह बृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा इत्यश्वमेधे कश्चिन्मन्त्र आम्नायते। तत्रोष्णिक्ककुभोरवान्तरभेदपरित्यागेन सप्तछन्दाꣳसि सञ्चारस्थानभूतछिद्राभिप्रायेण प्राणानाञ्च नवत्वं। अपरिवर्गं निःशेषं। एकविꣳशत्या दर्भपुञ्जीलैः पवयतीति बह्वृचब्राह्मणे आम्नातत्वात् प्रशंसार्थमितरे पक्षा अवयुत्यानुवादाः। मन्त्रं व्याचष्टे "चित्प-

तिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति" (सं०६का०।१प्र०।१अ०) इति। कल्पः "यजमानं वाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयं" इति। आदित्यरूपस्याच्छिद्रपवित्रस्य पतिः प्रेरकोऽन्तर्यामी। हे पवित्रपते तादृशस्य ते पवित्रेण यस्मै अग्निष्टोमकर्म्मणे कं आत्मानं शोधयामि तत् कर्त्तुं शक्तो भूयासं। एतदभिप्रायं दर्शयति "तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्याहाशिषमेवैतामाशास्ते" (सं०६का०।१प्र०।१अ०) इति। बोधायनः "अथैनं सव्ये पाणावभिपाद्य शालामानयति आ वो देवास ईमहे सत्यधर्म्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामहे" इति। आपस्तम्बः "आवो देवास ईमह इति पूर्व्वया द्वारा प्राग्वंशं प्रविश्य" इति। हे देवा युष्माकं सम्बन्धिन्यस्मिन्नध्वरे वयं सत्यधर्म्माणोऽवश्यं भाव्यनुष्ठानपरा आगच्छामः। हे यज्ञसम्बन्धिनो देवा यस्मात् आगुरे कर्म्मोद्यमे युष्मानाह्वास्यामः तस्माद्वयमत्रागच्छामः। बोधायनः "पूर्व्वया द्वारा शालां प्रपादयति इन्द्राग्नी द्यावापृथिवी आप ओषधीः" इति। आपस्तम्बः "इन्द्राग्नी द्यावापृथिवी आप ओषधीः इत्यपरेणाहवनीयं दक्षिणातिक्रम्य" इति। हे इन्द्रादय एनमनुजानन्त्विति शेषः। बोधायनः "अथैनमग्रेणाहवनीयं पर्य्याणीय दक्षिणत उदङ्मुखमुपवेश्य आहवनीयमीक्षयति" इति। त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि" इति।

आपस्तम्बः "त्वं दीक्षाणामधिपतिरसि इत्याहवनीयमुपोपविशति" इति। हे आहवनीय त्वं दीक्षारूपाणां नियमानां पालकोऽसि अतस्त्वत्समीपस्थितं मां पालय। पूर्व्वोक्तपूतत्वप्रशंसापूर्व्वकं प्राचीनवंशप्रवेशं विधत्ते "यावन्तो वै देवा यज्ञायापुनत त एवाभवन् य एवंविद्वान् यज्ञाय पुनीते भवत्येव बहिः पवयित्वान्तःप्रपादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्रणयति" (सं० ६का०१प्र०।२अ०) इति। अभवन्नैश्वर्य्यं प्राप्ता भवत्येव ऐश्वर्य्यं प्राप्नोत्येव। अत्र विनियोगसङ्ग्रहः।

"आपः शिर उनत्त्योष दर्भोऽत्रान्तर्हितः स्वधि।
क्षुरं निधाय देवश्रूर्वपेत् स्वस्ति तदा जपेत्॥
आपः स्नायाद्दुदा जप्यं सोम वस्त्रपरिग्रहः।
महीति नवनीतस्य यशो वर्च्चेति लेपनं॥
वृत्रेत्याङ्क्ते चित्पतिस्त्वा त्रिभिर्दर्भेण पावयेत्।
तस्येति वाचनं स्वामो ह्याव: प्राग्वंशवेशनं॥
इन्द्राग्नी दक्षिणे गत्वा त्वमित्युपविशेदिह।
प्रथमे ह्यनुवाकेऽस्मिन् मन्त्रा अष्टादशेरिताः॥

अथ मीमांसा। चतुर्थाध्यायस्य तृतीयपादे चिन्तितं।

"किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यागकः।
अङ्गाङ्गिता वा कालो वा ह्यपारार्थ्याय चाङ्गता॥
दर्शादिलक्षिते काले सोमयागो विधीयते।
स्वतन्त्रफलवत्त्वेन न युक्ताऽङ्गाङ्गिता तयोः"॥ इति।

इदमाम्नायते "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति।

तच उभयोराग्निमारुतानूयाजवदन्याधीनत्वाभावाद्दर्शपूर्णमासोक्तेः पारार्थ्यपरिहाराय सोमस्य दर्शपूर्णमासाङ्गत्वबोधकोऽयं संयोग इति चेत्। मैवं। स्वतन्त्रफलवतः सोमयागस्याङ्गत्वासम्भवात्। फलवत् सन्निधानफलं तदङ्गमिति न्यायात्। न चात्र बृहस्पतिसवन्यायेन सोमधर्मकमफलं कर्मान्तरं विधीयत इति शङ्कनीयम्। सोमशब्दस्य बृहस्पतिसवशब्दवन्नामत्वाभावेन धर्मातिदेशकत्वाभावात्। क्त्वाप्रत्ययस्तु असत्यङ्गाङ्गीभावे कर्त्रैक्यमात्रेणोपपद्यते। तस्माद्दर्शपूर्णमासशब्दस्य पारार्थ्यमभ्युपेत्यापि तदिष्ट्युपलक्षित उत्तरकाले सोमविधिरयं। एतदेवाभिप्रेत्य रथरूपकमाम्नायते "एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यति" (सं०२का०।५प्र०।६अ०) इति। अवसाने निश्चिते वरे मार्गे यथा रथेन स्पष्टे मार्गे गन्तुः कण्टकपाषाणादिबाधराहित्येन सुखं भवति तथा प्रथमं दर्शपूर्णमासाविष्टवतः उत्तरकाले तदिष्टिविकृतिषु सोमाङ्गभूतदीक्षणीयाप्रायणीयादिषु कर्मानुष्ठानं सुकरं भवतीत्यर्थः। तस्मात् कालार्थः संयोगः। पञ्चमाध्यायस्य चतुर्थपादे चिन्तितं।

"दर्शाविष्ट्वा सोमयागक्रमोऽयं नियतो न वा।

उक्तेराद्यो न सोमस्याधानानन्तरता श्रुतेः" ॥ इति।

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियत इति चेत्। मैवं। "सोमेन यक्ष्यमाणोऽग्नीना दधीत"

इति आधानानन्तरताया अपि श्रवणात्। तस्मादिष्टिसोमयोः पौर्व्वापर्य्यं न नियतं। तत्रैवान्यच्चिन्तितं।

"विप्रस्य सोमपूर्व्वत्वं नियतं वा न वाऽग्रिमः।
उत्कर्षतो नैवमग्नीषोमीयस्यैव तत्कृतेः" ॥ इति ।

इष्टिपूर्व्वत्वं सोमपूर्व्वत्वञ्च विकल्पितमिति यदुक्तं तत्र ब्राह्मणस्य सोमपूर्व्वत्वमेव नियतं। कुतः। उत्कर्षश्रवणात्। "आग्नेयो ब्राह्मणो देवतयाऽनुसोमेनेष्ट्वा अग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत् तर्ह्यनुनिर्व्वपेत् तर्हि स उभयदेवतो भवति" इति। अस्यायमर्थः। प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ। ततो ब्राह्मणस्यैकैव देवतेति आग्नेय एव ब्राह्मणो न तु सौम्यः सोमस्य तद्देवतात्वाभावात्। यदा स ब्राह्मणः सोमेन यजेत तदा सोमोऽप्यस्य देवतेति अग्नीषोमीयो भवति तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासं अग्नीषोमीयपुरोडाशरूपं हविस्सोमादूर्ध्वमेवानुनिर्वपेत्। तदा स ब्राह्मणो देवताद्वयसम्बन्धी भवतीति। यद्यप्यत्र कर्मान्तरं किञ्चिद्विधीयत इति कश्चिन्मन्येत तथापि पौर्णमासं हविरिति विस्पष्टं प्रत्यभिज्ञानान्न कर्मान्तरं। किन्तु दर्शपूर्णमासयोः सोमादूर्ध्वमुत्कर्षः। तस्माद्विप्रस्य सोमपूर्व्वत्वमेव नियतमिति प्राप्ते ब्रूमः। नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद्यागवाची श्रूयते। पौर्णमासमित्येष तद्धितान्तो हविर्विशेषणत्वेनोपन्यस्यते। तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन मंस्तवादवगम्यते। तस्मादेकस्यैव हविष उत्कर्षो न तु कृत्स्नयोर्द्वयोर्दर्शपूर्णमा-

सयोः। तथा सति ब्राह्मणस्यैकस्मिन्नेवाग्नीषोमीयपरोडाशे सोमपूर्व्वत्वनियमः इतरत्र चत्रियवैश्ययोरिवाचापोष्टिपूर्व्वत्वसोमपूर्व्वत्वे विकल्प्येते। तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

"दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः।
वादो वाऽत्र पुरा कल्पस्तुत्यर्थो विधिमर्हति॥
प्राचीनवंशवाक्योक्तेर्विधावस्यैकवाक्यता।
दिग्विधावर्थवादोयमुपवीते निवीतवत्" ॥ इति।

ज्योतिष्टोमे श्रूयते "प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीमꣳरुद्रा यत्प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्त्तते" (सं०।६का०।१प्र०।१अ०) इति। तत्र देवादीनां कर्मानधिकारान्न तत्र विधिशङ्का। मनुष्याः प्रतीचीं विभजेयुरित्येव विधिः स्यात्। कुतः। पुरा कल्परूपेणार्थवादेन स्तूयमानत्वात्। पूर्व्वपुरुषाचरितत्वाभिधानं पुरा कल्पः। व्यभजन्तेत्यनेन भूतार्थवाचिना तदभिधीयते तस्माद्विधिरयमिति पूर्व्वः पक्षः। यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्रा भवन्ति स प्राचीनवंशः। तद्विध्येकवाक्यत्वाभ्युपगमादर्थवादः सायङ्कालीनार्घ्यादौ प्रतीचीं प्राप्ता। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

"पवतीत्युपकारः किं द्वयोर्मुख्याङ्गयोरुत।
मुख्य एव द्वयोरस्य कृत्स्नकर्तृगतत्वतः॥
युक्तः शास्त्रीयसंस्कारो मुख्येऽस्य फलभोगिनः।
विनापि संस्कृतिं दृष्टं कर्तृत्वं तस्य नास्ति सः"॥ इति।

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः । यद्दैः सोमहोमो ज्योतिष्टोमे मुख्यः । अग्नीषोमीयपश्वादिकमङ्गं तत्र द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति। कुतः । कर्तृधर्मत्वात् । यजमानो हि कर्तृतया वपनादिभिः संस्क्रियते । कर्तृत्वस्य यथा मुख्यं प्रति तस्य विद्यते तथाङ्गं प्रत्यप्यस्ति तस्मादुभयोरुपकार इति चेत् । मैवं । द्वौ हि यजमानस्याकारौ क्रियाकर्तृत्वं फलभोक्तृत्वं चेति तयोरदृष्टः फलभोगः क्रियानिष्पत्तिस्तु दृष्टा । तथा सति वपनादिकृतोपकारस्याप्यदृष्टत्वाद्भोक्तृशेषा वपनादयः फलभोगसाधने मुख्ये एव पर्य्यवस्यति । वपनादिसंस्काररहितैर्ऋत्विग्भिः कृषीवलादिभिस्तु निष्पाद्यमाना दृश्यते। ततस्तत्र कर्तृत्वाकारे वपनादिकृतः स उपकारो नास्ति। तस्माददृष्टफलभोजिनो यजमानस्य योऽयमदृष्टरूपः शास्त्रीयसंस्कारः सोऽयं मुख्ये कर्मणि युक्तो नाङ्गेषु । नात्र पूर्व्ववद्वाक्यमस्ति येन परम्परया फलसाधनाङ्गेषु वपनाद्युपकारः शङ्क्येत । प्रकरणन्तु मुख्यस्यैव न त्वङ्गानां तस्मान्न तेषूपकारः । तत्रैवाष्टमे पादे चिन्तितं ।

"संस्कारा वपनाद्याः किमध्वर्य्योः स्वामिनोऽथ वा ।
अध्वर्य्योस्तत्र शक्तत्वात् तद्वेदोक्तेश्च तस्य ते ॥
संस्कारैर्य्योग्यतां प्राप्य स्वकार्य्यं कर्त्तुमृत्विजः ।
क्रीणात्यन्या क्रिया तेषां संस्क्रिया यजमानगा"॥ इति ।

आप उन्दन्तु जीवस इत्याद्याः संस्कारमन्त्राः तद्विधयश्चाध्वर्युवेदे समाम्नाताः।केशश्मश्रुवपते नखानि निकृन्तत इति ।

मन्त्रस्याध्वर्य्युर्वपनादौ तस्मात् तस्याध्वर्य्योर्वपनादिसंस्कारा इति चेत्। नैवं। वपनादिसंस्काराः यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते। तथा च ब्राह्मणं "केशश्मश्रु वपते नखानि निकृन्तते मृता वा एषा त्वगमेध्या यत् केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति" (सं०। ६का०।१प्र०।१अ०)। न ह्यध्वर्य्युवपनेन यजमानगता मृता त्वगपैति योग्यस्य हि कर्म्माधिकारे सति पश्चात् प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सन् कर्म्मकरानृत्विजः परिक्रीणाति। लोकेऽपि रोगिणः स्वामिन औषधानयन एव भृत्योपजीवनदानेन परिक्रीयन्ते। न तु तदौषधं भृत्याः सेवन्ते। तस्मादितरा क्रिया ऋत्विजां संस्कारस्तु यजमानस्य क्वचित् तु वचनादृत्विजामपि संस्कारोऽस्तु। चतुर्थाध्यायस्य तृतीयपादे चिन्तितं।

"जुह्वाः पर्णमयीत्वेन न पाप श्रुतिरञ्जनात्।
वैरिदृग्वर्जनं वर्म्म प्रयाजैः पुरुषाय किं॥
क्रतवेचाग्निमो भानात् फलस्य न हि साध्यता।
विभाति क्रतवे तस्मादर्थवादः फलं भवेत्"। इति॥

इदमाम्नायते "यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति। यदाङ्क्ते। चक्षुरेव भ्रातृव्यस्य वृङ्क्ते। यत् प्रयाजा इज्यन्ते। वर्म्म वै तद्यज्ञाय क्रियते। वर्म्मयजमानाय भ्रातृव्याभिभूत्यै" इति। तत्र यज्जुह्वः प्रकृतिभूतं पर्णद्रव्यं यच्चाञ्जनेन चक्षुः संस्कारः यच्च प्रयाजानूयाजारूपं कर्म्म तत् त्रितयं पुरु-

त्वार्थत्वेन विधीयते। कुतः। पापश्लोकश्रवणरहित्यादेः पुरुषसम्बन्धिफलस्य प्रतिभानादिति चेत्। मैवं। फलं हि साध्यं भवति, न चात्र साध्यता प्रतिभासते। न शृणोति वृक्ते वर्म क्रियत इति वर्त्तमानत्वनिर्द्देशादतः क्रत्वर्था एते विधयः। तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसम्बन्धः। संस्कारकर्म्मणोस्तु प्रकरणेन क्रत्वर्थानां क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया असम्भवाद्वर्त्तमाननिर्द्देशस्य विपरिणामं कृत्वाऽपि फलं कल्पयितुं न शक्यं। तस्मात् फलत्वभ्रमहेतुः पापश्लोकश्रवणरहित्यादिरर्थवादः। द्वितीयाध्यायस्य प्रथमपादे चिन्तितं।

“नानुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यस्य शेषिणौ।
चित्पतिस्त्वेत्यनाकाङ्क्षावतो नात्रानुषज्यते॥
करणत्वं क्रियापेक्षं क्रिया चैका पुनात्विति।
मन्त्रद्वये ऽतस्तद्द्वारा सर्व्वशेषोऽनुषज्यते”॥ इति।

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते “चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः” इति। तत्र तृतीयमन्त्रशेषोऽच्छिद्रेणेत्यादिभागः प्रथमद्वितीयमन्त्रयोर्नानुषज्यते। कुतः। न हि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनात्वित्यनयोर्मन्त्रयोः शेषिणोः पूर्व्ववाक्ययोः काचिच्छेषाकाङ्क्षाऽस्तीति प्राप्ते ब्रूमः। मा भूच्छेषिणोऽऽकाङ्क्षा तथापि शेषस्याकाङ्क्षास्ति, पवित्रेण रश्मिभिरित्युक्तं। करणत्वं क्रियामपेक्षते क्रिया च पुनातु एषा

ष्वप्येषु मन्त्रेष्वेका तथा च क्रियया सम्बन्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षेऽपि यथान्वेति तथा पूर्व्वयोरप्यन्वेतु तस्मादनुषङ्गः।

अथ छन्दः। आप उन्दन्त्विति द्विपदा गायत्री। आपो ऽस्मानिति द्विपदा विराट्। विश्वमित्येकपदा विराट्। उदाभ्य इति तद्वत्। चित्पतिरित्यनुषङ्गे सति तिस्रो गायत्र्यः। आवो देवा स इत्यनुष्टुप्॥ ०॥

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः॥ ०॥

आकूत्यै प्रयुजे ऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसे ऽग्नये स्वाहा सरस्वत्यै पूष्णे ऽग्नये स्वाहाऽऽपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्व्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहर्क्सामयोः शिल्पेस्थस्ते वामारभे ते मा॥ १॥

पातमास्य यज्ञस्योदृच इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि ययाति विश्वा दुरिता

तरेम सुतर्म्माणमधि नावꣳ रुहेमोर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीर्विष्णोः शर्म्मासि शर्म्म यजमानस्य शर्म्म मे यच्छ नक्षत्राणां मातीकाशात् पाहीन्द्रस्य योनिरसि ॥ २ ॥

मा मा हिꣳसीः कृष्यै त्वा सुसस्यायै सुपिप्पलाभ्यस्त्वौषधीभ्यः सूपस्था देवो वनस्पतिरूर्द्ध्वो मा पाह्योदृचः स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभे ॥ ३ ॥

मा योनिरसि चिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥

प्रथमानुवाके प्राचीनवंशप्रवेशोऽभिहितः। अथ प्रविष्टस्य दीक्षानियमरूपेण तपसा शरीरशुद्धौ सत्यां पश्चाद्देवयजनस्वीकारादियोग्यतेति द्वितीयानुवाके दीक्षा विधीयते। तत्र दीक्षणीयेष्टौ आध्वर्य्यवमन्त्राणामतिदेशतः प्राप्तत्वात् दीक्षाहुत्यादिमन्त्रा एवोच्यन्ते। कल्पः "आज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति, आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा पञ्चमीं जुहोति, आपो देवीर्बृह-

तीर्विश्वशम्भुवो द्यावापृथिवी उर्व्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा'' इति। यज्ञं करिष्यामीत्येवंविधो मानसः सङ्कल्प आकूतिः। तत्सम्पूत्यर्थमविघ्नेन मां प्रेरय ते वह्नये हविरिदं हुतमस्तु। श्रुतयोः फलसाधनयोर्धारणाशक्तिर्मेधा, तत्सिध्यर्थं मदीयमनोऽभिमानिने वह्नये हुतमस्तु। दीक्षा व्रतनियमः, तत्सिध्यर्थं मदीयशरीरतपोऽभिमानिने वह्नये हुतमस्तु। मन्त्रोच्चारणशक्तिः सरस्वती, तत्सिध्यर्थं वागिन्द्रियपोषकाय वह्नये हुतमस्तु। बृहस्पतिरस्माकं हविषा वर्द्धतां। हे आपो भवत्योऽपि वर्द्धन्तां। द्यावापृथिव्यौ वर्धेतां। विस्तीर्णमन्तरिक्षञ्च वर्द्धतां। कीदृश्य आपः। देवीः वृष्टिरूपेण द्युलोकादागताः। बृहतीः बहुलाः। विश्वशम्भुवः सस्यपाचनेन सर्व्वस्य जगतः सुखं कुर्व्वन्त्यः। आहुतीर्विधत्ते ''अदीचित एकयाऽऽहुत्येत्याहुः स्रुवेण चतस्रो जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे'' (सं०६का०।२प्र०।२अ०) इति। प्रथमे मन्त्र आकूत्युपयोगमाह ''आकूत्यै प्रयुजेऽग्नये स्वाहेत्याहाकूत्या हि पुरुषो यज्ञमभिप्रयुङ्क्ते यजेयेति''(सं० ६का०।१प्र०।२अ०) इति। यदा मनसा ऽऽकूतिर्भवति तदा पुरुषः ऋत्विजामग्रे यज्ञमभिलक्ष्य यजेयेति वाचं प्रयुङ्क्ते। द्वितीये मन्त्रे मेधोपयोगमाह ''मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति'' (सं०६का०।१प्र०।२अ०) इति। श्रुतयोः फलसाधनयोरविस्मरणेन धृतयोर्मनसा यज्ञकर्त्तव्यतां प्रतिपद्यते। तपोऽभिमानिनो वह्नेरनुग्रहेण दीक्षा-

सिद्धिः स्पष्टेत्यभिप्रेत्य तृतीयमन्त्रो न व्याख्यातः। चतुर्थमन्त्रे पदवाक्ययोरर्थमाह "सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्रयुङ्क्ते" (सं० ६का०।१प्र०।२अ०) इति। वाचा मन्त्रोच्चारणसिद्धिः। पृथिव्या यज्ञस्य देवयजनव्रीह्यादिद्रव्यसिद्धिः। पञ्चममन्त्रस्य पूर्वभागे बहुविशेषणाभिप्रायमाह "आपो देवीर्बृहतीर्विश्वशम्भुव इत्याह या वै वर्ष्यास्ता आपो देवी बृहतीर्विश्वशम्भुवः" (सं०६का०। १प्र०।२अ०) इति। वर्षे भवा वर्ष्याः। विपक्षे बाधमाह "यदेत-द्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता इमं लोकमागच्छेयुः" (सं० ६का०।१प्र०।२अ०) इति। दिव्यत्वादशनिवदपामशान्तत्वं। यस्मात् मन्त्रोक्तगुणस्तुत्या जलदेवतायाः शान्तिस्तस्माच्छान्ताः सुखकारिण्य इति। तं स्वपक्षमुपसंहरति "आपो देवीर्बृहती-र्विश्वशम्भुव इत्याहास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं लोकमागच्छन्ति" (सं०६का०।१प्र०।२अ०) इति। म-न्त्रस्य द्वितीयतृतीयभागयोरुपयोगमाह "द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्तरिक्षमित्याहान्तरिक्षे हि यज्ञः" (सं०६का०।१प्र०।२अ०) इति। भूमौ देवयजनं अन्तरिक्षेऽनु-ष्ठानाय सञ्चारः। दिवि फलमिति यज्ञस्य लोकत्रयवर्त्तित्वं। मन्त्रस्य चतुर्थभागाभिप्रायमाह "बृहस्पतिर्नो हविषा वृधा-त्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणै वास्मै यज्ञमवरुन्धे" (सं०६का०।१प्र०।२अ०) इति। देवानां मध्ये बृहस्पतेर्गुरुत्वेन परब्रह्मस्वरूपत्वं। हविषा विधेरिति शाखान्तरे मन्त्रपाठः। तं

निन्दित्वा स्वपाठं प्रशंसति "यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद् वृधालित्याह यज्ञस्थाणुमेव परिवृणक्ति" (मं०६का०।१प्र०। २अ०) इति। बृहस्पतिर्विदधालित्युक्ते सति अभिवृद्धेरसूचितत्वाद्यज्ञविघ्नं यजमानः प्राप्नुयात्। वृधालित्युक्त्या तत् परिहारः। बोधायनः "अपरं चतुर्गृहीतं गृहीत्वाज्यपूर्णेन स्रुचा औद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा" इति। आपस्तम्बः "द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं षष्ठीं" इति। विश्वे विश्वात्मकस्य नेतुर्जगन्निर्वाहकस्य देवस्य सख्यमनुग्रहं मर्त्तो मरणवान् यजमानः सहसा वृणीते तच्च सख्यमीदृशेन स्तोत्रेण लभ्यते। विश्वे हे विश्वात्मक रायो धनस्य इषुध्यसि ईशिषे स्तुत्वा पुष्यसे यज्ञपोषणाय द्युम्नं धनं याचत इदं हविस्तव हुतमस्तु। तमिममौद्ग्रहणहोमं विधास्यन्नाख्यायिकया पदं निर्वक्ति "प्रजापतिर्यज्ञमसृजत सोऽस्मात् सृष्टः पराङैत्स प्रयजुरव्लीनात् प्रसाम तमृगुदयच्छद्यदृगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वं" (मं०६का०।१प्र०।२अ०) इति। पलायमानं यज्ञपुरुषं गृहीतुं प्रजापतिना प्रेरितानां त्रिविधमन्त्रपुरुषाणां मध्ये यजुःसामपुरुषौ स यज्ञः प्रकर्षेणाव्लीनात् आवृणोत्। ऋग्देवता तु तं यज्ञमुदगृह्णात् तस्मादेतदृक्साध्यमनुष्ठानमौद्ग्रहणं। तदेतद्विधत्ते "ऋचा जुहोति यज्ञस्योद्यत्यै" (मं०६का०।१प्र०।२अ०) इति। तदीयं छन्दः प्रशंसति "अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनुष्टुभा जुहोति

यशस्योपत्यै" (सं०६का०१प्र०२अ०) इति। एतन्मन्त्रगतमृक्छन्दस्य यथा प्रशस्तं तथैव पदसङ्ख्यामपि प्रशंसति "द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद्द्वादशभिर्वात्सबन्धविदो दीक्षयन्ति" (सं०६का०१प्र०२अ०) इति। यथा वत्स एकेन पाशेन बध्यते तथा विश्वे देवस्येत्यादिषु द्वादशपदेषु एकैकेन पदेन यज्ञो बध्यते अतस्तानि पदानि वात्सबन्धानि। वत्सस्येव बन्धो वात्सबन्धः। तदीयानि पदानि यज्ञमुद्गृह्णन्तीत्याहुः। पूर्व्वेऽभिज्ञास्तद्विदोऽध्वर्य्यव इदानीमपि तैः पदैः जुह्वति। पूर्व्वमभिज्ञप्रसिद्ध्या छन्दसः प्रशंसा कृता। इदानीं वागात्मकत्वेन छन्दः स्तूयते "सा वा एषर्गनुष्टुग्वागनुष्टुग्यदेतदर्चा दीक्षयति वाचैवैनꣳ सर्व्वया दीक्षयति" (सं०६का०१प्र०२अ०) इति। अनुष्टुभो वाग्विशेषत्वेन वाग्रूपत्वं। छन्दोऽन्तरस्यापि तत् सममिति चेत्, तर्हि प्रसङ्गे सति तदपि तथा स्तोतव्यं। लिङ्गोपजीवनेन मन्त्रं स्तौति "विश्वे देवस्य नेतुरित्याह सावित्र्ये तेन मर्त्तो वृणीत सख्यमित्याह पितृदेवत्यै तेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्यै तेन द्युम्नं वृणीत पुष्यस इत्याह पौष्ण्ये तेन सा वा एषर्क्सर्व्वदेवत्या यदेतदर्चा दीक्षयति सर्व्वाभिरेवैनं देवताभिर्दीक्षयति" (सं०६का०१प्र०२अ०) इति। प्रथमपादे सवितृपर्य्यायस्य नेतृशब्दप्रयोगेण सावित्रीत्वं। द्वितीयपादे मर्त्तशब्देन मृतपितृसूचनात् पितृदेवत्यत्वं। तृतीयपादे विश्वशब्दस्य प्रयोगाद्वैश्वदेवत्वं। चतुर्थपादे पुष्यस इत्युक्तत्वात् पौष्णत्वं। अक्षरसङ्ख्यामुपजीव्य स्तौति "सप्ताक्षरं प्रथमं पदमष्टाक्षराणि त्रीणि

यानि त्रीणि तान्यष्टावुपयन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा तेन गायत्री यदेकादशाक्षरा तेन त्रिष्टुग्यद्द्वादशाक्षरा तेन जगती सा वा एषर्क्सर्वाणि छन्दाꣳसि यदेतयर्चा दीक्षयति सर्व्वैरेवैनं छन्दोभिर्दीक्षयति" (सं०६का०।१प्र०।२अ०) इति। प्रथमं पदमृचि प्रथमः पादः। द्वितीयादिषु त्रिषु पादेषु अस्ति प्रत्येकमक्षरगता अष्टत्वसङ्ख्या। द्वितीयपादे सखित्वमिति अक्षरत्रयेणाष्टत्वं पूरणीयं। प्रथमपादं द्वेधा विभज्य त्रीण्यक्षराणि तृतीयपादे चत्वारि चतुर्थपादे गणनीयानि। तथा सति द्वितीयतृतीयचतुर्थपादा अक्षरसङ्ख्याभिर्गायत्र्यादि समा इति। छन्दस्त्रयःसम्पत्तिः। गायत्र्यादीनां त्रयाणां सवनत्रये प्रधान्यात् सर्व्वछन्दःसम्पत्तिः। सप्तसङ्ख्यामुपजीव्य स्तौति "सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्करी पशवः शक्करी पशूनेवावरुन्धे" (सं०६का०।१प्र०।२अ०) इति। विश्वे देवस्य नेतुरित्यत्र सप्ताक्षराणि। प्रोम्वस्मै पुरो रथमित्यस्यां च शक्कर्यामृचि सप्तपादाः शक्कर्याः पशुप्रदत्वात् पशुरूपत्वं। अशेषजगद्व्यवहारसमत्वेन मन्त्रं स्तौति "एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उपजीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै" (सं०६का०।१प्र०।२अ०) इति। यस्मादस्यामृचि प्रथमः पाद एकेनाक्षरेण न्यूनस्तस्मान्मनुष्या वाचः स्वरूपमनाप्तमसम्पूर्णमुपजीवन्ति। मूलाधारादुत्पन्नो वायुः मूर्धापर्य्यन्तं प्रसृतो वक्तृत्वात् तत्तत्स्थानेषु

वर्णानुत्पादयति । तदिदं वर्णाभिव्यक्तिलक्षणं वाचश्चतुर्थं पदं । पूर्व्वाणि तु त्रीणि कण्ठादध एव गूढत्वान्नाभिव्यञ्जयितुं शक्यते । तथा चाम्नायते "गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति । एतेनासम्पूर्णवाग्व्यवहारसाम्यं दर्शितं । किञ्चेयमृगुत्तरेषु पादेष्वक्षरपूर्णा तेन सृष्टिपूर्ण-प्रजापतिसाम्यात् तत्प्राप्तये भवति । प्रथमपादे यदक्षरन्यूनत्वं तेन सृष्टिशून्यजगद्वीजसाम्यात् प्रजोत्पत्तये भवति । कल्पः "अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तस्य शुक्लकृष्णे सम्मृशति शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिः । ऋक्सामयोः शिल्पे स्थस्ते वा पातमास्य यज्ञस्योदृचः" इति । हे शुक्लकृष्णे रेखे युवां ऋक्सामयोः सम्बन्धिनी चित्रे भवतः, एतच्च ब्राह्मणे स्पष्टीभविष्यति, तादृशौ ते युवां स्पृशामि । अस्य यज्ञस्य येयमृगुत्तमा तयोपलक्षिता या आकर्म्मसमाप्तेस्तत्पर्य्यन्तं ते युवां पातं पालयतं । इमं मन्त्रमवतारयन् आख्यायिकया शिल्पत्वं विशदयति "ऋक्सामे वै देवेभ्यो यज्ञायाऽऽतिष्ठमाने कृष्णोरूपं कृत्वापक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपावर्त्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्त्ततामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत्कृष्णं" इति (सं० ६ का० । १ प्र० । ३ अ०) । ऋक्सामे देवते केनापि निमित्तेन देवयज्ञार्थमात्मानमप्रकाशयमाने आत्मतिरोधानाय कृष्णमृगो भूत्वा तदीयं सम्पूर्णरूपं कृत्वा देवेभ्योऽपक्रम्य क्वचिद्गूढेऽतिष्ठतां । देवा

विचारितवन्तः यं पुरुषमिमे ऋक्सामे प्राप्स्यतः स इदं यज्ञफलं प्राप्स्यतीति। देवास्ते ऋक्सामे रहसि केनाप्युपायेन उपचिन्तितवन्तः। ते उभे अहोरात्रमहिमानं शुक्लकृष्णवर्णद्वयं स्वकीये मृगशरीरे स्थापयित्वा देवसमीपमागच्छतां। कृष्णाजिनस्य यच्छुक्लं स एष ऋचा स्वीकृतोऽह्नो वर्णः, यत्कृष्णं स एष साम्ना स्वीकृतो रात्रेर्वर्णः। शिल्पत्वमुपपाद्य मन्त्रं व्याचष्टे "ऋक्सामयोः शिल्पे स्थ इत्याह ऋक्सामे एवावरुन्धे (सं०६का०। १प्र०।३अ०) इति। न केवलमृक्सामप्राप्तिः किन्त्वहोरात्रसारप्राप्तिश्चेत्याह "एष वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रिया यत्कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवावरुन्धे" (सं०६का०।१प्र०।३अ०) इति। एनयोरहोरात्रयोः सम्बन्धि यत्सारं तत्र ऋक्सामयोर्गूढं तदपि प्राप्नोति। विधत्ते "कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनं ब्रह्मणैवैनं दीक्षयति" (सं०६का०।१प्र०।३अ०) इति। ब्रह्म वेदः, तद्रूपत्वं कृष्णाजिनस्य, ऋक्सामशिल्पधारित्वात् तदुपपन्नं। दीक्षयति कृष्णाजिनेन यजमानं योजयति। योजनं द्विविधं। आस्तरणं आस्तीर्णस्य कृष्णाजिनस्यारोहणमन्यस्य कृष्णाजिनस्य प्रावरणञ्च। तत्प्रकार आपस्तम्बेन दर्शितः "कृष्णाजिनेन यजमानं दीक्षयति द्वाभ्याꣳ समस्य दीक्षेतांतर्माꣳसाभ्यां बहिर्लोमाभ्यां यद्येकꣳ स्याद्दक्षिणं पूर्वं पादं प्रतिषीव्येदित्युक्तं"। कल्पः "अथ दक्षिणं जान्वाच्याभिसर्पति, इमां धियꣳ शिक्षमाणस्य देवक्रतुं दक्षं वरुण सꣳशिशाधि यया ऽति विश्वा दुरिता तरेम

सुतर्माणमधिनावꣳ रुहेम" इति । हे वरुण देव इमामग्निष्टोमविषयां धियमुपाददानस्य यजमानस्य सम्बन्धिनं दक्षं समर्थमग्निष्टोमं क्रतुं संशिशाधि सम्यगुपदिश्य पारं नय । वयमपि पारं गन्तु सर्व्वाणि विघ्नरूपदुरितानि यया नावा अत्यन्तं तरेम तां सुखेन तरणे समर्थामिमां कृष्णाजिनरूपां नावमधिरुहेम । मन्त्रस्य स्पष्टार्थतामाह "इमां धियꣳ शिक्षमाणस्य देवेत्याह यथा यजुरेवैतत्" (सं० ६का०।१प्र०।३अ०) इति । बोधायनः "प्रदक्षिणां मेखलां पर्य्यवस्यति । ऊर्गस्याङ्गिरस्योर्जं मे यच्छ पाहि मा मा मा हिꣳसीरिति"। "अथ यजमानं वाससा प्रोर्णोति । विष्णोः शर्म्मासि शर्म्म यजमानस्य शर्म्म मे यच्छ" इति । "वसनस्यातीकाशेषु यजमानं वाचयति, नक्षत्राणां माऽतीकाशात् पाहि" इति । हे मेखले त्वं अङ्गिरसां सम्बन्धिन्यन्नरसरूपा कम्बलवन्मृदुरसि अतोऽन्नरसं मे प्रयच्छ । मां पालय हिंसां त्वद्बन्धनेन वेदनारूपां मा कुरु । हे वस्त्र त्वं विष्णोः सुखप्रदमसि, यजमानस्य सुखं प्रयच्छ, ममापि सुखं प्रयच्छ । हे वस्त्र मां नक्षत्रप्रकाशात् पाहि । शाखान्तरानुसारेण हे उष्णीषेति व्याख्येयं । तदिदं बोधायनेन मन्त्रक्रममनुसृत्योक्तं । आपस्तम्बस्तु ब्राह्मणक्रममनुसृत्य वस्त्रमेखलयोः पौर्वापर्य्यमाह "विष्णोः शर्म्मासीत्यनेन वाससा दक्षिणमꣳसं यजमानः प्रोर्णुते । नक्षत्राणां माऽतीकाशात् पाहीति शिर उष्णीषेण प्रदक्षिणं वेष्टयति इति वाजसनेयकं" "शरमयी मौञ्जी वा मेखला त्रिवृत् पृथ्व्यन्यतरतः पाशा तया यजमानं दीक्षयति योक्त्रेण पत्नीं ऊर्ग-

सीति"। रज्जुसदृशी मेखला। जटासदृशं योक्त्रं। वस्त्रप्रावरणं विधत्ते "गर्भो वा एष यद्दीक्षित उल्वं वासः प्रोर्णुते तस्मात् गर्भाः प्रावृता जायन्ते" (सं०६का०।१प्र०।३अ०) इति। दीक्षितस्य गर्भरूपत्वं बह्वृचब्राह्मणे प्रपञ्चितं "पुनर्वा एतमृत्विजो गर्भं कुर्व्वन्ति यं दीक्षयन्ति" इति। पटसदृशं गर्भवेष्टनमुल्वं। विपक्षे बाधकपुरःसरं आच्छादनस्यापनयनकालं विधत्ते "न पुरा सोमस्य क्रयादपोर्णुवीत यत्पुरा सोमस्य क्रयादपोर्णुवीत गर्भाः प्रजानां परापातुकाः स्युः क्रीते सोमे पोर्णुते जायत एव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव तत्" (सं०६का०।१प्र०।३अ०) इति। सोमे क्रीते तत्तदैव जायते ततो वस्त्रापनयनं युक्तं। किञ्चात्यन्तधनवन्तं राजादिकं प्रति जनानां दिदृक्षायां पार्श्वस्थैर्य्याष्टिकादिभिः सभाया आवरणपटो यथापनीयते तादृगेव तदिति द्रष्टव्यं। ऊर्गस्याङ्गिरसीत्यस्यार्थमाख्यायिकया दर्शयन् मेखलां विधत्ते "अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन्नूर्ग्वै शरा यच्छरमयी मेखला भवत्यूर्जमेवावरुन्धे" (सं०६का०।१प्र०।३अ०) इति। अङ्गिरसो नामकानामृषीणां परस्परमन्नरसे विभज्यमाने यदवशिष्टं तच्छरनामकतृणविशेषरूपेणाविर्भूतं तस्मादूर्गसीत्यादिमन्त्र उपपन्नः। मेखलाबन्धनप्रदेशं विधत्ते "मध्यतः सन्नह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जाभुञ्जते" (सं०६का०।१प्र०।३अ०) इति। अस्य यजमानस्य शरीरमध्ये रसं स्थापयति। तस्मात्

सर्व्वेऽपि मध्ये ऊर्जा भुञ्जते रसं धारयन्तीत्यर्थः। प्रकारान्तरेण मध्यदेशं स्तौति "ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः सन्नह्यति मेध्यं चैवास्याऽमेध्यञ्च व्यावर्त्तयति" (सं० ६का०।१प्र०।३अ०) इति। शरमयत्वं प्रशंसति "इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्य्यन्त ते शरा अभवन् तच्छराणाꣳ शरत्वं वज्रो वै शराः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति वज्रेणैव साक्षात् क्षुधं भ्रातृव्यं मध्यतो ऽपहते" (सं० ६का०।१प्र०।३अ०) इति। ये वज्रस्यान्तः शीर्णाः क्षुद्रावयवाः ते शराख्यास्तृणरूपाः शरा अभवन्। गुणं विधत्ते "त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति" (सं०६का०।१प्र०।३अ०) इति। प्राणापानव्यानवृत्तिभिः प्राणस्य त्रिगुणत्वं। गुणान्तरं विधत्ते "पृथ्वी भवति रज्जूनां व्यावृत्त्यै" (सं०६का०।१प्र०।३अ०) इति। रज्जूनां सूत्राणां खद्वादिस्थितानां। मेखलायोक्त्रयोर्व्यवस्थां विधत्ते "मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय" (सं०६का०।१प्र०।३) इति। मेखला यजमानस्य स्त्री, योक्त्ररूपः पत्न्याः पुमानिति प्रत्येकं मिथुनत्वं। बोधायनः "अथास्यैषा कृष्णविषाणा त्रिवलिः पञ्चवलिर्वा शाणा रज्वा परिहृतां तां यजमानाय प्रयच्छति इन्द्रस्य योनिरसि मा मा हिꣳसीरिति यजमानः प्रतिगृह्णाति" इति। आपस्तम्बो मन्त्रैक्यं मेने। कृष्णविषाणाया इन्द्रयोनित्वमाख्यायिकया

विशदयन् विधत्ते "यज्ञो दक्षिणामभ्यध्यायत् ताꣳ समभवत् तदिन्द्रोऽचायत् सो ऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति तां प्राविशत् तस्या इन्द्र एवाजायत सो ऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत् सा सूतवशा भवत् तत्सूतवशायै जन्म ताꣳ हस्ते न्यवेष्टयत तां मृगेषु न्यदधात् सा कृष्णविषाणा भवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां प्रयच्छति सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय" (सं०६का०१प्र०३अ०) इति। यज्ञदेवस्य दक्षिणा देव्या सह संयोगमिन्द्रोऽवगत्य ततो जातः, सर्व्वमिदमैश्वर्य्यं प्राप्स्यतीति निश्चित्य स्वयमेव दक्षिणां प्रविश्य ततोऽजायत। पुनरपि स्वस्मादपरस्तया जनिष्यमाणः सर्व्वं प्राप्स्यतीति मत्वा मातुर्योनिमाछिनत्। सा च माता सकृत्प्रसूता पश्चाद्दियोनित्वेन बन्ध्याऽभवत्। ततो लोके पश्चान्नष्टबीजा सूतवशा सम्पन्ना। ततस्तां योनिं हस्ते वेष्टयित्वा पश्चाद्दलिभिर्युक्तां तां योनिं कृष्णमृगेषु निदधौ। तत इयं कृष्णविषाणा यज्ञस्य भोग्या योनिः दक्षिणाया अवयवभूता योनिः, इन्द्रस्य कारणभूता योनिः। कल्पः "कृष्यै त्वा सुसस्यायै इति तया वेदेर्लोष्टमुद्धन्ति"। हे लोष्ट शोभनसस्योपेत कृष्यर्थं त्वामुद्धन्मि। मन्त्रसामर्थ्यं दर्शयति "कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधयः पच्यन्ते" (सं०६का०१प्र०३अ०) इति। नीवारादयोऽकृष्टपच्याः। कल्पः "सुपिप्पलाभ्यस्त्वौ-

षधीभ्य इत्यर्थे प्राप्ते शिरसि कण्डूयते" इति। यदा कण्डूयनप्रयोजनप्रसक्तिः तदा कण्डूयेत। हे शिरः त्वां शोभनफलोपेत ओषध्यर्थं कण्डूये। अतः पिप्पलशब्दसूचितं मन्त्रसामर्थ्यं दर्शयति "सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादोषधयः फलं गृह्णन्ति" (सं०६का०।१प्र०।३अ०) इति। विपक्षे बाधकपुरस्सरं द्वयं विधत्ते "यद्धस्तेन कण्डूयेत पामनं भावुकाः प्रजाः स्युर्यत् स्मयेत नग्नं भावुकाः कृष्णविषाणया कण्डूयतेऽपि गृह्य स्मयते प्रजानां गोपीथाय" (सं०६का०।१प्र०।३अ०) इति। पामाख्यरोगयुक्ता दारिद्र्येण वस्त्ररहिताश्चेत्यर्थः। विपक्षे बाधकपूर्वकं कृष्णविषाणायास्त्यागं विधत्ते "न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद्यत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद्योनिः प्रजानां परा पातुकास्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय" (सं०६का०।१प्र०।३अ०) इति। दक्षिणाभ्यो नेतोः दक्षिणानामृत्विग्भिरपनयनात्। अवचृतेत् परित्यजेत्। "चात्वालाद्धिष्ण्यानुपवपति" इति चात्वालनामकात् गर्ताद्धिष्ण्यानामुत्पत्तेर्विधास्यमानत्वात् चात्वालस्य यज्ञयोनित्वं। बोधायनः "अथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति, मुखेन संमितꣳ सुपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णाति" इति। आपस्तम्बो मन्त्रैक्यमाह "सुपस्था देवो वनस्पतिरिति तं यजमानः प्रतिगृह्य" इति। दण्डरूपो

वनस्पतिकार्य्यो देवः स्रुपस्था। सुष्टूपस्थायते ऽवष्टभ्यते मैत्रा-वरुणेन प्रैषकाल इति स्रुपस्थाः। हे तादृग्दण्ड त्वमूर्ध्वस्थित आसमाप्तेर्मां पालय। यजमानाय दण्डप्रदानं विधत्ते "वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायां यद्दीक्षित दण्डं प्रयच्छति वाचमेवावरुन्धे" (सं०६का०।१प्र०। अ०४) इति। तूणवो वेणुः। क्रमेण गुणौ विधत्ते "औदु-म्बरो भवत्यूर्ग्वा उदुम्बर ऊर्ज्जमेवावरुन्धे मुखेन सम्मितो भवति मुख त एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुंजते" (सं० ६का०।१प्र०।४अ०) इति। यजमानस्य दण्डपरित्यागं विधत्ते "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति मैत्रावरुणो हि पुर-स्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रतिष्ठापय-न्ति" (सं०६का०।१प्र०।४अ०) इति। मैत्रावरुणस्तत्र तत्र प्रैषै-स्तेभ्यस्तेभ्य ऋत्विग्भ्यो मन्त्रान् विभजति। ते च ऋत्विजो यजमा-नार्थं तान् मन्त्रान् पठन्ति अतो मैत्रावरुणस्य वाग्रूपो दण्डो युक्तः। बोधायनः "अथैनं यज्ञस्यान्वारम्भं वाचयति। स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादारभे" इति। आपस्तम्बः "अथाङ्गुलीर्न्यञ्चति। स्वाहा यज्ञं मनसेति द्वे स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टीकरोति वाचं यच्छति" इति। स्वाहाशब्देनाव्ययेन यथाम्नायमर्थां उपलक्षणीयाः। मनसा यज्ञमभिगच्छामि

द्यावा पृथिव्योरन्तरिक्षे च यज्ञ आश्रितः साक्षादेव यज्ञं वायोः प्रसादादारभे सोऽयमुपलक्षणप्रकारः। तदेतद्दर्शयति "स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहो-रोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादारभ इत्याहायं वाव यः पवते स यज्ञस्तमेव साक्षादारभते" (सं० ६का०।१प्र०।४अ०) इति। वातस्य क्रियाहेतुत्वात् यज्ञरूपत्वं। अत्र द्वयोर्हस्तयोः कनिष्ठिकामारभ्य चतसृणामङ्गुलीनां च-तुर्भिर्मन्त्रैर्न्यग्भावः। पञ्चमेन मन्त्रेणाङ्गुष्ठाभ्यां दृढमुष्टिबन्धो वाङ्नियमश्च। तदेतद्विधत्ते "मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्यै" (सं०६का०।१प्र०।४अ०) इति। अयमन्तत्वं यज्ञधृ-तिः। अध्वर्योः कश्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते "अदीक्षिष्टाऽयं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह त्रिरुच्चैरभ-येभ्य एवैनं देवमनुष्येभ्यः प्राह" (सं०६का०।१प्र०।४अ०) इति। स्वीकृतस्य वाङ्नियमस्य नक्षत्रोदयात् पुरा विमोकं निषेधति "न पुरा नक्षत्रेभ्यो वाचं विसृजेद्यत्पुरा नक्षत्रेभ्यो वाचं विसृजेद्यज्ञं विच्छिन्द्यात" (सं०६का०।१प्र०।४अ०) इति। कालविशेषे वाग्विमोकं विधत्ते विमोककाले च वक्तव्यं कञ्चित् प्रैषमन्त्रमुत्पादयति "उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं विसृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाभिवाचं विसृ-जति"(सं० ६का०।१प्र०।४अ०) इति। यज्ञार्थं स्वीकृतं वाङ्नि-यमादिरूपं व्रतं यस्यासौ यज्ञव्रतः। तथा सत्यस्य चोरक्षा-

दृनप्रैषस्यापि यज्ञार्थत्वात् नायं वाग्विमोको दोषकारी। नक्ष-त्रोदयात् पुरा लौकिकवागुच्चारणे प्रायश्चित्तमाह "यदि वि-सृजेद्वैष्णवीमृचमनुब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्त-नोति" (सं० ६का०।१प्र०।४अ०) इति। वैष्णवी "विष्णो त्वन्नो अन्तम" इति केचित्, "इदं विष्णुर्विचक्रमे" इत्यन्ये। अत्र वि-नियोगसङ्ग्रहः।

"आकूत्यै जुहुयात् षड्भिर्ऋक्सामेत्यजिनं स्पृशेत्।
इमामजिनमारोहेद्भ्रात्यूर्गिति मेखलां॥
विष्णोर्वस्त्रेणोर्णुते सन्नचेत्यावेष्टयेच्छिरः।
इन्द्र दद्यात् कृष्णशृङ्गं कृष्यै लोष्टोद्धृतिस्तया॥
सुपि कण्डूयनं मूर्ध्नि स्वप दण्डपरिग्रहः।
स्वाहाङ्गुल्योर्न्यसेत् पञ्च मन्त्र भेदेन विंशतिः"॥ इति।

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे चिन्तितं।

"इष्टिदण्डादिभिर्दीक्षा किं वेष्यावोक्तितः क्रमात्।
युक्तः संस्कार इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः" ॥ इति।

ज्योतिष्टोमे दीक्षाप्रकरणे श्रूयते "आग्नावैष्णवमेकादशक-पालं निर्वपेद्दीक्षिष्यमाणः" इति। अन्यदपि श्रुतं "दण्डेन दीक्षयति मेखलया दीक्षयति कृष्णाजिनेन दीक्षयति" इति च। तत्र इष्टिवद्दण्डादीनामपि साधनत्वाभिधानात् सर्वैरियं दीक्षेति चेत्। मैवं। इष्टेः क्रियारूपत्वात् संस्कारहेतुत्वं युक्तं। दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैता-वता दण्डादि वैयर्थ्यं। दीक्षितोऽयमित्यभिव्यञ्जकरूपस्य दृष्टस्य

प्रयोजनस्य सद्भावात्। तस्मादिष्ट्यैव दीक्षा सिध्यति। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

“दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतं।
द्व्यार्थमुत मुख्यार्थं सोमस्येत्युक्तिसम्भवात्।
मुख्याङ्गद्वयगं मैवं पारम्पर्यविडम्बना।
वचनस्य न युक्ता ऽतः प्रधानार्थमिति स्थितं” ॥ इति।

ज्योतिष्टोमे दीक्षादक्षिणे श्रूयेते “दण्डेन दीक्षयति तस्य द्वादशशतं दक्षिणा” इति च। तत्र दीक्षा मुख्याङ्गयोरुभयोरुपकरोति तथा दक्षिणापीति। न च वाच्यं “दीक्षा सोमस्य दक्षिणा” सोमस्येति वाक्ये षष्ठ्या मुख्यसम्बन्ध एवाऽवगम्यते न त्वङ्गसम्बन्ध इति। दीक्षादक्षिणे साक्षात् सोमेनैव सम्बध्नीतां स सोमः पुनरङ्गैः सम्बध्य इति परम्परया दीक्षादक्षिणयोरङ्गैरपि सम्बन्धो ऽस्ति। तस्मादुभयार्थं दीक्षादिकमिति प्राप्ते ब्रूमः। अव्यवहितसम्बन्ध एव षष्ठ्या अभिधेयार्थः। तदसम्भवे तु परम्परया सम्बन्धः कथञ्चिद्गृह्येत। इह तु तत्सम्भवात् पारम्पर्यं न युक्तं। तस्मात् प्रधानार्थं दीक्षादिकं। चतुर्थाध्यायस्य द्वितीयपादे चिन्तितं।

“मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता।
उताऽर्थकर्मताऽद्याऽस्तु धारणे क्षतत्वतः ॥
युक्तोपयुक्तसंस्कारादुपयोक्तृसंस्क्रिया।
स्थित्वा प्रैषानुवचने दण्डोपेक्ष्योऽर्थकर्म तत्” ॥ इति।

ज्योतिष्टोमे श्रूयते “क्रीते सोमे मैत्रावरुणाय दण्डं प्रय-

च्छति" इति। तदेतद्दण्डदानं प्रतिपत्तिकर्म। कुतः। दण्डस्य यजमानधारणेन कृतकृत्यत्वात्। यजमानो ह्यध्वर्युणा दीक्षासिध्यर्थं दत्तं दण्डमासोमक्रयाद्धारयति। अतएवाम्नातं "दण्डेन दीक्षयति" इति, "यद्दीक्षितदण्डं प्रयच्छति" इति। तस्मादुपयुक्तस्य दण्डस्य दानं प्रतिपत्तिरिति चेत्। मैवं। दण्डे भविष्यदुपयोगस्यापि सद्भावात्। यदा मैत्रावरुणः स्थित्वा प्रैषाननुवक्ष्यति तदानीमवलम्बनाय दण्डोऽपेक्षितः। अतएवाम्नातं "दण्डी प्रैषानन्वाह" इति। तथा प्रतिपत्तिरूपादुपयुक्तसंस्कारादर्थकर्मरूप उपयोक्ष्यमाणः संस्कारः प्रशस्तः। उपयोजयितुमेव हि सर्व्वत्र संस्कारस्य प्रवृत्तिः। उपयुक्ते तु प्रतिपत्तिरूपस्य संस्कारस्यादरमात्रपर्यवसायित्वेन तत्कार्य्यपर्यवसानाभावादप्रशस्तत्वं। तस्मान्मैत्रावरुणसंस्काराय दण्डदानमर्थकर्म। तथा सति निरूढपशावसत्यपि दीक्षिते दण्डसम्पादनस्यैतद्दानं प्रयोजकं। तृतीयाध्यायस्य द्वितीयपादे चिन्तितं।

"उत्तिष्ठन् प्रवदेदग्नीदग्नीनित्यादिकं तथा।
कृणुत व्रतमित्येवं पठन्वाचो विमुच्यते॥
मन्त्रौ विधेयौ कालो वा मन्त्रावुत्थानमोकयोः।
विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ॥
मन्त्रार्थानन्वयात्तच्च तद्विधिर्नैव शक्यते।
अगत्या लक्षणाप्यस्तु तेन कालो विधीयते"॥ इति।

ज्योतिष्टोमे समामनन्ति "उत्तिष्ठन्नाह अग्नीदग्नीन् विहर" इति। तथा "व्रतं कृणुतेति वाचं विसृजते" इति। तत्राग्नीध्रं

सम्बोध्य अग्निविहरणादिप्रैषरूपो मन्त्रोऽनेन वाक्येन उत्थानशेषतया विनियुज्यते। तथा मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके व्रतं कृणुतेति मन्त्रो विनियुज्यते। न चोत्थानविमोकशब्दौ काललक्षकौ। तत्कालयोर्विधेयत्वे सति लक्षणाया अन्याय्यत्वादिति प्राप्ते ब्रूमः। अग्निविहरणप्रैषे पयःपानरूपव्रतसम्पादनप्रैषे चान्वितावेतौ मन्त्रौ न तूत्थाने वाग्विमोके च। अतोऽसमर्थयोर्विनियोगासम्भवादगत्या लक्षणामभ्युपगम्य कालो विधीयते। अथ छन्दः। आपो देवीति त्रिपदा विराट्। विश्वे देवस्येत्यनुष्टुप्। इमां धियमिति त्रिष्टुप्।

इति माधवीये वेदार्थप्रकाशे प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥ ० ॥

दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे। ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहाग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि गोपाय नः स्वस्तये। प्रबुधे नः पुनर्ददः। त्वमग्ने व्रतपा असि देव आमर्त्येष्वा। त्वं॥ १ ॥

यज्ञेष्वीड्यः। विश्वे देवा अभि मामाऽववृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा रास्वेयत्सोमाभूयो भर मा पृणन् पूर्त्या वि राधि माहमायुषा

चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भ-वोस्रासि मम भोगाय भव हयोऽसि मम भोगाय भव ॥ २ ॥

छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव वायवे त्वा वरुणाय त्वा निर्ऋत्यै त्वा रुद्राय त्वा देवी रापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदि-न्तमस्तं वो मा ऽवक्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषं भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वथेम-वस्य वर आ पृथिव्या आरे शत्रून् कृणुहि सर्ववीर एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्व ऋक्सामाभ्यां यजुषा सन्तरन्तो रायस्पोषेण समिषा मदेम ॥ ३ ॥

आत्वᳲ हयोऽसि मम भोगाय भव स्य पञ्च विᳲशति॥ ३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपा-ठके तृतीयोऽनुवाकः ॥

द्वितीयानुवाके प्रतसम्पादनदीक्षा वर्णिता। दीक्षितेन देव-यजने स्वीकृते सति सोमक्रयणादिरूपः क्रतुव्यवहारस्तत्र कर्तुं शक्यत इति तृतीयानुवाके देवयजनस्वीकारो वर्ण्यते। तत्

स्वीकारादूर्ध्वं सोमार्थे देवयजने सोमक्रयस्यैव वक्तुमुचितत्वात् तत्स्वीकारात् पूर्व्वमनुवाकादौ व्रतपानद्रव्यसम्पादनेऽभिधीयते। बोधायनः "अथाप आचामति, दैवीन्धियं मनामहे सुम्हडीकामभिष्टये वर्च्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे" इति। आपस्तम्बः "दैवीन्धियं मनामह इति हस्ताववनिज्य" इति। अभीष्टार्थसिद्धये वयं देवताविषयां कर्मानुष्ठानबुद्धिं अनया बुद्ध्या सम्पादयामः। कीदृशीं बुद्धिं। सुम्हडीकां सुखहेतुं ब्रह्मवर्चसधारणहेतुं यज्ञनिर्वाहिकां। सेयं बुद्धिः सुष्टुपारङ्गता अस्माकं वशे भवतु। सुम्हडीकामिति पदस्याभिप्रायमाह "दैवीं धियं मनामह इत्याह यज्ञमेव तन्म्रदयति" (सं०६का०।१प्र०।४अ०) इति। म्हदुकरोतीत्यर्थः। सुपारेतिपदेन यत् सूचितं तदाह "सुपारा नो असद्वश इत्याह व्युष्टिमेवावरुन्धे" (सं६का०।१प्र०।४अ०) इति। व्युष्टिः सुप्रभातं कृतयज्ञप्रकाशनमित्यर्थः। कल्पः "अथा स्मै कꣳसे वा चमसे वा निषिच्य व्रतं प्रयच्छति तद्दक्षिणतः परिश्रित्य व्रतयति। ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा" इति। चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान् पयःपानरूपव्रतानुष्ठायिनोऽन्तर्बहिश्च शुद्धिसम्पादनेन पालयन्तु। कीदृशा देवाः। उत्पत्तिकाले मनसा सहोत्पन्नाः। व्यवहारकालेऽपि मनसा युज्यन्ते। अन्यमनस्कस्य चक्षुरादिभिः सन्निहितविषयाणामप्यनवगमात्। सति तु मनः साहाय्ये स्वस्वविषयेषु सुदक्षाः

कुशलाः। दचः प्रजापतिरित्याहको येषां ते दचपितारः। वि-चारपुरःसरं व्रतं विधत्ते "ब्रह्मवादिनो वदन्ति होतव्यं दीचि-तस्य गृहा३ इ न होतव्या३ मिति हविर्वै दीचितो यज्जुहु-याद्यजमानस्याऽवदाय जुहुयाद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनोयुज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्तेष्वेव परोचं जुहोति तन्नेव हुतं नेवाहुतं"(सं०६का०। १प्र०।४अ०)इति। दीचितस्य हविष्ट्वमर्थवादान्तरे श्रूयते "पुरा खलु वा वैष मेधायात्मानमारभ्य चरति यो दीचितो यद-ग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य स तस्मात् तस्य नाश्यं पुरुषनिष्क्रयण इव ह्यथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाश्यं वारुण्यर्चा परिचरति स्वयैवैनं देवतया परिच-रति" (सं०६।का०।१प्र०।११अ०) इति। शाखान्तरेऽपि "स-र्व्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीचितः" इति। तथा सति दीचितस्य गृहे यद्यग्निहोत्रं जुहुयात् तर्हि यजमान एव हुतो भवेत्। अहोमे तु नित्याग्निहोत्रस्य यज्ञस्य परुः प्रति-दिनानुष्ठानरूपं पर्व्व विच्छिद्येत। तत्र पूर्व्वप्रसिद्धेन मन्त्रेण आहवनीयाग्नौ यो होमः स प्रत्यच इत्युच्यते। अयन्तु परोचो ऽग्निहोत्रहोमः। अन्यमन्त्रेण प्राणाग्निषु हूयमानत्वात्। अतस्तृ-तीयकोटित्वेन मुख्ययोर्होमाहोमयोरभावान्नोक्तदोषद्वयं, त-स्मादनेन मन्त्रेण व्रतं कुर्यादित्यभिप्रायः। बोधायनः "अथ संवेशनयजुर्जपति। अग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि गो-

पायनः स्वस्तये। प्रबुधे नः पुनर्ददः” इति। आपस्तम्बः “अग्ने त्वꣳ सुजागृहीति स्वप्स्यन्नाहवनीयमभिमन्त्रयते” इति। सुमन्दिषीमहि निर्भयाः सन्तः स्वप्स्यामः, नः अस्माकं स्वस्तये विनाशाभावार्थं प्रबुधे जागरणाय ददः सामर्थ्यं देहि। भयप्रसक्तिं दर्शयन् मन्त्रं व्याचष्टे “स्वपन्तं वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः खलु वै रक्षोहा ऽग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहीत्याहाग्निमेवाधिपां कृत्वा स्वपिति रक्षसामपहत्यै” (सं० ६ का०।१ प्र०। ४ अ०)। कल्पः “अथाध्वर्युर्मध्यरात्रे आद्रुत्य प्रबुध्य यजुर्वाचयति। त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः” इति। याज्यासु व्याख्यातो मन्त्रः। व्रतभ्रंशप्रसक्तिं दर्शयन् प्रथमं पादं व्याचष्टे “अव्रत्यमिव वा एष करोति यो दीक्षितः स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवानां व्रतपतिः स एवैनं व्रतमालम्भयति” (सं० ६ का०।१ प्र०।४) इति। अविकलं करोतीत्यर्थः। मनुष्येषु छिन्नं व्रतं मनुष्यावतारेण पालयतीति शङ्कां निवारयन् द्वितीयपादं व्याचष्टे “देव आ मर्त्येष्वित्याह देवः ह्येष सन् मर्त्येषु” (सं० ६ का०।१ प्र०।४ अ०) इति। अतो व्रतं समाधातुं शक्नोति। अग्निर्मूर्धा दिवः ककुदित्यादियाज्या पुरोऽनुवाक्यादिमन्त्रेष्वयमग्निः स्तूयत इत्यभिप्रायं तृतीयपादे स्वयं दर्शयति “त्वं यज्ञेष्वीड्य इत्याहैतꣳ हि यज्ञेष्वीडतेऽप वै दीक्षितात् सुषुपुष इन्द्रियं देवताः क्रामन्ति” (सं० ६ का०।१ प्र०।४ अ०) इति। बोधायनः “अथ सनिहारान् प्रहिणोति स यं मन्यते न मां प्रत्याख्यास्यतीति तं प्रथममधिप्रहिणोति। विश्वे देवा अभि

मा माऽवृक्षन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसु-दावा इत्याहरन्तं दृष्ट्वा जपति, नानाहरन्तं। रास्वेयत् सोमाऽऽ भूयो भर मा पृणन् पूर्त्या विराधि माऽहमायुषा" इति। सनिश-ब्देन हिरण्यवस्त्रादि देयद्रव्यमुच्यते । सनिहारा द्रव्याणामाने-तारः। आपस्तम्बस्तु प्रकारान्तरेण मन्त्रविनियोगविच्छेदावाह "विश्वे देवा अभि मा माऽवृक्षन्निति प्रबुध्य जपति। पूषा सन्येति सनिहारान्त्सꣳस्रास्ति। चन्द्रमसीत्येतैः प्रतिमन्त्रं यथालिङ्गं प्रति-गृह्णाति। देवः सविता वसोर्वसुदावा इत्यन्यानि" इति। सर्वे देवा अभितः पालयितुं मां आवृत्य तिष्ठन्तु। पूषा पोषको देवो सन्या देयेन हिरण्यद्रव्येण सहाऽऽयातु, सोमो राधसा साधकेन वस्त्रेण सहाऽऽयातु, वसोर्वस्वन्तरस्य गवादेः रास्व प्रेरको देवो वसु-दावा वसुप्रदः सन्नायातु। हे सोम अस्मिन् कर्मणि अपेक्षितं इयद्देहि पूर्त्या सम्पूर्त्या मा मां पृणन् पूरयन् भूय आभर आ-हर। अहं आयुषा मा विराधि वियुक्तो माऽभूवं। प्रबुद्धो जपे-दित्येतत् व्याचष्टे "अप वै दीक्षितात् सुषुपुष इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मा मावृक्षन्नित्याहेन्द्रियेणैवैनं देव-ताभिः सन्नयति" (सं०६का०।१प्र०।४अ०) इति। सुषुपुषः सुप्तात् अतीन्द्रियसामर्थ्येन तदभिमानिदेवताभिश्चायं मन्त्रं संयोजयति। विपक्षे बाधकपुरःसरं आ भूयो भरेत्यमुं मन्त्र-भागं व्याचष्टे "यदेतद्यजुर्न ब्रूयाद्यावत एव पशूनभिदीक्षेत तावन्तोऽस्य पशवः स्यूरास्वेयत् सोमाऽऽभूयो भरेत्याहापरिमि-तानेव पशूनवरुन्धे" (सं०६का०।१प्र०।४अ०) इति। दीक्षाकाले

विद्यमानान् यावतः पशूनभिप्राय दीक्षेत मन्त्रानुक्तौ तावन्त एव स्युः, मन्त्रोक्तौ तु तत्सामर्थ्यादपरिमिताः परलोके भवन्ति। पशुभिर्द्रव्यान्तराण्युपलक्ष्यन्ते। "चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्रासि मम भोगाय भव हयोऽसि मम भोगाय भव छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव" इत्येतैर्मन्त्रैर्यथालिङ्गं वस्तु स्वीकर्तव्यं। चन्द्रं हिरण्यं। उस्रा गौः। तेन तेन मन्त्रेण तत्तद्द्रव्याभिमानीदेवतास्तुयन्तीत्याह "चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रतिगृह्णाति" (सं० ६का०।१प्र०।४अ०) इति। एना हिरण्यादिरूपा दित्सिता दक्षिणाः। कल्पः "ताः समुदायुत्य रक्षन्ति। तासां या नश्यति म्रियते वा वायवे त्वेति तामनुदिशति, याप्सु वा पाशे वा वरुणाय त्वेति तां, या सं वा शीर्यते गर्ते वा पतति निर्ऋत्यै त्वेति तां, यामहिर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति तां" इति। अनुदिशामीति शेषः। विपक्षस्वपक्षयोर्दूषणभूषणे दर्शयति "वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेदयथादेवतं दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति न देवताभ्य आवृश्च्यते" (सं० ६का०।१प्र०। ४अ०) इति। बोधायनः "अथ यद्यपरियाणा* आप उपाधिगच्छन्ति तज्जपति। देवीरापो अपां न पाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो माऽवक्रमिषमच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति सं वा गाहते सं वा तरते" इति। अपरियाणा

* यद्यपरिया० इति चै०।

गमनविरोधिन्यो मार्गप्रतिबन्धकाः। आपस्तम्बः "प्रयाणे देवी-राप इत्यपोऽवगाहते। अच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति हस्तेन लोष्टं विमृद्गात्यापारात्" इति। यथा केनापि निमि-त्तेन देवयजनादन्यत्र दीक्षेत तदाग्नीं पृथगरणीष्वग्नीन् समा-रोप्य देवयजनं गच्छन्मध्ये प्राप्तायां नद्यामवगाह्योत्तरेत्। अ-पान्नपादित्यग्निसम्बोधनं। हे देव्य आपो युष्माकं य ऊर्मिस्तं पादेन मा ऽवक्रमिषं। कीदृश ऊर्मिः। व्रीह्याद्युत्पादनेन हवि-र्योग्यः स्वकीयजलपानेन इन्द्रियशक्तिकारी तृषां निवर्तयन् अ-तिहर्षप्रदः मृदि लोष्टरूपं पृथिव्या अच्छिन्नं तन्तुं सेतुमनुप्राप्य तस्योपरि गच्छामि। हविष्यशब्दाभिप्रायमाह "देवीरापो अ-पान्नपादित्याह यद्वो मेध्यं यज्ञियꣳ सदेवं तद्वो माऽवक्रमिष-मिति वा वै तदाह" (सं०६का०।१प्र०।४अ०) इति। हे अप इति*। तन्तुशब्दाभिप्रायमाह "अच्छिन्नं तन्तुं पृथिव्या अनु-गेषमित्याह सेतुमेव कृत्वाऽत्येति" (सं०६का०।१प्र०।४अ०) इति। बोधायनः "बृहस्पतिवत्यर्चा प्रयाति भद्रादभिश्रेयः प्रेहि बृह-स्पतिः पुर एता ते अस्तु" इति। "अथ यत्र वत्स्यन् भवति तदवस्यति अथेमवस्य वर आपृथिव्या" इति। "अथादित्यमुद्य-न्तमुपतिष्ठते, आरे शत्रून् कृणुहि सर्व्ववीर इति" इति। आप-स्तम्बस्तु त्रीन् मन्त्रानेकीकृत्य विनियुङ्क्ते "पृथगरणिष्वग्नीन्त्समा-रोप्य रथेन प्रयाति तदभावे रथाङ्गमादाय भद्रादभिश्रेयः" इति। अत्रार्थक्रमेण देवीराप इत्यस्मात् पूर्वमेवायं मन्त्रोऽवग-

* वाव इत्येव का० पा०।

न्तव्यः। हे रथ भद्रात् प्रशस्तादस्मान्नित्याग्निहोत्रस्थानात् श्रेयः अभिप्रेहि अतिप्रशस्तं सौमिकं देवयजनमभिप्रयाहि। बृहस्पतिः पुर एता तव पुरतो गन्ता अस्तु भवतु। अथ प्रयाणादूर्ध्वं पृथिव्याः सम्बन्धिन्या समन्तात् वरे श्रेष्ठे स्थाने इं इमां गतिं अवस्य समापय। हे रथाभिमानिन् आदित्यशत्रून् राक्षसादीन् आरे देवयजनाद्दूरे कुरु। कल्पः "अथ यत्र यक्ष्यमाणो भवति तदवस्यति एदमगन्म देवयजनं पृथिव्या इत्यन्तादनुवाकस्य" इति। स च मन्त्र एवमाम्नायते "एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्वं ऋक्सामाभ्यां यजुषा सन्तरन्तो रायस्पोषेणसमिषामदेम" इति। पृथिव्याः सम्बन्धि यद्देवयजनं एदं तदिदमगन्म वयं प्राप्ताः। यद्देवयजने पूर्वं विश्वे सर्वे देवा ऋक्सामाभ्यां यजुषा अजुषन्त असेवन्त तदयमागत्य वेदत्रयजातैर्मन्त्रैः सोमयागं सन्तरन्तः सम्यक्पारं नयन्तो रायस्पोषेण धनसमृद्ध्या समिषा समीचीनेनान्नेन च मदेम हृष्यास्म। भद्रादभीत्यादिमन्त्रार्थः स्पष्ट इत्यभिप्रेत्य ब्राह्मणेनात्र व्याख्यानमुपेक्षितं। श्रौपानुवाक्यकाण्डे तु दीक्षितनियमप्रसङ्गात् व्याख्यानं कृतं। तत्र बृहस्पतेरुपयोगमाह "अग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव तर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सम्पारयति" (सं०६का०।१प्र०।४अ०) इति। यदा दीक्षितोऽग्निहोत्रस्थानात् प्रयाति तदा अग्निस्तिरोहित इव नैनं पाल-

यति। ततो रक्षांस्येनं मार्गे हन्तुमीश्वराणि भवन्ति। तत्र बृहस्पतौ पुरतो गच्छति सति अनुगच्छन्तमेनं रक्षोबाधपरिहारेण स बृहस्पतिः सम्यक्पारं नयति। उत्तरमन्त्रस्य चतुर्षु भागेषु प्रतिपाद्योऽर्थः प्रसिद्ध इत्याह "एदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद् ब्राह्मणा ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याह ऋक्सामाभ्याꣳ ह्येष यजुषा सन्तरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाशिषमेवैतामाशास्ते" (सं० ३का०।१प्र०।१अ०) इति। अध्वर्युप्रभृतयो ब्राह्मणा यद्देवयजनमिदानीमधितिष्ठन्ति तद्देवाः स्वयं सेवमाना एतान् सेवन्ते। यो यजते स एष सन्तरतीत्यन्वयः। अत्र विनियोगसङ्ग्रहः।

"दैवीं हस्तौ शोधयित्वा वेदे व्रतपयः पचेत्।
अग्ने स्वप्यन्नग्निमाह त्वं प्रबुद्धो जपेत् तथा॥
विश्व इत्यपि पूषेति सन्निहारानुशासनं।
देवो वसुग्रहस्त्वन्द्रं षड्भिस्तत्र परिग्रहः॥
वाय नष्टामप्सु मृतां मन्या ऋग्भ्यां च गाःस्पृशेत्।
देवीरापो विगाह्याच्छिं लोष्टमप्सु विमर्दयेत्॥
भद्रादृश्येम यात्वेदं यागभूमिं व्यवस्थितः।
अनुवाके तृतीयेऽस्मिन्नुदिता एकविंशतिः"॥ इति।

अथ मीमांसा। एकादशाध्यायस्य चतुर्थपादे चिन्तितं।

"स्वप्नादिमन्त्रा आवर्त्या नो वा ऽऽद्यास्त्वन्तरायतः।

कृत्स्नोद्देशप्रवृत्तत्वान्निमित्ताभेदतः सकृत्"॥ इति।

दीक्षितस्य स्वप्ननद्युत्तरणवृष्टिक्लेदनाऽमेध्यदर्शननिमित्तकास्तत्तन्मन्त्रजपाः पठिताः। त्वमग्ने व्रतपा असीत्यादिकः स्वप्नमन्त्रः। देवीरापो अपान्नपादित्यादिर्नदीतरणमन्त्रः। उन्दतीर्बलं धत्तेत्यादिर्वृष्टिक्लेदनमन्त्रः। अबद्धं मन इत्यादिरमेध्यदर्शनमन्त्रः। यदि* निद्रामध्ये प्रबोधैरल्पैर्व्यवधीयेत नदी च बहुशःस्रोतायुक्तापि द्वीपैः वृष्टिस्च देशैः अमेध्यानि च देशैः तदा तैरन्तरायैर्निमित्तेषु विद्यमानेषु नैमित्तिकमन्त्रा आवर्तनीया इति प्राप्ते ब्रूमः। रात्रिगतां कृत्स्नां निद्रामुद्दिश्यमन्त्राभिधानान्निमित्तमेकं। एवमुत्तरत्रापि योज्यं। तस्मान्नास्त्यावृत्तिः। तत्रैवान्यच्चिन्तितं।

"प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वा[†] यिम क्रमैः।

प्रयाणभेदाद्भिन्नो नो गत्यैक्याद्वा नि वृत्तितः"॥ इति।

भद्रादभिश्रेय इत्यादिप्रयाणमन्त्रः। तत्र दीक्षितस्य निर्गमनमारभ्य पुनः प्रवेशपर्यन्तं विश्रमव्यवधानेऽपि प्रयोजनैक्यादेकमेव प्रयाणं, ततो न मन्त्रावृत्तिः।

अथ छन्दः। दैवींन्धियमित्यग्ने त्वमिति चैते अनुष्टुभौ। त्वमग्न इति गायत्री। विश्वे देवा इत्येकपदात् त्रिष्टुप्। एदमगन्मेति त्रिष्टुप्॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥ ०॥

---

* यदि निद्रामध्य इत्यादि पङ्क्तिद्वयतात्पर्यार्थे सन्देहवशात् आदर्शपुस्तकत्रयेऽपि तथैव विद्यमानत्वात् संशोधनमकृत्वा यथा प्रतिस्थापितं।

† ऽत्र विश्रमैः इति का० पा०।

इयन्ते शुक्र तनूरिदं वर्चस्तया सम्भव भ्राजं गच्छ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता चिदसि मनासि धीरसि दक्षिणा ॥ १ ॥

असि यज्ञियासि क्षत्रियास्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची सम्भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वाऽऽवर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या ॥२॥

दक्षिणा सोमसखा पञ्च च ॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥

तृतीये देवयजनं स्वीकृतं। अथ तस्मिन् देवयजने सोमयागोपयोगिसोमं क्रेतुं सोमक्रयणीविषयं होमादिकं चतुर्थेऽभिधीयते। इयन्ते शुक्रतनूरित्यादयस्तन्मन्त्राः। प्रायणीयासम्बन्धि यद्ध्रौवाज्यं तेनाज्येन सोमक्रयणीमीक्षमाणो जुहुयात्। ततो मन्त्र-

व्याख्यानात् पूर्व्वं प्रायणीया सोमक्रयणी चानुवाकद्वयेन ब्राह्मणेनाऽभिधीयते। तत्र प्रायणीयां प्रस्तौति "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् ते३ ऽन्योन्यमुपाधावन् त्वया प्रजानाम त्वयेति तेऽदित्याꣳ समभ्रियन्त त्वया प्रजानामेति साऽब्रवीद्वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः" (सं० ६ का०। १ प्र०।५ अ०) इति। देवयजनार्थमयं प्रदेशः समीचीनो न त्वितर इति निश्चेतुं परिभ्रम्य तं प्रदेशं निश्चित्य परिभ्रमणेन दिग्भ्रमं प्राप्य प्राचीनवंशादावसमर्थाः सम्पन्नाः। ततस्त्वमेव दिशं ज्ञापयेत्येवं परस्परं वदन्तो दिग्विलोकन*शक्तिमदित्यां निश्चितवन्तः। सा चादितिरब्रवीत्। सोमयागानां प्रारम्भसमाप्त्योरहमेव देवता भूयासमिति वरमयाचत। प्रयन्ति प्रारभन्ते अनेन देवतारूपेणेति प्रायणं। उद्यन्ति उत्तिष्ठन्ति समापयन्त्यनेनेति उदयनं। अहमेव प्रायणं आरम्भदेवता येषां यज्ञानां ते मत्प्रायणाः। अहमेव उदयनं समाप्तिदेवता येषां यज्ञानां ते मदुदयनाः। तस्मादेवं वृतत्वाददितिदेवताकः प्रायणीययागः कर्त्तव्यः। तत्प्रसङ्गादुदयनयागोऽपि विधीयते। अदितिरेका प्रधानदेवता चतस्रस्त्वङ्गदेवता इत्यभिप्रेत्य सङ्ख्यां विधत्ते "पञ्चदेवता यजति पञ्चदिशो दिशां प्रज्ञात्या अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे" (सं० ६ का०।१ प्र०।५ अ०) इति। दिग्विशेषु देवताविशेषं विधातुं प्रस्तौति "पथ्याꣳ स्वस्ति-

---

दिग्बोधक का०।

मयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रतीचीꣳ सवित्रोदीचीमदित्योर्द्ध्वां" (सं० ६का०।१प्र०।५अ०) इति। स्वस्तिसञ्ज्ञा देवता पथ्या पथि साधुः। दिग्विशेषबोधनरूपे मार्गे कुशलान् विधत्ते "पथ्याꣳ स्वस्तिं यजति प्राचीमेव तया दिशं प्रजानाति पथ्याꣳ स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानुपश्यत्यग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानुपश्यति सवितारमिष्ट्वादितिं यजतीयं वा अदितिरस्यामेव प्रतिष्ठायानुपश्यति" (सं० ६का०।१प्र०।५अ०) इति। अर्थानुसारेण* होमविशेषा दिग्विशेषेषून्नेयाः। चक्षुर्द्वयरूपेण प्रशंसितुमग्नीषोमयोः सह निर्देशः। होमस्तु तयोः क्रमभावी दिग्भेदाद्याज्यानुवाक्याभेदाच्च। ततोऽग्निमिष्ट्वा सोमं यजतीत्यपि वाक्यं द्रष्टव्यं। तयोश्चक्षुष्ट्वं दार्शिकाज्यभागब्राह्मणे प्रपञ्चितं। अत्रादितेश्चरुहोमः, आदित्यः प्रायणीयः पयसि चरुरिति शाखान्तरे समाम्नानात्, आज्येन तु देवतान्तराणां। तथा च सूत्रं "चतुर आज्यभागान् प्रतिदिशं यजति" इति। ऋगनुवचनमध्वर्य्योर्विधत्ते "अदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं मनुष्यविशमनुकल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै" (सं० ६का०।१प्र०। ५अ०) इति। मरुतो यद्धव इत्येषा मारुतीति। तथा च सूत्रं "मारुतीमृचमन्वाह मरुतो यद्धवो दिव इति" इति।

---

* अर्थवादानुसारेण इति चै० पा०।

एकोनपञ्चाशत् सङ्ख्याकाः सप्तगणरूपा मरुतो मनुष्यवैश्यवद्देवानां धनसम्पादकाः प्रजाः। अनेन मन्त्रानुवचनेन देवविशां समूहः स्वव्यापारे क्लृप्तो भवति। तस्य कल्पमानमनुसृत्य मनुष्यप्रजासङ्घः कल्प्यते। अतो मन्त्रानुवचनं प्रजानां क्लृप्त्यै भवति। पूर्व्वपक्षत्वेन चोदकप्राप्तं किञ्चिदङ्गमपवदति "ब्रह्मवादिनो वदन्ति प्रयाजवदनूयाजं प्रायणीयं कार्य्यमनूयाजवदप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य सन्ततिः" (सं०६का०।१प्र०।५अ०) इति। प्रमुखे यष्टव्याः समिधादिनामकाः पञ्चप्रयाजाः। अनुपश्चात् समाप्तौ यष्टव्या बर्हिरादिनामकास्त्रयोऽनूयाजाः। तदुभयं प्रायणीयोदयनीययोरिष्ट्योरतिदेशतः प्राप्तं। तत्र प्रायणीयायामनूयाजानुष्ठाने यागः समाप्येत। तद्वत् उदयनीयायां प्रयाजानुष्ठाने यागान्तरं प्रारभ्येत। तथा सति सोमयागो मध्ये विच्छिद्येत। उभयवर्जने तु सोमयागस्य प्रारम्भरूपायां प्रायणीयेष्टाविदानीं अनुष्ठीयमाना इमे प्रत्यक्षाः प्रयाजाः समाप्तिरूपायां उदयनीयेष्टावनुष्ठीयमाना अमी परोक्षा अनूयाजाः। तथा सति प्रयाजानूयाजद्वयेन दर्शयागस्य या सन्ततिः सैवास्य सोमयागस्य मध्ये विच्छेदराहित्यलक्षणा सा सन्ततिः सम्पद्यते। पूर्व्वपक्षं दूषयति "तत् तथा न कार्य्यमात्मा वै प्रयाजाः प्रजानूयाजा यत् प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात् प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः पराभवति यज्ञं परा-

भवन्तं यजमानोऽनु परा भवति” (सं० ६का०।१प्र०।५अ०) इति। आत्मनो वा पुत्रादेर्वा नाऽन्तरायः सोढुं शक्यते यतो द्वयं तदङ्गमित्यर्थः। सिद्धान्तमाह “प्रयाजवदेवानूयाजवत् प्रायणीयं कार्य्यं प्रयाजवदनूयाजवदुदयनीयं नात्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः” (सं० ६का०।१प्र०।५अ०) इति। विच्छेदपरिहाराय विधत्ते “प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति सैव सा यज्ञस्य सन्ततिः” (सं० ६का०।१प्र०।५अ०) इति। प्रायणीययागसम्बन्धि चरुपात्रमप्रक्षाल्य निष्कासे पात्रलिप्तेऽन्ने निर्वापान्न लेपस्य या सन्ततिः सैव सोमयागस्याविच्छेदरूपा सा सन्ततिर्भवति। प्रायणीयोदयनीययोर्दैवतैक्येन याज्याया अप्येकत्वप्राप्तौ व्यत्यासं विधत्ते “याः प्रायणीयस्य याज्या यत्ता उदयनीयस्य याज्याः कुर्य्यात् पराङमुं लोकमारोहेत् प्रमायुकः स्याद्याः प्रायणीयस्य पुरोऽनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति” (सं०६का०।१प्र०।५अ०) इति। स्वस्तिरिद्धिं प्रपद्ये श्रेष्ठेत्याद्याः प्रायणीयस्य याज्या उदयनीयस्यापि तथेत्येवं केचिदाहुः। तथा सति प्रतिनिवृत्तेरभावाद्यजमानोऽस्माल्लोकात् पराङ्मुखः स्वर्गमारोढुं सहसा म्रियेत, तस्मात् तेषां पक्षो न युक्तः। यास्तु स्वस्ति नः पथ्येत्याद्याः प्रायणीयस्य पुरोऽनुवाक्याः तासां याज्यात्वे सति स्वस्तिरिद्धीत्यादीनां पूर्व्वोक्तानां पुरोऽनुवाक्यात्वाय प्रतिनिवृत्तेः। यजमानोऽप्यस्मिन् लोके प्रतितिष्ठत्येव। इत्थं

प्रायणीयेष्टिमुक्त्वा सोमक्रयणीं वक्तुं सोमाहरणं सोपाख्यानमाह "कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्द्धेताꣳ सा कद्रूः सुपर्णीमजयत् साऽब्रवीत् तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति" (सं०६का०।१प्र०।६अ०) इति। कद्रूः सुपर्णी चोभे सपत्न्यौ पराजये दासीत्वं अभ्युपेत्य ममैव सौन्दर्य्यं ममैवेत्यस्पर्द्धेतां। तत्र मध्यस्थाः कद्रूजयमुचिरे। सा च कद्रूः सुपर्णीं दासीत्वेन परिगृह्य तन्मोचनोपायं स्वयमेवोपदिदेश इतोऽस्मात् लोकादारभ्य गणनायां तृतीयाद्यौः स्वर्गलोकस्तस्मिन् सोमो वर्त्तते महर्जनस्तपः सत्यमित्येतेऽपि लोकाः द्युशब्दाभिधेयाः। तस्मादितस्तृतीयस्यामिति विशेष्यते। सोम आहृत्य दत्ते सति त्वां मुञ्चामि इति। सोमाहरणं सम्भावयितुं श्रुतिराह "इयं वै कद्रूरसौ सुपर्णी छन्दाꣳसि सौपर्णेयाः" (सं०६का०।१प्र०।६अ०) इति। भूलोकरूपत्वात् कद्रूः स्वयमाहर्त्तुं न शक्नोति। सुपर्णी तु द्युलोकरूपत्वादुत्पतनसमर्थानां गायत्र्यादिरूपाणां अपत्यानां सद्भावाच्छक्नोति। अथ सा सुपर्णी स्वपुत्राणां गायत्र्यादीनां अग्रे स्ववृत्तान्तं स्पष्टीकरोतीत्याह "साब्रवीदस्मै वै पितरौ पुत्रान् बिभृतस्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति मा कद्रूरवोचत्" (सं०६का०।१प्र०।६अ०) इति। पुंनामनरकोपलक्षिताद् विशेषाद् दुःखात् त्रायन्त इति पुत्राः तान् पुत्रानस्मै एतादृशोपद्रवपरित्राणाय मातापितरौ पुष्यतः। हे गायत्र्यादिपुत्राः कद्रूवचनमवगत्य यद्-

चितं तत् कुरुध्वं। गायत्र्यादीनामैच्छिकशरीरधारित्वात् पुत्रत्वमविरुद्धं। तत्र प्रौढत्वादादौ जगती प्रववृत इत्याह "जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्त्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगती छन्दसां पशव्यतमा तस्मात् पशुमन्तं दीक्षोपनमति" (सं० ६का०।१प्र०।६अ०) इति। पुरा जगत्याः पादस्य चतुर्दशाक्षराण्यासन्। तादृशा जगती द्युलोकं गत्वा स्वानभ्राजादिभिः सोमरक्षकैः सह युध्वा सोममप्राप्य अग्नीषोमीयमवनीयानूबन्ध्याख्यपशून् इष्टिसाध्यदीक्षाञ्च गृहीत्वा स्वकीये चाक्षरद्वये स्वानादिभिर्गृहीते सति पराजित्य समागता। यस्माज्जगती पशूनानयत् तस्मात् सैवात्यन्तपशुप्रदा यतः पशुभिः सह दीक्षाऽऽनीता। ततः पश्वधिकस्वाधीन सम्पत्तौ सत्यां दीक्षायां प्रवर्त्तते। तथैव त्रिष्टुभो युद्धं दर्शयति "त्रिष्टुगुदपतत् त्रयोदशाक्षरा सती साऽप्राप्य न्यवर्त्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा दक्षिणाभिश्च तपसा चागच्छत्"(सं०६का०।१प्र०।६अ०)इति। गौश्चेत्यश्वश्चेत्यादयो दक्षिणा अशनपरित्यागमुष्टिबन्धवाग्यमनवनीताभ्यञ्जनकृष्णाजिनप्रावरणादिक्लेशसहिष्णुत्वं तपः। प्राणवत्प्रियस्य गवाश्वादेर्दानमधिकं तपः। त्रिष्टुभा तदानयनमुपपादयति "तस्मात्त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणानीयन्त एतत् खलु वावतप इत्याहुर्यः स्वन्ददाति" (सं०६क०। १प्र०।६अ०) इति। माध्यन्दिनसवनस्य त्रिष्टुगभिमानिनी देवता। ततस्तदेव त्रिष्टुभो लोकः स्थानं शरीरप्रयासादपि धन-

हानिकृतस्य मानसप्रयासस्याधिकत्वाद्नेन धनेन परोपजीवनाच्च दानमेव महत् तप इत्यभिज्ञानां मतं। गायत्र्यास्तु युद्धे जयं दर्शयति "गायत्र्युदपतच्चतुरक्षरा सत्यजयाज्योतिषा तमस्या अजाऽभ्यरुन्धत् तदजाया अजत्वꣳ सा सोमं चाहरच्चत्वारि चाऽक्षराणि साष्टाऽक्षरा समपद्यत" (सं०६का०।१प्र०।६अ०) इति। सहायरहितयोः पूर्व्वयोः पराजयं दृष्ट्वा गायत्री स्वयं अजया सह उदपतत्। साप्यजा गायत्र्यर्थं स्वकीयेन ज्योतिषा तं सोममभितो रुरोध। तस्माद्रोधनपर्य्यायक्षेपणा-र्थादजधातोः अजेति नाम निष्पन्नं। प्रश्नोत्तराभ्यां गायत्रीं प्रशंसति "ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति यदेवाऽदः सोममाहरत् तस्माद्यज्ञमुखं पर्य्यैत् तस्मात् तेजस्विनी तमा" (सं०६का०।१प्र०। ६अ०) इति। तस्मात् सत्यात् कारणात्। कनिष्ठा न्यूनाक्षरा यज्ञमुखं प्रातःसवनं। तत्र बहिष्पवमाननाम्नि प्रथमस्तोत्रे उपास्मै गायता नर इत्याद्या ऋचो गायत्र्यः सेयं यज्ञमुखप्राप्तिः। ब्रह्मवादिष्वेव बुद्धिमन्तो यदेवेत्याद्युत्तरमाहुः। यस्मादियमदोऽमुष्माल्लोकात् सोममाहरत् तस्मादस्या मुखप्राप्तिर्युक्ता। मुखत्वादेवास्यास्तेजोबाहुल्यं। आहरणप्रकारं दर्शयति "पद्भ्यां द्वे सवने समगृह्णान् मुखेनैकं यन्मुखेन समगृह्णात् तदधयत् तस्माद् द्वे सवने शुक्रवती प्रातःसवनञ्च माध्यन्दिनं च तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते" (सं०६का०।१प्र०।६अ०) इति। पक्षिरूपा गायत्री

सवनद्वयपर्य्याप्तौ सोमभागौ पद्भ्यां संगृह्य तृतीयसवनपर्य्याप्तं सोमभागं चञ्चुपुटाभ्यां संदश्य तदीयं रसं पपौ। यस्मात् पद्भ्यां धृतौ सोमभागौ न पीतौ तस्मात् प्रातःसवनमाध्यन्दिनसवने शुक्रशब्दाभिधेयेन सोमरसेनोपेते। यस्मात् तृतीयभागः पीतः तस्मात् पीतत्वं मन्यमानाः तत्सादृश्यार्थं चर्जीषमभिषुणुयुरिति प्रासङ्गिकं किञ्चिद्विधाय तत्रापरं विशेषं विधत्ते "आशिरमवनयति स शुक्रत्वायाऽथो सम्भरत्येवैनत्" (सं०६का०।१प्र०।६अ०) इति। आशिरं क्षीरं सशुक्रत्वं सरसत्वं। किञ्च क्षीरसेचनादृजीषगतसोमरसरूपहविः सम्भरति सम्यक् पोषयत्येव। पुनरप्यन्यत् विधत्ते "तꣳ सोममाह्रियमाणं गन्धर्व्वो विश्वावसुः पर्य्यमुष्णात् स तिस्रो रात्रीः परिमुषितोऽवसत् तस्मात् तिस्रो रात्रीः क्रीतः सोमो वसति" (सं०६का०।१प्र०।६अ०) इति। उपसद्दिवसेषु त्रिष्वभिषवमकृत्वा सोमं निवासयेदित्यर्थः। इत्थं सोमाहरणं निरूप्य सोमक्रयणीं निरूपयितुं आरभते "ते देवा अब्रुवन् स्त्रीकामा वै गन्धर्व्वाः स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीं कृत्वा तया निरक्रीणन्" (सं०६का०।१प्र०।६अ०) इति। एकसंवत्सरवयस्कया स्त्रीरूपया वाग्देवतया सोमस्य निष्क्रयः कृतः। गन्धर्व्वेष्वपरक्तायाः तस्याः स्त्रिया रोहित गोरूपतां दर्शयति "सा रोहिद्रूपं कृत्वा गन्धर्व्वेभ्योऽपक्रम्याऽतिष्ठत् तद्रोहितो जन्म" (सं०६का०।१प्र०।६अ०) इति। देवेष्वनुरक्तायाः पुनर्देवताप्राप्तिं दर्शयति "ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्मा-

नुपावर्त्तते विह्वयामहा इति ब्रह्मगन्धर्व्वा अवदन्नगायन् देवाः सा देवान् गायत उपावर्त्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते" (सं० ६का०।१प्र०।६अ०) इति। विह्वयामहै विलक्षणं यथा भवति तथैव आकारयामः। ब्रह्म वेदः। एतद्वृत्तान्तवेदनं प्रशंसति "कामुका एनꣳ स्त्रियो भवन्ति य एवं वेदाऽथो य एवं विद्वानपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतया भवन्ति" (सं० ६का०।१प्र०।६अ०) इति। वरस्य स्निग्धाः वरार्थं कन्यामन्वेष्टुं प्रवृत्ता बान्धवा जन्याः। तादृशानां जन्यानां द्वौ वर्गौ। तत्रैकस्मिन् वर्गे यथोक्तवेदनरहिता अनेकगुणान्तरोपेता बहवो वरा यद्यपि सन्ति तथापि तं वर्गमवेक्ष्य येषु जन्येष्वेकोऽप्येवंविद्वान् वरो भवति तेभ्य एव जन्येभ्यः कन्यां तत्पितरो ददति। सोमक्रयण्या गुणं विधत्ते "एकहायन्या क्रीणाति वाचैवैनꣳ सर्व्वया क्रीणाति तस्मादेकहायना मनुष्या वाचं वदन्ति" (सं० ६क०।१प्र०।६अ०) इति। वाग्देवतायाः सोमक्रयणीरूपस्वीकारात् सर्व्ववाचा क्रय उपपद्यते। एकसंवत्सरस्वीकाराच्च तस्मिन् वयसि सति वचनव्यवहारोपक्रमः। वर्ज्यदोषान् विशदयति "अकूटयाऽकर्णयाऽकाणयाऽश्लोणयाऽसप्तशफया क्रीणाति" (सं० ६का०।१प्रा०।६अ०) इति। कूटा कुटिलशृङ्गी, अकर्णा छिन्नकर्णोपेता, काणा लेकाक्षी, श्लोणा कुष्टादिदूषिता, सप्तशफा न्यूनाङ्गी, एता वर्ज्याः। उपादेयां दर्शयति "सर्व्वयैवैनं क्रीणाति" (सं० ६का०।१प्र०।६अ०) इति। सर्व्वावयवसम्पूर्णेत्यर्थः। विपक्षे बाधकपुरःसरं स्वपक्षं विधत्ते "यच्छ्वे-

कल्पः "दर्भ*काण्डे स्रुग्दण्ड उपसङ्गृह्य आहवनीये जुहोत्यन्वारब्धे यजमाने, जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा" इति। हे सोमक्रयणि वाग्रूपे त्वं जूर्वेगयुक्तासि मनसा नियमितासि यज्ञाय प्रियासि। तादृश्या अमोघप्रेरणायास्तव प्रेरणे सति मन्त्रोच्चारणरूपया वाचो यन्त्रं नियमं अशीय प्राप्नुयां इदमाज्यं हुतमस्तु। यथोक्तार्थं मन्त्रे दर्शयति "वाग्वा एषा यत् सोमक्रयणी जूरसीत्याह यद्धि मनसा जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाक् धृता मनसा जुष्टा विष्णव इत्याह यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवितुः प्रसव इत्याह सवितृप्रसूतामेव वाचमवरुन्धे" (सं०६का०१प्र०।७अ०) इति। जवते तूर्णं कर्त्तव्यमित्यवगच्छति। बोधायनः "अग्रेण शालायां तिष्ठन् यजमानमाज्यमवेक्षयति, शुक्रमस्यमृतमसि वैश्वदेवꣳ हविरित्याज्यमवेक्षते" इति। आपस्तम्बः "सोमक्रयणीमीक्षमाणो जुहोति जूरसीत्यपरं चतुर्गृहीतं गृहीत्वा, शुक्रमसीति हिरण्यं घृतादुधृत्य वैश्वदेवꣳ हविरित्याज्यमवेक्ष्य" इति। शुक्रं दीप्तिमत्। अमृतं विनाशरहितं। हे आज्य हे हिरण्येति वा योज्यं। हे आज्य त्वं सर्व्वदेवप्रियं हविरसि। तदिदं स्पष्टत्वान्न ब्राह्मणे व्याख्यातं। कल्पः "अथैनद्धिरण्यमन्तर्द्धाय आदित्यमुदीक्षयति, सूर्य्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेऽभिरीयसे भ्राजमानो विपश्चितेति" इति। सूर्य्य-

---

* नाडी का० पा०।

सम्बन्धि मदीयं चक्षुरिन्द्रियं, कनीनिका त्वग्निसम्बन्धिनी, तदुभयमारूढं प्राप्तोऽस्मि। यतो हे सूर्य्य त्वमेतच्छ्ननामकैः अश्वैर्गच्छसि, हे वक्ने त्वं विपश्चिता तेजसा भ्राजमानोऽसि तस्माद्रक्षोनिवारणाय युवां उभौ प्राप्तोऽस्मि। एतदभिप्रायं दर्शयति "काण्डे काण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येष खलु वा अरक्षो हतः पन्था योऽग्नेश्च सूर्य्यस्य च सूर्य्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकामित्याह य एवारक्षो हतः पन्थास्तꣳ समारोहति" (सं०६का०१प्र०७अ०) इति। काण्डे काण्डे तत्तदुपाङ्गैर्युक्त एकैकस्मिन् यज्ञाङ्गे। बोधायनः "अथैताꣳ सोमक्रयणीमग्रेण शालामुदीचीमभिवर्त्तयन्ते तामनुमन्त्रयते, चिदसि मनासि इत्यन्तादनुवाकस्य" इति। स च मन्त्रमेवमाम्नायते "चिदसि मनासि धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतः शीर्ष्णी सा नः सुप्राची सुप्रतीची सम्भव मित्रस्त्वा पदि बध्नातु पूषाध्वनः पात्विन्द्रायाध्यक्षायाऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वावर्त्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या" इति। आपस्तम्बस्तु त्रेधा विभज्य विनियुङ्क्ते "चिदसि मनासीति सोमक्रयणीमभिमन्त्रयते कर्णगृहीता पदि बद्धा भवति। मित्रस्त्वा पदि बध्नात्विति दक्षिणं पूर्व्वपादं प्रेक्षते। पूषाध्वनः पात्विति प्राचीमायतीमनुमन्त्रयते" इति। हे वाग्देवतारूपे सोमक्रयणि त्वं चिदादिशब्दप्रतिपाद्याऽसि। अन्तःकरणस्य चित्तं मनो

बुद्धिरिति तिस्रो वृत्तयः। देहादिसङ्घातस्य अचेतनत्वं व्यावर्त्त्य चेतनत्वं सम्पादयन्ती बाह्यवस्तुषु वा निर्विकल्पकरूपं सामान्य-प्रज्ञानं जनयन्ती वृत्तिः चित्तं चित्, अयं पदार्थ एवं भवति वा न वेति विचाररूपा वृत्तिर्मनः, भवत्येवेति निश्चयरूपा बुद्धिः, एतत्त्रितयमिह चिन्मनोधीशब्दैरुच्यते। दक्षिणा कुशला, देय-द्रव्यरूपा वा। यज्ञिया सोमक्रयद्वारेण यज्ञसम्बन्धिनी। क्षत्रिया देवेषु सोमः क्षत्रियजात्यभिमानी। तथा च वाजसनेयिन आ-मनन्ति "यान्येतानि देवतानि क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" इति। तेन सोमेनाभिमन्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन क्षत्रिया। ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोरदितेर्देवतात्वात् सेयमुभयतः शीर्ष्णी तद्रूपा त्वमसि। सा तादृशी त्वं अस्मदर्थं सुप्राची सुप्रतीची सम्भव। प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी गत्वा पश्चा-दस्मान् प्रति सुष्ठु प्रत्यङ्मुखी समागत्य अस्माभिः सङ्गच्छस्व। यथोक्तमर्थं मन्त्रे दर्शयति "वाग्वा एषा यत् सोमक्रयणी चिदसि मनसीत्याह शास्त्येवैनामेतत् तस्माच्छिष्टाः प्रजाजा-यन्ते" (सं६का०।१प्र०।७अ०) इति। एतेन मन्त्रेण वागात्मि-का सोमक्रयणी चिदादिशब्दवाच्या भवति। एवमनुशास्ति य-स्मादेवं तस्माल्लोकेऽपि प्रजा अनुशिष्यन्ते। कृत्स्नशस्तात्पर्य्य-मुक्त्वा प्रत्यवयवं व्याचष्टे "चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनासीत्याह यद्धि मनसाभिगच्छति तत् क-रोति धीरसीत्याह यद्धि मनसा ध्यायति तद्वाचा वदति दक्षि-

णासीत्याह दक्षिणा ह्येषा यज्ञियासीत्याह यज्ञियामेवैनां क-
रोति चत्रियासीत्याह चत्रिया ह्येषादितिरस्युभयतः शीर्ष्णी-
त्याह यदेवादित्यः प्रायणीयो यज्ञानामादित्य उदयनीय-
स्तस्मादेवमाह" (सं०६का०१प्र०।७अ०) इति। मनसा वृ-
त्तित्रयकारणेनान्तःकरणेन चेतयते सामान्यतो जानाति अ-
भिगच्छति विचारयति ध्यायति निश्चिनोति। उत्तरमन्त्रस्य
अयमर्थः। हे सोमक्रयणि मित्रो हितकारी देवस्त्वां दक्षिणे
पादे बध्नातु। एतन्मन्त्रविरुद्धं पत्तत्रयं व्यावर्त्तयन् मन्त्रं व्या-
चष्टे "यदबद्धा स्यादयता स्याद्यत् पदि बद्धानुस्तरणी स्यात्
प्रमायुको यजमानः स्याद्यत् कर्णगृहीता वार्त्रघ्नी स्यात् स वाऽन्यं
जिनीयात् तं वाऽन्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह
मित्रो वै शिवो देवो देवानां तेनैवैनां पदि बध्नाति"(सं०६का०।
१प्र०।७अ०) इति। अत्र पादबन्धनं कर्णग्रहणञ्चामन्त्रकमङ्गी-
चकारेत्यविरोधः। अथ वा अकर्णगृहीता अपदिबद्धेति तत्र
पदच्छेदः। तृतीयमन्त्रस्यायमर्थः। हे सोमक्रयणि त्वां पूषा पो-
षको भयोपेतात् मार्गात् पालयतु। यागाध्यचायेन्द्राय त्वां
सोमक्रयसाधनेन मातृपित्रादयोऽनुमन्यन्तां। सगर्भ्यस्त्वया सह
एकस्मिन् गर्भेऽवस्थितः। हे देवि सा त्वमिन्द्रार्थं सोमं देव-
मनुगच्छ। तां त्वां रुद्रो देवोऽस्मान् प्रति पुनरावर्त्तयतु आव-
र्त्तयन्नपि स रौद्रेण मार्गेण किन्तु मित्रस्य पथा। ततस्ते स्वस्ति
सुखं भवतु। सोमः सखा यस्यास्तव सा त्वं सोमसखा भूत्वा
धनेन सह अस्मान् प्रति पुनरागच्छ। अत्र रुद्रस्त्वेत्यादि पृथ-

ङ्मन्त्रेण सोमक्रयादूर्द्ध्वं एतस्याः प्रत्यावर्त्तनमिति केचित्। मन्त्रस्य भागान् क्रमेण व्याचष्टे "पूषाध्वनः पात्वित्याहेयं वै पूषेमामेवास्या अधिपामकः समख्या इन्द्रायाध्यचायेत्याहेन्द्रमेवाऽस्या अध्यचं करोत्यनु त्वा माता मन्यतामनु पितेत्याहानुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवः सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात् पराच्येव सोमक्रयणीयाद्रुद्रस्त्वावर्त्तयत्वित्याह रुद्रो वै क्रूरो देवानां तमेवास्यै परस्ताद्दधात्याहत्यै क्रूरमिव वा एतत् करोति यद्रुद्रस्य कीर्त्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष विक्रीणीते यः सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन् वाचं धत्तेऽनुपदासुकास्य वाग्भवति य एवं वेद" (सं०६का०१प्र०७अ०) इति। समख्यै सम्यक् प्राप्तये रुद्रस्त्वावर्त्तयत्विति यजुः* तमेव क्रूरं रुद्रं अस्याः सोमक्रयण्या आवर्तये परस्तात् तानतिलङ्घ्य परभागे स्थापयति। अनुपदासुका चयरहिता। तदेतद्वेदनस्य प्रशंसनं। अत्र विनियोगसङ्ग्रहः।

"इयं चिप्ना घृते स्वर्णं जूरसीति जुहोति हि।
शुक्रेति स्वर्णमुद्धृत्य वैश्वेत्याज्यमवेचते॥
सूर्य सूर्यमुपस्थाय चित्सोमक्रयणीं जपेत्।
मित्रो दृष्ट्वा बद्धपादं पूषा तामनुमन्त्रयेत्॥
रुद्रस्तामावर्त्तयीत मन्त्राः सङ्कीर्तिता न वा। इति।

* एतत् रुद्रस्येति यजुः इति का०।

अथ मीमांसा। एकादशाध्यायस्य चतुर्थपादे चिन्तितं।

"प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत्।
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः॥
उताद्यः पूर्व्ववन्नैवं मुख्यस्य प्रकृतत्वतः।
मध्योऽस्तु नोपयोक्तव्यः संस्कारस्य गुरुत्वतः" ॥ इति।

ज्योतिष्टोमे श्रूयते "प्रायणीयस्य निष्कास उदयनीयमभिनिर्व्वपति" इति। अत्र पूर्व्वन्यायेन निष्कासद्रव्यकमुदयनीयसमाख्यकर्मकं अन्यदर्थकर्मेत्याद्यः पक्षः। मुख्यस्योदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवत् उदयनीयधर्मातिदेशासम्भवान्नार्थकर्मत्वं। यदि तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षस्तु सोऽपि न सम्भवति उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्। तस्मादुदयनीयस्य संस्कारः। तृतीयाध्यायस्य प्रथमपादे चिन्तितं।

"क्रीणात्यरुणयेत्येतत् सङ्कीर्णं वा क्रयैकता।
क्रयेणानन्वयात् कीर्णं सर्व्वद्रव्येषु रक्तिमा॥
द्रव्यद्वारा क्रये योगात् तद्भागेनान्वयः पुनः।
साक्षात् क्रये गुणस्यार्थं द्रव्ये सन्निहितेऽस्त्वसौ"॥ इति।

ज्योतिष्टोमे श्रूयते "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति। तत्रारुणशब्दोऽरुणिमानं गुणमाचष्टे। गुणिविषयतया प्रयुज्यमानस्यापि नागृहीतविशेषणाविशिष्टे बुद्धिरिति न्यायेन गुणबोधकत्वादन्वयव्यतिरेकाभ्यां गुणमात्रे व्युत्पत्तेश्च। तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते।

तदनुपपन्नं, अमूर्त्तस्य गुणस्य वासो हिरण्यादिवत् क्रयसाधनत्वासम्भवात्। ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्यात्र विनियोजकत्वं वक्तव्यं। प्रकरणञ्च यहचमसाद्यखिलद्रव्येष्वरुणिमानं विनिवेशयति। न च अनेन न्यायेन पिङ्गाच्येकहायनीशब्दयोरपि सर्व्वद्रव्यगामित्वं शङ्कनीयं तयोः शब्दयोर्द्रव्यवाचित्वात्। पिङ्गलं वर्णं अचिणी यस्या गोः सा गौः पिङ्गाची। एवमेकहायनी। यद्यप्येकगोवाचिनौ शब्दौ तथापि विशेषणीभूतधर्मभेदाच्छब्दद्वयं। तच्च युगपत्प्रवृत्तं सत् धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विदधाति। न चैतद्द्रव्यमितरद्रव्ये निवेशयितुं शक्यं। अरुणिमगुणो द्रव्येषु विशेषणत्वेन अन्वेतुं योग्यत्वात् तेषु निवेश्यते। तत्रैषाचरयोजना। अरुणयेत्येतत् पृथग्वाक्यं। तत्र तृतीयाश्रुत्या प्राकर्णिकानि साधनद्रव्याणि। तानि सर्व्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते। यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्व्वाण्यरुणानि कर्त्तव्यानीति,तस्माद् गुणसङ्कीर्ण इति प्राप्ते ब्रूमः। यद्यप्यमूर्त्तो गुणः तथापि हायनवदचिवच्च गोद्रव्यमेव छिनत्ति, तच्च द्रव्यं साधनमिति, तद्द्वारा गुणस्य क्रयेणान्वयो भवति। एवं सति वाक्यभेदो न भविष्यति। ननु वाक्यभेदाभावे लक्षणा दुर्वारा, गुणवाचिनः शब्दस्य गुणिवद्द्रव्यपरत्वाङ्गीकारात्। मैवं। गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते। तच्च द्रव्यद्वारमन्तरेण न सम्भवतीत्यर्थापत्त्या द्रव्यावच्छेदकं कल्प्यते। तर्हि ग्रहचमसादि द्रव्यमवच्छिद्यतामिति चेत्। न। तस्य द्रव्यस्य क्रयसाधनत्वाभावेन तदवच्छेदकगुणस्य श्रूयमाणक्रयसाधनत्वा-

सिद्धेः। तर्हि वाससा क्रीणाति अजया क्रीणातीति वस्त्रादीनां क्रयसाधनत्वात् तदवच्छेदोऽस्त्विति चेत्। न। तेषां क्रयान्तरसाधनत्वात्। न हि तत्र अग्निहोत्रे पयोदध्यादि विकल्पवत् क्रयानुवादेन वस्त्रादिविकल्पो युक्तः, अनुवाद्यस्य क्रयमात्रस्याग्निहोत्रवदन्यत्राविधानात्। ततो वस्त्रादिद्रव्यविशिष्टाः क्रयान्तरविधयः। न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्तः। तस्मात् क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोः पश्चादन्यथानुपपत्त्या परस्परावच्छेदकत्वेनान्वयः। तथा सति आरुण्यविशिष्टयैकहायन्या क्रीणातीत्ययमर्थः पर्यवस्यति, तस्मादारुण्यगुणः क्रयहेतुमेकहायनीमेव भजते। अथ छन्दः। सूर्य्यस्य चक्षुरारुहमित्यनुष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

वस्व्य॑सि रु॒द्रास्यदि॑तिरस्यादि॒त्यासि॑ शु॒क्रासि॑ च॒न्द्रासि॒ बृह॒स्पति॑स्त्वा सु॒म्ने र॑ण्वतु रु॒द्रो वसु॑भि॒राचि॑केतु पृथि॒व्यास्त्वा॑ मू॒र्द्धन्नाजि॑घर्म्मि दे॒वयज॑न॒ इडा॑याः प॒दे घृ॒तव॑ति॒ स्वाहा॒ परि॑लिखित॒ꣳ रक्षः॒ परि॑लिखिता॒ अरा॑तय इ॒दम॒हꣳ रक्ष॑सो ग्री॒वा अपि॑ कृन्तामि॒ यो॑ऽस्मा॒न् द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्म इ॒दम॑स्य ग्री॒वाः ॥ १ ॥

अपि॑ कृन्तास्य॒स्मे राय॒स्त्वो ते॒ रायः॒ सन्दे॑वि॒दे॒व्यो॒र्वश्या॑ पश्यस्व॒ त्वष्टी॑मती ते सपेय सु॒रेता॒ रेतो॒ दधा॑ना

वीरं विदेय तव संदृशिमाऽहꣳ रायस्पोषेण वियोषं॥

॥२॥

अस्य ग्रीवा एकान्न चिꣳशच्च॥५॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥

चतुर्थेऽनुवाके क्रयप्रदेशं प्रति सोमक्रयणीगमनमुक्तं। गतायां तस्यां क्रयाय सोमोन्मानस्यावसरः, सप्तमपदग्रहस्तु गमनमध्य एव कर्त्तव्यः ततः पञ्चमे सोऽभिधीयते। कल्पः "तस्यै षट्पदान्यनुनिष्क्रामति, वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति गच्छन्तीं सोमक्रयणीमनुगच्छन् षट्सु तदीयप्रदेशेषु षड्भिरेतैर्मन्त्रैः स्वपादं प्रक्षिपेत्" इति। वसुरुद्रादित्याः सवनत्रयदेवता। अदितिः प्रायणीयोदयनीययोर्देवता। शुक्रशब्देन दीप्तिमान् सोमो विवक्षितः। चन्द्रशब्देन आह्लादकारि सुवर्णं। हे सोमक्रयणि त्वं वस्वादीनां स्वरूपमसि तदपेक्षितसोमयागसाधनत्वात्। कल्पः "सप्तमं पदमञ्जलिनाभिगृह्णाति, बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेत्विति" इति। हे सोमक्रयणीपद त्वां बृहस्पतिरस्मिन् सुखे प्रदेशे रमयतु वसुभिः सहितो रुद्रस्त्वामनुजानातु आवर्त्तयतु वा। कल्पः "अथैतस्मिन् पदे हिरण्यं निधाय सम्परिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेति" इति। हे घृत इडाया गोरूपायाः सोमक्रयण्याः पदे सम-

न्तात् धारयामि । कीदृशे पदे । पृथिव्या मूर्धस्थानीये देवानां यागस्थाने घृतयुक्ते । तथान्यत्राम्नातं "सा यत्र यत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते" इति । मन्त्रान् व्याचिख्या सुरादावनुष्ठानं विधत्ते "षट्पदान्यनु निष्क्रामति षडहं वाक्नातिवदत्युत सम्वत्सरस्यायने यावत्येव वाक्तामवरुन्धे" (सं० ६का०। १प्र०।८अ०) इति । अस्ति कश्चित् पृष्ठ्यः षडहाख्यो यागः । तत्र षड्विधानि पृष्ठ्यस्तोत्राणि बृह, द्रथन्तर, वैरूप, वैराज, शाक्कर, रैवत, नामकैः सामभिः साध्यानि । तानि च क्रमेण षट्सु दिनेषु गीयन्ते । न तु सप्तमं पृष्ठ्यस्तोत्रं क्वचिदप्यस्ति । ततः प्रधानभूतपृष्ठ्यस्तोत्ररूपा वाग्देवता षडहगतां सङ्ख्यामतीत्य न क्वापि वदति । अपि च संवत्सरकालसम्बन्धिनि गवामयनेऽपि नाधिकं पृष्ठ्यस्तोत्रं वदति । तस्माद्वाग्रूपायाः सोमक्रयण्याः षट्पदानामनुक्रमणं युक्तं । तस्माद्वाग्रूपत्वादेव सर्वां वाचमवरुन्धे । विधत्ते "सप्तमे पदे जुहोति सप्तपदा शक्करी पशवः शक्करी पशूनेवावरुन्धे सप्तग्राम्याः पशवः सप्तारण्याः सप्तछन्दाꣳस्युभयस्यावरुध्यै" (सं० ६का०।१प्र०८अ०) इति । गवाश्वादयो ग्राम्याः । कृष्णमृगादय आरण्याः । तथा च बोधायनः "सप्तग्राम्याः पशवो अजा ऽश्वो गौर्महिषो वराहो हस्त्यश्वतरी च" इति । अथ सप्तारण्या द्विखुराश्चैकखुराश्च पक्षिणश्च सरीसृपाश्च श्वापदाश्च शरभाश्च मर्कटाश्चेति । गायत्री त्रिष्टुप् इत्यादीनि सप्त छन्दांसि । पशुजातीयं छन्दोजातीयञ्चेत्युभयमपि सप्तसङ्ख्ययाऽवरुध्यते । प्रथममन्त्रगतशब्दस्वरूपेणैव सोमक्रयण्या महिमा आख्यात

इत्याह "वस्व्यसि रुद्रासीत्याह रूपमेवास्या एतन्महिमानं व्याचष्टे" (सं०६का०१प्र०८अ०) इति। द्वितीयमन्त्रे बृहस्पतिष्ट्वा सुम्ने रण्वत्विति शब्दस्य व्याचष्टे "बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणै वास्मै पशूनवरुन्धे रुद्रो वसुभिराचिकेत्वित्याहावृत्त्यै" (सं०६का०१प्र०८अ०) इति। तृतीयमन्त्रार्थस्य प्रसिद्धिं दर्शयति "पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इत्याह पृथिव्या ह्येष मूर्धा यद्देवयजनमिडायाः पद इत्याहेडायै ह्येतत्पदं यत्सोमक्रयण्यै घृतवति स्वाहेत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह" (सं०६का०१प्र०८अ०) इति। सोमक्रयणीपदे हिरण्यप्रक्षेपं विधत्ते "यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति" (सं०६का०१प्र०८अ०) इति। कल्पः "अथोद्धृत्य हिरण्यशकलेन वा कृष्णविषाणया वा पदं परिलिखति, परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि" इति। परिलिखितं नाशितं रक्ष इति जात्यभिप्रायेणैकवचनं। ग्रीवा इति व्यक्त्यभिप्रायेण बहुवचनं। इदमिति हस्ताभिनयः। कृन्तामि छिनद्मि। रक्षसः प्रसक्तिं पूर्वोक्तां स्मारयन् मन्त्रं व्याचष्टे "काण्डे काण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय

इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवाऽनन्तरायं ग्रीवाः कृन्तति" (सं०६।का०।१।प्र०।८अ०) इति। अनन्तरायं द्वयोर्मध्ये एकतरस्याप्यन्तरायो यथा न भवति तथेत्यर्थः। कल्पः "अस्मे राय इति स्थाल्यां यावत् त्वमूतꣳ समोप्य त्वे राय इति यजमानाय प्रयच्छति तोते राय इति पत्नियै" इति। त्वमूतं घृतेनाप्लुतं तादृशं रजः सोमक्रयण्याः सप्तमपदस्थाने यावदस्ति तावत् सर्वं पात्रे क्षिपेत्। अस्मिन्नध्वर्यौ रायः रजोरूपं धनं तिष्ठतु त्वे त्वयि यजमाने तोते कलत्रे। अनुष्ठानविधिपुरःसरं मन्त्रान् व्याचष्टे "पशवो वै सोमक्रयण्यै पदं यावत् त्वमूतꣳ संवपति पशूनेवावरुन्धे अस्मे राय इति संवपत्यात्मानमेवाध्वर्युः पशुभ्यो नान्तरेति त्वे राय इति यजमानाय प्रयच्छति यजमान एव रयिं दधाति तोते राय इति पत्नियाऽर्धो वा एष आत्मनो यत्पत्नी यथा गृहेषु निधत्ते तादृगेव तदिति" (सं०६।का०।१।प्र०।८अ०) कल्पः "अथ पत्नीं सोमक्रयण्या समीक्षयति। सं देवि देव्योर्वश्या पश्यस्वेति" इति। हे देवि सोमक्रयणि त्वमूर्वश्या देव्या सहेमां पश्यस्व। अयं मन्त्रः स्पष्टार्थत्वाद् ब्राह्मणेनोपेक्षितः। बोधायनः "अथ पत्नी यजमानमीक्षते, त्वष्टीमती ते सपेय सुरेतारेतो दधाना वीरं विदेय तव संदृशि" इति। आपस्तम्बः "त्वष्टीमती ते सपेयेति पत्नी सोमक्रयणीमभिमन्त्रयते" इति। हे यजमान त्वया सह सपेय सङ्गच्छेय। अथ वा हे

सोमक्रयणि ते तवानुग्रहेणाहं पत्या सङ्गच्छेय। कीदृशी। त्वष्टीमती। स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा। तथा च अग्न्युपस्थानप्रकरणे श्रूयते "यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते" इति। तादृशस्य त्वष्टुरनुग्रहेणोपेता शोभनममोघं स्वकीयं रेतो यस्याः सा सुरेताः तादृशमेव पत्युः रेतो दधाना तव पत्युः सोमक्रयण्या वा संदृशि अभीक्ष्णं वीक्षणं वर्त्तमाना वीरं स्वोचितगुणेषु शूरं पुत्रं विदेय लभेय। त्वष्टीमतीत्यस्य पदस्य अभिप्रायमाह "त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति" (सं०६का०।१प्र०।८अ०) इति। बौधायनः "सोमक्रयणीमीक्षते, माहꣳ रायस्पोषेण वियोषं" इति। आपस्तम्बः "माहꣳ रायस्पोषेण वियोषमिति पत्नीपदं प्रदीयमानमनुमन्त्रयते" इति। मा वियोषं वियुक्तो मा भूयासं अयं मन्त्रो ब्राह्मणेनोपेक्षितः। एतस्य सोमक्रयणीपदरजसस्तृतीयं भागं गार्हपत्ये प्रक्षिपेत् भागान्तरमाहवनीय इति विधत्ते "अस्मै वै लोकाय गार्हपत्य आधीयते अमुष्मा आहवनीयो यद्गार्हपत्य उपवपेदस्मिन् लोके पशुमान्स्याद्यदाहवनीयेऽमुष्मिँल्लोके पशुमान्स्यादुभयोरुपवपत्युभयोरेवैनं लोकयोः पशुमन्तं करोति" (सं०६का०।१प्र०।८अ०) इति। अथ सूत्रं "पदं त्रेधा विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शीते भस्मन्युपवपति तृतीयमाहवनीयस्य तृतीयं पत्न्यै प्रयच्छति तत् सा गृहेषु दधाति" इति। अथ विनियोगसंग्रहः।

"षट्पदानुक्रमा वत्सी ब्रूहस्तत्पदमङ्गुहः।
पृथिव्यास्तत्पदे कृत्वा परि संवेष्ट्य रेखया॥
अस्मे स्थाल्यां पदं चिप्ता त्वे दद्यात् स्वामिने पदं।
तोते पत्न्यै पदं दद्यात् सङ्क्रयण्या ह्यवेचयेत्॥
त्वष्टी तां मन्त्रयेत् पत्नीं मादं तद्दीयते यदा।
पदं तदा मन्त्रयेत मन्त्राः पञ्चदशेरिताः"॥ इति।

अथ मीमांसा। चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

"सोमक्रयण्यानयने पदकर्मप्रयोजकं।
न वाद्योऽत्राञ्जनस्यापि क्रयवत्सन्निकर्षतः॥
तृतीयया क्रयार्था गौः तद्वारानयनस्य च।
तादर्थ्यात् तत्प्रयुक्तत्वं न प्रयोजकता पदे"॥ इति।

ज्योतिष्टोमे सोमक्रय आम्नायते "एकहायन्या क्रीणाति" इति सेयमेकहायनी गौर्यदा सोमं क्रेतुं नीयते तदाध्वर्युस्तस्याः पृष्ठतो गच्छति। तदप्याम्नातं "षट्पदान्यनुनिष्क्रामति" इति। ततः सप्तमे पदे हिरण्यं निधाय कृत्वा तत्पदगतं रजो गृह्णीयात्। एतदपि श्रूयते "सप्तमपदमध्वर्युरञ्जलिनाभिगृह्णाति" इति। यदेतद्रजः सङ्गृह्यते हविर्धानयोः शकटयोरचे तेन रजसा युक्तमञ्जनं चिपेत्। एतदपि श्रुतं "यज्ञं वा एतत् सम्भरति यत्सोमक्रयण्यै पदं यज्ञमुखꣳ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाचमुपाञ्ज्यात्" इति। रजः कार्य्यमपीत्यर्थः। तत्र यथा क्रयः सन्निकृष्टः तथैव पदकर्माण्यत्राञ्जनं सन्निकृष्टं। अयोच्येत दथ्यानयनं आमिचया यथा संयुक्तं न तथा अत्राञ्जनं सोमक्रयण्या-

नयने संयुक्तमिति । तन्न । क्रयेऽपि पदसंयोगस्य तुल्यत्वात् । अथासंयुक्तोऽपि क्रयो गवानयनेन निष्पाद्येत तर्ह्युत्थाञ्जनमपि तेन निष्पाद्यत इति समानत्वात् क्रयवत् पदकर्मापि सोमक्रयण्यानयनस्य प्रयोजकमिति प्राप्ते ब्रूमः । एकहायन्या क्रीणातीति तृतीयाश्रुत्या गोः क्रयार्थत्वं गम्यते । गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवानयने प्रयोजकः । न च पदकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिच्छ्रुतं तस्मात् तदप्रयोजकं । अस्मिन्ननुवाके सर्व्वाणि यजूंष्येवेति नास्ति छन्द इति ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

अ॒ꣳशुना॑ ते अ॒ꣳशुः पृ॑च्यतां॒ परु॑षा॒ परु॑र्ग॒न्धस्ते॒ काम॑मवतु॒ मदा॑य॒ रसो॒ अच्यु॑तोऽमा॒त्योऽसि शु॒क्रस्ते॒ ग्रहो॒ऽभि त्यं दे॒वꣳ स॑वि॒तार॑मू॒ण्योः क॒विक्र॑तु॒मर्चा॑मि स॒त्यस॑वसꣳ रत्न॒धाम॒भि प्रि॒यं म॒तिमू॒र्द्धा यस्या॒मति॒र्भा अ॒दि॑द्युत॒त्सवी॑मनि॒ हिर॑ण्यपाणि रमिमीत सु॒क्रतुः॑ कृ॒पा सुवः॑ । प्र॒जाभ्य॑स्त्वा प्रा॒णाय॑ त्वा व्या॒नाय॑ त्वा प्र॒जास्त्वमनु॒प्राणि॑हि प्र॒जास्त्वामनु॒प्राण॑न्तु ॥ १ ॥

अनु॑सप्त च ॥ ६ ॥

इति तत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥

पञ्चमानुवाके सोमक्रयण्याः पदसङ्क्षेपो मार्गमध्येऽभिहितः। अथाऽऽगतया सोमक्रयण्या सोमः क्रेतव्यः स च सोमक्रय उन्मानपूर्व्वक इति षष्ठे सोमोन्मानमभिधीयते। बोधायनः "हिरण्यवता पाणिना राजानमभिमृशति, अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रहः" इति। आपस्तम्बः "अꣳशुना ते अꣳशुः पृच्यतामिति यजमानो राजानमभिमन्त्रयते" इत्याह। अꣳशुः सूक्ष्मोऽवयवः। परुः पर्व्व। हे सोम तवैकेनांशुनाऽन्योंऽशुः संयुज्यतां, कोऽप्यंऽशुर्वाय्वाद्युपघातेन मा वियुज्यतां। तथा परुषा परुः संयुज्यतां, कस्यापि परुषो विभागो मा भूत्। त्वदीयो गन्धो यजमानस्य कामं पालयतु, त्वदीयो रसो मदाय देवानां हर्षाय विनाशरहितो भवतु। त्वममात्योऽसि, यजमानेन देवताभिश्च सह सर्व्वदा तिष्ठसि। तव स्वीकारः शुक्रो हिरण्यसाध्यः। एतं मन्त्रं व्याचिकीर्षुरादौ सोमविक्रयिणं प्रत्यध्वर्य्योः प्रैषमन्त्रमुत्पादयति "ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति सोमो वा ओषधीनाꣳ राजा तस्मिन् यदापन्नं ग्रसितमेवास्य तद्यद्विचिनुयाद्यथा स्याद्ग्रसितं निष्खिदति तादृगेव तद्यन्न विचिनुयाद्यथाऽक्षन्नापन्नं विधावति तादृगेव तत्क्षोधुकोऽध्वर्युः स्यात् क्षोधुको यजमानः सोमविक्रयिन्त्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतरं यदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात् सोमविक्रयी क्षोधुकः" (सं०६का०।१प्र०।८अ०) इति। विचयो नाम सोमस्य तृणादेरपनयनं। तस्मिन्नोषधीनां राज्ञि सोमे यत्

तृणादिकमापन्नं पतितं तत् तृणादिकमस्य सोमस्य ग्रसितमेव ग्रास एव भवति। तथा सति यदि विचिनुयात् तृणादिकमपनयेत् तदानीं यथा लोके ग्रसितमन्नं निष्ठिवति मक्षिकाद्युपद्रवेण वमति तत्तृणाद्यपनयने तादृक् स्यात्। यदि न विचिनुयात् तदानीं यथा चक्षुषि पतितमितस्ततो विधावनेन व्यथां जनयति तदविवेचनं तादृक् स्यात् ततो दोषद्वयपरिहाराय सोमविक्रयिन्नित्यादि प्रैषमन्त्रं ब्रूयात्। तस्मिन्नुक्ते सति यदीतरं विचयदोषः, यदि इतरं त्वविचयदोषः, तेनोभयेन दोषेण सोमविक्रयिणमेव योजयति तस्मादसो चोधुको न रक्षितो भवेत्। तत्र सूत्रं "उत्तरवेदिदेश उपरवदेशे वा लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य दक्षिणे चर्मपक्षे राजानं निवपत्युत्तरस्मिन्नुपविशति सोमविक्रय्युदकुम्भः राजानं सोमविक्रयणमिति सर्व्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यः सोमा इत्युक्तं, सोमविक्रयिन् सोमः शोधयेत्युक्त्वा पराङावर्त्तते" इति। यथोक्तं कर्म विधत्ते "अरुणो ह स्माहैापवेशिः सोमक्रयण एवाहं तृतीयसवनमवरुन्ध इति पशूनां चर्मन्मिमीते पशूनेवावरुन्धे पशवो हि तृतीयः सवनं" (सं० ६का०।१प्र०।८अ०) इति। अरुणनामकः कश्चिदुपवेशस्य पुत्रः, पशुचर्मणि सोमं मिमीते, अत्रैव हि तृतीयसवनं सम्पादयिष्यामीति तस्याभिप्रायः। सवनीयानुबन्ध्याख्ययोः पश्वोस्तृतीयसवने सद्भावात् पशवस्तृतीयसवनं। अतः पशुचर्मणा तत्प्राप्तेः सोमोन्मानं तत्र कुर्यादित्यर्थः। चर्मण उत्तरलोमास्तरणं

विधत्ते "यं कामयेतापशुः स्यादित्यृचतस्तस्य मिमीतर्चं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपं रूपेणैवास्मै पशूनवरुन्धे पशुमानेव भवति" (सं०६का०।१प्र०।८अ०) इति। ऋचतः रूचे परुषे निर्लोमभागे लोमतः स लोमभागे। उदकुम्भसन्निधिं विधत्ते "अपामन्ते क्रीणाति सरसमेवैनं क्रीणाति" (सं०६का०।१प्र०।८अ०) इति। मन्त्रे दुर्बोधमंशं व्याचष्टे "अमा त्वोऽसीत्याहाऽमैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहः" (सं०६का०।१प्र०।८अ०) इति। अमैव सहैव त्वःस्थित इत्यर्थः। सोमस्य स्वीकारः शुक्रो हि सुवर्णसाध्यो हीत्यर्थः। शकटेन सह सोमं प्राप्तुं गच्छेदिति विधत्ते "अनसाऽच्छयाति महिमानमेवास्याऽच्छयाति" (सं०६का०।१प्र०।८अनु०) इति। शकटरूपेण बहुमानेन सोमस्य महिमा प्रकाशितो भवति। तमेव विधिमनूद्य प्रशंसति "अनसाऽच्छयाति तस्मादनो वाह्यꣳ समे जीवनं (सं०६का०।१प्र०।८अ०) इति। समे प्रदेशे जीवनसाधनं धान्यञ्च शकटवाह्यं तद्वत् सोमः। विषमे तु प्रदेशे शिरसा सोमवहनं विधत्ते "यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवनं" (सं०६का०।१प्र०।८अ०) इति। यत्र यदा पर्व्वते सोमलतोत्पत्तिप्रदेशे सोमं क्रीणन्ति तदेति शेषः। लोकेऽपि दुर्गमे गिरौ धान्यं शिरसा वहन्ति। अत्र सूत्रं "उद्धृतपूर्व्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति शीर्ष्णा गिरौ क्रीतं हरन्ति

अपरेणोत्तरेण वा राजानं प्रागीषमुदगीषं वा नद्धयुगꣳ शकटं चुबुकप्रतिष्ठितं'' इति। तस्मिन् शकटे पूर्व्वस्थापितं मध्यमफलकमुद्धृत्य नूतनं फलकं स्थापनीयं। अथ वा उद्धृतमुन्नतं पूर्व्वफलकरूपं मुखं यस्य शकटस्य तदुद्धृतपूर्व्वफलकं। परिश्रयः शकटस्योपरिगृहकुड्यवत् परितो वेष्टनं। छदिरुपरितनमाच्छादनं। बोधायनः ''अथैनमतिच्छन्दसर्चा मिमीते एकयैकयोत्सर्गं मिमीतेऽयातयाम्निया यातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः सर्व्वास्वङ्गुष्ठमुपनिगृह्णातीति, अभित्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभिप्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः इति, पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीं'' इति। आपस्तम्बः ''क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं चर्मण्यास्तृणात्युदग्दशं वा तस्मिन् हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांशून्त्सङ्गृह्य न्यञ्चन् अभित्यं देवꣳ सवितारमित्यतिछन्दसर्चा मिमीते'' इति। तं देवमभ्यर्चामि। कीदृशं देवं। ऊण्योः द्यावापृथिवीरूपयोर्हस्तयोः सवितारं प्रेरकं कवीनां वेदार्थविदां क्रतुर्यागो यस्य प्रेरकस्य सोऽयं कविक्रतुः। अत एव सत्यः फलपर्य्यवसायी सवः प्रेरणं यस्याऽसौ सत्यसवाः। रत्नानि दधातीति रत्नधाः। आभिमुख्येन सर्व्वेषां प्रियमतिः सर्व्वैर्मन्तव्यः तादृशं देवमर्चामि। यस्य सवितुः ऊर्ध्वलोकवर्त्तिनो दीप्तिः अमतिः मन्तुमशक्या द्योतते प्रकाशते स्वर्गवर्त्ती स देवः कृपया मां समागत्य हिरण्यपाणिः सोमं मिमीतां। एतस्मादृचि

वर्त्तमानं छन्दः प्रशंसति "अभित्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीते अतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वैभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनꣳ समानानां करोति" (सं० ६ का० १ प्र०।९ अ०) इति। अक्षराधिक्येन गायत्र्यादिछन्दांस्यतिक्रम्य वर्त्तत इत्यतिछन्दाः। वर्ष्मैवा शरीरमिव। अङ्गुलीषु प्रकारविशेषं विधत्ते "ऐकयैकयोत्सर्गं मिमीतेऽयातयाम्निया यातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः" (सं० ६का०।१प्र०९ अ०) इति। उत्सर्गं उत्सृज्योत्सृज्य कनिष्ठिकयैव प्रथमपर्याये अनामिकयैव द्वितीये मध्यमयैव तृतीये तर्जन्येव चतुर्थे, एवं सति सकृत्प्रवृत्ताया अङ्गुल्याः पुनः प्रवृत्त्यभावाद्यातयामत्वं गतसारत्वं न भविष्यति। यस्मात् पर्यायेण प्रवृत्ताः तस्मात् प्रत्येकमङ्गुष्ठेन संयोक्तुं पृथक्सामर्थ्ये अर्पिताः। अङ्गुष्ठस्य पर्यायो नास्तीत्यमुमर्थं विधत्ते "सर्व्वास्वङ्गुष्ठमुपनिगृह्णाति तस्मात् समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात् सर्व्वा अनुसञ्चरति (सं० ६का०।१प्र०।९ अ०) इति। कनिष्ठिकादिषु सर्व्वास्वङ्गुलीषु प्रत्येकं अङ्गुष्ठं संयोजयेत्। समावद्वीर्यस्तुल्यसामर्थ्यः तस्माल्लोके व्यवहारेऽपि प्रत्येकं सर्व्वा अङ्गुलीरनुसञ्चरन्ति। विपक्षे बाधकपूर्व्वकं पूर्व्वोक्तं स्वपक्षमुपसंहरति "यत् सह सर्व्वाभिर्मिमीत सꣳश्लिष्टा अङ्गुलयो जायेरन्नेकयैकयोत्सर्गं मिमीते तस्माद्विभक्ता जायन्ते" (सं० ६का०।१प्र०।९ अ०) इति। समन्त्रकामन्त्रकयोः सोमोन्मानयोरावृत्तिसङ्ख्यां विधत्ते "पञ्च-

कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे पञ्चकृत्वस्तूष्णीं दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे यद्यजुषा मिमीते भूतमेवावरुन्धे यत् तूष्णीं भविष्यत्'' (मं० ६का०६।१प्र०।६अ०) इति। यद्यप्यतिछन्दसर्चेत्याम्नानात् पदार्थरूपस्य लक्षणस्य सद्भावाच्चाभित्यमित्यसौ ऋगेव तथापि युज्यते प्रयुज्यत इति व्युत्पत्तिमभिप्रेत्य यजुषेत्युक्तं। अङ्गुष्ठस्य क्रमेण कनिष्ठिकादिभिः सह चत्वारः पर्यायाः,समन्त्रके प्रयोगे कनिष्ठिकाव्यतिरिक्तया कयाचित् सह पञ्चमः पर्यायः, अमन्त्रके तु कनिष्ठिकयैव सह। तथा च सूत्रं ''यया प्रथमं न तया पञ्चमं तयैवोत्तमं'' इति। विराट्छन्दसोऽन्नप्रदत्वादन्नत्वं। समन्त्रकामन्त्रकयोः प्रयोगयोः पूर्वोत्तरभावसाम्येन भूतभविष्यद्वस्तुप्राप्तिः। कल्पः ''अथातिशिष्टं राजानं प्रजाभ्यस्त्वेत्युपसमूहति, समुच्चित्य वसनस्यान्तान् प्रदक्षिणमुष्णीषेणोपसन्नह्यति प्राणाय त्वेति, व्यानाय त्वेत्यनुश्रन्थयत्यथोपरिष्टादङ्गुलावकाशं शिष्ट्वा यजमानमीक्षयति, प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय त्वा प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्त्विति'' इति। हे सोम अशेषप्रजार्थं त्वां समूहामि प्राणार्थं त्वामुपनह्यामि व्यानार्थं त्वां विस्रंसयामि। प्राणतीः प्रजाः अनु त्वं प्राणि हि प्राणं तं त्वां अनु प्रजाः प्राणन्तु। अवशेषणे बाधं ब्रुवन् यथोक्तं समूहनादिकं विधत्ते ''यद्वैतावानेव सोमस्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्युपसमूहति सदस्यानेवाऽन्वाभजति वा

ससोपनह्यति सर्व्वदेवत्यं वै वासः सर्व्वाभिरेवैनं देवताभिः समर्धयति पशवो वै सोमः प्राणाय त्वेत्युपनह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनुशृन्थति व्यानमेव पशुषु दधाति तस्मात् स्वपन्तं प्राणा न जहति" (सं०६ का०१ प्र०८ अ०) इति। इयत्त्वोऽङ्गुलिभिर्मितात् सोमस्यानाधिक्ये सत्येतस्मिन् सदस्यवस्थितानामपि सोमो न स्यात् मन्त्रेण समूहने तु यजमानमनु सदस्यान् सोमं प्रापयति प्राणव्यानयोः पशुषु स्थापितत्वात् स्वापेऽपि नास्ति प्राणपरित्यागः। अत्र विनियोगसङ्ग्रहः।

"अंशुं सोमं मन्त्रयेताभित्यं क्रतुं मिमीत तां।
प्रजा समूह्य तच्छेषं प्राणाय त्वेति बध्यते॥
व्या विस्रस्य प्रजेचेत षण्मन्त्रा इह वर्णिता"। इति।

अस्मिन्ननुवाके सन्दिग्धार्थोदाहरणाभावात् नात्र विशेषेण किञ्चिदपि मीमांस्यते। सामान्यविचारास्तु पूर्व्वोक्ता यथायोगमनुसन्धेयाः। छन्दस्तु श्रुतावेवावतिछन्दसर्चेति स्पष्टमुदाहृतं।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः॥ ० ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्य्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्पत्ते गोरस्मे चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणाम्यस्मे ते बन्धुर्मयि ते रायः श्रयन्तामस्मे

ज्योतिः सोमविक्रयिणि तमो मित्रो न एहि सुमित्रधा इन्द्रस्योरुमाविश दक्षिणमुशन्नु शन्तः स्योनः स्योनः स्वानभ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान रक्षध्वं मा वो दभन् ॥ १ ॥

उरुं द्वाविंशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥

षष्ठेऽनुवाके क्रयाय सोमस्योन्मानमुक्तं। सप्तमे लब्धावसरः क्रयोऽभिधीयते। बोधायनः "अथैनं स हिरण्येन पणते, सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहं शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोरिति" इति। आपस्तम्बो मन्त्रभेदमाह "सोमविक्रयिणे राजानं प्रदाय पणते, सोमविक्रयिन्३ क्रय्यस्ते सोमा३ इति, क्रय्य इतीतरः प्रत्याह, सोमं ते क्रीणाम्यूर्जस्वन्तमित्युक्त्वा कलया ते क्रीणामीत्येवमाह भूयो वा अतःसोमो राजार्हतीति सर्व्वेषु पणनेषु सोमविक्रयी प्रत्याह, सम्पदो गवा ते क्रीणानीत्यन्ततः, शुक्रं ते शुक्रेण क्रीणामीति अपिला हिरण्येन क्रीणाति" इति। हे सोमविक्रयिन् अहं त्वदीयं सोमं क्रीणामि। कीदृशं। ऊर्जस्वन्तं शरीरबलप्रदं। पयस्वन्तं पञ्चभूतरसोपेतं* । वीर्य्यावन्तं इन्द्रि-

* प्रभूतरसोपेतं इति का०।

यपाटवहेतुं। अभिमातिषाहं पापरूपस्य वैरिणो हन्तारं। शुक्रचन्द्रामृतशब्दैरभिधेयास्तेजः सुखाऽविनाशाः। त्वदीय सोमे मदीय हिरण्ये च समाः, अतो हिरण्येन सोमं क्रीणामि। न केवलं हिरण्यं तुभ्यं दीयते किन्तु समीचीनं गोरेकहायनीस्वरूपमपि पूर्व्वं दत्तं तस्मात् तव हिरण्यलाभोऽधिकः। कल्पः "अस्मे चन्द्राणीति सोमविक्रयिणो हिरण्यमपादत्ते" इति। अस्मास्वेव हिरण्यानि चन्द्राणि तिष्ठन्तु बहुवचनं व्यत्ययेन द्रष्टव्यं। बोधायनः "अथैनं प्रतीचीनग्रीवयाऽजया पणते, तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि" इति। "अस्मे ते बन्धुः इति यजमानमीक्षते, मयि ते रायः श्रयन्तामित्यात्मानं" इति। आपस्तम्बस्त्वेकमन्त्रतामाह "तपसः तनूरसीति जपित्वाऽजया क्रीणामि" इति। हे अजे त्वं तपसः पुण्यस्य शरीरमसि। यज्ञनिष्पादकस्य सोमस्य द्युलोके त्वयैवावरुद्धत्वाद् वर्ण्यत इति वर्णो देहः। प्रजापतेर्वर्णोऽसि प्रजापतिवत् सर्वदेवात्मकत्वात्। तच्चोपानुवाक्यकाण्डे आम्नातं "सा वा एषा सर्वदेवत्या यदजा" इति। किञ्च त्वमपत्यपरम्परया सहस्रसङ्ख्यापूर्त्तिं पुष्णासि तादृश्याः तव सम्बन्धिना चरमेण सहस्रतमेन पशुना सोमं क्रीणानि न तु त्वया। अहं तव बन्धुः त्वत्सम्पादितस्य सोमस्य कर्म्मणि प्रवृत्तत्वान्मयि त्वदीयान्यपत्यरूपाणि धनान्यवतिष्ठन्तां। मन्त्रान् व्याचिख्यासुरादावनभिमतं निराकृत्य स्वाभिमतपणनमन्त्रमुत्पाद्य विनियुङ्क्ते "यत् कलया ते शफेन ते क्रीणानीति पणेता गोऽर्घं सोमं कुर्यादगो अर्घं

यजमानमगो अर्घमध्वर्युं गोस्तु महिमानं नावतिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गो अर्घमेव सोमं करोति गो अर्घं यजमानं गो अर्घमध्वर्युं न गोर्महिमानमवतिरति" (सं०६का०।१प्र०। १०अ०) इति। शफः तस्याष्टमावयवः कला कोऽप्यत्यवयवलेशः* कलया शफेन वा पणने दोषत्रयं स्यात्। सोमो गोरूपं मूल्यं मार्हति, यजमानस्तद्दातुं न शक्नोति, अध्वर्युश्च न दापयतीत्येवं सोमयजमानाध्वर्यवो गो अर्घरहिता इति दोषत्रयं। किञ्च सोमस्य गोमूल्य इत्युक्ते गोर्महिमाधिको भवेत्। अतः तं नावजानीयात्। परमते लघावज्ञातो भवेत्। गवा ते क्रीणामीत्यनेन मन्त्रेण सर्व्वं समाहितं भवति। यथेयं सोमक्रयणी गौस्तथैव अजादीनि नवद्रव्याणि क्रयसाधनानि क्रमेण विधत्ते "अजया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेवैनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान् वह्निनैव वह्निर्यज्ञस्य क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुध्यै वाससा क्रीणाति सर्व्वदेवत्यं वै वासः सर्व्वाभ्य एवैनं देवताभ्यः क्रीणाति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे" (सं०६का०।१प्र०। १०अ०) इति। तपसस्तनूरित्युक्तत्वात् अजया क्रीतस्य सोमस्य सतपस्त्वं। एवमुत्तरत्रापि योज्यं। साशिरं दध्यादि गोरसोपेतं। सेन्द्रं इन्द्रियवर्धकं। वह्निर्वाहकः यज्ञस्य वाह्निर्यज्ञनिर्वाहकं सोमं।

* कला अल्पादप्यल्पीयः कोऽप्यवयवलेशः इति का०।

मिथुनाभ्यां वत्सतरो वत्सतरी चेत्येताभ्यां मिथुनावयवाभ्यां धेनोः सवत्साया विवक्षितत्वात् दशद्रव्यसम्पत्तिः । मन्त्रत्रयं स्पष्टार्थत्व-बुद्ध्योपेक्ष्य चतुर्थमन्त्रस्याभिप्रायमाह "तपसस्तनूरसि प्रजापते-र्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्निह्नुत आत्मनोऽनाव्रस्काय" (सं०६का०।१प्र०।१०अ०) इति । तत्तेन मन्त्रपाठेन पशु-भ्योऽजाप्रभृतीन् निह्नुते अपलपति । न ह्यजा परमार्थतः तप-सस्तनूर्भवति नापि प्रजापतेर्वर्णरूपं तेनापलापेनाजोपचरिता भवति । स चोपचारः स्वस्यापराधराहित्याय क्रियते । पशू-पचारवेदनं प्रशंसति "गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद" (सं०६का०।१प्र०।१०अ०) इति । दत्तस्य हिरण्यस्य पुनरादानं विधित्सुर्हिरण्यप्रकाशकं द्वितीयमन्त्रं स्पष्टार्थमपि पुनरनुमन्त्रयते "शुक्रं ते शुक्रेण क्रीणामीत्याह यथा यजुरे-वैतत्" इति । पुनरादानं विधत्ते "देवा वै येन हिरण्येन सोममक्रीणन् तदभीषहा पुनराददत को हि तेजसा विक्रे-ष्यत इति येन हिरण्येन सोमं क्रीणीयात् तदभीषहा पुनरा-ददीत तेज एवात्मन्धत्ते" (सं०६का०।१प्र०।१०अ०) इति । अभीषहा बलात्कारेण । कोऽहीत्यादिर्देवताभिप्रायः । कल्पः "अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां काले दशापवित्रस्य नाभिं कुरुते" इति । अविलोमभिर्निर्मिता तन्तुरूर्णास्तुका सा च शुक्ला ज्योतिस्वरूपा तज्ज्योतिरस्मास्व-वतिष्ठतां । कल्पः "कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वा इदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य सोमविक्रयिण

विध्यति सोमविक्रयिणि तमः” इति। मन्त्रद्वयं व्याचष्टे “अस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति” (सं० ६का०।१प्र०।१०अ०) इति। विपक्षे बाधकपुरःसरं ग्रथनमन्त्रमुत्पादयति “यदनुपग्रथ्य हन्याद्दन्दशूकास्ताꣳ समाꣳ सर्पाः स्युरिदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्याहादन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति” (सं० ६का०।१प्र०।१०अ०) इति। कृष्णया विध्येत् तां समां तं संवत्सरं कृत्स्नं। इदमहमित्यादिमन्त्रेण सर्पदंशस्य परिहारः। कल्पः “कौत्सा-द्ब्राजानमादत्ते, मित्रो न एहि सुमित्रधा इति तं यजमानस्यो-रौ दक्षिणत आसादयति इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमिति”। शोभनं मित्रं सोमरूपं यस्य यजमानस्य स यजमानःसुमित्रः तं दधाति पोषयतीति सुमित्रधाः। हे सोम सुमित्रधाः त्वं अस्माकं मित्रं प्रियो भूत्वा समागच्छ। हे सोम इन्द्रस्य यजमानस्य दक्षिणं ऊरुमाविश। कीदृशं। उशन्तं काम-यमानं स्योनं सुखकरं त्वमपि तादृशः। कल्पः “अथ सोमक्र-यामनुदिशति। स्वानभ्राजाङ्घारे बंभारे हस्त सुहस्त कृशानवे ते वः सोम क्रयणास्तान् रक्षध्वं मावोदभन्निति”। स्वानादयः सोमरक्षकाः। सोमः क्रीयते यैर्गवादिभिस्ते सोमक्रयणाः। हे स्वानादयः तान् सोमक्रयणान् पालयत। केऽपि गोवैरिणो युष्मान् मा हिंसिषत। अतो मूल्यभूतान् सोमक्रयणाननुदिश्य पश्चात् सोमस्वीकारो युक्तः। ततोऽर्थक्रमेण मित्रो नः इन्द्रस्यो-

त्वमिति मन्त्रद्वयमुपरिष्टात् व्याख्यास्यते। इमन्तु मन्त्रं व्याचष्टे "स्थानभाजेत्याहैते वा अमुष्मिन् लोके सोममरक्षन् तेभ्योऽधि सोममाहरन्" (सं०६का०।१प्र०।१०अ०) इति। अधि अधिकं प्रभूतं। विपक्षस्वपक्षयोर्दोषतत्समवधाने दर्शयति "यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिन् लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेस्यामुष्मिन् लोके सोमꣳ रक्षन्ति" (सं०६का०।१प्र०।१०अ०) इति। सोमं सोमयागः फलं। अथ सोमस्वीकारस्य प्राप्तावमरत्वात् तं मन्त्रं व्याचष्टे "वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्यै" (सं०६का०।१प्र०।११अ०) इति। बन्धनस्य वरुणपाशरूपत्वात् तद्युक्तः सोमो वारुणः। अतो वरुणवत् क्रूरत्वप्राप्तौ तच्छान्तये मित्रत्वं प्रार्थ्यते*। ऊरुस्थानं पूर्वाचारप्राप्तमित्याह "इन्द्रस्योरुमाविश दक्षिणमित्याह देवा वै यꣳ सोममक्रीणन् तमिन्द्रस्योरौ दक्षिण आसादयन्नेष खलु वा एतर्हीन्द्रो यो यजयते तस्मादेवमाह" (सं०६का०।१प्र०।११अ०) इति। अत्र विनियोगसङ्ग्रहः।

"सोमं जपेत् क्रयात् पूर्वं शुक्रं पण्येत† तत्क्रये।
अस्मे स्वर्णमपादत्ते तव जय्यं क्रयोऽजया॥
अस्मे ज्योस्वामिने दद्याच्छुक्रामूर्णास्तु कामथ।
सोम विध्येत् कृष्णयोर्णास्तुकया क्रयकारिणं॥

---

* प्रतिपादयति इति का०।
† स्पर्शेन इति का०।

मित्रः सोममुपादाय इन्द्रोरावुपवेशयेत्।
स्वाममूल्याननुदिशेदिमे मन्त्रानवोदिताः" ॥ इति।

अथ मीमांसा। द्वादशाध्यायस्य चतुर्थपादे चिन्तितं।

"क्रयणेषु विकल्पः स्यात् साहित्यं वाऽग्रिमो यतः।
कार्यैक्यमानतेर्लाभाद्दशाक्तेस्तु समुच्चयः" ॥ इति।

अजया क्रीणाति हिरण्येन क्रीणाति वाससा क्रीणातीत्यादीनि बहूनि सोमक्रयसाधनानि द्रव्याण्याम्नातानि। तेषां कार्यैक्याद्विकल्प इति चेत्। मैवं। बहुभिर्द्रव्यैर्विक्रेतुरानीतेः सोलभ्याद्दशभिः क्रीणातीति सङ्ख्याक्तेस्तु समुच्चयः। अत्र सर्व्वाणि यजूंषि। नास्ति कश्चिच्छन्दो विशेषः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु। उर्वन्तरिक्षमन्विह्यदित्याः सदोस्यदित्याः सद आसीदास्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु ॥ १ ॥ क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रावुदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय

सूर्य्यं। उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्म चोदं-
नौ वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमसि
प्रत्यस्तो वरुणस्य पाशः ॥ २ ॥

हृत्सु पञ्चचिंशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपा-
ठके अष्टमोऽनुवाकः ॥

सप्तमेऽनुवाके सोमक्रयोऽभिहितः । अथ क्रीतं सोमं प्राचीनवंशं नेतुमष्टमे शकटारोपणं सोमस्योच्यते । कल्पः "अथैनमादायोपोत्तिष्ठति, उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु" इति। अहममृतान् देवाननु लब्ध्वायुरादिविशेषणविशिष्टेन सोमेन सह उदस्थां उत्तिष्ठामीति। चिरजीवनमायुः, अत्रापि रोगाद्युपद्रवरहितं स्वायुः, तदुभयप्रदत्वात् सोमस्य तदुभयरूपत्वं, ओषधीनां पर्जन्यस्य च सोमः सारः इतरौषधिवद्भूमिविशेषाज्जायमानत्वाद् वृष्ट्या वर्धमानत्वाच्च । चतुर्भिर्विशेषणैः पृथक्क्रियापदमन्वेतुं चत्वार उच्छब्दाः । अमृतशब्दानुशब्दयोरर्थमाह "उदायुषा स्वायुषेत्याह देवता एवान्वारभ्योत्तिष्ठति" (सं० ६का०।१प्र०।११अ०) इति । कल्पः "उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति" इति। उत्थापनमारभ्य पुनर्भूमौ स्थापनपर्यन्तं सोमोऽन्तरिक्षाधार इत्यभिप्रायं दर्शयति "उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो३ ह्येतर्हि सोमः" (सं० ६का०।१प्र०।११अ०) इति।

बोधायनः "तस्य नीडे* कृष्णाजिनमास्तृणाति, अदित्याः सदोऽस्यदित्याः सद आसीदेति कृष्णाजिने राजानमासाद्याथैनमुपतिष्ठते, अस्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत् तानि वरुणस्य व्रतानि" इति। आपस्तम्बो द्वितीयतृतीयमन्त्रावेकीचकार। हे कृष्णाजिन त्वं अदित्या भूमेः सदः स्थानमसि। हे सोम तस्याः सदः प्राप्नुहि। ऋषभः श्रेष्ठोऽयं सोमः यथा द्युलोको न पतति तथा स्तम्भनं सञ्चकार। अन्तरिक्षमेतावदित्यमिमीत पृथिव्याः परिमाणं गुरुत्वं विस्तारञ्चामिमीत। स सोमदेवः स्वमहिम्ना सम्यग्राजमानो विश्वानि भुवनान्यासीदत् व्याप्तवान् विश्वेत् तानि सर्व्वाण्येवोक्तानि कर्माणि सर्व्वात्मकत्वेन सर्व्वावरकत्वेन वरुणनाम्नो सोमस्य व्रतानि व्रतवन्नियतानि। प्रथमद्वितीयमन्त्रयोः स्पष्टार्थतां दर्शयति "अदित्याः सदोऽस्यदित्याः सद आसीदेत्याह यथा यजुरेवैतत्" (सं० ६का०।१प्र०।११अ०) इति। द्वितीयमन्त्रसाध्यं यदाऽऽसादनं तदेतत् तृतीयमन्त्रेणापि कर्त्तव्यमित्यमुमर्थं हेतूपन्यासपुरःसरं विधत्ते "वि वा एनमेतदर्धयति यद्वारुणꣳ सन्तं मैत्रं करोति वारुण्यर्चा सादयति स्वयैवैनं देवतया समर्धयति" (सं० ६का०।१प्र०।११अ०) इति। उपनद्धः सोमो वरुणो यद्विषये मित्रो न एहीति मन्त्रं पठन् मैत्रं करोतीति यदस्ति एतेनैनं सोमं व्यर्धयति समृद्धिहीनं करोति वारुण्यर्चा तु समर्धयति। कल्पः "अथैनं वाससा परितनोति,

---

* छिद्रे इति का०।

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो ऽघ्नियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्राविति” इति। विततानेति प्रतिवाक्यमन्वेति। वरुणनामकः सोमदेवो जगदीश्वरेणाभिन्नः सर्व्वं निर्ममे। किं किं। वनेषु वृक्षमध्येष्वन्तरिक्षं अवकाशं विततान अर्वत्सु वाजिषु वाजं वेगं गतिविशेषं पयो गोषु हृदयेषु चित्तेषु क्रतुं सङ्कल्पं विक्षु प्रजासु जठराग्निं द्युलोके सूर्यं पर्व्वते सोमवल्लीमदधात् अवस्थापयत्। अनेन मन्त्रेण कर्त्तव्यं विधत्ते “वाससा पर्यानह्यति सर्व्वदेवत्यं वै वासः सर्वाभिरेवैनं देवताभिः समर्धयत्यथो रक्षसामपहत्यै” इति। मन्त्रार्थो लोकप्रसिद्ध इत्याह “वनेषु व्यन्तरिक्षं ततानेत्याह वनेषु हि व्यन्तरिक्षं ततान वाजमर्वत्स्वित्याह वाजꣳ ह्यर्वत्सु पयो ऽघ्नियास्वित्याह पयो ह्यघ्नियासु हृत्सु क्रतुमित्याह हृत्सु हि क्रतुं वरुणो विक्ष्वग्निमित्याह वरुणो हि विक्ष्वग्निं दिवि सूर्यमित्याह दिवि हि सूर्यꣳ सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधाति यो यजते तस्मादेवमाह” (सं० ६का०।१प्र०।११अ०) इति। अद्रिशब्देनात्र पाषाणबहुलो गिरिर्विवक्षितः। पाषाणसन्धिषु सोमस्योत्पत्तेः यजमानस्तेषु पाषाणेषु सोमं प्राप्नोति। कल्पः “उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात् प्रत्यानह्यत्यूर्ध्वग्रीवं बहिष्टाद्विशसनं” इति। स च मन्त्र एवं पठ्यते “उदु त्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यं” इति। केतवो रश्मयः। त्यं तं परोक्षं जातवेदसं उत्पन्नस्य सर्व्वस्य जगतो वेत्तारं सूर्यं देव-

मुद्वहन्ति ऊर्ध्वप्रदेशं प्रापयन्ति। किमर्थं। विश्वाय दृशे सर्व्वस्य जगतो दर्शनार्थं। सौर्यमन्त्रेण रक्षांसि निवार्यन्त इत्याह "उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्यै" (सं०६का०।१प्र०।११अ०) इति। कल्पः "अथ उस्रावेतमिति युगपदनड्वाहावुपाज्य सोमवाहनावानीयमानौ प्रति मन्त्रयते, उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्म चोदनौ" इति। हे उस्रौ बलीवर्दावेतमागच्छतं। कीदृशौ। धूर्षाहौ भारं सहमानौ। अनश्रू अनसि शकटे श्रुतौ ख्यातौ। अवीरहणौ वीरं शकटस्थितं सोममबाधमानौ। ब्रह्म चोदनौ ब्रह्म अन्नं कृषिद्वारेणान्नप्रवर्त्तकौ। मन्त्रस्य स्पष्टार्थतामाह "उस्रावेतं धूर्षाहावित्याह यथा यजुरेवैतत् (सं०६का०। १प्र०।११अ०) इति। बोधायनः "तयोर्दक्षिणं पूर्व्वं युनक्ति वरुणस्य स्कम्भनमसीति, वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति प्रत्यस्तो वरुणस्य पाश इति योक्त्रं" इति। आपस्तम्बः "वरुणस्य स्कम्भनमसीति शम्यां प्रतिमोच्योस्रावेतं धूर्षाहावनश्रू इत्यनड्वाहावुपाज्य वारुणमसीति योक्त्रपाशं परिहृत्य प्रत्यस्तो वरुणस्य पाश इत्यभिधानीं प्रत्यस्यति" इति। शाखान्तरानुसारेण वारुणमसीत्युक्तं एतच्छाखानुसारेण "वरुणस्य स्कम्भसर्जनमसि" इति द्रष्टव्यं। युगच्छिद्रे प्रक्षेप्यः शङ्कुः शम्या। हे शम्ये त्वं वरुणस्य उक्ष्णो निवारणीयस्य बलीवर्दस्य स्कम्भनं निवारणं कुर्व्वत्यसि। गलबन्धसाधनं योक्त्रं। हे योक्त्र त्वमपि पलायनान्निवारणीयस्य शम्येव निवारणं सृजसि।

दीर्घरज्जुः पाशः स च प्रत्यस्तः शकटस्योपरि प्रसारितः। एते त्रयो मन्त्रा स्पष्टार्था इति ब्राह्मणेनोपेक्षिताः। अत्र विनियोगसङ्ग्रहः।

"उदायु सोममादायो*रु गच्छेच्छकटं प्रति।
अदि स्तृलाजिनं सोममदित्याः सेति संविशेत्* ॥
वने वस्त्रेण बध्वोदु प्रत्यानह्यति चर्मणि।
उस्रावनडुहोर्योगो वरु शम्यां विनिक्षिपेत् ॥
वरु बध्वा योक्त्रपाशं प्रतिधानीमुपास्यति।
अनुवाके ह्यष्टमेऽस्मिन् मन्त्रा एते दशोदिताः"॥ इति।

अत्र मीमांसा नास्ति। अथ छन्दः। उदायुषेत्यनुष्टुप्। उर्वित्येकपदा गायत्री। अस्तभ्नादिति वनेष्विति च त्रिष्टुभौ। उदुत्यमिति गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥ ८ ॥

**प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरादघच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतं यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगाम-**

---

* उत्थाय इति का०। * सादयेदिति का०।

नेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शꣳसत वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमस्युन्मुक्तो वरुणस्य पाशः ॥ १ ॥

मित्रस्य त्रयोविꣳशतिश्च ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥

अष्टमेऽनुवाके सोमस्य शकटारोपणं उक्तं। आरोपितस्य नवमे गमनमुच्यते। बोधायनः "सुब्रह्मण्यों३ इति त्रिरुक्तायां प्रच्यावयन्ति" प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरादघच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः सꣳस्कृतं" इति। प्रदक्षिणं राजानं परिवहन्त्यथैतावञ्जसोपसङ्क्रामतोऽध्वर्युर्यजमानश्च यजमामस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्ति गामनेहसं येनविश्वाः परिद्विषो वृणक्ति विन्दते वस्विति" इति। आपस्तम्बः उक्तमन्त्रद्वयं त्रेधा विभजति। प्रच्यवस्वभुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्त्तते श्येनो भूत्वा परापतेत्यध्वर्यू राजानमभिमन्त्रयते ऽपि पन्थामगस्महीत्यध्वर्युर्यजमानश्च दक्षिणेनोत्तरेण हि राजानमतिक्रा-

मतः'' इति। भूशब्देन भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीनि उपलक्ष्यन्ते। तेषां च भूतानां पालकत्वात् पतिः सोमः। हे भूतपते सोम विश्वानि धामानि प्राचीनवंशहविर्धानादिस्थानानि अभिलक्ष्य प्रकर्षेण च्यवस्व गच्छ। परिपरी मार्गे बाधकः तस्करप्रभुः स त्वां मा जानातु। परिपन्थिनस्तत्भृत्यास्तेऽपि त्वां मा जानन्तु। वृका अरण्यश्वानः अघं पापं वधरूपमिच्छन्तीत्यघायवः तेऽपि त्वां मा जानन्तु। विश्वावसुर्गन्धर्वः स्वर्गमार्गे सोमस्यापहर्ता सोऽपि त्वां मा दघत् मा प्रतीच्छतां। हे सोम त्वं श्येनवत् उत्पतनसमर्थो भूत्वा अस्मद्यजमानस्य गृहे प्राचीनवंशे परापत शीघ्रं गच्छ। देवसदृशैरध्वर्युप्रभृतिभिः तवोपवेशनाय आसन्दीरूपं स्थानं संस्कृतं स्वस्तिश्रेयोरूपो यज्ञः तस्य अयनं प्राप्तिः तदस्यास्तीति स्वस्त्ययनी यजमानस्य यज्ञप्रापकोऽसि। अपि च वयं पन्थानमनुष्ठानरूपमगन्महि प्राप्ताः। कीदृशीं। स्वस्तिगां श्रेयःप्राप्तिकरीं। अनेहसं नकारस्य व्यत्ययेन हकारः। अनेनसं पापरहितं। येन पथा जनः विश्वा द्विषः सर्वान् वैरिणः परिवृणक्ति सर्व्वतो वर्जयति। किञ्च येन पथा द्रव्यं लभते तादृशं पन्थानं प्राप्ताः। प्रथममन्त्रे यथोक्तमर्थं प्रसिद्धतया स्पष्टयति ''प्रच्यवस्व भुवस्पत इत्याह भूतानाᳪ᳭ ह्येष पतिर्विश्वान्यभिधामानीत्याह विश्वानिह्य३ एषोऽभिधामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् तस्मादेवमाह्यपरिमोषाय'' (सं०६का०।२प्र०।अ०११) इति। पूर्व्वं गन्धर्वेण

सोमस्यापहृतत्वादस्ति तस्करप्रसक्तिः तस्मान्मा त्वेत्यादि वक्तव्यं। द्वितीयमन्त्रे स्वस्त्ययनीशब्देन यज्ञप्राप्तिर्विवक्षितेत्याह "यजमानस्य स्वस्त्ययन्यसीत्याह यजमानस्यैवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (सं० ६का०।१प्र०।११अ०) इति। तृतीयमन्त्रो ब्राह्मणेन उपेक्षितः। कल्पः "अथाग्रेण शालां तिष्ठन्नूह्यमानं राजानं प्रति मन्त्रयते। नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत" इति। अस्मिन् मन्त्रे सूर्यरूपेण सोमः स्तूयते। मित्रस्य मित्राय नमः। कीदृशाय। वरुणस्य स्वरश्मिभिर्जगदावृणुते। पुनः कीदृशाय। चक्षसे सर्वज्ञाय। हे ऋत्विजो महते तस्मै देवाय देवप्रीत्यर्थं सपर्यत सपर्यां सेवां कुरुत। किं कृत्वा। तज्ज्योतिष्टोमरूपमृतं सत्यं अवश्यफलप्रदं कर्म कृत्वा। किञ्च सूर्याय शंसत सूर्यप्रीत्यर्थं स्तुतिं कुरुत। कीदृशाय सूर्याय। दूरे दृश्यमानाय देवत्वेन जाताय। केतवे अह्नोपलक्षणभूताय। द्युलोकस्य पुत्रवत्प्रियाय। अस्मिन् मन्त्रे वरुणशब्दाभिप्रायमाह "वरुणो वा एष यजमानमभ्येति यत् क्रीतः सोम उपनद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्यै" (सं० ६का०।प्र०।११अ०) इति। यः सोम उपनद्धः स वरुणरूपः सन् यजमानमभिलक्ष्य समागच्छति अतो वरुणनमस्कारेण तत्कृत उपद्रवः शाम्यति। यद्यप्यग्नीषोमीयस्य पशोर्नायमनुष्ठानकालस्तथापि प्रसङ्गात् तं पशुं विधित्सुः। प्रसङ्गं तावद्दर्शयति "आ सोमं वहन्त्यग्निना प्रतितिष्ठते तौ सम्भवन्तौ यजमानमभिसम्भवतः पुरा खलु वा वैष मे-

धायात्मानमारभ्य चरति यो दीक्षितः"(सं०६का०१प्र०।११अ०) इति। ऋत्विजः प्राचीनवंशगतस्याहवनीयस्याग्नेः समीपं प्रति सोममानयन्ति स च सोमोऽग्निना समेत्य प्रतिष्ठितो भवति। तौ चाऽग्नीषोमौ परस्परं यदा सङ्गच्छेते तदा यजमानमभिलक्ष्य सङ्गतौ भवतः। तदेतदवगत्य पुरा किल यो दीक्षितः स एष यज्ञार्थं स्वात्मानमेवालभ्य पशुत्वेनोपाकृत्य प्रचरति, सोऽयं प्रसङ्गः इदानीं। विधत्ते "यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य सः" (सं०६का०।१प्र०।११अ०) इति। अस्य यजमानस्य पश्वालम्भ आत्मनिष्क्रयणः। पशुं मूल्यत्वेनाग्नीषोमाभ्यां दत्वा तेन तयोः स्वभृतमात्मानं निष्क्रीणाति। अत्र हविः शेषभक्षणं पूर्व्वपक्षतया निषेधति "तस्मात् तस्य नाश्यं पुरुषनिष्क्रयण इव हि" (सं०६का०।१प्र०।११अ०) इति। यस्मादयं पशुः पुरुषस्य मूल्यमेव तस्मात् तस्य पशोः सम्बन्धि हविर्न भक्षणीयं तद्भक्षणे मूल्यनाशप्रसङ्गात्। सिद्धान्तमाह "अथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाश्यं" (सं०६का०।१प्र०।११अ०) इति। अथोशब्दः पूर्व्वपक्षव्यावृत्त्यर्थः। अभिज्ञास्त्वग्नीषोमार्थं इन्द्रो वृत्रं हतवानित्याहुः। अयन्तु वृत्तान्तो द्वितीयकाण्डस्य पञ्चमप्रपाठके त्वष्टा हतपुत्र इत्यनुवाके प्रपञ्चितः। यस्मादग्नीषोमार्थमिन्द्रो वृत्रं हतवान् तस्मादग्नीषोमीयपश्वालम्भो यः सोऽस्य यजमानस्य वैरिघाती। तस्मात् तदीयं हविर्भक्षणीयमेव। एवं प्रासङ्गिकं परिसमाप्य

प्रकृतमेव नमो मित्रस्येति मन्त्रं विनियुङ्क्ते "वारुण्यर्चा परिचरति स्वयैवैनं देवतया परिचरति" (सं० ६ का०।१प्र०।११अ०) इति। उपनद्धस्य सोमस्य वरुणो देवता। परिचरणं नमस्कारादुपचारः। ततो वारुणमन्त्रेण तदनुष्ठानं युक्तं। अथ प्राग्वंशे सोममासन्द्यां प्रतिष्ठाप्य तस्मिन् काले एवात्रन्दस्व वरुणं बृहन्तमित्येतया तत्त्वायामीत्यनया वा वारुण्यर्चोपस्थानरूपं परिचरणं कर्त्तव्यं। बोधायनः "अथैतत् सोमवाहनमग्रेण शालामुदगीषमुपस्थापयन्ति तदुपस्तभ्नाति वरुणस्य स्कम्भनमसीति वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्वृहात्युन्मुक्तो वरुणस्य पाश इति योक्त्रं" इति। आपस्तम्बस्तु शम्यायोक्त्राभिधानीनां क्रमेणोन्मोचनं मन्यते। अत्र विनियोगसङ्ग्रहः।

"प्रच्य प्राग्वंशगमनं श्येनोऽध्वर्य्युस्तु मन्त्रयेत्।
अप्यतिक्रम्य राजानं नम एनं प्रतीचते॥
वरुत्रयेण शम्यादीन् मुञ्चेत् सप्तात्र मन्त्रकाः"। इति।

अत्र नास्ति विशेषमीमांसा।

अथ छन्दः। प्रच्यवस्वेति षट्पदा अतिजगती। श्येनो भूत्वा अपि पन्थामित्येते अनुष्टुभौ। नमो मित्रस्येति जगती।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः॥०॥

अग्नेरातिथ्यमसि विष्णवे त्वा सोमस्यातिथ्यमसि विष्णवे त्वाऽतिथेरातिथ्यमसि विष्णवे त्वाऽग्नये त्वा

रायस्पोषदावन्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञं गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्य्यानदित्याः सदोऽस्यदित्याः सद आ॥१॥ सीद वरुणोऽसि धृतव्रतो वारुणमसि शंयोर्देवानाꣳ सख्यान्मा देवानामपसश्छित्स्मह्यापतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्कराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णाम्यनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेऽन्यमनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धाः ॥ २ ॥

आमैकञ्च ॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥

नवमेऽनुवाके सोमस्य प्राचीनवंशं प्रति गमनमुक्तं । दशमे तु समीपमागतस्यातिथिरूपस्य सोमस्य सत्कारायातिथ्येष्टिरुच्यते। कल्पः "आतिथ्यं निर्वपत्यन्वारब्धायां पत्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा, अग्नेरातिथ्यमसि विष्णवे

त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा, सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा, अतिथे-रातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा, अग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा निर्वपामीत्येता-मेव प्रतिपदं कृत्वा, श्येनाय त्वा सोमभृते विष्णवे त्वा जुष्टं नि-र्वपामि" इति। पाठस्तु "अग्नेरातिथ्यमसि विष्णवे त्वा सोम-स्यातिथ्यमसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा" इति। पञ्चकृत्वो यजुषेति प्रकृतिगते अग्नये जुष्टं निर्व-पामीत्येतस्मिन् मन्त्रे अतिदेशात् प्राप्ते सति तत्रत्यदेवतापदस्यै-वात्र पञ्चभिः पर्य्यायैरापादितत्वात् पञ्चमेऽपि सावित्रं जुष्टं चानुषज्यति। अत्र विष्णुरेक एव हविषो देवता अग्न्यादयस्तु तदनुचराः। अतति सततं गच्छतीत्यतिथिः तदर्थं क्रियमाणं सत्काररूपं कर्म्म आतिथ्यं। लोके स्वामिने दीयमानेन द्रव्येण तदनुचरा अपि परितुष्यन्ति तस्मादत्राग्न्यादीनां इदं हवि-र्भवत्यातिथ्यं। हे हविस्त्वमतिथिरूपस्याग्नेः सत्काररूपमसि ता-दृशं त्वां विष्णुशब्दाभिधेयाय सोमाय निर्वपामि। सोमस्येत्यत्र प्रधानभूतः सोमः न त्वपरः कश्चित् तन्नामा अनुचरः अतिथि-नामकोऽन्यः। रायस्पोषदावा धनसमृद्धेर्दाता कश्चिदग्निना-मकोऽन्यः। सोमं बिभर्त्ति पोषयतीति सोमभृत्। श्येननाम-कोऽन्यः।एतावुभावपि सोमस्य राज्ञोऽतिप्रत्यासन्नावनुचरावि-त्यभिप्रेत्य अग्नये त्वा श्येनाय त्वेति चतुर्थ्या त्वाशब्देन च प्रधा-

नसमतया निर्द्दिश्यते। मन्त्रान् व्याचिख्यासुरादौ कालवि-शेषसहितमातिथ्यं कर्म्म विधत्ते "यदुभौ विमुच्यातिथ्यं गृह्णी-याद्यज्ञं विच्छिन्द्याद्यदुभावविमुच्य यथाऽनागतायातिथ्यं क्रि-यते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै" (सं०६का०।२प्र०।१अ०) इति। द्वयोर्बलीवर्द्दयोर्विमुक्तयोः सतोः सोमगमनरूपं कर्म्म सर्व्वथा परित्यक्तं भवति, आतिथ्यकर्म्म तु उपक्रान्तं, ततो यज्ञमध्ये यज्ञो विच्छिद्येत। अविमुक्तयोर्द्वयोस्तु गमनस्यासम्पूर्णत्वादनाग-ताय सोमाय आतिथ्यं कृतं भवेत्। एकस्मिन् विमुक्ते च विमुक्त-त्वादेव गमनं सम्पूर्णं भवति इतरस्य विमोकाभावात् पूर्व्वक-र्म्मापि न त्यक्तं। अतस्तस्मिन् काले निर्वापाद्यज्ञः सन्ततो भ-वति। निर्वापकालेऽध्वर्य्युमनु पत्न्याः शकटस्पर्शं विधत्ते "पत्न्य-न्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैवानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्या-न्वारम्भोऽनवच्छित्त्यै" (सं०६का०।२प्र०।१अ०) इति। परिणत् गृहं तत्र भवं व्रीह्यादिद्रव्यं पारीणह्यं तस्येशाना पत्नी। किञ्च यज्ञः पुमान् पत्नी स्त्रीत्येतन्मिथुनं। किञ्च योऽयं पत्न्याः श-कटरूपस्य यज्ञाङ्गस्य स्पर्शः स यज्ञस्य विच्छेदराहित्याय भव-ति। मन्त्रान् व्याचष्टे "यावद्भिर्वै राजानुचरैरागच्छति सर्व्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽ-नुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्र्या एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैनं करोत्यतिथे-

रातिथ्यमसि विष्णवे त्वेत्याह जगत्या एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्र्या एवैतेन करोति" (सं० ६का०।२प्र०।१अ०) इति। सोमस्य भर्त्तृभिरग्न्यादिभिर्मन्त्यन्तराणि गायत्र्यादीन्युपलक्ष्यन्ते। उपलक्षकविशेषाणामग्न्यादीनामुपलक्ष्य विशेषैर्गायत्र्यादिभिः प्रातिस्विकसम्बन्धविशेषे प्रमाणमिदं ब्राह्मणमेव। निर्वापावृत्तिसङ्ख्यां विधत्ते "पञ्चकृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे" (सं०६का०।२प्र०।१अ०) इति। आद्यन्तयोर्मन्त्रयोर्गायत्र्या द्विरुपलक्षितत्वं प्रश्नोत्तराभ्यामुपपादयति "ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्र्या उभयत आतिथ्यस्य क्रियत इति यदेवादः सोममाहरत् तस्माद्गायत्र्या उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च" (सं०६का०।२प्र०।१अ०) इति। आतिथ्यं क्रियत इत्यर्थः। निरुप्तैस्तण्डुलैर्नवकपालः पुरोडाशः कार्य्यत इति। विधत्ते "शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतं" (सं०६का०। १प्र०।३अ०) इति। आतिथ्येष्टेः सत्काररूपत्वेन शिरोवदुत्तमाङ्गत्वं यस्मादत्र कपालेषु नवसङ्ख्या तस्माद् दृष्टान्तभूतं शिरोऽपि नवभिः कपालैः*र्विशेषेण स्यूतं पौरोडाशिकब्राह्मणेऽप्येवमाम्नातं। तस्मादष्टाकपालं पुरुषस्य शिर इति। ततोऽष्टानां

---

* प्रकारै इति चै०।

कपालानां परस्परमष्टधा स्यूतिः ततस्तत्समूहरूपस्य शिरसो ऽधस्तनेन कबन्धेन सहैकधा स्यूतिः। उक्तमेव विधिमनूद्य प्रशंसति "नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मितास्तेजस्त्रिवृत्तेज एव यज्ञस्य शीर्षं दधाति" (सं० ६का०।२प्र०।१अ०) इति। त्रिवृन्नामके स्तोमे त्रीणि सूक्तानि, तेष्वेकैकस्मिन् सूक्ते तिस्र ऋचः,अतः सङ्ख्यासाम्यान्नवकपालस्य त्रिवृद्रूपत्वं त्रिवृच्च प्रजापतेर्मुखादग्निना सह जातत्वात् तेजोरूपत्वं, तथा सति यज्ञशिरोरूप आतिथ्ये तेजः स्थापितं भवति। पुनरप्यनूद्य प्रशंसति "नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता प्राणेन सम्मितास्त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षं दधाति" (सं०६का०।२प्र०।१अ०) इति। त्रिभिः कपालैः संस्कृतः पुरोडाशस्त्रिकपालः तादृशाश्च पुरोडाशास्त्रयः नवसङ्ख्यायां विभज्यमानायां एवं सम्पद्यते। तथा सति यत्कपालगतं त्रिवृत्वं यच्च पुरोडाशगतं तेन सदृशी प्राणसङ्ख्या प्राणस्योर्द्धाधोमध्यवृत्तिभिस्त्रिगुणत्वात्। अथवा नवसु छिद्रेषु वर्त्तमानतया नवसङ्ख्याकः प्राणः, तस्य त्रेधाविभागे सति प्रकृतनवकपालसादृश्यं भवति, तादृशं प्राणमभिपूर्वं अनुक्रमेण यज्ञस्य शिरसि आतिथ्ये स्थापयति। अस्यामातिथ्येऽष्टौ प्रकृतिवत् प्रस्तरस्य विहितत्वाच्च कुशमयत्वे प्राप्ते तद्बाधितुं द्रव्यान्तरं विधत्ते "प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवीतिरश्ची प्रजापतेरेव तच्चक्षुः सम्भरति" (सं०६का०।२प्र०।१अ०) इति। पक्ष्माण्यक्षिरो-

माणि। आश्ववालाः काशाख्या दर्भविशेषाः। ऐक्षवा इक्षुपत्रिके तिरश्ची चक्षुषः चर्म्मपुटिके। यथा सोमपर्णस्य पलाशरूपेण वृक्षरूपेणोत्पत्तिः यथा चाप्सु मेध्यांशो दर्भरूपेणोत्पन्नः तथैव प्रजापतेः पक्ष्मणां चर्म्मपुटयोः काशरूपेण इक्षुपत्ररूपेण चाविर्भावो ऽर्थवादान्तरे द्रष्टव्यः। एवं सति प्रशस्तत्वादत्र प्रस्तराख्यस्तृणमुष्टिराश्ववालः कर्त्तव्यः। तस्याधस्तात् तिर्यक् आधारत्वेन स्थापनीये विधृती ऐक्षव्यौ कुर्य्यात् तावता प्रजापतेः तच्चक्षुः सम्पादितं भवति। परिधिषु श्रीपर्णवृक्षं विधत्ते "देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन् ते देवाः कार्ष्मर्य्यमपश्यन् कर्म्मण्यो वै कर्म्मैनेन कुर्व्वीतेति ते कार्ष्मर्य्यमयान् परिधी अकुर्व्वत तैर्वै ते रक्षाᳬंस्यपाघ्नत यत् कार्ष्मर्य्य मयाः परिधयो भवन्ति रक्षसामपहत्यै" (सं०६का०।२प्र०।१अ०) इति। निष्कावं निःशब्दं। सर्व्वणादिशब्देन देवा ज्ञास्यन्ति इति मत्वा चौर्य्येण अभक्षयन् कार्ष्मर्य्यवृक्षो रक्षो निवारकत्वेन कर्म्मण्यः। तस्मात् तेनैव कर्म्म कुर्व्वीतेति मत्वा तन्मयान् परिधीन् अकुर्व्वत। तथैवान्येनापि कर्त्तव्यं। मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां सह संस्पर्शं विधत्ते "सᳬंस्पर्शयति रक्षसामनन्ववचाराय" (सं० ६का०।२प्र०।१अ०) इति। स्पर्शाभावे परिध्याः सन्धौ रक्षसामन्तरानुप्रवेशस्यात्। पूर्व्वस्यां दिशि रक्षः प्रवेशनिवारणाय प्रसक्तं चतुर्थपरिधिं निषेधति "न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाᳬंस्यपहन्ति" (सं०६का०।२प्र०।१अ०) इति। आघारसमिधोर्द्वयोराहवनीयात् पूर्व्वभागे स्थापनं विधत्ते

"ऊर्द्ध्वे समिधावादधात्युपरिष्टादेव रक्षाᳫंस्यपहन्ति" (सं० ६का०।२प्र०।१अ०) इति। यद्यप्यूर्द्ध्वायां दिशि रक्षसां निवारणायोपरिष्टादेव समिधौ स्थापनीये तथापि व्योम्नि स्थापयितुमशक्यत्वादूर्द्ध्वदिग्बुध्या दूरे स्थापनीये। तत्र कञ्चिद्विशेषं विधत्ते "यजुषान्यां तूष्णीमन्यां मिथुनत्वाय" (सं०६का०।२प्र०। १अ०) इति। वीतिहोत्रं त्वा कव इति मन्त्रेण दक्षिणामादध्यात्, तूष्णीमुत्तरां, समन्त्रकामन्त्रकयोः स्त्रीपुरुषवद्विलक्षणत्वान्मिथुनत्वं। समित्सङ्ख्यां विधत्ते "द्वे आदधाति द्विपाद्यजमानः प्रतिष्ठित्यै" (सं०६क०।२प्र०।१अ०) इति। द्वित्वं पादद्वयप्रतिष्ठायै भवति। ननु संस्पर्शादिविधयः प्रकृतौ दर्शपूर्णमासेष्टावपि सन्तीत्यतिदेशादेव तदनुष्ठानस्यात्र प्राप्तत्वान्न पृथग्विध्यन्तरापेक्षेति चेत्। न। उपसदर्थं विधेयत्वात्। तर्हि तत्रैव विधीयतामिति चेत्।न। आतिथ्योपसदोः परिध्यादिभेदं वारयितुं साधारणत्वेनात्रैव विधेयत्वात्।बोधायनः "अथ यजमानो नीडाद्राजानमपादत्ते, या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति पूर्व्वया द्वारा शालां प्रपादयति। गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्य्यान्" इति। आपस्तम्बो मन्त्रैक्यं मन्यते "या ते धामानीति पूर्व्वया द्वारा प्राग्वंशं प्रविश्य" इति। हे सोम या ते धामानि त्वदीयेषु येषु स्थानेषु प्रातःसवनादिषु हविषा यजन्ति यज्ञमुद्दिश्य ता ते विश्वा त्वदीयानि यानि सर्व्वाणि परिभूरस्तु परितः प्राप्तवान् भव। हे सोम त्वं दुर्य्यान् गृहान् प्राचीनवंशरूपान्

प्रचर प्राप्नुहि। कीदृशस्त्वं। गयस्फानो गृहाभिवर्द्धकः। प्रतरणो यज्ञपारं प्रति प्रकर्षेणास्मान् तारयिता। सुवीरः शोभनाः त्वत्प्रसादल्लब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः। अवीरहा यथोक्तानां वीराणां अहन्ता परिपालक इत्यर्थः। कल्पः "अथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधाति, तस्यां कृष्णाजिनमास्तृणाति, अदित्याः सदोऽस्यदित्याः सद आसीदेति कृष्णाजिने राजानं" इति। बोधायनः "अथैनमुपतिष्ठते, वरुणोऽसि धृतव्रतो वारुणमसीति समुच्चित्य कृष्णाजिनं तस्यां तान् स्यन्द्यया विग्रथ्य पाशेषु* ग्रथ्नाति, शंयोर्देवानाꣳ सख्यादित्यथ परावासन्दीपादावन्तरेण ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छित्स्महि" इति। आपस्तम्बोऽत्र प्रथममन्त्रोत्तरार्धस्य द्वितीयतृतीयमन्त्रयोश्चैकतां मन्यते "वरुणोऽसि धृतव्रत इति राजानमभि मन्त्रयते, वारुणमसीति वाससा पर्य्यानह्यति" इति। हे सोम त्वं वरुणपाशस्य निवारकोऽसि। धृतं यज्ञरूपं व्रतं येन त्वया स त्वं धृतव्रतः। हे सोम त्वमुपनद्धस्वरूपत्वाद्वरुणसम्बन्ध्यसि तथा सति त्वदीयाच्छंयोः सुखमिश्राद्वरुणादिदेवतानां सख्यात् वयं सापसो मा च्छित्स्महि। सकारान्तोऽपसशब्दः कर्म्मवाची। अस्माकं कर्म्मविच्छेदो मा भूदित्यर्थः। या ते धामानीत्यादयो मन्त्रा ब्राह्मणेनोपेक्षिताः। आतिथ्येष्टिमध्ये वह्निमथनपूर्व्वकमाहवनीये मथि-

---

* वंशे इति का०।

ताग्निप्रक्षेपं विधत्ते "ब्रह्मवादिनो वदन्त्यग्निश्च वा एतौ सोमश्च कथा सोमायातिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियतेऽथो खल्वाहुः" (सं०६का०।२प्र०।१अ०)इति। अग्निश्च सोमश्चेत्येतावुभावपि यागनिर्वाहकौ देवौ तयोः साम्ये सति कथमग्नय आतिथ्यं नेति प्रश्नः। अग्निं मथित्वा हवनीये प्रहरेत् तदिदमाहवनीयाग्नेरातिथ्यं। मन्थनस्य कालं विधत्ते "अथो खल्वाहुरग्निः सर्व्वा देवता इति यद्धविरासाद्याग्निं मन्थति हव्यायैवासन्नाय सर्व्वा देवता जनयति" (सं०६का०।२प्र०।१अ०) इति। अपि चैते ब्रह्मवादिनः कालविवक्षावन्तः तदुपोद्घातत्वेन वह्नेः सर्व्वात्मकत्वमाहुः। तच्च सर्व्वदेवतात्मकत्वं एकचितितानामुत्पत्तौ विस्पष्टमाम्नातं। यदा आतिथ्यपुरोडाशं वेद्यामासाद्यते तस्मिन् काले अग्निं मथ्नीयात् तदा मथ्यमानाग्नावन्तर्भूताः सर्व्वा अपि देवता आसन्नहविर्भोक्तुमुत्पादिता भवन्ति तस्मात् स एव काल इत्यर्थः। मथनमन्त्रास्त्वाध्वर्य्यवा अग्नीषोमीयपशुप्रस्तावे समाम्नास्यन्ते। हौत्रास्तु बह्वृचब्राह्मणे आतिथ्येष्टिसमीप एवोदाहृताः। कल्पः "अथैतद्ध्रौवमाज्यमाप्याय्य कंसं वा चमसं वा याचति तमन्तर्वेदि निधाय तस्मिन्नेतत् तानूनप्त्रं समवद्य विगृह्णाति, आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामि" इति। आपतिः निश्वासरूपेण वहिर्गतं पुनर्वायुमुखेनान्तःपततीत्यापतिः प्राणः। हे आज्य प्राणार्थं त्वां अस्मिन् पात्रे गृह्णामि। परिता नाना-

*विषयेषु पततीति परिपतिर्मनः। तनूं शरीरं न पातयति न* विनाशयतीति तनूनप्त्रा जाठराग्निः। शकनशीलः शक्करः शक्तिमान् पुरुषः तस्य सम्बन्धिशाक्करं शक्तिस्वरूपं। शक्मन् शक्तिमत्सु यदोजिष्ठं तस्मै ओजोनामाष्टमो धातुः तस्य सारमोजिष्ठं तदवष्टम्भेनैव शक्तिरवतिष्ठते एतैर्मन्त्रैस्तानूनप्त्रं ग्राह्यं तानूनप्त्रसञ्ज्ञकजाठरवह्निविषयस्य शपथकर्म्मणो हेतुभूतमाज्यं तानूनप्त्रं तस्य ग्रहणं विधातुं प्रस्तौति "देवाः सुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् ते३ एन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्ते मन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रिया स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यो न प्रथमो ३ ओन्योऽन्यस्मै द्रुह्यादिति तस्माद्यः स तानूनप्त्रिणां प्रथमो द्रुह्यति स आर्त्तिमार्च्छति" (सं०६का०।२प्र०।२अ०) इति। संयत्ताः सङ्ग्रामं प्राप्ताः। मिथः परस्परं। ते च देवाः सर्व्वेऽपि स्वातिरिक्तस्य ज्यैष्ठ्यमनङ्गीकुर्व्वाणाः पञ्चव्यूहा अभवन्। तेषु व्यूहेष्वग्न्यादयः पञ्चदेवताः सेनान्यः वस्वादयः पञ्चगणाः सेनाः। ते कञ्चित् कालं परस्परविरोधिनो भूत्वा पश्चादेवं विचारितवन्तः यदि वयमन्योन्यविरोधिनस्तदा वैरिणामसुराणां इदं जयरूपं कार्य्यं वयमेव साधयामः। ततस्तद्विरोधपरिहारहेतुं शपथं कर्त्तुं अस्मदीयाः प्रियाः पुत्रभार्य्यादिरूपा इमाः तनूरेकत्र सङ्गीकुर्म्म इति विचार्य्य सङ्गीकृत्य शपथमेवं परिभाषितवन्तः, अस्माकं मध्ये यः प्रथमं

द्रुह्यति सः ताभ्यस्तनूभ्यो निर्गच्छतु भ्रष्टो भवत्विति। यस्माद्देवानामेवं वृत्तं तस्मान्मनुष्याणामपि शपथं कृतवतां मध्ये यः प्रथमं द्रुह्यति स विनाशं प्राप्नोति। समाने एकस्मिन् विषये तानूनप्त्रिणः शपथवन्तः स तानूनप्त्रिणः। इदानीं विधत्ते "यत् तानूनप्त्रꣳसमवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवति" (सं०६का०।२प्र०।२अ०) इति। समवद्यति सम्भूयावदानं कुर्य्यात्। स्वयं भूतिमान् भवति वैरी तु पराभवति। इयमेव भ्रातृव्याभिभूतिः। अवदाने सङ्ख्यां विधत्ते "पञ्चकृत्वोऽवद्यति पञ्चधा हि ते तत्समवाद्यन्तायो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे" (सं०६का०।२प्र०।२अ०) इति। ते देवाः तत् तदानीं पञ्चधा विभक्ताः पश्चात् सम्भूयैकवत् प्रियतनूरवाद्य स्थापितवन्तः। मन्त्रान् व्याचष्टे "आपतये त्वा गृह्णामीत्याह प्राणो वा आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवाद्यन्त शाक्वरायेत्याह शक्ती हि ते ताः समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते तदात्मनः समवाद्यन्त" (सं०६का०।२प्र०।२अ०) इति। आपति परिपति तनूनप्तृशाक्वरशक्मन्नोजिष्ठशब्दैर्देववृत्तान्तः सूच्यते। तनूशाक्वरौजिष्ठशब्दैरेव वृत्तान्तः सूच्यते। ते देवास्तदानीं स्वात्मसम्बन्धं पुत्रादितनूरूपमोजःसारं समवद्यन्त। कल्पः "सयावन्त ऋत्विजः त एतत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं देवानां ओजोऽभिशस्तिपा अनभिशस्तेऽन्यं" इति। हे तानूनप्त्राज्य त्वं इतः पूर्व्वं

केनाप्यतिरस्कृतमसि। इतः परमप्यतिरस्कृतं देवानामोजःसार-मसि। अभिशस्तेर्हिंसारूपादन्योन्यविरोधादस्मान् पालयसि। त्वं पुनरभिशस्तेरविषयमसि। मन्त्रस्य यथोक्तार्थः प्रसिद्ध इत्याह "अनाधृष्टमस्यनाधृष्टमित्याहानाधृष्टꣳ ह्येतदनाधृष्यं देवाना-मोज इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेऽन्य-मित्याहाभिशस्तिपा ह्येतदनभिशस्तेऽन्यं" (सं०६का०।२प्र०। २अ०) इति। कल्पः "यजमानमति वाचयति, अनु मे दीक्षां दीक्षा-पतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धा इति" इति। दीक्षणीयेष्टौ यो देवः स दीक्षापतिः। ममेमां दीक्षामनुजानातु। तप उपसत् तत्रत्यो देवस्तपस्पतिः। मदीयं तपोऽनुजानातु। अहञ्चाञ्जसा सत्यमुपगेषं आर्जवेन तानून-प्त्रस्पर्शनरूपं शपथं प्राप्तोऽस्मि। हे तानूनप्त्र सुविते शोभन-मार्गे यज्ञकर्मणि मां स्थापय। मन्त्रस्य स्पष्टार्थतामाह "अनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतत्" (सं० ६का०।२प्र०।२अ०) इति। अत्र विनियोगसङ्ग्रहः।

"अग्नेःपञ्चकनिर्वापो या ते प्राग्वंशवेशनं।
अद्यामन्वां क्षिपेच्चर्म ह्यदि सोमं तु सादयेत्॥
वरु तं मन्त्रयेद्दारु वाससा परिणह्यति।
आप तानूनप्त्रमाज्यं समवद्यति पञ्चभिः॥
अना सर्व्वे ऋत्विजस्तु तानूनप्त्रं स्पृशन्ति हि।
अनु स्वामी स्पृशेदेतत् इति सप्तदशेरिताः"॥ इति।

अथ मीमांसा। सप्तमाध्यायस्य तृतीयपादे चिन्तितं।

"वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत्॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः"॥ इति।

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः। तत्र श्रुत्या वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले प्रयुज्यमानोऽग्निहोत्रवन्नवकपालधर्मानतिदिशतीति पूर्व्वः पक्षः। विष्णुर्देवतास्येति विग्रहे सति विहितस्तद्धितप्रत्ययो देवतामभिधत्ते न तु धर्मान् तस्मान्नातिदिशति। चतुर्थाध्यायस्य द्वितीयपादे चिन्तितं।

"यदातिथ्या बर्हिरेतदुपसत्स्वतिदेशनं।
साधारणविधिर्वाद्यः तदीयस्योपसंहृतेः॥
बर्हिः श्रुत्यैकताभानान्नातिदेशस्य लक्षणा।
आतिथ्योपसदोश्च बर्हिरेतत्प्रयुज्यत"॥ इति।

ज्योतिष्टोमे श्रूयते यदातिथ्यं बर्हिस्तदुपसदां तदग्नीषोमीयस्य चेति क्रीतं सोमं शकटे संस्थाप्य प्राचीनवंशं प्रत्यानीयनेऽभिमुखे यामिष्टिं निर्वपति सेयमातिथ्या। तत ऊर्द्धं त्रिषु दिनेषु अनुष्ठीयमाना उपसद औपवसथ्ये दिनेऽनुष्टेयोऽग्नीषोमीयः। तत्रातिथ्येष्टौ विहितं यद्बर्हिस्तद्यदीतरस्या इष्टेराच्छिद्योपसत्सु विधीयते तदानीमातिथ्यायां विधानमनर्थकं स्यात्। यदि च तत्रोपयुक्तं इतरत्र विधीयेत विनियुक्तविनियोगरूपो विरोधः स्यात्, तस्मादातिथ्यबर्हिषो ये धर्मा आ-

अवालादयः ते धर्मा उपसत्सूपक्रियन्त इति अतिदेशपरं वाक्यं इति प्राप्ते ब्रूमः। बर्हिःशब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत। श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेषु एकत्वं प्रतिभाति अतः साधारण्यमत्र विधेयं। आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थं किन्तूपसदर्थमग्नीषोमीयार्थञ्चोपादेयमिति विधिवाक्यार्थः। तस्मादातिथ्योपसदग्नीषोमीयास्त्रयोऽपि अस्य बर्हिषः प्रयोजकाः। एवं परिधिसन्धिस्पर्शादिविधीनां साधारण्यं द्रष्टव्यं।

अथ छन्दः। या ते धामानीति त्रिष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥ ० ॥

अꣳशुरꣳशुस्ते देव सोमाप्यायतामिन्द्रायैकधनविद् आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि॥ १ ॥

या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा या ते अग्ने याशया रजाशया हराशया तनूर्व-

# शुद्धिपत्रं ।

| अशुद्धं | शुद्धं | पृष्ठा | पङ्क्ति |
|---|---|---|---|
| लोमा | लोम | २९८ | २० |
| चात्वायं | चात्वालं | ३०३ | १४ |
| उत्पाय | उत्पादय | ३०५ | १९ |
| गुंते सन्न | गुंतेऽसं न | ३०६ | ९ |
| मभिष्टय | मभिष्टये | ३०९ | १२ |
| तनोऽवन्तु | तेनोऽवन्तु | ३०९ | १४ |
| रायस्पोषण | रायस्पोषेण | ३१०।३१७ | ११।१३ |
| मच्छ्छीन्द्राय | मच्छेछीन्द्राय | ३२० | ११ |
| न्यवर्तन | न्यवर्त्तत | ३२६ | ३ |
| निष्पन्नं | निष्पन्नं | ३२७ | ९ |
| सोमाहर्यां | सोमाहरणां | ३२८ | १४ |
| कुष्टा | कुष्ठा | ३२९ | १९ |
| मुद्धत्य | मुद्धृत्य | ३३६ | १८ |
| नवा | नव | ३३६ | २१ |
| वस्नादि | वस्त्रादि | ३३९ | ४ |
| वस्नाद्य | वस्त्राद्य | ३३९ | ६ |
| स्तान | स्तान् | ३५४ | ४ |
| वत | वत् | ३५५ | १४ |
| वन्धुः | बन्धुः | ३५५ | १८ |
| कोऽही | कोही | ३५७ | १७ |
| स्योनमिति | स्योनं" इति | ३५८ | १२ |
| प्रथम | द्वितीय | ३६० | १२ |
| पोतिष्ठति | पोत्तिष्ठति | ३६१ | ११ |
| सऽंस्कृतं | सऽंस्कृतं | ३६६ | १४ |
| प्रध्वंवस्य | प्रध्वंवस | ३६६ | ११ |
| सामा | सोमा | ३८४ | १२ |
| [illegible] | [illegible] | [illegible] | [illegible] |

र्पिष्ठा गह्वरेष्ठोऽग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा ॥ २ ॥

त्वयि चत्वारिꣳशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥

दशमेऽनुवाके आतिथ्येष्टिरुक्ता। तन्मध्ये सोमः प्राग्वंशे स्थापितः तेन सोमेन करिष्यमाणस्य यागस्य विघ्नकारिणो ऽसुराः प्रथमं जेतव्या इति। तद्विजयार्थमुपसद एकादशे वर्ण्यन्ते। तत्रादौ तावदतिथेः सोमस्य बन्धनोपद्रवपरिहारेणाप्यायनाद्युपचाराः क्रियन्ते। बोधायनः "अथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययति, अꣳशुरꣳशुस्ते देव सोमाऽऽप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति यजमानमभिवाचयति। आप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेति" इति। आपस्तम्बस्य तु एक एव मन्त्रः। मदन्तीस्तप्ता आपः। अंशुः सूक्ष्मोऽवयवः। हे सोम देव ते योऽंशुः शुष्यति यश्चांशुः चीयते यजमानेन सर्वोऽप्यंशुर्वर्द्धतां। किमर्थं इन्द्रार्थं। कीदृशाय इन्द्राय। एकं मुख्यं शोभनं सोमरूपं धनं वेत्ति इत्येकधनवित् तस्मै। हे सोम तुभ्यं त्वदर्थं इन्द्र आप्यायतां। त्वां पातुमुत्सहतां त्वमपीन्द्रार्थं आप्यायस्व वर्द्धस्व। सखीन् ऋत्विजः सन्या धनलाभेन मेधया प्रज्ञया च वर्द्धस्व। हे सोम देव ते स्वस्ति

शुभमस्तु त्वत्प्रसादेनाहं सुत्याभिषवतन्त्रमशीय प्राप्नुवानि। एतन्मन्त्रं व्याख्यातुं प्रस्तौति "घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यै तच्चरन्ति यत् तानूनप्त्रेण प्रचरन्ति" (सं०६का०।२प्र०।२अ०) इति। पुरा कदाचित् स्वसामर्थ्यात् वज्रीकृतेन घृतेन सोमस्य देवैस्ताडितत्वात् सोमो घृताद्बिभेति। ऋत्विजश्च वेद्यां तानूनप्त्रेण आज्येन प्रचरन्तीति यत् तदस्य सोमस्य अन्तिकं यथाचरन्ति आहवनीयदक्षिणभागे सोमस्य स्थितत्वादतो भीतः सोम आप्यायितव्यः। आप्यायनस्य प्रसङ्गं दर्शयित्वा तन्मन्त्रं व्याचष्टे "अ॒ꣳशुर॑ꣳशुस्ते देव सोमाप्यायतामित्याह यदेवास्याऽपुवायते यन्मीयते तदेवास्यैतेनाप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेत्याहोभावेवेन्द्रञ्च सोमञ्चाप्याययत्याप्याय्य सखीन् सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाप्याययति स्वस्ति ते देव सोम सुत्यामशीय इत्याहाशिषमेवैतामाशास्ते" (सं०६का०।२प्र०।२अ०) इति। अस्य सोमस्य यदङ्गमपुवायते शुष्यति यच्च मीयते। कल्पः "न प्रस्तरायाश्रावयति न बर्हिरनुप्रहरति तं दक्षिणार्धे वेद्यै निधाय तस्मिन् दक्षिणोत्तरेण निह्नुवते एष्टा रायः प्रेषे भगायर्त्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै" इति। आतिथ्येष्टौ यः प्रस्तरः यच्च तत्रत्यं बर्हिस्तदुभयमग्नौ न प्रहरणीयं, किन्तु प्रस्तरं वेद्या दक्षिणार्द्धे निधाय तस्मिन् प्रस्तरे दक्षिणपाणीनुत्तानान् कृत्वा सव्यान्नीचः कृत्वा सर्व्वेऽपि निह्नवमपलापसदृशं नमस्कारोपचारं कुर्य्युः। मन्त्रार्थस्तु एष शब्द

इच्छावन्तं द्यावापृथिव्यभिमानिनं देवमाचष्टे, स हि दयालुतया भक्तेषु पुरुषेषु इच्छावान्। हे तादृग्देव त्वं ऋतावादिभ्यो यज्ञवादिभ्योऽस्मभ्यस्तं यज्ञं प्रकृष्टं देहीत्यध्याहारः। किमर्थं। रायो राये धनार्थं, इषे अन्नार्थं, भगाय ऐश्वर्य्यादिषड्गुणार्थं, ते च गुणा एवं स्मर्य्यन्ते।

"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा"॥ इति।

वयं पुनर्द्युदेवतायै भूदेवतायै च नमस्कुर्म्मः। नायमकाण्डे नमस्कारः किन्तु तस्य निमित्तमस्तीत्याह "प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममाप्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिन् लोके प्रतितिष्ठन्ति"(सं०६का०।२प्र०।२अ०)इति। आप्यायितस्य सोमस्य नाभिदघ्यामासन्द्यां पर्य्यवस्थितत्वादन्तरिक्षदेवत्यत्वं तादृशस्य सोमस्याप्याययितारोऽपि तयाविधा इत्यस्माल्लोकात् प्रच्युता अतोऽस्मिन् लोके प्रतिष्ठित्यै नमस्कारः क्रियते। कल्पः "अथ यजमानमवान्तरदीक्षामुपनयति, अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियं सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि"इति अनेन मन्त्रेणाहवनीयोपस्थानं। अत्र अवान्तरदीक्षोपक्रमः। हे अग्ने व्रतपते त्वं व्रतपतिरसि नैकस्य व्रतस्य* पतिः किन्तु सर्व्वेषामिति

* धर्म्मस्य इति का०।

विवक्षां द्योतयितुं व्रतानामित्युक्तं। व्रतमाचरन्ती मदीया तनू-स्त्वयि मनसा समर्पिता, त्वदीया तु व्रतं पालयन्ती तनूर्मयि म-नसा स्थापिता, तथा सत्यावामुभावपि प्रति नौ सम्पद्यावहै तयो-र्व्रतानि सह प्रवर्त्तन्तां। कल्पः "अथैनं सꣳशास्ति सन्तरां मेखलाꣳ समायच्छस्व सन्तरां मुष्टीकुरुष्व तप्तव्रतो एधि म-दन्तीभिर्मार्जय स्वोत्पूर्व्वं तद्व्रतं संसृज। या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनैवात ऊर्द्ध्वं *व्रतयति" इति। या मेखला पूर्व्वं सध्यसन्नद्धा सा सङ्कुचिततरा यथा भवति तथा नियन्तव्या। ये च मुष्टीकृते ते अप्यतिसङ्कोचेन दृढीकर्त्तव्ये उष्णक्षीरो भवेदुष्णोदकेन मार्जयेत्* पूर्व्वं व्रतं म-न्त्रमुत्सृजेत् तत्र याते अग्न इत्ययं मन्त्रः। अनेनैव मन्त्रेणात ऊर्ध्वं व्रतं पिबेत्। हे अग्ने या तव तनूस्त्वयि रुद्रिया क्रूरा तयाऽस्मान् पालय त्वदीयायास्तस्यास्तन्वा इदं हुतमस्तु। अग्ने व्रतपत इति मन्त्रस्य स्पष्टार्थतामभिप्रेत्यावान्तरदीक्षारम्भं विधत्ते "देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्रा-विशन् तस्मादाहुरग्निः सर्व्वा देवता इति तेऽग्निमेव वरूथं कृत्वासुरानभ्यभवन्नग्निमिव खलु वा एष प्रविशति योऽवान्त-रदीक्षामुपैति भ्रातृव्याभिभूत्यै भवत्यात्मनापरास्य भ्रातृव्यो भवति" (सं०६का०।२प्र०।२अ०) इति। परकायप्रवेशहेतुना योगशास्त्रप्रसिद्धेन संयमविशेषेण देवा अग्निशरीरं प्राविशन् त-

---

* एते नैवातोऽधि इति का०। * उष्णोदको भवेत् इति का०।

पोरूपत्वेनाग्निसमाना अवान्तरदीक्षा ततस्तामुपेयात्। पूर्व्वोक्तां दीक्षां इदानीमुच्यमानामवान्तरदीक्षाञ्च प्रशंसति "आत्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया" (सं०६का०।२प्र०।२अ०) इति। अवान्तरदीक्षानियमान् विधत्ते "सन्तरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिध्यै" (सं० ६का०।२प्र०।२अ०) इति। सर्व्वोऽपि जनः स्वात्मानं क्लेशयित्वा अपत्यानि सम्यक्परिपालयति, अतः स्वस्मादपि प्रजाया अभ्यन्तरतमत्वं मेखलायास्तु प्रजास्थानीयत्वेनान्तरतरत्वात् संश्लिष्टतरं यथा भवति तथा समाच्छादयेत्। शीतेन क्षीरेण शीताभिरद्भिश्चाग्निर्निर्वापयति तस्मादुदराग्निसमिन्धनाय पेयस्य क्षीरस्य मार्जनहेतोरुदकस्य चौष्ण्यं कर्त्तव्यं। व्रतमन्त्रे रुद्रिया शब्दाभिप्रायमाह "या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनद्देवतया व्रतयति सयोनित्वाय शान्त्यै" (सं०६का०।२प्र०।२अ०) इति। स्वोदराग्नेरपरं रूपं रुद्रिया तनूस्तया दुग्धे तप्ते सति तया देवतया सहैव दुग्धं व्रतयति भुङ्क्ते, तच्च भोजनं सयोनित्वाय योनिभूतेनाग्निना साहित्याय, तच्च साहित्यमुग्रस्याग्नेः शान्त्यै भवति। कल्पः "आज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति। याते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठाऽग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति" इति। अत्र याते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठेत्येतादृश आम्नातः। तस्मिन्नया-

शयादिपदत्रयेण त्रयो मन्त्रा भवन्ति। तेषु प्रथमे मन्त्रे तनूरित्यादिरनुषज्यते। द्वितीये तु या ते अग्न इति तनूरिति चोभयमनुषज्यते। तृतीये तु या ते अग्न इत्ययमेवानुषज्यते। तैरेतैस्त्रिभिर्मन्त्रैस्त्रिष्वपु दिनेषु क्रमेणोपसदाज्या हुतयो होतव्याः। अयसि शेते इत्ययाशया लोहनिर्म्मिता। तथा रजते शेत इति रजाशया। हिरण्ये शेत इति हराशया। वर्षिष्ठा वृद्धतमा गह्वरे स्थातुमशक्ये तप्ते लोहे तप्तरजते तप्ते हिरण्ये वा तिष्ठतीति गह्वरेष्ठः अन्नपानयोरलाभेन क्षुधितोऽहं पिपासितोऽहमित्युक्तिरुग्रं वचः तदेतदैहिकं, आमुष्मिकन्तु त्वेषं दीपकं मनःसन्तापजनकं वचः। तत् तु जना इत्थं वदन्ति अस्य गोवधाद्युपपातकलक्षणमेनः प्राप्तं विद्वद्ब्राह्मणवधादिरूपा वीरहत्या प्राप्ता इति। इदन्तु पदव्याख्यानमन्यत्र ब्राह्मणे स्पष्टमाम्नातं "अशनया पिपासे ह वा उग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं वचः" इति। तत्रायं वाक्यार्थः। हे अग्ने या तव अयाशया तनूस्तयाहं द्वेऽपि वचसी अपावधीं नाशितवानस्मि। एवमुत्तरयोरपि योज्यं। तस्मै अग्नये इदं हुतमस्तु। त्रीनेतानुपसद्धोमान् विधातुं प्रस्तौति "तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैवाजिगीषन् तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषुꣳ समस्कुर्वतामग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनं ते ब्रुवन् क इमामसिष्यतीति रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिर-

मानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवासृजत् स तिस्रः पुरो भित्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत" (सं० ६ का० । २प्र०।३अ०) इति। ये पूर्व्वमग्निनावरूथेन पराभूता असुरास्तेषामसुराणां पृथिव्यन्तरिक्षद्युलोकेषु स्वरक्षार्थं तिस्रः पुरो दुर्गरूपा आसन्। तासु पृथिवीवर्त्तिनी लोहप्राकारवेष्टिता, अन्तरिक्षवर्त्तिनी रजतप्राकारवेष्टिता, द्युलोकवर्त्तिनी हिरण्यप्राकारवेष्टिता। तादृशः पुरो देवा अग्निनावरूथेनापि जेतुमशक्ता युद्धं परित्यज्योपसदैव जेतुमैच्छन्। दुर्गं परितोऽवरुध्य चिरं तत्समीपेऽवस्थाय तमुपवसत। चिरावस्थाने सति दुर्गमध्येऽन्नपानादिक्षयादन्तर्भेदाद्वा जयो भवति यस्माद्देवैश्चिरवासो जयोपायत्वेन विचारितस्तस्माल्लोकेऽप्याहुः । के किमाहुः । यश्च ब्राह्मणादिर्वेदाध्ययनेन वेदविचारं जानाति यश्च शूद्रादिर्न जानाति ते सर्व्वेऽपि युद्धेनाजेयं महापुरमुपसदा जेतुं शक्यमित्याहुः। ततो देवाः कालविलम्बो मा भूदिति विचार्य्य युद्धेनैव जेतुमिषुं संस्कृतवन्तः अग्निं सोमं विष्णुञ्च सम्भूयैकबाणं कृत्वा तेन जेतुमुद्युक्ताः। अनीकशब्दो बाणस्य प्रथमभागं काष्ठमाचष्टे। शल्यशब्दो लोहं। तेजनशब्दस्तदग्रं। तामिमां देवतात्रयसमष्टिरूपमिषुं स्त्रीबालसहितकृत्स्नासुरघातिनीं को नाम मोक्ष्यतीति विचार्य्य शक्तो निर्घृणश्च रुद्र इति निश्चित्य तस्मै वरं दत्तवन्तः। स रुद्रस्तामिषुं मुक्त्वा तया तत्प्राकारत्रयं विच्छिद्य त्रिभ्यो लोकेभ्यो सुरान्निःसारयामास। विधत्ते "यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै" (सं० ६ का०।२प्र०।३अ०) इति। वैरिदुर्गोपासदनकार्य्यकारित्वा-

देता आहुतय उपसद इत्युच्यन्ते। तत्राग्निः सोमो विष्णुरित्येवं-रूपास्तिस्रो देवताः। तासां याज्या पुरोऽनुवाक्या होत्र एवा-म्नायन्ते। अथाशयादि तनुधारिर्वह्निश्चतुर्थी देवता। तदीयमन्त्र आध्वर्य्यवत्वादत्रैवाम्नातः। उपसदामाज्यहविष्कत्वेन उपांशुया-जवत्प्रयाजाज्यभागाद्याहुतिप्रसक्तौ प्रतिषेधति "नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्य्यात्" (सं०६का०।२प्र०।१अ०) इति। अग्निमनीकमिति ब्राह्मण्या-जेन अग्नेः प्रथमभावित्वलक्षणं मुखत्वमुक्तं। तत्र प्रयाजादि-होमे वह्नेर्मुखत्वं हीयेत, अत आहुत्यन्तराणां सर्व्वेषां नि-षेधे प्राप्ते काञ्चिदाहुतिं विधत्ते "स्रुवेणाघारमाघारयति यज्ञस्य प्रज्ञात्यै" (सं०६का०।२प्र०।३अ०) इति। दर्शपूर्णमा-सादियज्ञानां आघारोपेतत्वादुपसदामपि यज्ञत्वप्रत्यभिज्ञा-नाय सोऽयमाघारः। तिसृणामुपसदां होमप्रकारं विधत्ते "पराङतिक्रम्य जुहोति परा च एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान् प्रणुदते" (सं०६का०।२प्र०।३अ०) इति। पराङ् पुनरावृत्तिरहितो वेद्याहवनीययोर्मध्यमतिक्रम्य दक्षिणस्यां दिशि उदङ्मुखः स्थित्वा क्रमेणाग्नेः सोमस्य विष्णोश्च तिस्र आहुतीर्जुहुयात्, तथा सति वैरिणोऽपि पुनरावृत्तिरहितानेव कृत्वा लोकत्रयान् निःसारयति। चतुर्थाहुतिप्रकारं विधत्ते पुनरत्याक्रम्योपसदं जुहोति "प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्यान् जित्वा भ्रातृव्यलोकमभ्यारोहति" (सं०६का०।२प्र०।३अ०) इति। दक्षिणादुत्तरस्यां दिशि समागत्य चतुर्थीमुपसदं जुहु-

यात्। तथा सति वैरिणो निःसार्य्य स्वयं जित्वा* वैरिस्थानं पुरत्रयमधितिष्ठति। अत्र सूत्रं "ग्रीवाद्दष्टौ जुह्वां गृह्णाति चतुरुपसत्ति। घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृद-तिक्रान्त उपांशुयाजवत् प्रचरत्यर्धेन जौहवस्याग्निं यजत्यर्धेन सोमसौपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्ने ऽयाशया तनूरिति स्रुवेणोपसदं जुहोति" इति। कालद्वये तदनुष्ठानं विधत्ते "देवा वै याः प्रातरुपसद उपासीदन्नह्न-स्ताभिरसुरान् प्राणुदन्त याः सायꣳ रात्रियै ताभिर्यत् सायं प्रातरुपसद उपसद्यन्तेऽहोरात्राभ्यामेव तद्यजमानो भ्रातृव्यान् प्रणुदते" (सं० ६का०।२प्र०।३अ०) इति। उपासीदन् अनुष्ठित-वन्तः। प्रातरनुष्ठिताभिः अह्नो वैरिनिःसारणं सायमनुष्ठिता-भिस्तु रात्रेः। कालद्वये याज्यानुवाक्ययोर्व्यत्यासं विधत्ते "याः प्रातर्याज्याः स्युस्ताः सायं पुरोऽनुवाक्याः कुर्यादयातयाम-त्वाय" (सं० ६का०।२प्र०।३अ०) इति। यातयामत्वं गतर-सत्वं तद्वर्जनाय व्यत्यासः। दिनत्रये तदनुष्ठानं विधत्ते "तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान् प्रीणाति" (सं० ६का०।२प्र०।३अ०) इति। त्रिषु दिनेषु कालद्वयानुष्ठानं प्रशंसति "षट्सम्पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति" (सं० ६का०।२प्र०।३अ०) इति। प्रसङ्गादहीने द्विरात्रादावुपसद्दि-नसङ्ख्यां विधत्ते "द्वादशाऽहीने सोम उपैति द्वादशमासाः संवत्सरः संवत्सरमेव प्रीणाति" (सं० ६का०।२प्र०।३अ०) इति।

* स्वर्गं गत्वा इति का०।

अहः मध्येन निष्पाद्यः सोमयागोऽहीनः स त्र्यमप्यनेनोप-लक्ष्यते। अहःसमूहस्य सदासत्वाद्द्वादशदिनेषु कालद्वयानु-ष्ठानं प्रशंसति "चतुर्विंशतिः सम्पद्यते चतुर्विंशतिरर्द्धमा-सा अर्धमासानेव प्रीणाति" (सं०६का०।२प्र०।३अ०) इति। एतेषु उपसद्दिनेषु अवान्तरदीक्षाङ्गे व्रतपाने स्तनसङ्ख्यां वि-धत्ते "आराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन् मे लोकेऽर्धुकꣳस्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आ-राग्रावान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवति" (सं०६का०। २प्र०।३अ०) इति। बलीवर्दप्रतोदनं लोहमारं तद्वदल्पमग्रं मुखं यस्याः सा आराग्रा। अर्धुकं समृद्धिशीलं फलं। सोमक्रय-दिने सायमेकं स्तनं दुह्यात्, परेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन् स्तनान्, परेद्युः प्रातश्चतुरः। यस्तु परलोकसमृद्धिकामः त-स्योक्तवैपरीत्यं विधत्ते "परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेऽर्धुकꣳस्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोके ऽर्धुकं भवति" (सं०६का०।२प्र०।३अ०) इति। परःशब्दे-नात्र श्रेष्ठत्वादुपक्रमो विवक्षितः। उपक्रमे वरीयोऽधिकं यस्याः सा परोवरीयसी। अयं पक्षः सूत्र उपन्यस्तः "यदहः सोमं क्रीणीयुश्चतुरः सायं दुह्युस्त्रीन् प्रातर्द्वौ सायमेक उत्तमः" इति। अशक्तस्य क्षीरव्रतादूर्द्ध्वमाहारमल्पमनुजानाति "सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव सनोदनेषोति स्तन्नीयमिव" (सं०६का०।२प्र०।

४अ०) इति। उपसद्धां स्वर्गप्राप्तिहेतुत्वात् तदनुष्ठायिभिरवहितैर्भवितव्यं। तेषां मध्ये यः कोऽपि हीनमनस्को यथोक्तव्रतादूर्द्ध्वं ओदनादिकमन्तर्नयेत् स स्वर्गाद्धीयत एव। तस्मादशक्तोऽपि श्रद्धालुतया नौदनेषि न किञ्चिदपि व्रतादूर्द्ध्वं अन्तर्नेष्यामीति यदि मन्येत तेन स्वत्नीयमिव शोभनं वाक्यान्तराभ्यनुज्ञातं वस्तन्नीतमिव कुर्य्यात्। अशक्तिपरिहारमात्रोपयुक्तं किञ्चिदेव स्वीकर्त्तव्यं। वाक्यान्तरन्तु कूश्माण्डहोमप्रकरणे समाम्नायते "पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिचा वैश्यस्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयाद्यदि मन्येतोपसदस्यामौत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदामाय" इति। उपदस्यास्युपक्षीणा भवामि। अनुव्रते कृतेऽपि फलभ्रंशो नास्तीत्यस्मिन्नर्थे दृष्टान्तमाह "यो वै स्वार्थे तां यताऽऽ श्रान्तो हीयत उत स निश्चाय सह वसति" (सं० ६का०।२प्र०।४अ०) इति। स्वार्थयन्ति गच्छन्तीति स्वार्थेतः तेषां स्वार्थे तां। यतन्त इति यतस्तेषां यतां। मकरमासे प्रयागस्नानं केषाञ्चित् स्वार्थः तं प्राप्तुं प्रयतमानानां स्वग्रामात् निर्गत्य गच्छतां मध्ये यः कश्चित् श्रान्तो गन्तुमशक्तः सङ्क्रान्तिकालीनस्नानाद्धीयते सोऽपि निश्चाय परेद्युर्निर्गत्य तीर्थे गत्वा तैस्तीर्थवासिभिः सहावशिष्टं मासं वसति तद्वदयमप्येकेनानुव्रतेन अशक्तिं परिहृत्य शिष्टं नियममनुतिष्ठेत्। तमिममर्थं निगमयति "तस्मात् सकृदन्नीय नापरमन्नयेत" (सं० ६का०।२प्र०।४अ०) इति। सकृदन्नयने द्रव्यं विधत्ते "दध्ना-

न्ययैतैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवरुन्धे" (सं०६का०।१प्र०।४अ०) इति। अथ सौमिकीं वेदिं विधातुं प्रस्तौति "यज्ञो देवेभ्यो निलायत विष्णुरूपं कृत्वा स पृथिवीं प्राविशत् तं देवा हस्तान्त्सꣳरभ्येच्छन् तमिन्द्र उपर्य्युपर्य्यत्यक्रामत् सो ऽब्रवीत् को मायमुपर्य्युपर्य्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्त्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्त्ति तं जहि यदि दुर्गे हन्तासीति स दर्भपुञ्जीलमुद्वृह्य सप्तगिरीन् भित्वा तमहन्त्सोऽब्रवीत् दुर्गाद्वा आहर्त्तावोचथा एतमाहरेति तमेभ्यो यज्ञ एव यज्ञमाहरद्यत् तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्वं" (सं०६का०।२प्र०।४अ०) इति। स्वर्गलोके स्थितो यज्ञपुरुषः तिरोधानाय विष्णुर्भूत्वा वैष्णवं रूपं सम्पूर्णं कृत्वा देवेभ्यः पलाय्य पृथिवीं प्राविशत्। देवाश्च पृष्ठत एव समागत्य हस्तान् प्रसार्य्योद्धर्त्तुमैच्छन्। असौ यज्ञो यत्र यत्र गच्छति तत्र तत्रेन्द्रस्तमतिक्रम्य पुरो मार्गमवरुध्यातिष्ठत्। कोऽयं मामत्यक्रमीदिति यज्ञनाक्षिप्त इन्द्रः केनाप्यगम्ये दुर्गे गत्वा विरोधिनं ताडयिष्यामीति स्वमहिमानं प्रतिजज्ञे। अथैवं मच्छक्तेः परीक्षकः को नामः त्वमसीतीन्द्रेणाप्याक्षिप्तो यज्ञस्तादृशाद्दुर्गात् तं विरोधिनमाहरिष्यामीति स्वशक्तिं प्रतिज्ञाय स्वकीयं पूर्ववृत्तान्तमिन्द्रस्य पुरतः सर्व्वमवोचत्। पुरा कदाचिदसुरप्राबल्यं दृष्ट्वा मदङ्गभूतदीक्षाद्यभिमानिनः सर्व्वेऽपि स्वर्गलोकवासिनो मत्तो निर्गत्य

पृथिवीं प्राविशन्। ते च के। चतस्रो दीक्षास्तिस्र उपसद एका-सुत्येति अष्टदिवससाध्यानि कर्म्माणि । तत्र दीक्षोपसदः सप्त पृथिव्यां गत्वा गिरयोऽभवन्। सुत्याभिमानी देवो वाममोषः वामं कनीयसं सौमिकवेदिग्रहचमसादिरूपञ्चैवंवित्तं मुष्णाति अपहरतीति वाममोषः। स च मुषितं तत्सर्व्वमसुरेभ्यो दत्त्वा स्वयं वराहो भूत्वा सप्तभ्यो गिरिभ्यः परस्तादसुराणां तद्वित्तं बिभर्त्ति रक्षति, तच्च वित्तं वेद्यं देवैः पुनर्लभ्यं, अतो हे इन्द्र त्वं यदि दुर्गे स्थितं विरोधिनं हन्तासि तर्हि तं वराहं जहीत्युक्त इन्द्रो दर्भस्तम्बेनैव गिरीन् भित्त्वा वराहं ताडितवान्। तत इन्द्रो यज्ञमुवाच विरोधिनमाहरिष्यामीति यत् प्रतिज्ञातं तत् कर्त्तुं शक्तोषि चेदेनं विरोधिनं वराहमाहरेत्युक्तो यज्ञोऽभिमान्येव तं वराहाकारं वेदिग्रहचमसादिवित्तोपेतं यज्ञमेभ्यो देवेभ्य आहृत्य ददौ । यस्माद्देवैर्लभ्यमसुराणां तद्वेदिरूपं वित्तं देवा अविन्दन्त अलभन्त तस्माद्विद्यते लभ्यत इति व्युत्पत्त्या वेदिरिति नाम सम्पन्नं। वक्ष्यमाणमपेक्ष्य अयमेकः प्रकारः, तस्मादेकं वेदित्वमुक्त्वा प्रकारान्तरेणापि वेदित्वं दर्शयति "असुराणां वा इयमग्र आसीद्यावदासीनः परा पश्यति तावद्देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदियꣳ सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकीरूपं कृत्वेमां त्रिः सर्व्वतः पर्य्यक्रामत् तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वं" (सं०६का०। २प्र०।४अ०) इति। दार्श्यिके वेदिब्राह्मणेऽप्येतमुपाख्यानं श्रुतं।

तत्र वसवस्त्वेति मन्त्रैर्यावान् प्रदेशः परिगृहीतस्तावत्येव वेदिः। अत्र तु कृत्स्नापि भूमिर्वेदिरिति विशेषः। कृत्स्नभूमेर्वेदित्वेऽपि यागोपयुक्तप्रदेशः पृथक्कल्पनीय इति विधत्ते "सा वा इयꣳ सर्व्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते" (सं०६का०।२प्र०।४अ०) इति। भूमिः सर्व्वा यद्यपि वेदिरेव तथापि न यत्र क्वापि यष्टव्यं, किन्त्वेतावति प्रदेशे सदो हविर्धानादिकं निर्म्मातुं शक्ष्यामीति निश्चित्य तावन्तं प्रदेशं अवमाय पदैः परिमित्य तस्मिन् प्रदेशे यजेरन्। तत्र पदसङ्ख्यां विधत्ते "त्रिꣳशत्पदानि पश्चात् तिरश्ची भवति षट्त्रिꣳशत् प्राची चतुर्विꣳशतिः पुरस्तात् तिरश्ची दश दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे" (सं०६का०। २प्र०।४अ०) इति। अत्रोक्तपदसङ्ख्यायां सर्व्वस्यां मिलितायां नवसङ्ख्याकानि दशकानि सम्पद्यन्ते। तदेवं वेदिप्रदेशप्रमाणं मध्यम उपसद्दिने प्रातःकालीना या उपसद् ऊर्द्ध्वं कर्त्तव्यं। तथा च सूत्रं "अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्व्वन्ति प्राग्वंशस्य मध्यमाल्ललाटिकात् त्रीन् प्राचः प्रक्रमान् प्रक्रम्य शङ्कुं निहन्ति तस्मात् पञ्चदशसु दक्षिणत एवमुत्तरतस्ते श्रोणी प्रथमनिहिताच्छङ्कोः षट्त्रिंशतिपुरस्तात् तस्मात् द्वादशसु दक्षिणत एवमुत्तरतस्तावꣳसौ" इति। यथोक्तपरिमाणवर्ति प्रदेशे उपरितनमृत्तिकाया अपनयनं विधत्ते "उद्धन्ति यदेवास्या अमेध्यं तदपहन्ति" (सं०६का०।२प्र०।४अ०) इति। निष्ठीवनादिकृतमशुचित्वमुद्धननेनाऽपैति। तमेव विधिमनूद्य

प्रशंसति "उद्धन्ति तस्मादोषधयः पराभवन्ति बर्हिस्तृणाति तस्मादोषधयः पुनराभवन्ति" (सं०६का०।२प्र०।४अ०) इति। पूर्वं तस्मिन् प्रदेशे समुत्पन्नास्तृणविशेषा उद्धननेन पराभूता भवन्ति। तस्मात् कृत्स्नवेद्यां बर्हिरास्तरणादोषधयः पुनरागता भवन्ति। तस्य बर्हिष उपरि पुनरप्यग्नीषोमीयपश्वर्थं बर्हिरुत्तरवेदिप्रदेशे स्तृणीयादिति विधत्ते "उत्तरं बर्हिष उत्तरबर्हिस्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवा यजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः" (सं०६का०।२प्र०।४अ०) इति। उत्कृष्ट इत्यर्थः। यत् पूर्वं विहितं तिस्र उपसद उपैतीति तत्र विपक्षस्वपक्षयोर्बाधाबाधावुपन्यस्यति "यदा अनीशानो भारमादत्ते वि वै स लिशते यद्द्वादशसाह्नस्योपसदः स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वायायो सलोम क्रियते" (सं०६का०।२प्र०।५अ०) इति। लोके यद्यशक्तः कश्चित् प्रौढं भारं वोढुमाददीत तदा स विलिशते विशेषेणाल्पोभवति उत्थातुमप्यशक्तो भूमौ पतेत् तद्वदत्रापि योज्यते अह्ना सह वर्त्तत इति साह्न एकाहो ज्योतिष्टोमः। अहःसंसाध्यः अहीनो द्विरात्रादिः। तत्र यद्यल्पस्य साह्नस्य द्वादश स्युः यदि वा अधिकस्य अहीनस्य तिस्रः स्युः तदा विलोम विपरीतं क्रियेत। तथा सति साह्नस्य वीर्य्यं हीयेत स्वपक्षे तु नास्ति तद्भयं यच्चान्यत् पूर्वं विहितं, आराग्रामवान्तरदीक्षामुपेयादिति तत् प्रशंसति "वत्सस्यैकस्तनोभागी हि सोऽथैकꣳ स्तनं व्रतमु-

पैत्यथ द्वावथ त्रीनथ चतुर एतद्वै क्षुरपवि नाम व्रतं येन प्रजातान् भ्रातृव्यान्नुदते प्रतिजनिष्यमाणानथो कनीयसैव भूय उपैति" (मं०६क०।२प्र०।५अ०) इति। वत्सस्य भागो यः स्तनस्तस्मिन्नप्यल्पं पयो यजमानश्चतुर्थे पर्याये स्वीकरोति। ततोऽस्य चतुस्तननियमः सिध्यति। तदेतदेकस्तनादिकं व्रतं क्षुरपवीत्युच्यते। पविर्वज्रः तेन तीक्ष्णत्वमुपलक्ष्यते। क्षुरवत् पविस्तीक्ष्णं यस्याराग्रस्य व्रतस्य तेन व्रतेन पूर्व्वमुत्पन्नान् वैरिणो विनाशयति, जनिष्यमाणांश्च प्रतिबध्नाति, किञ्चात्यल्पेन कर्म्मणा भूयः फलं प्राप्नोति यथोप्तेनाल्पेन बीजेन प्रौढं वृक्षं फलं प्राप्नोति तद्वत्। यद्यप्यन्यत् पूर्व्वं विहितं परोवरीयसीमवान्तरदीक्षामुपेयादिति तत्प्रशंसति "चतुरोऽग्रे स्तनान् व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभिः" (मं०६क०।२प्र०।५अ०) इति। यथा रूपवत्या योषितो जघनप्रदेशः स्थूलः तस्योपरि सूक्ष्मो मध्यप्रदेशः तद्वदस्य व्रतस्याधोभागः चतुस्तनः उपरिभाग एकस्तन इति सुजघनमिति नाम तपस्यं। उत्तरोत्तरमाहारक्षयात् तपसो योग्यं अत एव स्वर्गसाधनं। किञ्च। सुजघनत्वादेव प्रजाः पशूंश्च प्रजनयति। त्रैवर्णिकानां मध्ये क्षत्रियस्य द्रव्यं विधत्ते "यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः क्रूर इव राजन्यो वज्रस्य रूपꣳ समृद्ध्यै" (मं०६का०।२प्र०।५अ०) इति। यवाग्वा ओदनवत् तृप्तिहेतुत्वाभावात् क्रूरत्वं। राजन्यो दुष्टशिक्षकत्वात् क्रूरः। उभयं मिलित्वा वज्रसदृशं। तच्चाऽनिष्टनिव-

र्त्तकत्वेन सम्बद्धौ भवति। विधत्ते "आमिक्षा वैश्वस्य पाक-यज्ञस्य रूपं पुष्ट्यै" (मं०६का०।२प्र०।५अ०) इति। तप्ते पयसि दधिप्रक्षेपेण घनीभूतो भाग आमिक्षा पक्वेन चरुपुरोडाशा-दिना कृतो यज्ञः पाकयज्ञः। आमिक्षायाः पक्वपयो निष्पन्नत्वात् पाकयज्ञस्य रूपं अतः पुष्ट्यै भवति। विधत्ते "पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन्धत्तेऽथो पयसा वै गर्भावर्द्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयोव्रतं भवत्यात्मानमेव तद्वर्द्धयति" (मं०६का०।१प्र०।५अ०) इति। ब्राह्मणोऽध्यापनादिरूपेण तेजसा युक्तः पयसस्तेजोवत् स्वच्छरू-पात् स्वयमेव तेजस्वि पयसि पीते सति स्वकीयेन तेजसा सह पयोरूपं तेज आत्मनि धृतं भवति। किञ्च दीक्षितस्य गर्भरूपत्वात् पयसा वृद्धिर्युज्यते मध्याह्नमध्यरात्रयोर्व्रतकालत्वं विधातुं प्र-स्तौति "त्रिव्रतो वै मनुरासीत् द्विव्रता असुरा एकव्रता देवाः प्रातर्मध्यन्दिने सायं तन्मनोर्व्रतमासीत पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायञ्चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते पराभवन् मध्यन्दिने मध्यरात्रे देवानां ततस्ते भवन्सुवर्गं लोकमायन्" (मं०६का०।२प्र०।५अ०) इति। अहनि त्रिषु कालेषु व्रतं भोजनं कुर्व्वतो मनोः एकस्मिन्नेव काले व्रतं कुर्व्वतां देवानाञ्च मध्याह्नकाले व्रतमस्ति स च कालः क्षुधःस्वरूपं तस्मिन् व्रत-रहिता असुराः पराभूताः। व्रतयुक्तास्तु मनुर्देवाश्च पुष्टिं स्वर्गञ्च प्राप्ताः। ततो मध्याह्नकालः प्रशस्तः। विधत्ते "यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन भुञ्जते

मध्यत एव तदूर्जं धत्ते भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवति'' (सं०६का०।२प्र०।५अ०) इति। मुखमध्ये ऽन्नस्य भोजनमुदरमध्ये च धारणं यथा लोके तथैव अत्रापि। मध्याह्ने मध्यरात्रे च व्रतं कर्त्तव्यं। दीक्षितस्य स्वनिवासस्थानात् प्रवासं निषेधति ''गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात् प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथाय'' (सं० ६का०।२प्र०।५अ०) इति। दीक्षितो विशेषेण मीयते प्रक्षिप्यते यस्मिन् शालास्थाने तद्दीक्षितविमितं तस्य योनिरूपत्वात् ततोऽस्य निर्गमनं गर्भस्रावसमं तत आत्मरक्षार्थं न निर्गन्तव्यं। एतमेव निषेधं प्रकारान्तरेण प्रशंसति ''एष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत् स एनमीश्वरोऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै'' (सं०६का०।२प्र०।५अ०) इति। एष एवाहवनीयोऽग्निः प्रवसतो व्याघ्रवद्धिंसकः निवसतः कुलरक्षकः, तस्मात् सोऽग्निः प्रवसन्तमेनमनुवर्त्त्य उत्थाय हन्तुं समर्थः प्रवासाभावस्त्वात्मनो रक्षणाय भवति। आहवनीयदक्षिणदेशे शयनार्थं विधत्ते ''दक्षिणतः शय एतद्वै यजमानस्याऽऽयतनꣳ स्व एवाऽऽयतने शये'' (सं० ६का०।२प्र०।५अ०) इति। शेत इत्यर्थः। यजमानस्या*हवनीयाभिमुख्यं विधत्ते ''अग्निमभ्यावृत्त्य शये देवता एव यज्ञमभ्यावृत्त्य शये'' (सं०६का०।

* शयनस्य इति का०।

१प्र०।५ अ०) इति। अथ काम्यानि देवयजनानि विधीयन्ते। तत्र पुरोहविरादयः सञ्ज्ञा विशेषा उक्थ्यषोडश्यतिरात्राद्युत्तरयज्ञाः स्वर्गप्राप्तिकामिनं प्रति विधत्ते "पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदभिसुवर्गं लोकं जयेत्" (सं०६का०।२प्र०।५ अ०) इति। अनेन प्रकारेण यं यजमानमुद्दिश्य कामयेत तं पुरोहविर्नामके याजयेत्। तस्य लक्षणमाह "एतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यति" (सं०६का०।२प्र०।६ अ०) इति। यस्य देवयजनस्य हविर्धानमण्डपे आसीनः प्राङ्मुखो होता प्रातरनुवाकनामकं शस्त्रं पठेत् पुरोवर्त्तिनमाहवनीयाग्निं ततः प्राग्वर्त्तिनं नदीतटाकादिजलं ततोऽपि प्राग्दिश्युद्यन्तमादित्यञ्चाभिमुख्येन युगपत् पश्यति एतादृक् देवयजनं पुरोहविरित्युच्यते। कामितफलसिद्धिं दर्शयति "उपैनमुपैनमुत्तरो यज्ञो नमत्यभिसुवर्गं लोकं जयति" (सं०६का०।२प्र०।६अ०) इति। अन्यद्विधत्ते "आप्ते देवयजने याजयेद् भ्रातृव्यवन्तं" (सं०६का०।२प्र०।६ अ०) इति। आप्तनामकस्य लक्षणमाह "पन्थां वा ऽधिस्पर्शयेत् कर्त्तं वा यावन्नाऽनसे यातवै न रथायैतद्वा आप्तं देवयजनं" (सं०६का०।२प्र०। ६अ०) इति। प्रौढं राजमार्गं प्रौढं गर्त्तं वा विलोक्याधिक्येन तत्संस्पर्शो यथा भवति तथा देवयजनं निर्मातव्यं। देवयजनगर्त्तयोर्मध्ये शकटस्य वा रथस्य वा यातवै गन्तुं यावदन्तरं न पर्य्याप्तं तावदेवान्तरं कर्त्तव्यं सोऽयमधिस्पर्शः। एतद्देवाप्तनामकं।

कामितार्थसिद्धिं दर्शयति "आप्नोत्येव भ्रातृव्यं नैनं भ्रातृव्य आप्नोति" (सं०६का०।२प्र०।६अ०) इति। जयतीत्यर्थः। विधत्ते "एकोन्नते देवयजने याजयेत् पशुकामं" (सं०६का०।२प्र०।६अ०) इति। प्रशंसति "एकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्त" (सं०६का०।२प्र०।६अ०) इति। लक्षणमाह "अन्तरा सदो हविर्धाने उन्नतꣳ स्यादेतद्वा एकोन्नतं देवयजनं" (सं०६का०।२प्र०।६अ०) इति। प्राचीनवंशात् पुरतः प्रत्यासन्नं सदः, उत्तरवेदेः पश्चात् प्रत्यासन्नं हविर्धानं, तयोर्मध्यमुन्नतं कुर्य्यात्। फलमाह "पशुमानेव भवति" (सं०६का०।२प्र०।६अ०) इति। विधत्ते "त्र्युन्नते देवयजने याजयेत् सुवर्गकामं" (सं०६का०।२प्र०।६अ०) इति। प्रशंसति "त्र्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमायन्" (सं०६का०।२प्र०।६अ०) इति। लक्षणमाह "अन्तराहवनीयञ्च हविर्धानञ्चोन्नतꣳ स्यादन्तरा हविर्धानञ्च सदश्चान्तरा सदश्च गार्हपत्यञ्चैतद्वै त्र्युन्नतं देवयजनं" (सं०६का०।२प्र०।६अ०) इति। उत्तरवेदिहविर्धानसदः प्राचीनवंशानां चतुर्णामन्तरालप्रदेशेषु त्रिषून्नतं कुर्य्यात्। फलमाह "सुवर्गमेव लोकमेति" (सं०६का०।२प्र०।६अ०) इति। विधत्ते "प्रतिष्ठिते देवयजने याजयेत् प्रतिष्ठाकामं" (सं०६का०।२प्र०।६अ०) इति। लक्षणमाह "एतद्वै प्रतिष्ठितं देवयजनं यत् सर्वतः समं" (सं०६का०।२प्र०।६अ०) इति। फलमाह "प्रत्येव तिष्ठति" (सं०६का०।२प्र०।६अ०) इति। अथ नाम विशेषमनुक्त्वा लक्षणपुरःसरं विधत्ते "यत्रान्या अन्या ओषधयो व्यति-

षक्षा स्युस्तद्याजयेत् पशुकामं" (सं०६का०।२प्र०।६अ०) इति। यवगोधूमप्रियङ्गुकोद्रवादिवीजानि परस्परविलक्षणानि यस्मिन् प्रदेशे सहोत्पद्यन्ते तत्र पशुकामं याजयेत्। प्रशंसति "एतद्वै पशूनाꣳ रूपं रूपेणैवास्मै पशूनवरुन्धे" (सं० ६का०।२प्र०।६अ०) इति। फलमाह "पशुमानेव भवति" (सं०६का०।२प्र०।६अ०) इति। विधत्ते "निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयं" (सं० ६का०।२प्र०।६अ०) इति। निर्ऋतिर्यज्ञविघाती राक्षसः। लक्षणमाह "एतद्वै निर्ऋतिगृहीतं देवयजनं यत् सदृश्यै सत्या ऋक्षं" (सं०६का०।२प्र०।६अ०) इति। निम्नोन्नतभागराहित्येन सदृश्याः सत्या भूमेः सम्बन्धि यदृक्षतृणादिशून्यं स्थानं तन्निर्ऋतिगृहीतं। कामितार्थसिद्धिमाह "निर्ऋत्यैवास्य यज्ञं ग्राहयति" (सं०६का०।२प्र०।६अ०) इति। विधत्ते "व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमाꣳसेरन्" (सं०६का०।२प्र०।६अ०) इति। पात्रोपलक्षिते सह पङ्क्तिभोजने तल्पोपलक्षिते विवाहे वा बन्धुमित्रादयो यं पुरुषमुद्दिश्य मीमाꣳसेरन् सन्दिह्येरन् स पुरुषः सन्देहहेतोरपवादादेः पाप्मना व्यावृत्तिं कामयते तं व्यावृत्ते याजयेत्। व्यावृत्तस्य लक्षणमाह "प्राचीनमाहवनीयात् प्रवणꣳ स्यात् प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनं" (सं० ६का०।२प्र०।६अ०) इति। उभयतः प्रवणं क्रमनिम्नं। फलसिद्धिमाह "विपाप्मना भ्रातृव्येणावर्त्तते नैनं पात्रे न तल्प

मीमाꣳसन्ते" (सं०६का०।२प्र०।६अ०) इति। पापरूपेण वैरिणा व्यावर्त्तते वियुज्यते ततो न सन्दिह्यते। विधत्ते "कार्य्ये देवयजने याजयेद् भूतिकामं" (सं०६का०।२प्र०।६अ०) इति। कार्य्ये मृच्छिलादिभिरुन्नतीकरणीये। प्रशंसति "कार्य्यो वै पुरुषः" (सं०६का०।२प्र०।६अ०) इति। उपनयनादिसंस्कारैरुन्नतीकरणीयः पुरुषः ततस्तस्येदं योग्यं। फलसिद्धिं दर्शयति "भवत्येव" (सं०६का०।२प्र०।६अ०) इति। ऐश्वर्य्यं प्राप्नोत्येव। तदेतत् सर्व्वं या ते अग्नेयाशयाहराशया रजाशयेत्यनेन मन्त्रेण साध्ययोः प्रातःकालीनसायङ्कालीनोपसदोर्मध्ये कर्त्तव्यं। अत्र विनियोगसङ्ग्रहः।

"अंशुराप्याययेत् सोमसेष्टा प्रस्तरनिह्नवः।
अग्ने पूर्व्वाग्निमामन्त्र्य या ते मार्जयते तथा॥
व्रतञ्च तेन कुरुते या तेत्युपसदामसौ।
आज्यहोमा अयाशेति रजेति च हरेति च॥
त्रिविधो मन्त्रभेदस्यान्मन्त्राः सप्तेह वर्णिताः"।

(सं०६का०।२प्र०।६अ०) इति॥

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे चिन्तितं।

"आवृत्तिरुपसत्स्वेषा सङ्घस्यैकैकगाऽथवा।
त्रिरभ्यासं पठेत्यादाविव स्यात् समुदायगा॥
प्रथमा मध्यमान्त्येति प्राकृतक्रमसिद्धये।
एकैकस्य द्विरभ्यासे षट्सङ्ख्यापि प्रसिध्यति"॥ इति।

अग्नौ श्रूयते षडुपसद इति। सत्रे चोदकप्राप्तानां तिसृ-

णामुपसदां सर्व्वन्यायेनावृत्त्या षट्सङ्ख्या सम्पादनीया। यथा पूर्व्वाधिकरणे प्रयाजेषु मन्त्रावृत्त्यैकादशसङ्ख्या सम्पादिता तद्वदत्राप्यावृत्तिर्दण्डकलितवत्समुदायस्य युक्ता। यथा दण्डेन भूप्रदेशं सम्मिमानः पुरुषः आमूलाग्रं कृत्स्नदण्डं पुनः पुनः पातयति न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति। यथा वा त्रिवारं रुद्राध्यायं जपतीत्यत्र कृत्स्न एवाध्याय आवर्त्तते न त्वध्यायैकदेश एकैकोऽनुवाकः पृथगेव त्रिः पठ्यते तथा तिसृणामुपसदां समुदाय आवर्त्तनीय इति चेत्। मैवं। प्राकृतक्रमबाधप्रसङ्गात्। प्रकृतौ हि दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत्। तत ऊर्ध्वदिने द्वितीया। ततोऽप्यूर्ध्वदिने तृतीया। ता एताः सकृदनुष्ठाय पुनरुपरितनदिने अनुष्ठीयन्ते चेत् पुनः अनुष्ठीयमानायाः प्रथमायाः प्रथमत्वमपैति चतुर्थीत्वमायाति। तस्मात् प्राकृतक्रमसिद्धये प्रथमां द्विरभ्यस्य ततो द्वितीयां द्विरभ्यस्येत्येवं स्वस्थानवृध्या तासामावृत्तिः कार्य्या। न च अध्याय दृष्टान्तो युक्तः अनुवाकसमुदायस्यैवाध्यायत्वादध्यायस्यैवावृत्तिविधानात्। न त्विह समुदायस्योपसत्त्वमस्ति तस्मात् प्रत्येकमुपसदावर्त्तनीया अनेन न्यायेन द्वादशाहीनस्येत्यत्रैकैकोपसच्चतुर्वारमावर्त्तनीया। तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

"तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यदः।
ज्योतिष्टोमे द्वादशत्वमथवाहर्गणे भवेत्॥
अस्तु प्रकरणादाद्यो नाहीनत्वं विरुध्यत।

प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यतां॥

माङ्गाङ्गिन्नाहीनसञ्ज्ञा रूढैषाऽहर्गणे भवेत्।

षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यतां" ॥ इति।

ज्योतिष्टोमप्रकरणे श्रूयते तिस्र एव माङ्गस्योपसदो द्वादशाहीनस्येति। एकेनाह्ना निष्पाद्यत्वात् माङ्गो ज्योतिष्टोमः दीक्षादिवसात् ऊर्ध्वं सोमाभिषवदिवसात् पूर्व्वकर्त्तव्या होमा उपसदः तासां द्वादशत्वं प्रकरणबलाज्ज्योतिष्टोमे निविशते। अहीनशब्दस्य तस्मिन्नेव कल्प्यते। ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन न सर्व्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामहीनत्वाभावात्। अतो द्वादशत्व त्रित्वयोर्विकल्प इति प्राप्ते ब्रूमः। आवृत्तःसोमयागरूपो द्विरात्र त्रिरात्रादिरहर्गणस्तस्मिन्नहीनशब्दो रूढः। यौगिकत्वे तु न हीन इति विगृह्य समासे कृते अयज्ञादिशब्दवदाद्युदात्तः स्यात् मध्योदात्तस्त्वाम्नायते। रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः। अतो ज्योतिष्टोमवाचिनः माङ्गशब्दाद्भिन्नेयमहीनसञ्ज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते। तस्मिन्नहर्गणे षष्ठी श्रुत्या यदुक्तं द्वादशत्वं जिवेश्यते तत् सिद्धये प्रकरणादिदमुन्नेतव्यं*। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

"मुख्यार्था सौमिकी वेदिरुभयार्थोत मुख्यगा।

चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्प्रकृतिसम्भवात्॥

* दपनेतव्यं इति का०।

मुख्यपोष्कल्यहेतुत्वात् तदङ्गञ्च चिकीर्षितं।
मुख्यवत् तेन तद्वेदिरङ्गेष्वप्युपकारिणि" ॥ इति।

दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः, ततः पूर्व्वस्यां दिशि सदोहविर्धानादीनां पर्य्याप्तो भूभागविशेषः। तैः सदःप्रभृतिभिः सह सौमिकी वेदिरित्युच्यते। सेयं मुख्यस्य सोमयागस्यैवोपकारं करोति, न त्वमुख्यानामग्नीषोमीयाद्यङ्गानां। कुतः। मुख्यस्याचिकीर्षितत्वात्। न च अङ्गान्यपि चिकीर्षितानीति वाच्यं चिकीर्षास्वरूपस्य वेदेनैवाभिहितत्वात्। एवं श्रूयते "षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेनेति शच्यामहे" इति। अस्यायमर्थः। श्रूयमाणेनानेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणेन च प्रमिते भूभागे फलहेतुं सोमयागं कर्त्तुं शच्यामह इति निश्चित्य तत् तथैव कुर्यादिति। सेयं चिकीर्षा मुख्यविषया। इति शच्यामह इति परिमाणस्य शक्त्युपन्यासात्। अङ्गानां पशूनामिष्टीनाञ्च सदोहविर्धानादिमण्डपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणाप्यनुष्ठातुं शक्यत्वात् स उपन्यासस्तत्र निरर्थकः। सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव सम्भवति, न त्वन्यत्र, तस्मात् सा वेदिर्मुख्यस्यैवोपकरोतीति प्राप्ते ब्रूमः। इयति शच्यामह इत्यत्र साङ्गप्रधानानुष्ठाने शक्तिरुक्ता तादृशस्यैव फलं प्रति दृष्ट*फलहेतुत्वात्। अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्विधिरुभयार्था। न चात्र वपनादिसाम्यं शङ्कनीयं दृष्टोपयोगाभावस्य तत्रोक्तत्वात्, इह तु हवि-

* पुष्कल इति का०।

रासादनादिर्दृष्ट उपयोगः स च मुख्याङ्गयोः सम इत्युभयार्थत्वं। षष्ठाध्यायस्य अष्टमपादे चिन्तितं।

"अन्याभावेऽप्यभावेऽपि पयोभक्षादयोऽग्रिमं।
निमित्ते सत्यनुष्ठानान्नियमादृष्टतोऽन्तिमं"॥ इति।

ज्योतिष्टोमे श्रूयते "पयो ब्राह्मणस्य व्रतं" इति। तदेतदसत्यन्यस्मिन् भक्ष्ये सति कर्त्तव्यं। कुतः। अन्याभावस्य निमित्तत्वात्। निमित्ते सति नैमित्तिकस्यावश्यानुष्ठेयत्वात् इति चेत्। मैवं। न ह्यत्रान्याभावो निमित्तत्वेन श्रुतः, तस्मात् सत्यन्यस्मिन् भक्ष्ये नियमादृष्टाय पय एव व्रतयेत्। तत्रैवान्यच्चिन्तितं।

"अजीर्णिसम्भवे कार्य्यं व्रतं नैवाग्रिमो विधिः।
रोगोत्पत्त्या प्रधानस्य विरोधान्न पयो व्रतं"॥ इति।

ज्योतिष्टोमे श्रूयते "मध्यन्दिने मध्यरात्रे व्रतं व्रतयति" इति। तत्र यस्य अजीर्णिः सम्भाविता तेनापि विहितत्वात् पयो व्रतयितव्यमेवेति चेत्। नैवं। प्रधानानुष्ठानविघ्नप्रसङ्गात्। तस्मात् तथाविधवेलायां पयो वर्जयेत्। अत्र सर्वाणि यजूंष्येवेति नास्ति छन्दः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥ ० ॥

वित्तायनी मेऽसि तिक्तायनी मेऽस्यवतान्मा नाथितमवतान्मा व्यथितं विदेरग्निर्नभोनामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहि यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधेऽग्ने अङ्गिरो यो द्वितीयस्यां तृतीय-

स्यां पृथिव्यामस्यायुषा नाम्नेहि यत् तेऽनाधृष्टं नाम॥१॥

यज्ञियं तेन त्वाऽऽदधे सिꣳहीरसि महिषीरस्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतां ध्रुवासि देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु प्रचेतास्त्वा रुद्रैः पश्चात् पातु विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु सिꣳहीरसि सपत्नसाही स्वाहा सिꣳहीरसि सुप्रजावनि स्वाहा सिꣳहीः ॥ २ ॥

असि रायस्पोषवनि स्वाहा सिꣳहीरस्यादित्यवनिः स्वाहा सिꣳहीरस्यावह देवान् देवयते यजमानाय स्वाहा भूतेभ्यस्त्वा विश्वायुरसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳहाग्नेर्भस्मास्यग्नेः पुरीषमसि ॥ ३ ॥

नाम सुप्रजावनि स्वाहा सिꣳहीः पञ्चचिꣳश्च ॥१२॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥

एकादशेऽनुवाके उपसदोऽभिहिताः। तत्र मध्यमोपसद्दिने षट्त्रिंशत्पदपरिमितो योऽयं वेदिप्रदेशः स्वीकृतः तस्य पूर्वभागे उत्तरवेदिर्द्वादशेऽनुवाकेऽभिधीयते। बोधायनः "उत्त-

रेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोच्य, शम्यया चात्वालं परिमिमीते वित्तायनी मेऽसीति पुरस्तादुदीचीनकुम्बयान्तरितः स्फ्येनोल्लिखति, तिक्तायनी मेऽसीति दक्षिणतः प्राक्कुम्बयाऽन्तरितः स्फ्येनोल्लिखति, अवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरितः स्फ्येनोल्लिखति, अवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरितः स्फ्येनोल्लिखति" इति। आपस्तम्बः "अपरेण यूपावटदेशꣳ सञ्चरमवशिष्य वेद्यामुत्तरवेदिं दशपदाꣳ सोमे करोत्यꣳहीयसीं पुरस्तादित्येके तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः शम्यां पुरस्तादुदग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति, वित्तायनी मेऽसीत्येवं दक्षिणतः प्राचीं, तिक्तायनी मेऽसीति पश्चादुदीचीं, अवतान्मा नाथितमित्युत्तरतः प्राचीं, अवतान्मा व्यथितमित्युत्तरस्माद्देशंसादुदक्प्रक्रमे चात्वालस्तमुत्तरवेदिवत् तूष्णीं शम्यया परिमित्य" इति। पाठस्तु "वित्तायनी मेऽसि तिक्तायनी मेऽस्यवतान्मा नाथितमवतान्मा व्यथितं" इति। अत्रोत्तरवेदेर्द्वावाकारौ महावेद्याः प्राग्भागे मृत्तिकाप्रक्षेपेण निष्पाद्यमान एक आकारः। आपस्तम्बमते तद्विषया मन्त्रा उक्ताः। मृत्तिका चात्वालगतेति तद्रूपोऽपर आकारः। तद्विषया बोधायनमते मन्त्राः। हे उत्तरवेदे त्वं मम वित्तायनी वह्निरूपस्य वित्तस्य प्रापिकासि। तिक्तस्य वह्नितेजसो ज्वालारूपस्य प्रापिकाऽसि। नाथितं वह्नियाचकं मामवतात् रक्ष। व्यथितं वह्न्यलाभाद्भीतं मां रक्ष। मन्त्रान् व्याचिख्यासुः शम्यया वेदिपरिमाणं

विधातुमाख्यायिकया वेदिं प्रस्तुवन् प्रसङ्गाद्व्याघारणं विधत्ते "तेभ्य उत्तरवेदिः सिꣳही रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत्ते देवा अमन्यन्त यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तामुपामन्त्रयन्त साऽब्रवीद्वरं वृणै सर्वान् मया कामान् व्यश्नवथ पूर्वां तु माऽग्नेराहुतिरश्नवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारे वृतꣳह्यस्यै" (सं०६का०।२प्र०।७अ०) इति। अत्रोभयोरन्तरेणेत्यभिधानात् तेभ्यो देवासुरेभ्य इति लभ्यते। ते देवास्तामुपामन्त्रयन्त प्रार्थितवन्तः मया मदनुग्रहेण भ्रातृव्याभिभवान् सर्वान् कामान् यूयं व्यश्नवध विशेषेण प्राप्स्यथ। तदर्थं त्वाद्याहुतीर्व्याघारणरूपा युष्माभिर्हुता प्रणेष्यमाणादग्नेः पूर्वभाविनीं मां व्यश्नवतै विशेषेण व्याप्नोतु मामेवोद्दिश्य हूयतां सोऽयं वरः। यस्माद्वरो वृतः तस्मात् तथा व्याघारयेयुः तत्प्रकारस्तु सिꣳहीरसि महिषीरसीत्यादिमन्त्रव्याख्यानावसरे वक्ष्यते। विधत्ते "शम्यया परिमिमीते मात्रैवास्यै साऽथो युक्तेनैव युक्तमवरुन्धे" (सं०६का०।२प्र०।७अ०) इति। गदया सदृशी बाहुपरिमिता शम्या। तया चतुर्दिक्षूत्तरवेदिं परिमिमीते। अस्या उत्तरवेदेः सा इयं भूमिः शम्यया परिमिता निर्णीतामात्रैव न न्यूना ग्रहचमसादिप्रचारस्य पर्याप्तत्वात्। नाप्यधिका यथोक्तप्रचारानुपयुक्तभागस्याभावात्। किञ्च युक्तेनैव योग्येनैव उत्तरवेदिप्रमाणेन योग्यफलं प्राप्नोति। मन्त्रान् व्याचष्टे "वित्तायनी मेऽसीत्याह वित्ता ह्येना नावत् तिक्तायनी मेऽसीत्याह तिक्तान् ह्येना नावदवतान्मा नाथितमित्याह नाथि-

तान् श्येना नावदवतान् मा व्यथितमित्याह व्यथितान् श्येनाना-वत्" (सं०६का०।२प्र०।७अ०) इति। वित्तं वह्निरूपं। वित्ता-र्थिन एतान् यज्ञकर्तॄन् वह्निप्रापणेन इयमुत्तरवेदिररचत्। तिक्तं वह्निज्वालारूपं तेजनं, तदर्थिन एतान् यज्ञकर्तॄन्। बोधा-यनः "अथ चात्वाले बर्हिर्निधाय तस्मिन् स्फ्येन प्रहरति, विदे-रग्निर्नभोनामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहि" इति। तत् हृत्वोत्तरवेद्यां निवपति, यत् तेनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधेऽग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामस्यायुषा नाम्नेहि यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधे" इति। आपस्तम्बस्त्वे-कमन्त्रतामाह "तूष्णीं जानुदघ्नं त्रिवितस्तिं वा खात्वोत्तरवेद्य-र्थान् पांसून् हरति विदेरग्निरिति" इति। विदेरुत्तरवेदेः स-म्बन्धी योऽग्निः तस्य नभ इत्येतन्नाम अङ्गानां रस इत्यङ्गिरस्-शब्दस्य निर्व्वचनं। तथा च छन्दोगाः प्राणोपास्त्यावामनन्ति "एत-मेवाङ्गिरसं मन्यन्ते अङ्गानां यद्रसस्तेनेति" इति। वाजसनेयिनो ऽप्यधीयन्ते "य अङ्गिरसोऽङ्गानां रसः" इति। अयञ्चाग्निः सो-माहुत्याधारत्वात् गार्हपत्यदक्षिणाग्न्याद्यङ्गानां मध्ये सारः। हे अङ्गिरो यस्त्वमस्यां चात्वालगतमृद्रूपायां पृथिव्यां असि वर्तसे स त्वमायुःशब्देन नभोनाम्ना सहित एहि उत्तरवेद्यामागच्छ। यत् ते अनाधृष्टं केनाप्यतिरस्कृतं नाम यज्ञसम्बद्धं तेन नाम्ना व्यवहृत्य त्वामुत्तरवेद्यामादधे। बोधायनः "द्वितीयं प्रहरति। विदेरग्निर्नभोनामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्याममी-त्यादत्ते, आयुषा नाम्नेहीति, हृत्वोत्तरवेद्यां निवपति, यत् तेना-

धृष्टं नाम यज्ञियं तेन त्वाऽऽदध इति तृतीयं प्रहरति, विदेरग्निर्नभोनामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्ते, आयुषा नाम्नेहीति हृत्वोत्तरवेद्यां निवपति, यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध इति, तूष्णीं चतुर्थं हरति सह बर्हिषेति" इति। आपस्तम्बः "एतेनैव यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयं तूष्णीं चतुर्थं हृत्वेति" इति। अत्राग्ने अङ्गिरो यो द्वितीयस्यां इत्याम्नातो द्वितीयमन्त्रस्तस्यादौ विदेरित्याद्यनुषज्यते। अवसाने च पृथिव्यामित्यादिरनुषज्यते। तृतीयस्यां इत्यादिस्त्वरममन्त्रः। तस्य विदेरित्यादिरेवानुषज्यते। चात्वालस्थिताया: पृथिव्या अंशभेदेन द्वितीयत्वं तृतीयत्वञ्च द्रष्टव्यं। विधत्ते "विदेरग्निर्नभोनामाग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोकेष्वग्नयस्तानेवाऽवरुन्धे तूष्णीं चतुर्थं हरत्यनिरुक्तमेवाऽवरुन्धे" (सं०६का०।२प्र०।७अ०) इति। लोकत्रयवर्त्तिनां त्रयाणामग्नीनामवरोधाय त्रिर्हरणं एतल्लोकवर्त्तीति निश्चित्य वक्तुमशक्यत्वेन अनिरुक्तस्याग्निमात्रान्यस्यावरोधाय तूष्णीं हरणं। बोधायनः "अथाध्वर्युरुत्तरवेद्यै पुरीषं सम्प्रयौति, सिंहीरसि महिषीरसि" इति। सम्प्रयौति प्रथयति मिश्रयति। आपस्तम्बः "सिंहीरसीत्युत्तरवेद्यां निवपति" इति। वेदः सिंहस्तृगत्वं दर्शयति "सिंहीरसि महिषीरसीत्याह सिंहीर्ह्येषा रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत्" (सं०६का०।२प्र०।७अ०) इति। महिषीर्महती महनीया ब्राह्मणान्तरे वा महिषीजातित्वं द्रष्टव्यं। कल्पः "उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा, ध्रुवासीति शम्यया संहत्य,

देवेभ्यः शुन्धस्वेत्यद्भिः प्रोक्ष्य, देवेभ्यः शुम्भस्वेति सिकताभिरवकीर्य" इति। प्रथस्व प्रसर। ध्रुवा दृढा भव। शुन्धस्व शुद्धा भव। शुम्भस्व शोभिता भव। व्याचष्टाणं क्रमेण विधत्ते "उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवाऽसीति सꣳहन्ति धृत्यै देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यवचोक्षति प्रचकिरति शुध्यै" (सं० ६का०।२प्र०।७अ०) इति। कल्पः "प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति, इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्विति पुरस्तात्, मनो जवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः, प्रचेतास्त्वा रुद्रैः पश्चात् पात्विति पश्चात्, विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पात्वित्युत्तरतः" इति। इन्द्रघोषादिनामका देवाः परिवृढाः तदनुचरा वस्वादिगणास्तैर्गणैः सहितास्ते देवाः पान्तु। पुरस्तादित्यादि दिग्वाचकशब्दप्रयोगेण दिग्देवता तुष्टिकरं प्रोक्षणमित्याह "इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्वित्याह दिग्भ्य एवैनां प्रोक्षति" (सं० ६का०।२प्र०।७अ०) इति। प्रोक्षणं विधातुं प्रस्तौति "देवाꣳश्चेदुत्तरवेदिरुपावर्त्स्यति इहैव विजयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वकर्मादित्यैरुत्तरतः" (सं० ६का०।२प्र०।७अ०) इति। अपक्रम्य देवासुरसेनयोर्मध्ये तिष्ठन्तीमुत्तरवेदिं यदा देवा उपामन्त्रयन्त तदानीमसुरा एवमचिन्तयन् यद्येषा देवानुपावर्त्तेत तदा त एव विजयेरन् तस्मादिहैवेदानीमेव तदुपावर्त्तनात् प्रागेव देवान् विजया-

मह इति विचिन्त्य वज्रमुद्यत्य देवानभिलक्ष्य प्रहर्तुमागताः तानसुरानिन्द्रघोषादयो दिग्भ्योऽपाकुर्वन्। विधत्ते "यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान् प्रणुदते" (सं०६का०।२प्र०।७अ०) इति। प्रोक्षणशेषस्य निनयनं विधत्ते "इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत् तां दक्षिणत उत्तरवेद्या आदन् यत् प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै निनयेद्यदेव तत्र क्रूरं तत् तेन शमयति" (सं०६का०।२प्र०।७अ०) इति। यतयो देवान् हन्तुं सर्वदा प्रयतमाना उत्तमाश्रयेण प्रच्छन्नवेषा असुरास्तान् हत्वा सालावृकेभ्य आरण्यश्वभ्यो दत्तवान्। निनयनकाले ध्यानं विधत्ते "यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति" इति (सं०६का०।२प्र०।७अ०) इति। शुचा शोकेन अर्पयति योजयति। कल्पः "अथैनां हिरण्यमन्तर्धायाज्यया पञ्चगृहीतेन व्याघारयति, सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेऽꣳसे, सिꣳहीरसि सुप्रजावनिः स्वाहेति उत्तरस्यां श्रोण्यां, सिꣳहीरसि रायस्पोषवनिस्स्वाहेति दक्षिणस्यां श्रोण्यां, सिꣳहीरस्यादित्यवनिः स्वाहेति उत्तरेऽꣳसे, सिꣳहीरस्यावह देवान् देवयते यजमानाय स्वाहेति मध्ये" इति। पाठस्तु "सिꣳहीरसि सपत्नसाही स्वाहा सिꣳहीरसि सुप्रजावनिः स्वाहा सिꣳहीरसि रायस्पोषवनिः स्वाहा सिꣳहीरस्यादित्यवनिः स्वाहा सिꣳहीरस्यावह देवान् देवयते यजमानाय स्वाहा" इति। हे उत्तर वेदे त्वं सिंहरूपधारिण्यसि सपत्नसाही वैरिघातिनी। सुप्रजावनिः शोभनापत्यभृत्यप्रदा। रायस्पोषवनिः पश्वादिधनस-

मृद्धिप्रदा। आदित्यवनिः भूमिसम्बन्धिप्रतिष्ठाप्रदा। देवयते देवानिच्छते यजमानाय देवानानय तवेदं हुतमस्तु। उत्तरवेदेर्वरवाक्यमनुसृत्य एकैकया आहुत्या प्राप्नुवन्नित्येतं मन्त्रसूचितमर्थं दर्शयति "सोत्तरवेदिरब्रवीत् सर्वान् मया कामान् व्यश्नवथेति ते देवा अकामयन्तासुरान् भ्रातृव्यानभिभवेमेति तेऽजुहवुः सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान् भ्रातृव्यानभ्यभवन् तेऽसुरान् भ्रातृव्यानभिभूयाकामयन्त प्रजां विन्देमहीति तेऽजुहवुः सिꣳहीरसि सुप्रजावनिः स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्वाऽकामयन्त पशून् विन्देमहीति तेऽजुहवुः सिꣳहीरसि रायस्पोषवनिः स्वाहेति ते पशूनविन्दन्त ते पशून् वित्वाऽकामयन्त प्रतिष्ठां विन्देमहीति तेऽजुहवुः सिꣳहीरस्यादित्यवनिः स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठां वित्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुः सिꣳहीरस्यावह देवान् देवयते यजमानाय स्वाहेति ते देवता आशिष उपायन्" (सं०६का०।२प्र०।८अ०) इति। आशिष इष्यमाणा हविःस्वीकारिणीर्देवता उपयाम प्राप्नुयामेति कामयमाना यष्टारस्ते देवास्वरमाहुत्या तथैव प्राप्नुवन् कर्मफलानि वा अत्राशीःशब्देन सूच्यन्ते। आहुतिसङ्ख्यां विधत्ते "पञ्चकृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽवरुन्धे" (सं०६का०।२प्र०।८अ०) इति। गुणान्तरं विधत्ते "अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै" (सं०६का०।२प्र०।८अ०) इति। अक्ष्णया

वक्रगत्या दक्षिणेंऽसे उत्तरश्रोणिरित्यादिका वक्रगतिः, पशवः शयनकाले पादाद्यङ्गानि वक्रत्वेन प्रहरन्ति सङ्कोचयन्ति, अत आकृतिवक्रत्वं प्रतिष्ठित्यै भवति। कल्पः "भूतेभ्यस्त्वेति स्रुचमुद्गृह्य" इति। हे जुहु त्वां भूतेभ्यश्चिरन्तनेभ्यो देवेभ्य उद्गृह्णामि। विधत्ते "भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति" (सं०६का०।१प्र०।८अ०) इति। भूतोद्देशेन स्रुगुद्ग्रहणे सन्तताः सन्तः प्रीयन्ते। कल्पः "अथ पैतुद्रवान् परिधीन् परिदधाति, विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं, ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणं, अच्युतक्षिदसि दिवं दृꣳहेत्युत्तरं" इति। पाठस्तु "विश्वायुरसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳह" इति। हे मध्यमपरिधे त्वं कृत्स्नायुः प्रदोऽसि पृथिवीं दृढां कुरु। हे दक्षिणपरिधे त्वं स्थिरनिवासोऽसि। हे उत्तरपरिधे त्वमविनष्टनिवासोऽसि। विधत्ते "पैतुद्रवान् परिधीन् परिदधात्येषां लोकानां विधृत्यै" (सं०६का०।२प्र०।८अ०) इति। परिधित्रयेण त्रयो लोका विधृता भवन्ति। पैतुद्रो देवदारुः। कल्पः "अथातिशिष्टान् सम्भारान्निवपति, गुग्गुलु सुगन्धितेजनं शुक्लामूर्णास्तुकां, अग्नेर्भस्मास्यग्नेः पुरीषमसि" इति। हे सम्भारस्वरूप त्वमग्नेर्भासकं पूरकञ्चासि। सम्भारान् विधातुं प्रस्तौति "अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्त्तिमारिष्यतीति स निलायत स यां वनस्पतिष्ववसत् तां पूतुद्रौ यामोषधीषु ताꣳ

सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैष-मैच्छन् तमन्वविन्दन् तमब्रुवन् उप न आवर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिः परिधिः स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिः परिधिः स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यान्यस्थान्यशातयत तत् पूतुद्र्वभवद्यन्मांꣳसमुपमृतं तद्गुग्गुलु" (सं०६का०।२प्र०।८अ०) इति। भ्रातरो हविर्वहनप्रयासेन यथा मृताः इत्थमेव अस्य अन्योऽपि मृतिं प्राप्स्यतीति भीतोऽग्निर्निगूढो वनस्पत्योषधिपशुषु एकैकां रात्रिमवसत् देवदारुवृक्षे सुगन्धयुक्ते तृणे पेत्वस्य मेषस्य शृङ्गयोर्मध्ये च। क्रमेण तं वसन्तमेव देवा हविर्वहने प्रेरयितुमैच्छन्। तमन्विष्यालभन्त स्रुग्-गृहीतस्य हविषो यल्लेशरूपं होमात् पूर्वं परिधिभ्यो बहिः हविः स्कन्देत् स भ्रातृभागोऽस्त्वित्यग्नेर्वरः अस्थन्वन्तो त्वगस्थिमांसोपेताः प्रामेषत मृताः तदीयान्यस्थीनि मांसानि च शातयै परित्यक्तानि तानि पूतुद्रु गुग्गुल्वभवतां। विधत्ते "यदेतान्त्सम्भारान् सम्भरत्यग्निमेव तत् सम्भरन्ति"(सं०६का०।२प्र०।८अ०) इति। मन्त्रगतेन पुरीषशब्देन सम्भाररूपं वह्निपूरणं विवक्षितमित्याह "अग्नेः पुरीषमसीत्याहाग्नेर्ह्येतत् पुरीषं यत् सम्भाराः" (सं०६ का०।२प्र०।८अ०) इति। गुग्गुलु सुगन्धितेजनं शुक्लोर्णास्तुकाः सम्भाराः। किञ्च देवदारुपरिधिरूपेण वह्निभ्रातरोऽस्य सन्निधीयन्त इत्याह "अथो खल्वाहुरेते वावैनं ते भ्रातरः परिशेरते यत्

यैतुद्रवाः परिधयः'' (सं०६का०।१प्र०८अ०) इति। एन-मग्निं परितः शेरते। अथ विनियोगसङ्ग्रहः।

''वित्तोत्तराख्यवेद्यर्थं चतुर्भिः परितो लिखेत्।
विदेस्त्रिभिर्हरेत् पांसून् सिंहीर्वेद्यां विनिक्षिपेत्॥
उरुप्रथयते वेदिं धृत्वा संहृत्य शम्यया।
देवे प्रोक्ष्य तथा देवे सिकताश्चावकीर्य्यते॥
इन्द्र प्रोक्ष्य चतुर्दिक्षु सिंहीरंसद्वये तथा।
श्रोणिद्वये च मध्ये च व्याघारयति पञ्चभिः॥
भूतेभ्यः स्रुचमुद्गृह्य त्रिशा परिधयस्त्रयः।
अग्नेः संस्थाप्य सम्भारान् मन्त्राः षड्विंशतिर्मताः''॥ इति।

नात्र विशेषमीमांसा। नापि छन्दः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः॥ ० ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाऽविदेक इन्मही देवस्य सवितुः परिष्टुतिः। सुवाग्देव दुर्य्याꣳ आवद देव श्रुतौ देवेष्वाघोषेथामा नो वीरो जायतां कर्म्मण्योऽयꣳ सर्वे ऽनुजीवाम यो बहूनामसद्वशी। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं। समूढमस्य पाꣳसुर इरावती धेनु-मती हि भूतꣳ सूयवसिनी मनवे यशस्ये। व्यस्कभ्नाद्रो-

दसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः। प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं माऽजीह्वरतमत्र रमेथां वर्ष्मन् पृथिव्या दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वान्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ ॥ २ ॥

दक्षिणादोत सव्यात्। विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥ ३ ॥

अस्य यच्छैकान्न चत्वारिꣳशच्च ॥ १३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥

द्वादशेऽनुवाके उत्तरवेदिरभिहिता। तत्समीपवर्त्तिहविर्धानं त्रयोदशेऽनुवाकेऽभिधीयते। कल्पः "गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने, युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति" इति। होमार्थं स्वा-

ह्वाकारोऽध्याहर्त्तव्यः। विप्रस्य ब्राह्मणस्य यजमानस्य सम्बन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जते लौकिकचिन्ताभ्यो मनो निवार्य्य यज्ञचिन्तायां, तत् प्रथमं युञ्जते नियमयन्ति। ततो धियः इन्द्रियाण्यपि यज्ञार्थेषु स्वस्वव्यापारेषु नियमयन्ति। कीदृशस्य विप्रस्य। बृहतो विपश्चितः अधीतवेदत्वाद् बृहत्वं अर्थाभिज्ञत्वादिविपश्चित्त्वं। कीदृशा विप्राः। होत्राः होमकर्त्तारः तदिदं विप्राणां मनोनियमनादिसामर्थ्यं। एक इद्विदधे एक एव ससर्ज। कीदृशः। वयुनावित् मार्गान् वेत्ति सर्व्वज्ञ इत्यर्थः। न चैकस्य सर्व्वसृष्टौ विस्मायितव्यं यतः सवितुः प्रेरकस्यान्तर्य्यामिणो देवस्य परिष्टुतिः सर्व्ववेदोक्तस्तुतिः मह्वीमहती। तथा चाथर्वणिका अभिधीयन्ते "यः सर्व्वज्ञः स सर्व्ववित् यस्य ज्ञानमयं तपः" इति। वाजसनेयिनश्च "स एष सर्व्वस्य वशी सर्व्वस्य स्रष्टा सर्व्वस्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च" इति। श्वेताश्वतराश्च "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति। एवं सर्व्वत्रोदाहार्य्यं। एतं मन्त्रं विनियोक्तुं उपोद्घातत्वेनानुष्ठेयं विधत्ते "बद्धमवस्यति वरुणपाशादेवैनं मुञ्चति प्रणेनेक्ति मेध्य एवैनं करोति" (सं० ६का०।२प्र०।९अ०) इति। हविर्धाननामकयोः शकटयोर्यद्दत्तं पूर्व्वं बद्धमासीत् तदवस्यति मुञ्चेत्। प्रणेनेक्ति प्रक्षालयेत्। अत्र सूत्रं "प्रयुक्तपूर्व्वे शकटे नद्धयुगेऽप्रतिहितशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान्ग्रन्थीन्विस्रस्य नवान् प्रज्ञातान् कृत्वा अग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यवनयन् परिश्रिते सत् हविषी अवस्थापयति"

इति पृथ्व्यां वेदिमध्ये प्राक् प्रतीच्योः शङ्क्वोः बद्धां रज्जुं मध्ये अ-व्यवयन् व्यवधानमकुर्व्वन्। मन्त्रविनियोगपूर्व्वकं शकटप्रेरणं वि-धत्ते "साविच्रियर्चा कृत्वा हविर्धाने प्रवर्त्तयति सवितृप्रसूत एवैने प्रवर्त्तयति" (सं०६का०।२प्र०।६अ०) इति। कल्पः "स्याच्चे-दचे शब्दः सुवागित्यनुमन्त्रयते" इति। स च मन्त्र एवमाम्नातः "सुवाग्देव दुर्य्याᳬ आवद देवश्रुतौ देवेष्वाघोषेथां" इति। हे अच देव दुर्य्यान् गृहान् प्रति सुवाग्भूत्वा समन्ताच्छ्रेयस्करीं वाचं वद। हे देव श्रुतौ प्रख्यातावचौ यजमानोऽयं युष्मान् यजतीति देवेष्वाघोषेथां। सुवाक्छब्दस्य उपयोगं दर्शयति "वरुणो वा एष दुर्व्वागुभयतो बद्धो यदचः स यदुत्सर्जेद्यज-मानस्य गृहानभ्युत्सर्जेत् सुवाग्देव दुर्य्याᳬ आवदेत्याह गृहा वै दुर्य्याः शान्त्यै" (सं०६का०।२प्र०।६अ०) इति। अचस्य बन्धन-हेतुपाशोपेतत्वात् वरुणत्वं। वरुणस्य क्रूरत्वाद्दुर्वाक्। उत्सर्जेत् शब्दं कुर्य्यात्। कल्पः "अथैने पत्नी पदतृतीयेणाज्यमिश्रेणोपानक्ति, आ नो वीरो जायतां" इति। स चैवमाम्नातः "आ नो वीरो जायतां कर्मण्योऽयᳬ सर्वे ऽनुजीवाम यो बहूनामसद्वशी" इति। कर्म्मणि साधुः कुशलो वीरः आलस्यरहितः पुत्रोऽस्माकमाजा-यतां यच्जीवाम यस्य बहूनां वशी नियमनशक्तिमान् असत् भ-वेत् तादृशो जायतां। अत्र कल्पे पदतृतीयशब्देन सोमक्रयणी-पदरजसस्तृतीयांशः पूर्व्वं सङ्गृहीतो विवचितः। अचोपाञ्जनं वि-धत्ते "पत्न्युपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भो

नवच्छित्यै" (सं०६का०।२प्र०।९अ०) इति। कल्पः "दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य दक्षिणस्यां वर्तन्याꣳ स्फ्येनोद्धत्याऽवोक्ष्य हिरण्यं निधाय सम्परिस्तीर्य्याऽभिजुहोति, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं। समूढमस्य पाꣳसुरे स्वाहेति, अपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादुपसृप्योत्तरस्यां वर्त्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय सम्परिस्तीर्य्य जुहोति, इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहेति" इति। विष्णुस्त्रिविक्रमावतारं धृत्वेदं विश्वं विभज्य क्रमते स्म। भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमित्येवं त्रेधा पदं निदधे। पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत् पाꣳसुरं अस्य विष्णोस्तस्मिन् पदे विश्वं समूढं सम्यगन्तर्भूतं। किञ्च इरावती अन्नवती धेनुमती धेनुर्बहुक्षीरा गौः तद्वत्यौ। सूयवसिनी शोभनैर्यवसैरभ्यवहार्य्यैर्युक्ते मनवे मानवप्रजार्थं यशस्ये यशोनिमित्ते भवतं। एते रोदसी द्यावापृथिव्यौ विष्णुर्व्यस्कभ्नात् विभज्य स्थापितवान् प्रजार्थं ताञ्च पृथिवीं मयूखैः स्वकीयतेजोरूपैर्नानाजीवैरभितो दाधार पुपोष। स विष्णुरनयोर्दक्षिणोत्तरहविर्धानमार्गाकृत्या स्थितां। विधत्ते "वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षाꣳस्यपहन्ति" (सं०६का०।२प्र०।९अ०) इति। वर्त्मना शकटमार्गेण। अन्वित्य अनुप्रविश्य। यज्ञो देवेभ्यो निलायत विष्णूरूपं कृत्वेत्युक्तत्वाद्यज्ञस्य

विष्णुत्वं। अत एव वैष्णवमन्त्रोऽत्र न व्यधिकरणः। यज्ञादेव वि-ष्णुरूपयज्ञद्वारेणैव। होमाधारत्वेन हिरण्यप्रक्षेपं विधत्ते "यद-ध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ ह-न्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति" (सं०६का०।२प्र०।९अ०) इति। कल्पः "अथैने सम्परिगृह्य सम्प्रेषमाह, हविर्धानाभ्यां प्रवर्त्त-मानाभ्यामनुब्रूहीति त्रिरुक्तायां प्रवर्त्तयन्ति, प्राची प्रेतम-ध्वरं कल्पयन्ती ऊर्द्ध्वं यज्ञं नयतं माऽजीह्वरतं" इति। हे शकटे प्राङ्मुखे गच्छतं। कीदृशे। अध्वरं कल्पयन्ती देवकर्म्म बाधरहितं कुर्व्वाणे। किञ्चोर्द्धुपरिवर्त्तिदेवान् प्रति यज्ञं नयतं मा कु-टिले भवतं असुरान् मा प्रापयतं। प्राचीशब्दतात्पर्य्यमाह "प्राची प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैने लोकं गम-यति" (सं०६का०।२प्र०।९अ०) इति। कल्पः "आहवनीयात् प्रतीचः त्रीन् प्रक्रमानुच्छ्रित्य, अत्र रमेथामिति नभ्यस्थे स्थाप-यित्वा" इति। नभ्यशब्देन फलकत्रयोपेते चक्रे नाभियुक्तं मध्यम-फलकमुच्यते। तस्मिन् यथा शकटं तिष्ठति तथा स्थापयेत्। प्रा-चीनवंशस्थो यः पुरातन आहवनीयः तस्य इत ऊर्द्ध्वं गार्हपत्यत्वं। आहवनीयस्तूत्तरवेदिस्थ एव तत्रत्यपुरातनगार्हपत्यस्य शाला-मुखीयत्वमिति। तथा च सूत्रं "प्रवर्ग्यमुद्रास्य पशुबन्धवदग्निं प्रण-यत्येष सोमस्याहवनीयो यतः प्रणयति स गार्हपत्य इति"। मन्त्र-पाठस्तु "अत्र रमेथां वर्ष्मन् पृथिव्या" इति। हे शकट देवयज-नाख्ये पृथिव्याः शरीरे उत्तरवेद्याः पश्चिमभागे प्रक्रमत्रयमवशेष्य

यत् स्थानमस्ति अत्र स्थाने क्रीडतं देवयजनरूपाया वेदेः पृथिवीशरीरत्वं। "यदिमामविन्दन्त तद्वेद्यै वेदित्वं" इत्यस्मिन् ब्राह्मणे प्रसिद्धमाह "अत्र रमेथां वर्ष्मन् पृथिव्या इत्याह वर्ष्म ह्येतत् पृथिव्या यद्देवयजनं" (सं० ६ का०।२प्र०।८ अ) इति। कल्पः "दिवो वा विष्णवित्यध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दमनु मेथीं निहन्ति तस्यामीषां निनह्यत्येकमुत्तरस्य प्रति प्रस्थाता विष्णोर्नुकमित्युत्तरस्योत्तरं कर्णातर्दमनु" इति। युगस्य दक्षिणोत्तरभागौ शकटस्य कर्णस्थानीयौ तयोरातर्द ईषाभ्यां सह दृढबन्धनं। दक्षिणबन्धनसमीपे मेथी निखातव्या। मन्त्रौ त्वेवं पठितौ "दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात्। विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः" इति। हे विष्णो द्युलोकाद्वा भूलोकाद्वा महर्लोकाद्वा अन्तरिक्षलोकाद्वा समानीतैर्बहुभिर्धनसमूहैः स्वहस्तौ पूरय। हे विष्णो पूर्णाद्वा दक्षिणात् सव्याच्च हस्तादाप्रयच्छ। बहुकत्व आवृत्या प्रकृष्टं मणिमुक्तादिकं देहि। नुकमित्यव्ययं कर्मवाचकं। विष्णोर्वीर्याणि कर्माणि प्रवोचं ब्रवीमि। कानि तानि कर्माणि। यो विष्णुः पार्थिवानि रजांसि परमाणून् विममे निर्मितवान् परिगणितवांश्च। पुनरपि यो विष्णुः उत्तरं उपरिवर्त्ति सधस्थं देवानां सह वासस्थानं द्युलोकं अस्कभायत् यथाऽधो न पतति तथा स्तम्भितवान्। पुनरपि यस्त्रेधा विचक्रमाणः त्रिषु लोकेषु पदत्रयं

निदधौ उरुभिर्महात्मभिर्गीयते च। मेथ्या निखननं विधत्ते "शिरो वा एतद्यज्ञस्य यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्वदयर्चा दक्षिणस्य हविर्धानस्य मेथीं निहन्ति शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे" (सं०६का०।२प्र०।९अ०) इति। यथा शिरसि चक्षुरादीनि गोलकानि निधीयन्ते तथा हविर्द्रव्याणि शकटे निधीयन्त इति हविर्धानस्य यज्ञशिरस्त्वं। हस्तौ पृणस्वाप्रयच्छेत्याशीर्यस्याः ऋचः पदेषु प्रतीयते सेयमृगाशीर्वदा। यद्यप्येषा मेथीं न प्रकाशयति तथापि वाचनिकोऽत्र विनियोगः। अनेन मन्त्रेण यज्ञशिरसो हविर्धानाद्यजमान आशिषः प्राप्नोति। आच्छादकं विधत्ते "दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमच्छिनद्यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुध्यै" (सं०६का०।२प्र०।९अ०) इति। दण्डो नामकः कश्चिदसुरः उपरनामकस्यासुरस्य पुत्रः वषट्कारेण देवेन सह मैत्रीं कृत्वा तद्द्वारा प्रविश्य तृतीयस्य शकटस्याक्षमच्छिनत् अतस्तृतीयशकटस्य प्रतिनिधित्वेन एकैकस्य शकटस्योर्द्धं तृणादिनिर्म्मितं छदिः स्थापयेत्। तत्र दक्षिणोत्तरपार्श्वयोः परिश्रयणार्थे द्वे छदिषी अपेक्ष्य तृतीयं। अथ शकटे अन्तर्भाव्यहविर्धानाख्यं मण्डपं निर्म्मातव्यं। तत्र दक्षिणशकटात् परतो ग्रहासादनायावकाशं शिष्ट्वा दक्षिणोत्तररूपेण षट्सङ्ख्याकाः स्थूणा निखातव्याः। एवं पश्चाद्भागे षट्स्थूणा निखातव्याः। तयोः स्थूणापङ्क्त्योरुदञ्चौ वंशावादधाति। अत्र कल्पः "तासूदञ्चौ वंशौ

प्रोहत्याध्यस्यति पुरस्ताद्रराटीं, विष्णोरराटमसीति शिरो वा एतद्यज्ञस्य यद्धविर्धानं" इति हविर्धानमण्डपस्य विष्णुदेवताकत्वात् विष्णुत्वं। पूर्व्वद्वारवर्त्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते, तां दर्भमालां तद्बन्धनाधारं तिर्य्यग्वंशं वा सम्बोध्य पुरुषललाटत्वेनोपचरितुं विष्णोरराटमसीत्युच्यते। कल्पः "प्राञ्चो वंशानत्याधाय, विष्णोः पृष्ठमसीति तेषु मध्यमं छदिरध्यूहति अरत्निविस्तरं नवाऽऽयामं" इति। यज्ञपुरुषस्य हविर्धानाख्यं मण्डपं शिरः तत्साम्यं मन्त्रैरुच्यते इत्याह "शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णोरराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतं" (सं० ६का०।२प्र०।८अ०) इति। एका रराटी एकं छदिः द्वौ रराट्यन्ताविति। यावन्तो मण्डपस्य प्रकारा एतावद्धा एतावत्प्रकारं शिरो विश्वकर्म्मणा विशेषेण स्यूतं। शिरस्याच्छादिका त्वगेव छदिः स्थापनीया। कल्पः "पार्श्वयोश्छदिषी निदधाति विष्णोःश्न्यप्त्रस्यः" इति। कल्पः "विष्णोःस्यूरसीत्यध्वर्य्युर्दक्षिणं बाह्यं स्यूत्वा, विष्णोर्ध्रुवमसीति प्रज्ञातं ग्रथिं करोति, वैष्णवमसि विष्णवे त्वेति सम्मितमभिमर्शति" इति। सीव्यते अनया रज्ज्वेति स्यूः। हे बन्धनहेतो त्वं विष्णुदेवताकस्य रज्जुरसि। हे ग्रन्थिरूप त्वं विष्णुसम्बन्धि दृढमसि। हे मण्डप त्वं विष्णुदेवताकमसि अतो विष्णुप्रीतये त्वां स्पृशामि। अत्र विष्णोरिति षष्ठ्या देवतात्वलक्षणः सम्बन्धो विवक्षित इत्याह "विष्णोः स्यूरसि विष्णोर्ध्रुवमसीत्याह वैष्णवꣳ हि देवतया हविर्धानं" (सं० ६का०।२प्र०।८अ०)

इति। प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते "यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं विस्रꣳसयेदमेहेनाध्वर्युः प्रमीयेत तस्मात् स विस्रस्यः" (सं० ६का०।२प्र०।९अ०) इति। अमेहेन मूत्रनिरोधेन। अत्र विनियोगसङ्ग्रहः।

"युञ्जत्वा सुवागत्ते श्वब्द्रश्नेनान्त्वयेत तां।
आनोत्तमङ्ख्याञ्जुहुयात् पर्यारिदमिराद्दयात्॥
प्राची प्रवर्त्त्य शकटे अत्रेति स्थापयेदिमे।
दिवा विष्णोर्द्वयान्मेथ्यावनमो विनिहन्त्युभे॥
विष्णोर्मण्डपनिर्माणं पञ्चभिर्द्वारिवंशकः।
मध्यच्छर्दिर्ललाट्यन्तौ रज्जु स्यूतिश्च बन्धने॥
वैष्ण स्पृशेत् निर्मितं ते मन्त्राः पञ्चदशोदिताः"। इति।

अथ मीमांसा। दशमाध्यायस्याष्टमपादे चिन्तितं।

"विकल्प्यते बाध्यते वाऽऽहवनीयः पदादिभिः।
सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः॥
लिङ्गचोदकवद्बाधो नास्ति तेन विकल्प्यते।
विशेषार्थे लक्षणास्यादतो मुख्येन बाध्यते"॥ इति।

अनारभ्य श्रूयते "यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतः" इति। ज्योतिष्टोमे श्रूयते "पदे जुहोति वर्त्मनि जुहोति" इति। राजसूये श्रूयते "वल्मीकवपामुद्धृत्य जुहोति" इति। तथान्यत्र श्रूयते "गार्हपत्ये पत्नीसंयाजान् जुहोति" इति। तत्रानारभ्य वादेन होमसामान्यमनूद्याहवनीयो विहितः। प्रकरणनियमितैः पदादिवाक्यैस्तदनुबन्धविशिष्टा होमा

विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितः। तत्र पदादिहोमेषु सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते। कुतः। प्रत्यक्षवचनोक्तत्वेन समानबलत्वात्। न चैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यथा श्रुत्या लिङ्गं बाध्यते यथा वा चोदकातिदिष्टानां कुशानामुपदिष्टैः शरैर्बाधः तथा सामान्यस्य विशेषेण बाधोऽस्त्विति चेत्। न। वैषम्यात् लिङ्गं विलम्बितत्वाद्दुर्ब्बलं। चोदकस्यानुमेयतया दुर्ब्बलः। नन्वेवं सामान्यशास्त्रं विलम्ब्यते नाप्यनुमीयते, अतो दौर्बल्याभावाद्विकल्प इति प्राप्ते ब्रूमः। होमसामान्याऽनुवादकं यच्छास्त्रं तत्सामान्ये मुख्यत्वाद्धोमविशेषानुवादे लाक्षणिकतया दुर्बलं, विशेषशास्त्रं तु मुख्यवृत्त्या विधायकत्वात् प्रबलं। न च पदादिशास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकं सत् समानबलं स्यादिति शङ्कनीयं प्रकरणनियमितत्वेन विशिष्टविधायकस्य सामान्यानुवादायोगात्। तस्मात् प्रबलेन विशेषेण सामान्यं बाध्यते। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

"हविर्धाने स्थिता ब्रूयात् सामिधेनीरिहाङ्गता।
हविर्धानस्य तास्वाह तद्देशोऽनेन लक्ष्यते॥
वाक्यैक्यादङ्गता मैवं प्रकृत्या पश्चिमाग्नितः।
देशः प्राप्तो लाघवेन लक्ष्यः शकटसन्निधिः"॥ इति।

ज्योतिष्टोमे श्रूयते "उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति। हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागावस्थितयोर्हवि-

धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दा-भ्यामभिधीयते तत्समीपे सोमस्य अभिषवः। उतेत्ययं श-ब्दोऽयं शब्दार्थे वर्त्तते। अथ यस्मिन् हविर्धाने सोममभिषु-ण्वन्ति तस्मिन् सामिधेनीरनुब्रूयुरित्यर्थः। इह दक्षिणस्य ह-विर्धानस्य सामिधेनीष्वङ्गत्वं प्रतीयते। न चात्रार्धमन्तर्वेदि-मिनोत्यर्धं बहिर्वेदीत्युदाहरण इव वाक्यभेदे दोषः शङ्कितुं शक्यः एकवाक्यतायाः स्पष्टप्रतिभासादिति प्राप्ते ब्रूमः। सा-मिधेनीनामिष्ट्यङ्गतया दर्शपूर्णमासावत्र प्रकृतिः। प्रकृतौ चा-हवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानं। इहोत्तरवे-देराहवनीयत्वात् तदपेक्षया हविर्धानस्य पश्चिमदेशेऽवस्थानात् सदेशस्योदकेन प्राप्त इति न देशस्य सामिधेन्यङ्गत्वं विधातव्यं, किन्तु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमप्राप्तौ दक्षि-णस्य हविर्धानस्य समीपदेशं नियन्तुं हविर्धानेन सन्निधिर्ल-क्ष्यते। तथा सति नियममात्रविधानाल्लाघवं भवति। लक्ष्ये त्वभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तं सामि-धेन्यङ्गत्वं विधीयत इति गौरवं। तस्माद्देशलक्षणा। द्वादशाध्या-यस्य प्रथमपादे चिन्तितं।

"हविर्धानोर्ध्वकाले किमोषधार्थमनोऽन्तरं।

नास्त्यस्ति वा न शक्यत्वाद्देशभेदादितोऽन्तिमः"॥ इति।

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्त्तनादूर्ध्व-मौषधद्रव्यकाणां पुरोडाशादीनां निर्वापाय तयोरेव शक्य-त्वान्न शकटान्तरमन्वेष्यमिति चेत्। न। देशभेदात् महावेद्यां

मन्त्रपूर्व्वकं प्रवर्त्त्य हविर्धानमण्डपे हविर्धानाख्ये शकटे स्थापिते निर्व्वापस्तु मुख्यगार्हपत्यात् पश्चिमे देशे। किञ्च अस्त्यत्र तृतीयं शकटं, अनांसि प्रवर्त्तयन्तीति बहुवचनोक्तेः, तस्माच्छकटान्तरे निर्व्वापः।

अथ छन्दः। युञ्जते मन इति जगती। आमोवीर इति विराट् गायत्री। इदं विष्णुरिति गायत्री। इरावतीति त्रिष्टुप्। प्राचीप्रेतमिति द्विपात् त्रिष्टुप्। अत्र रमेथामित्येकपदा विराट्। दिवो वा विष्णोर्नुकमिति त्रिष्टुभौ ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ ० ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः। तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः। तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः। प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरे अघशꣳसः ॥ १ ॥ यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्। उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राꣳ ओषतात् तिग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं

न शुष्कं । ऊर्ध्वो भव प्रतिविध्याऽध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् । स ते ॥ २ ॥

जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् । सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः । अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतां ॥ ३ ॥

इयं गीः । स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनुद्यून् । इह त्वा भूर्याचरेदुप त्मन् दोषावस्तर्दीदिवाꣳसमनुद्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानां । यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषक् जुजोषत् । महो रुजामि ॥ ४ ॥

बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः । अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अ-

अमिष्टाः । ते पायवः सध्रियञ्चो निषद्याऽग्ने तव नः
पान्त्वमूर । ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धं
दुरितादरक्षन् । ररक्ष तान् सुकृतो विश्ववेदा दिप्सन्त
इद्रिपवो नाह ॥ ५ ॥

देभुः । त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम
वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणु-
ह्यह्रयाण । अया ते अग्ने समिधा विधेम प्रतिस्तोमꣳ
शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान् द्रुहो
निदो मित्रमहो अवद्यात् । रक्षोहणं वाजिनमाजि-
घर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः
क्रतुभिः समिद्धः स नो दिवा ॥ ६ ॥

सरिषः पातु नक्तं । वि ज्योतिषा बृहता भात्यग्नि-
राविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः स-
हते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे । उत स्वा-
नासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।
मदे चिदस्य प्ररुजन्ति भामा न वरन्ते परिबाधो अ-
देवीः ॥ ७ ॥

अघशꣳसः स ते जरताꣳ रुजामि ह दिवैकचत्वा-
रिꣳशच्च ॥ १४ ॥

आप उन्दन्त्वाकूत्यै दैवीमियं ते वस्व्यस्यꣳमुना ते सोमं त उदायुषा प्रच्यवस्वाग्नेरातिथ्यमꣳमुरꣳमुर्विन्नायनीमेसि युञ्जते कृणुष्वपाजश्चतुर्दश ॥ १४ ॥

आपो वस्व्यसि यातवेयंगीश्चतुस्त्रिꣳशत् ॥ ३४ ॥

हरिः ॐ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥

त्रयोदशेऽनुवाके हविर्धानमण्डपनिर्म्माणमुक्तं। यद्यपि नैतावता किञ्चित् प्रमेयं परिसमाप्तं तथाप्यध्यापकसम्प्रदायपरम्परया प्रपाठक उत्तरानुवाके समाप्यते इत्यन्तिमानुवाकत्वाच्चतुर्दशे काम्या साभिधेन्यः पुरोऽनुवाक्या याज्याश्चोच्यन्ते। तत्रेष्टिकाण्डे भ्रातृव्यत्येष्टेरूर्ध्वं राक्षोघ्नेष्टिरेवमाम्नायते "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोपधावति स एवास्माद्रक्षाꣳस्यपहन्ति" (सं०२का०।२प्र०।२अ०) इति। सचेरन् समवेयुः बाधेरन्नित्यर्थः। मध्यरात्रिकालं विधत्ते "निशितायां निर्वपेन्निशितायाꣳ हि रक्षाꣳसि प्रेरते सम्प्रेर्णान्येवैना निहन्ति" (सं०२का०।२प्र०।२अ०) इति। प्रेरते प्रकर्षेण चरन्ति। अतस्तस्यां वेलायां निर्वापेण प्रचारवन्त्येवैनानि रक्षांसि हन्ति। यागभूमेः परितो वेष्टनं विधत्ते "परिश्रिते याजयेद्रक्षसामनन्ववचाराय" (सं०

१का०।२प्र०।२अ०) इति। अनुप्रवेशाभावायेत्यर्थः। रक्षोहणं वाजिनं विज्योतिषा हृहतेत्येतौ मन्त्रौ। विधत्ते "रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳस्तृत्यै"(सं०२का०।२प्र०।२अ०)इति। हिंसार्थमित्यर्थः। अस्यामिष्टौ कृणुष्व पाज इत्यनुवाकः कृत्स्नोऽपि विनियुक्तः। तस्मिन्नृचोऽष्टादश, तासु पञ्चदशसामिधेन्यः, एका पुरोऽनुवाक्या, द्वे याज्ये विकल्पिते इति। तत्रेयं प्रथमा "कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः"इति। कृणुष्व कुरुष्व। पाजः बलं। प्रसितिं न मृगबन्धनहेतुभूतपाशामिव पृथ्वीं प्रसारितां। अमवान् अमात्ययुक्तः। इभेन हस्तिना तृष्वीं क्षिप्रगामिनीं प्रसितिं प्रकृष्टसेनां द्रूणानो हिंसन्। अस्ता क्षेप्ता धावयिता रक्षसो राक्षसान् तपिष्ठैरतिसन्तापकैर्बाणैः। हे अग्ने मृगबन्धनाय प्रसारितां पाशामिव रक्षोनिरोधाय प्रौढं बलं कुरु। अमात्ययुक्तो गजेन सहितो राजेव रक्षसामुपरि याहि। क्षिप्रगामिनीं परकीयसेनां अनु पृष्ठतो गत्वा मारयन् अवशिष्टाया धावयिता भव पलायमानानपि राक्षसान् बाणैस्तीक्ष्णैर्विध्य॥ १॥

अथ द्वितीया "तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः। तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः"इति। भ्रमासो भ्रमणशालिनो विस्फुलिङ्गान्। असन्दितोऽखण्डितः। आशुया शीघ्रगामिनः। धृषता धार्ष्ट्येन। शोशुचानो भृशन्दीप्यमानः। तपूꣳषि सन्तापान्। पतङ्गान् पतनशीलान्। विसृज विशेषेणोत्पादय। विष्वक् सर्वतः। उल्का महाज्वालाः। हे

अग्ने तव सम्बन्धिनो विस्फुलिङ्गाः शीघ्रगामिनः सर्वतः पतन्ति। त्वमपि भृशं दीप्यमानः। तैर्विष्फुलिङ्गैस्तानसुरान् धार्ष्ट्येन अत्यन्तगाढं अनुस्पृश। पुनरपि जुह्वा हुतेन हविषा त्वमविच्छिन्नः सन् सन्तापान् विष्फुलिङ्गान् महाज्वालाश्चासुरबाधनाय सर्वतो बाहुल्येन उत्पादय॥ २॥

अथ तृतीया "प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरे अघशꣳसः यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्" इति। स्पशः पाशान्। तूर्णितमोऽतित्वरितः। पायुः पालयिता। विशः प्रजायाः। अदब्धः केनाप्यहिंसितः। अघशꣳसो विचित्रबधकारी। अन्ति समीपे। माकिष्टे व्यथिः व्यथां माकार्षीः। आदधर्षीत् स सर्वतो धृष्टो भवतु। हे अग्ने चित्रबधकारी राक्षसो योऽस्माकं वैरी दूरे वर्तते यश्चान्तिके तं प्रति त्वमभित्वरितो बन्धहेतून् पाशान् विविधान् सृज, केनाप्यहिंसितस्त्वमस्मदधीनाया अस्याः प्रजायाः पालको भव, कोऽपि व्यथयिता राक्षसः ते समीपे सर्वत्र धृष्टो मैव भवतु॥ ३॥

अथ चतुर्थी "उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राꣳ ओषतात् तिग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कं" इति। हे अग्ने त्वमुत्तिष्ठ शत्रून् प्रति सर्व्वतः प्रवर्त्तस्व। हे तीक्ष्णायुध त्वं अमित्रान् नितरां दह। हे समिध्यमान वह्ने योऽस्माकं हन्तुं शत्रुत्वञ्चक्रे कृतवान् तं नीचा कृत्वा शुष्कं अतसं न शुष्कं काष्ठमिव भस्मीकुरु॥ ४॥

अथ पञ्चमी "ऊर्द्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्या-

न्यग्ने। अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्" इति। हे अग्ने त्वमूर्द्धो भव उद्युक्तो भव। अस्मदधि अस्माकमुपरि ये शत्रवः संवृत्ताः तान् प्रति विध्य। हे अग्ने दैव्यानि वीर्य्याणि आविष्कुरु। यातुजूनां यातुधानानां स्थिराणि वीर्य्याण्यवनमतानि यथा भवन्ति तथा तनुहि कुरु। जामिं पुनः पुनस्ताडितः अजामिमताडितस्ताद्दृशान्सर्व्वान् प्रमृणीहि मारय॥ ५॥

अथ षष्ठी "स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्य्यो वि दुरो अभि द्यौत्" इति। हे यविष्ठ युवतम यो यजमानः ईवते स्वगृहं प्रति गमनवते ब्रह्मणे परिवृढाय तुभ्यं गातुं हविर्लक्षणमन्नमैरत् प्रददाति स एव यजमानस्त्वदनुग्रहयुक्तां सुमतिं जानाति। त्वमप्यर्य्यः स्वामी भूत्वा रायो धनानि द्युम्नानि यशांसि दुरो गृहांश्चाभिलक्ष्यास्मै यजमानाय विश्वानि सुदिनानि यथा भवन्ति तथा द्यौत् प्रकाशय अनुगृहाण॥ ६॥

अथ सप्तमी "सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः" इति। हे अग्ने यो यजमानः स्व आयुषि यावज्जीवं दुरोणे स्वगृहे नित्येन प्रतिदिनमनुष्ठेयेन हविषा त्वां पिप्रीषति प्रीणयितुमिच्छति यश्चोक्थैः शस्त्रैः पिप्रीषति स एव सुभगः सौभाग्यवान् सुदानुः शोभनदानवानप्यस्तु अस्मै अस्य यजमानस्य सा सर्व्वापीष्टिः सुदिनैवासत् भवति॥ ७॥

अथाष्टमी "अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः। स्वश्वास्त्वा सुरथामर्जयेमास्मे चत्राणि धारयेरनुद्यून्" इति। हे अग्ने तव सुमतिं अनुग्रहरूपामर्चामि मनसा पूजयामि। अर्वाक् अर्वाचीनापि घोषी घोषवती इयं स्तुतिरूपा मदीया गीः वावाता पौनःपुन्येन प्रसृता ते त्वयि सम्यक् जरतां जीर्य्यतां त्वां विहायान्यत्र मा गच्छतु। वयन्तु त्वत् प्रसादाच्छोभनैरश्वैः रथैश्च युक्ताः सन्तः त्वामर्जयेम सेवेमहि। त्वमप्यनुद्यून् अनुदिनं अस्मे अस्मासु चत्राणि सामर्थ्यानि धारयेः धारय ॥ ८॥

अथ नवमी। "इह त्वा भूर्य्याचरेदुपत्मन् दोषावस्तर्दीदिवाꣳसमनुद्यून्। क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानां" इति। हे अग्ने इहास्मिन् लोके श्रेयोऽर्थी पुरुषः त्वामेव भूरि बाहुल्येन सर्व्वत उपचरेत् त्मन् आत्मनि स्वनिमित्तं। कीदृशं त्वां। दोषावस्तर्दीदिवांसं रात्रिं दिवं दीप्यमानं। कियन्तंकालमुपचारः। अनुद्यून् अनुदिनं। तस्मात् वयं क्रीडन्तो हृष्टमनसः त्वां सपेम सङ्गच्छेम भजेम। किं कुर्व्वन्तः। जनानां मध्ये द्युम्नानि धनान्यभितस्थिवांसः त्वत्प्रसादादधिष्ठितवन्तः ॥ ९ ॥

अथ दशमी "यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन। तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषक् जुजोषत्" इति। हे अग्ने त्वत्प्रसादाच्छोभनैरश्वैः समीचीनेन हिरण्येन च युक्तो यो यजमानो हविस्स्वरूपधनवता

रथेन सह त्वामुपयाति तस्य त्वं त्राता भवसि। किञ्च यस्त्वातिथिसत्कारमानुषक् प्रतिदिनं जुजोषत् प्रीतिपुरःसरं करोति तस्य त्वं सखिवत् स्वाधीनो भवसि॥ १०॥

अथैकादशी "महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय। त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः" इति। हे अग्ने बन्धुता त्वदीयबन्धुत्वेन महोऽसुराणां तेजोविक्षेपरूपैर्वचोभिरेव रुजामि भञ्जयामि। तत्त्वदीयं बन्धुत्वं गोतमात् गोतमसदृशाध्यापकात् पितुर्मामनु इयाय प्राप। हे होतर्देवानामाह्वातः यविष्ठ युवतम सुक्रतो शोभनक्रतो यागनिष्पादक दमूना दान्तमनाः त्वं नोऽस्मदीयस्यास्य वचसोऽधीतवेदस्य रहस्यं चिकिद्धि जानासि॥ ११॥

अथ द्वादशी "अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः। ते पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर" इति। हे अग्ने तव ते रश्मयो नोऽस्मान् पान्तु। त्वदीयास्तथाविधा रश्मयोऽस्मान् पालयन्तु। अमूरेत्यग्नि विशेषणं। मूर्मूर्च्छा तद्वान् मूरः ततोऽन्यत्वादमूरः तस्य सम्बोधनं। कीदृशास्ते रश्मयः। स्वप्नजन्मानो मिथ्याभूता न भवन्ति इत्यस्वप्नजः। व्यत्ययेनैकवचनं। तरणयो दुरितरूपं तमस्तारयन्ति। सुशेवाः सुखेन सेवितुं शक्याः। अतन्द्रासो अप्रमत्ताः। अवृकाः अहिंसकाः। अश्रमिष्ठाः अमरहिताः। पायवः पालकाः। सध्रियञ्चः सह प्रवर्त्तमानाः। निषद्य यागप्रदेशे स्थित्वा॥ १२॥

अथ त्रयोदशी "ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं

दुरितादरक्षन्। ररक्ष तान् सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः” इति। हे अग्ने तव सम्बन्धिनः पालका ये रश्मयः ममताख्यायाः कस्याश्चिद्योषितो पुत्रं कञ्चिदन्धं पश्यन्तो दुरितादान्ध्यलक्षणादरक्षन्। इयं त्वाख्यायिका क्वापि ब्राह्मणान्तरे द्रष्टव्या। विश्वं वेत्तीति विश्ववेदाः। तादृशो भवान् सुकृतः शोभनकर्म्मकारिणः तान् रश्मीन् ररक्ष। रिपवो राक्षसास्ते तान् दिप्सन्त इत् परिभवितुमिच्छन्तोऽपि नाह देभुः नैव परिबभूवुः ॥ १३ ॥

अथ चतुर्दशी “त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान्। उभा शꣳसा सूदय सत्यताते ऽनुष्ठुया कृणुह्यऽह्रयाण” इति। हे अग्ने वयं तव प्रणीती प्रेरणया वाजानन्नान् अश्याम। कीदृशा वयं। त्वया सधन्यः सह यज्ञकर्म्म नयन्तीति सधन्यः। त्वोतास्त्वया रक्षिताः। हे सत्यताते सत्यविस्तारक उभा शꣳसा त्वदग्रेऽस्माभिः शंसनीयौ ऐहिकामुष्मिकपुरुषार्थावुभौ सूदय रक्ष। हे अह्रयाण भक्तानां अलज्जाकर अनुष्ठुया कृणुहि शोभनानुष्ठानेन तावुभौ कुरु ॥ १४ ॥

अथ पञ्चदशी “अया ते अग्ने समिधा विधेम प्रतिस्तोमꣳ शस्यमानं गृभाय। दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात” इति। हे अग्ने अया समिधा अनया सामिधेन्या ते त्वां विधेम परिचरेम। अस्माभिः शस्यमानं स्तोमं स्तोत्रं प्रतिगृभाय प्रतिगृहाण। अशसो अप्रशस्तान् रक्षसो राक्षसान् दह। मित्रमुपकारकं महस्तेजो यस्यासौ मित्रमहः।

हे मित्रमह द्रुहो वैरिकृतात् द्रोहात् निदो निन्दायाः अव-द्यात् अशास्त्रीयानुष्ठानदोषाच्चास्मान् पाहि ॥ १५ ॥ इति पञ्चदशसामिधेन्यः ॥ ० ॥

अथ षोडशी। सा तु पुरोऽनुवाक्या "रक्षोहणं वाजिनमाजिघर्म्मि मित्रं प्रथिष्ठमुपयामि शर्म्म। शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तं" इति। रक्षसां हन्तारं अन्नवन्तं अग्निं आभिमुख्येन दीपयामि। जगतां मित्रं प्रथिष्ठं विस्तीर्णतमं शर्म्म शरणमुपयामि भजामि एतदादिभिः क्रतुभिः। समिद्धः संज्वलितः शिशानस्तीक्ष्णः सोऽग्निर्देवो रिषः हिंसकादस्मान् पातु। स एव नक्तमपि पातु ॥ १६ ॥

अथ सप्तदशी। सा तु याज्या "वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा। प्राऽदेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे" इति। अयमग्निर्बृहता ज्योतिषा विभाति। विश्वानि महित्वा माहात्म्येनाविष्कुरुते। अदेवीरासुरीर्दुरेवा दुरत्यया मायाः प्रसहते विनाशयति। रक्षसे राक्षसान् विनिक्षे विनाशयितुं शृङ्गे द्वे ज्वाले शिशीते तीक्ष्णीकरोति ॥ १७ ॥

अथाष्टादशी। सा तु विकल्पिता याज्या "उत स्वानासो दिविषन्त्वग्नेस्तिग्मायुधा रक्षसे हन्त वा उ। मदेचिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः" इति। तिग्मं तीक्ष्णं त्वमेवायुधं येषां रश्मीनां ते तिग्मायुधाः। ते तव स्वानासः अनेन पुरोडाशेन ध्वनिं कुर्व्वन्तः। तादृशा अग्नेः रश्मय उत दिविषन्तु

द्युलोकेऽपि प्रसरन्तु। किमर्थं। रक्षसे हन्तवा उ राक्षसान् हन्तुमेव अस्य अग्नेर्भामा भामो रश्मयो मदे चित् अस्मद्धर्षायैव प्ररुजन्ति प्रतिपक्षिणो भञ्जयन्ति। अदेवीः आसुर्यः परिबाधः सर्व्वतः कृताः बाधाः न वरन्ते नैवास्मानावृण्वन्ति। अत्र षोडशी विकल्पिता सामिधेनी। तेन षोडशसामिधेन्य इत्यपि पक्षः। उत्तरे याज्यानुवाक्ये इति केचित्। तथा वा अस्तु।

अत्र विनियोगसङ्ग्रहः।

"कृणुराक्षोघ्नके यागे सामिधेन्यस्तु षोडश।

याज्यानुवाक्ये द्वे अष्टादशमन्त्रा इहोदिताः" ॥ इति।

मीमांसा तु। उभावामिन्द्राग्नी इत्यत्रैव सर्व्वत्र याज्याकाण्डे योजनीया। छन्दोऽपि सर्व्वासामृचामत्र त्रिष्टुभेव।

"वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीविद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहीपालस्याज्ञापरिपालकेन माधवाचार्य्येण विरचिते वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ ० ॥

समाप्तश्च प्रपाठको द्वितीयः ॥

ॐ तत्सत्

श्रीसरस्वत्यै नमः ॥

# अथ तैत्तिरीयसंहिताभाष्ये

## प्रथमकाण्डे तृतीयप्रपाठकः ।

हरिः ॐ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ऽभ्रिरसि नारिरसि परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषः ॥ १ ॥

यवयाऽरातीः पितृणाꣳ सदनमस्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳह द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्म्मणा ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्य्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह घृतेन द्यावापृथिवी आपृणेथामिन्द्रस्य सदोऽसि विश्वजनस्य छाया परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धा-

युमनुवृङ्क्या जुष्टा भवन्तु जुष्टय इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमस्यैन्द्रमसीन्द्राय त्वा ॥ द्वेष इमा अष्टादश च ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥

श्रीवेदव्यासाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

द्वितीये प्रपाठके सोमक्रयं प्राधान्येन प्रतिपाद्य ततो हविर्धानमण्डपनिर्माणपर्य्यन्तं कर्मजातं प्रतिपादितं। अथ तृतीयेऽस्मिन् प्रपाठके अग्नीषोमीयपशुः प्राधान्येन प्रतिपाद्यते। आदौ तावत् पूर्व्वशेषः सदोमण्डपनिर्माणादिः प्रतिपाद्यते। तत्र अनुवाकार्था विनियोगसङ्ग्रहकारेणाभिहिताः।

"पशुप्रश्ने तृतीयेऽस्मिन् अनुवाकाश्चतुर्दश।
सदश्चोपरवा धिष्ण्या वैसर्जनहुतिस्तथा ॥
यूपच्छेदस्तत्प्रतिष्ठा पशूपाकृतिहिंसने।
वपोत्खेदो वपाहोमो गुदकाण्डाहुतिस्तथा ॥
वसतीवर्य्युपादानं सोमोपावहृतिस्तथा।
काम्ययाज्या इति प्रोक्ता अर्था अत्रानुवाकगाः"॥ इति।

कल्पः "अथाध्वर्य्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य शालामुखीयाच्छङ्कोरनुस्पन्द्यां षट् प्राचः प्रक्रमान् प्रक्रामति, दक्षिणा सप्तमं

तत्राभ्रिं निदधाति स औदुम्बर्य्यै कालः औदुम्बर्य्यै कालादभ्रिमादत्ते, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे" इति। अभ्यादानं विधत्ते "देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्य्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै"(सं० ६का०।२प्र०।१०अ०) इति। कल्पः "आदायाभिमन्त्रयते, अभ्रिरसि नारिरसि" इति। खननसाधनभूता काष्ठमयी तीक्ष्णमुखाग्रा अभ्रिरित्युच्यते। यद्यपि त्वमभ्रिरसि तथाप्यस्मान् प्रति नारिः अशत्रुरसि। नारिशब्दप्रयोजनमाह "वज्र इव वा एषा यदभ्रिरसि नारिरसीत्याह शान्त्यै" (सं०६का०। २प्र०।१०अ०) इति। कल्पः "तयौदुम्बर्य्या अवटं परिलिखति, परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि" इति। परिलेखनप्रयोजनमाह "काण्डे काण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति"(सं० ६का०।२प्र०।१०अ०)इति। बोधायनः "उदुम्बर्य्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटात् उपशेते तां पुरस्तादर्वाचीं प्रोक्षति,दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा" इति। आपस्तम्बः "दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै

त्वेति मूलं" इति। प्रोक्षामीत्यध्याहारः। औदुम्बरीभागानां लोकत्रयात्मकत्वं मन्त्रेणाभिप्रेतमित्याह "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति" (सं०६का०।२प्र०।१०अ०) इति। अग्रमारभ्य मूलपर्यन्तं प्रोक्षणं विधत्ते "परस्तादर्वाचीं प्रोक्षति तस्मात् परस्तादर्वाचीं मनुष्या ऊर्जमुपजीवन्ति" इति। ऊर्द्ध्ववर्त्तिनो मुख्यादारभ्यार्वाचीमुदरावसानं। कल्पः "अवटेऽपो निनयति, शुन्धतां लोकः पितृषदन इति। पितरः सीदन्त्यस्मिन्निति पितृषदनोऽवटाख्यो लोकः शुद्धो भवतु। अपोपनयनं विधत्ते "क्रूरमिव वा एतत् करोति यत् खनत्यपोऽवनयति शान्त्यै" (सं०६का०।२प्र०।१०अ०) इति। कल्पः "यवान् प्रस्कन्दयति, यवोऽसि यवयास्मद्द्वेषो यवयाऽरातीः" इति। हे धान्य त्वं यवोऽसि अमिश्रीकर्त्तासि। अतो द्वेषिणो राक्षसानितरानपि शत्रूनस्मत्तो वियोजय। पूर्व्वोक्तास्वप्सु यवप्रस्कन्दनं विधत्ते "यवमतीरवनयत्यूर्ग्वै यव ऊर्गुदुम्बर ऊर्जैवोर्ज॑ समर्द्धयति" (सं०६का०।२प्र०।१०अ०) इति। उदुम्बर्य्या निखातभागादूर्द्ध्वभागे प्रमाणं विधत्ते "यजमानेन संमितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति" (सं०६का०।२प्र०।१०अ०) इति। यजमानस्य यावत्पर्य्याप्तं तावदन्नं भवतीत्यर्थः। कल्पः "बर्हिर्हस्तं व्यतिषज्यावस्तृणाति, पितृणा॑ सदनमसि" इति। बर्हिर्हस्तो बर्हिर्मुष्टिः। हे बर्हिः पितृणां स्थानमसि। विधत्ते "पितृणा॑ सदनमसीति बर्हिरवस्तृणाति पितृदेवत्या१॑ ह्येतद्यन्निखातं" (सं०६का०।२प्र०।१०अ०)

इति। निखातस्य पितरो देवतेत्यर्थवादान्तरादवगन्तव्यं। कल्पः "अथैनामुच्छ्रयति, उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳह" इति। हे उदुम्बरि द्युलोकमूर्द्धदेशे विधारय अन्तरिक्षं पूरय पृथिवीं दृढीकुरु। उच्छ्रयणं विधत्ते "यद्बर्हिरनवस्तीर्य्य मिनुयात् पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य्य मिनोत्यस्यामेवैनां मिनोत्यथो स्वारुहमेवैनां करोति" (सं०६का०।२प्र१०अ०) इति। यदि बर्हिरस्तीर्त्वा प्रथमत एव तामुच्छ्रयेत् तदा पितॄणां निखातं मनुष्याणामूर्ध्वं निखातादित्ययं विभागो न स्यात्, किन्तु कृत्स्नाऽपि पितृदेवत्यैव स्थापिता भवेत्। बर्हिषः पृथिवीजन्यत्वेन तत्पितृदैवत्यमेवं कृतं भवति। किञ्च स्वसम्बद्धामेवैनां करोतीति नोक्तदोषः। मन्त्रे दिवमित्यादिपदानां उपयोगमाह "उद्दिवꣳ स्तभानान्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै" इति। कल्पः "अथैनां प्राचीनकर्णामुच्छ्रितामवटे प्रक्षिपेत्, द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा" इति। हे औदुम्बरि मित्रावरुणयोः सम्बन्धिना दृढेन त्वदीयधारणेन इतस्ततः पतितां त्वां मरुत्पुत्रो द्युताननामको देवोऽवटे प्रक्षिपतु। इतरपरित्यागेन द्युतानस्वीकारकारणमाह "द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवैनां मिनोति" (सं०६का०।२प्र०।१०अ०) इति। कल्पः "अथैनां प्रदक्षिणं पुरीषैः पर्यूहति, ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि" इति। ब्रह्म ब्राह्मणजातिं वनति

भजतीति ब्रह्मवनिः। हे औदुम्बरि ब्रह्मदेवतां ब्राह्मणादिप्रदां त्वां परितो मृत्तिकां प्रक्षिपामि। मन्त्रस्य स्पष्टार्थतां दर्शयति "ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथा यजुरेवैतत्" (सं० ६ का०। २ प्र०।१० अ०) इति। कल्पः "मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह" इति। हे दण्ड ब्राह्मणादीन् दृढीकुरु। मन्त्रोऽयं ब्राह्मणेनोपेक्षितः। कल्पः "तस्या विशाखे हिरण्यं निधाय, घृतेन द्यावापृथिवी आपृणेथामिन्द्रस्य सदोऽसि विश्वजनस्य छायेति स्रुवेण हिरण्ये जुह्वा आन्तमौदुम्बरीमन्ववस्रावयति" इति। हे द्यावापृथिवीरूपे औदुम्बर्या अग्रमूले घृतेनानेन समन्तात् तर्पयेथां। विधत्ते "घृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसेनानक्ति" (सं० ६ का०।२ प्र०।१० अ०) इति। अग्रे हुतस्याज्यस्य मूलपर्यन्ततां विधत्ते "आन्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसाऽनक्ति"(सं० ६ का०।२ प्र०।१० अ०)इति। यजमानस्य शिर आरभ्य पादपर्यन्तं तेजः सम्पादितं भवति। बोधायनः "यस्या उच्छ्रयणमनु प्राचीनकर्णाः स्थूणा उच्छ्रयन्ति तस्योदीचो वंशान् प्रोहन्त्यध्यस्यन्ति, मध्यमं छदिरिन्द्रस्य सदोऽसीति, विश्वजनस्य छायेत्यभितो भवतः" इति। आपस्तम्बः "उदीचः प्राञ्चश्च वꣳशानत्याधाय ऐन्द्रमसीति तेषु मध्यमानि त्रीणि छदीꣳष्यध्यूहति, विश्वजनस्य छायेति त्रीणि दक्षिणानि, इन्द्रस्य सदोऽसीति त्रीण्युत्तराणि" इति। ऐन्द्रमसीति शाखान्तरेऽवगतो मन्त्रः। उत्तरयोर्मन्त्रयोरत्रैवाम्नातयोर्ब्राह्म-

णान्तरानुसारेण क्रमव्यत्ययः। विधत्ते "ऐन्द्रमसीति छदिरधिनिदधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यत्सदो नव छदि" (सं०६का०।२प्र०।१०अ०) इति। इन्द्रस्य सदोऽसीत्ययं मन्त्र उपेचितः। सदःसंस्थानां कामनाभेदेन छदिषां सङ्ख्यां विधत्ते "तेजस्कामस्य मिनुयात् त्रिवृता स्तोमेन सम्मितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादश छदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदश छदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदश छदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशति छदि प्रतिष्ठाकामस्यैकविꣳशस्तोमानां प्रतिष्ठा प्रतिष्ठित्यै" (सं०६का०।२प्र०।१०अ०) इति। नवसङ्ख्याकानि छदींषि यस्य सदः तन्नवछदि मिनुयात् कुर्यात्। त्रिवृत्पञ्चदशसप्तदशैकविꣳशशब्दैः साम्नां आवृत्तिभेदेन निष्पन्नाः स्तोमा उच्यन्ते। त्रिवृत् स्तोमे सामावृत्यभावेऽपि ऋचां नवत्वात् सङ्ख्या साम्यं। प्रजापतिमुखादग्निना सहोत्पन्नतया त्रिवृतस्तेजस्त्वं। वीर्य्यवतः प्रजापतिबाहुत उत्पन्नतया पञ्चदशस्य वज्रत्वं। आश्रावयेत्यादिमन्त्राक्षराणां प्रजापतिस्वरूपाणां सङ्ख्यायाः समत्वात् सप्तदशस्य प्रजापतित्वं। त्रिवृदादीनामन्तर्भावेन एकविꣳशस्य प्रतिष्ठात्वं। औदुम्बरीस्थापनस्य सदोमण्डपमध्यप्रदेशं विधत्ते "उदरं वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरीं मिनोति मध्यत एव प्रजानामूर्जं दधाति तस्मात् मध्यत ऊर्जा भुञ्जते" (सं०६का०।२प्र०।१०अ०) इति।

दक्षिणदिग्गतच्छदिषामग्राण्युत्तरदिग्गतच्छदिषामुपरि दृश्यमानतया स्थापनीयानीति विधत्ते "यजमानलोके वै दक्षिणानि छदीꣳषि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः" (सं०६का०।२प्र०।१०अ०) इति। लोके स्थाने। उत्तर उत्कृष्टः। छदिषामन्तरालच्छिद्रेषु तृणपूतैः पिधानं विधत्ते "अन्तर्वर्त्तान् करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उपजीवन्ति" (सं०६का०।२प्र०।१०अ०) इति। पूलानां विलक्षणत्वाच्छदिर्भ्यो व्यावृत्तिर्भवति। यस्मात् तृणमरण्यजन्यं तस्मात् तृणकाष्ठलाभाय प्रजा अरण्यमुपजीवन्ति। कल्पः "अथैनान् परिश्रयन्ति, परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टय" इति। गीर्भिः स्तुतिभिः वननीयो भजनीय इन्द्रः सदोऽभिमानी गिर्वणः। हे गिर्वण इमाः स्तोत्रशस्त्ररूपा गिरः सर्वतः कटरूपेण त्वां परिभवन्तु वेष्टयन्तु। कीदृश्यः। दीर्घायुषं त्वामनु स्वयमपि वृद्धिमत्यः। किञ्च। जुष्टयः अस्माभिः सेवितास्तव जुष्टाः प्रिया भवन्तु। मन्त्रस्य स्पष्टार्थतां दर्शयति "परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैतत्" (सं०६का०।२प्र०।१०अ०) इति। कल्पः*

---

* कल्पः इत्यारभ्य व्याचष्टे। एतावत्पर्यन्तं ४५२।४५३ पृष्ठद्वये किञ्चिन्न्यूनपङ्क्तिपञ्चकात्मकग्रन्थस्य काशीस्थपुस्तकद्वये विद्यमानेऽपि इण्डिया आफिस पुस्तके अभावात् विशेषतः ग्रन्थपर्यालोचनायामपि शुद्धाशुद्धसन्देह इति कृत्वा यथाप्रति संस्थापितस्तत्रत्यग्रन्थः।

"अथ दक्षिणद्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं करोति प्रवर्त्तयति, दर्भणे स्थन्द्यामिन्द्रस्य स्यूरसीति इन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति तं तदानीमेव विस्रस्याहाकुर्वन्तो हस्तान् ग्रन्थकौशलैर्निस्तिष्ठन्ति एवमेवोत्तरं द्वार्बाहुमेवमेवापरौ द्वार्बाहू निस्तिष्ठन्तीति व्याख्यातं हविर्धानेन। व्याचष्टे। इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्यैन्द्रꣳ हि देवतया सदः" (सं०६का०।२प्र०।१०अ०) इति। प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते "यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत् तं न विस्रꣳसयेदमेहेनाध्वर्य्युः प्रमीयेत तस्मात् स विस्रस्यः"(सं० ६का०।२प्र०।१०अ०) इति। अत्र विनियोगसङ्ग्रहः।

"देवस्येत्यभ्रिमादत्ते ह्यभ्रिरित्यनुमन्त्रणं।
परीत्यावटमालिख्य दिवेऽग्रे मध्यमूलयोः॥
प्रोक्षेदौदुम्बरी शुन्धश्शेषो गर्त्तेऽवनीयते।
यवो यवं क्षिपेत् तत्र पितृदर्भेण संस्तृतिः॥
उदौदुम्बर्य्युच्छ्रयोऽथ द्युता तामवटे क्षिपेत्।
ब्रह्म पांसु क्षिपेद्गर्त्ते ब्रह्म तत्र दृढीकृतिः॥
घृतेनौदुम्बरीहोममिन्द्रविश्वद्वयाद्विशोः।
छदींष्यधूह्य कर्त्तव्यः परि त्वेति परिश्रयः॥
इन्द्ररज्जुं क्षिपेदिन्द्र बध्वैन्द्रमिति मण्डपं।
स्पृशेद्धस्तेन मन्त्रास्तु विंशतिः समुदीरिता"॥ इति।

अथ मीमांसा। तृतीयाध्यायस्याष्टमपादे चिन्तितं।

"वृष्टिकामी सदो नीचैर्मिनुयादिति कामना।
अध्वर्य्योः स्वामिनो वाऽन्यो वाक्यान्मातुः स उच्यते॥

परस्मैपदतोऽध्वर्य्युर्व्यापारस्य परार्थता।
श्रुतितो वाक्यबाधेन तपोवत्स्वामिनोऽस्तु तत्''॥ इति।

ज्योतिष्टोमे श्रूयते "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्'' इति। यथा पुरस्तात् पश्चाच्चावस्थितौ हविर्धानप्राचीनवंशावुच्चौ तथा सदो नोच्चं किन्तु नीचं कार्य्यमित्यर्थः। अत्र वृष्टिकामना अध्वर्य्योर्युक्ता। यः कामयेत स मिनुयादिति वाक्येन कामयितृमात्रोरेकत्वावगमात् मातृत्वञ्च अध्वर्य्योरित्यविवादं। तस्मात् स एव कामयेतेति चेत्। मैवं। मिनुयादिति परस्मैपदेन अध्वर्य्युव्यापारफलस्य परगामिता प्रतीयते। ततो वृष्टिलक्षणफलस्य यजमानगामित्वात् परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृत्वं द्रष्टव्यं। यजमानकामितां वृष्टिं पर्जन्यः सम्पादयत्वित्येवं योऽध्वर्य्युः कामयेत स मिनुयादिति वाक्यं व्याख्येयं। एवंविदुद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तमागायतीत्यृत्विजोऽपि काम इति चेत् तर्हि तस्मिन्नुद्गीथोपासने वचनात् ऋत्विजोऽपि फलमस्तु।

अथ छन्दः। परि त्वा गिर्वण इत्यनुष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ ० ॥

रक्षोहणो वलगहनो वैष्णवान् खनामीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानो ऽरातीयति गायत्रेण छन्दसाऽवबाढो वलगः किमत्र भद्रं तन्नौ सह विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां राष्ट्राणाꣳ हन्ता ॥ १ ॥

रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वलगहनो वनयामि वैष्णवान् यवोऽसि यवयास्मद्द्वेषो यवयारातीः रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान् रक्षोहणौ वलगहनावुपदधामि वैष्णवी रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी रक्षोहणौ वलगहनौ वैष्णवी बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद ॥ २ ॥

हन्ते द्राय द्वे च ॥ २ ॥

इति तैत्तिरीयसंहितानां प्रथमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

प्रथमानुवाके सदोनिर्माणमुक्तं। एतावता षट्त्रिंशतापदैः परिमितायां महावेद्यां निर्मातव्यान्युत्तरवेदिहविर्धानसदांसि सम्पन्नानि। तस्याश्च महावेद्या उत्तरदक्षिणभागस्थयोराग्नीध्रीयमार्जालीययोर्मन्त्रा न सन्ति अतो निर्मितेषु स्थानेष्वभ्यन्तरे यदन्यत् तत् समन्त्रकं निर्मातव्यं भवति तदभिधेयं। तत्रोत्तरवेद्यां सर्व्वस्याभिहितत्वाद्धविर्धानाभ्यन्तर उपरवा द्वितीयानुवाके उच्यन्ते। कल्पः "दक्षिणस्य हविर्धानस्याधस्तात् पुरोक्षं चतुर उपरवान् अवान्तरदेशेषु प्रादेशमुखान् प्रादेशान्तरालान् करोति, रक्षोहणो वलगहनो वैष्णवान् खनामि" इति। विष्णुर्देवता येषामुपरवाणां ते वैष्णवाः। जीर्णकटपटादिखण्डबद्धा अस्थिनखरोमपादपांसुप्रभृतयो विरोधिनां मारणार्थं ये भूमौ निखन्यन्ते ते वलगाः तान् घ्नन्तीति वलगहनः। रक्षांसि घ्नन्तीति रक्षोहणः। तादृशानुपरवनामकान् गर्त्तान् खनामि। विधत्ते "शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन् प्राणाः" (सं०६का०।२प्र०।११अ०) इति। उपरवबिलानां श्रोत्रनासिकादिछिद्रगतप्राणस्थानीयत्वाच्छिरस्थानीयहविर्धाने खननं युक्तं। विधत्ते "अधस्तात् खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणाः" (सं०६का०।२प्र०।११अ०) इति। यस्माद्धविर्धानस्याधोभागे भूमावुपरवास्तस्माच्छिरस्यूर्द्धकपालादध एव प्राणसञ्चारः। वैष्णवानिति तद्धितो देवतावाचीत्याह "रक्षोहणो वलगहनो वैष्णवान् खनामीत्याह वैष्णवा हि देवतयोपरवाः" (सं०६का०।२प्र०।

११अ०) इति। वितस्तित्रयप्रमाणं विधत्ते "असुरा वै निर्य्यन्तो देवानां प्राणेषु वलगा न्यखनन् तान् बाहुमात्रे ऽन्वविन्दन् तस्माद्बाहुमात्राः खायन्ते" (मं०६का०।२प्र०।११अ०) इति। निर्यन्तः पलायमोद्युक्ताः। प्राणेषु प्राणविनाशनिमित्तं न्यखनन् नितरां भूमावन्तर्द्धावितवन्तः। बोधायनः "अर्थेभ्यः पांसूनुद्वपति, इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानो ऽरातीयति गायत्रेण छन्दसा ऽवबाढो वलगः" इति। आपस्तम्बो मन्त्रभेदमाह "इदमहं तं वलगमुद्वपामीत्युपरवाः खन्यन्ते ऽवबाधन्ते गायत्रेण छन्दसाऽवबाढो वलगः" इति। अस्मान् विनाशयितुं विद्यावित्तसैाभाग्यादिभिः समानो ऽसमानो वा यं वलगं निचखान तं वलगं अहं इदमुद्वपामि। किञ्चास्मानुद्दिश्य समानोऽसमानो वा यः कोऽप्यरातिवदाचरति एनमिदानीं अधरं यजमानपादस्याधोवर्त्तिनं करोमि। गायत्रच्छन्दोऽभिमानिना देवेन वलगो ऽवबाधितः। अशेषशत्रुसङ्ग्रहाय समानासमानशब्दावुभावप्युपादेयावित्याह "इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेत्याह द्वैा वाव पुरुषैा यश्चैव समानो यश्चा ऽसमानो यमेवास्मै तैा वलगं निखनतस्तमेवोद्वपति" (मं०६का०। १प्र०।११अ०) इति। चतुर्णामुपरवाणां अधस्तादेकीकरणं विधत्ते "सन्तृणत्ति तस्मात्संतृण्णा अन्तरतः प्राणाः" (मं०६का०। २प्र०।११अ०) इति। प्राणापानचक्षुःश्रोत्रादयः सर्व्वे शरीरस्याभ्यन्तरे हृद्येकीभूय वर्त्तन्ते। उपरि चतुर्णां पृथक्करणं

विधत्ते "न सम्भिनत्ति तस्मादसम्भिन्नाः प्राणाः" (सं०६का०।२प्र०।११अ०) इति। सम्भेद एकीभावः तन्न कुर्यात् प्राणाश्च वहिः स्वस्वगोलकेषु तिष्ठन्तो नैकीभवन्ति। कल्पः "दक्षिणं पूर्वं यजमानोऽभिमृशति, उत्तरमपरमध्वर्य्युः, अथ यजमानः पृच्छति अध्वर्यो किमत्र इति, भद्रमित्यध्वर्युः प्रत्याह, तन्नौ सहेत्युक्त्वा" इति। अध्वर्यो इत्यध्याह्रियते। अत्रोपरवेष्वस्मदुपयुक्तं किमस्तीति प्रश्नः। भद्रं सोमाभिषवद्वारेण भजनीयं सर्व्वमस्तीति उत्तरं। तद्भद्रमावयोः सह भवत्विति यजमानोक्तिः। कल्पः "अथै-नानुपस्पृशति, विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराड-स्यभिमातिहा विश्वाराडसि विश्वासां राष्ट्राणाꣳ हन्ता" इति। दक्षिणपूर्वमुपक्रम्य प्रदक्षिणक्रमेण चतुर्षु चत्वारो मन्त्राः। वि-विधं राजते, सम्यग्राजते, स्वयमेव राजते, विश्वेषु राजते, इति विराडादयः। विरुद्धेन्द्रियवृत्तिरान्तरः शत्रुः, ततो वाह्यो विरु-द्धजातिः, ततोऽपि वाह्यो ग्रामसीमादौ विवदमानोऽन्यगोत्रजः, ततोऽपि वाह्या :परराष्ट्रसेनाः सर्व्वनाशहेतवः एतच्चतुष्टयं स-पत्नादिशब्दैर्विवक्षितं। कल्पः "अथैनानद्भिः प्रोक्षति, रक्षो-हणो वलगहनः प्रोक्षामि वैष्णवानिति सर्व्वानेवानुपूर्व्वं, अथै-तेष्वपोवनयति, रक्षोहणो वलगहनो ऽवनयामि वैष्णवानिति सर्व्वेष्वानुपूर्व्वं, अथैतेषु यवान् प्रस्कन्दयति, यवोऽसि यवयास्म-द्द्वेषो यवया रातीरिति सर्व्वेष्वेवानुपूर्व्वं, अथैनान् वर्हिषा-वस्तृणाति, रक्षोहणो वलगहनो ऽवस्तृणामि वैष्णवानिति स-र्व्वानेवानुपूर्व्वं, अथैनान् हिरण्यमन्तर्धाय स्रुवेणाभिजुहोति, रक्षो-

हणो वलगहनोऽभिजुहोमि वैष्णवानिति सर्व्वानेवानुपूर्व्वं" इति। कृमत्रेत्यादि मन्त्रा उपेक्षिताः। प्रोक्षणशेषस्य जलस्य उपरवेष्व-पनयनं विधत्ते "अपोऽवनयति तस्मादार्द्रा अन्तरतः प्राणाः" (सं०६का०।२प्र०।११अ०) इति। मुखनासिकाचक्षुरादिगोल-केषु अपां दर्शनात् प्राणानामार्द्रत्वं। अवनीते जले यवप्रक्षेपं विधत्ते "यवमतीरवनयत्यूर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति"(सं०६का०।२प्र०।११अ०) इति। या आपोऽवनयन्ति ता यवसंयुक्ताः कुर्य्यादिति योजना। उपरवेषु दर्भप्रक्षेपं विधत्ते "बर्हिरवस्तृणाति तस्माल्लोमशा अन्तरतः प्राणाः (सं०६का०। २प्र०।११अ०) इति। अक्षिपक्ष्मनासिकादिषु लोमदर्शनाल्लोम-शत्वं। होमं विधत्ते "आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति" (सं०६का०।२प्र०।११अ०) इति। कल्पः "अथास्यैते फलके दीर्घसोमे सन्तृण्णे भवतो ऽसन्तृण्णे एकाहे ते संस्पृष्टे उपदधाति, रक्षोहणौ वलगहना-वुपदधामि वैष्णवी इति, अथैने शङ्कुभिः परिनिहन्ति द्वाभ्यां पुरस्तात् द्वाभ्यां पश्चात् द्वाभ्याममितोऽनवसर्पणाय, अथैने प्रद-क्षिणं पुरीषेण पर्य्यूहति, रक्षोहणौ वलगहनौ पर्य्यूहामि वैष्णवी इति, अथैने बर्हिषा परिस्तृणाति, रक्षोहणौ वलगहनौ परि-स्तृणामि वैष्णवी इति, अथैने अभिमृशति, रक्षोहणौ वलगहनौ वैष्णवी इति" इति। फलकविशेषणविवक्षया रक्षोहणाविति पुंलिङ्गनिर्देशः। हनुत्वेन ब्राह्मणे निरूप्यमाणत्वात् वैष्णवी इति स्त्रीलिङ्गनिर्देशः। कल्पः "अथैने चर्म्मफलकयोः प्राचीनग्री-

वमुत्तरलोमोपस्तृणाति यज्ञप्रतिष्ठेति वा तूष्णीं वा तिरश्चर्म-फलके ग्रावृण उद्वादयति, वृहन्नसि वृहद्ग्रावा वृहतीमिन्द्राय वाचं वद" इति। उद्वादयति पाषाणेन फलके शब्दं जनयेत्। हे पाषाण त्वं वीर्य्येण वृहन् महानसि। किञ्च वृहन्तोऽवयव-भूता ग्रावाणो यस्य स च त्वं वृहद्ग्रावासि इन्द्रार्थं। इन्द्रो यथा शृणोति तथा वृहतीं उच्चध्वनिमस्मद्यज्ञविषयां वाचं वद त एते मन्त्रा उपेक्षिताः। फलकयोरत्यन्तसंश्लेषं निषेधति "हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्त्यसन्तृसे हि" (सं० ६का०।२प्र०।११अ०) इति। हनू मुखस्याधरोत्तरफलके अत्र सोमाभिषवाधारफलके सन्तर्दनं रज्जुबन्धनादिना दृढसंश्लेषः तमत्र न कुर्य्यात्। तत् द्विरात्रादौ प्रसङ्गाद्विधत्ते "अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै" (सं०६का०।२प्र०।११अ०) इति। आवृत्तत्वात् सोमस्य दीर्घत्वं अभिषवबाहुल्याद्दार्ढ्यार्थं सन्तर्दनं। अथ रूपकेण उपरवान् प्रशंसन् प्रसङ्गात् सनिमित्तं सदसि सोम-भक्षणं विधत्ते "शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरꣳ सदो यदा खलु वै जिह्वया ऽदत्त्वधि खादत्यथ मुखं गच्छति यदा मुखं गच्छत्यथोदरं गच्छति तस्माद्धविर्धाने चर्म्मन्नधि ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति"(सं०६का०।२प्र०।११अ०)इति। अत्रा-भिषवहोमौ विधेयस्य भक्षणस्य निमित्तं पुनरप्युपरवस्तुत्यै प्रकारान्तरेण रूपकं विकल्प्य तद्वेदनं प्रशंसति "यो वै विराजो

यज्ञमुखे दोहं वेद दुह एवैनामियं वै विराट् तस्यै त्वक्चर्मोऽधोऽधिषवणे स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेद दुह एवैनां" (सं०६का०।२प्र०।११अ०) इति। अग्निष्टोमे द्वादशसु स्तोत्रेषु विद्यमाना ऋच आवृत्त्यमानाः सत्यो नवतिः सम्पद्यन्ते। तत्र नवसु दशकेषु प्रत्येकं विराट्छन्दोऽक्षरसङ्ख्यास्तीत्ययं यज्ञो विराडित्युच्यते। एतदेवाभिप्रेत्य सप्तमकाण्डस्य प्रथमानुवाके समाम्नायते "विराजमभिसम्पद्यते" इति। सोऽयं यज्ञरूपो विराडत्र कामधेनुत्वेन निरूप्यते। इयं महावेदिरेव विराडाख्या धेनुः। तस्या धेनोर्या त्वक् तदिदमास्तृतं चर्म ऊध आपीनभारः। तद्रूपं फलकद्वयं। एवमन्यद्योज्यं। परेद्युः कर्तव्यस्य यज्ञस्यायं कल्पः प्रारम्भोऽन्तःपातित्वात् मुखं। तस्मिन् मुखे विराजो धेनोः दोहनप्रकारं यो वेद स एनां कामधेनुं सर्वथा दुग्धे। य एवं वेद दुह एवैनामिति पुनर्वचनमुपसंहारार्थं। सेयमुपरवप्रशंसेति केचित्। स्वतन्त्रोपास्तिविधिरित्यन्ये। यथा सप्तमकाण्डेऽश्वमेधप्रकरणे "उषा वा अश्वस्य मेध्यस्य शिरः" इति स्वतन्त्रोपास्तिराम्नाता तद्वत्। तस्याश्च स्वातन्त्र्यं बृहदारण्यकस्यादौ विस्पष्टं। एतादृशानां वाक्यानां कर्मप्रकरणादुत्कर्ष उत्तरमीमांसायां गुणोपसंहारपादे सन्चिदाद्यधिकरणे निर्णीतः, तस्मादुत्कर्षे स्वातन्त्र्यं, अनुत्कर्षे तु स्तुतित्वेन उपरववाक्याङ्गत्वमित्याकारद्वयमभ्युपेयं। अथवा इष्टेःष्टातुर्मास्यानाञ्च राजसूयान्तःप्रयोगवहिःप्रयोगा यथा तद्वदेव द्रष्टव्यं। अत्र विनियोगसङ्ग्रहः।

"खनेदुपरवान् रक्ष इदं तं मृदमुद्वपेत्।
गाय तत्रावबाधेत किं स्वामी पृच्छतीतरः॥
भद्रमित्याह तं नावित्याह स्वामीतरं प्रति।
विराट् चतुर्भिः संस्पर्शो रक्षः पञ्च स्फुटक्रिया॥
रक्षोऽधिषवणाख्ये तु फलके स्थापयेत् तथा।
पर्य्यूह्य च परिस्तृत्वा मन्त्रयेच्च इहन्निति
उपांशु सदनाश्मानं सादयेद्विंशतिर्मता"॥ इति।

अथ मीमांसा। तृतीयाध्यायस्य अष्टमपादे चिन्तितं।

"भद्रं तन्नौ सहेत्येतत् तस्मिन् स्वामिनि युज्यते।
द्वित्वश्रुत्या भवेदेतदध्वर्य्युयजमानयोः"॥ इति।

ज्योतिष्टोमे श्रूयते "हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्ताच्चतसृष्वाग्नेयादिदिक्षु चतुर उपरवनामका गर्त्ता बाहुमात्रखाता अधोभागे परस्परमिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्त्तन्ते। तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति। तथैवाध्वर्य्युरन्यस्मिन् स्वहस्तं प्रसार्य अधस्ताद्यजमानहस्तं गृह्णाति। तदा यजमानः किमत्रेत्यनेन मन्त्रेण फलं पृच्छति। अध्वर्युस्तु भद्रमित्यनेन मन्त्रेणोत्तरं ब्रूते। ततो यजमानस्तन्नौ सहेत्यनेन मन्त्रेण तत्फलं स्वकीयत्वेन स्वीकरोति। तस्माद्यजमानस्यैतदिति चेत्। मैवं। नावित्यनेन द्विवचनेन सहेत्यनेन चोभयगामितयैव स्वीकारात्। तत्रैव तृतीयपादे चिन्तितं।

"मन्त्रद्वये दीर्घसोमे तत्प्रकृतौ विकृतावुत।
दीर्घस्य सोम इत्युक्तेः प्रकृतावस्तु तद्दनं॥

सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः
दैर्घ्ययुक्तोऽन्य संस्थादौ उत्कर्षोऽन्यत्र बाधनात्'' ॥ इति ।

ज्योतिष्टोमे श्रूयते "दीर्घसोमे सन्तृद्ये धृत्यै" इति सोमयागविशेषो दीर्घसोमः। तस्मिन् सोमाभिषवाधारयोरधिषवणफलकयोः सन्तर्दनं कार्यं अन्योन्यवियोगेन शैथिल्यं मा भूदिति दृढसंश्लेषः सन्तर्दनं। तदेतत् प्रकरणबलात् प्रकृतौ निविश्यते न च तत्र दीर्घसोमत्वानुपपत्तिः। दीर्घस्य सोम इत्येवं दीर्घशब्दस्य यजमानविशेषणत्वेनाप्युपपत्तेरिति प्राप्ते ब्रूमः। षष्ठीसमासात् कर्मधारयो बलीयानिति वक्ष्यते। तथा सति दीर्घत्वं सोमस्य धर्मो न तु यजमानस्य। नन्वेवमपि प्रकृतिभूतस्य सोमस्य दृष्टिपक्षपेक्षया दीर्घत्वमस्त्येवेति चेत् सोमशब्देनैव तदवगतौ दीर्घशब्दवैयर्थ्यात्। न ह्योष्टिपक्षपेक्षया ह्रस्वः कश्चित् सोमोऽस्ति यस्य व्यावृत्तये दीर्घशब्दः प्रयुज्येत, तस्मात् प्रकृतिरूपह्रस्वसोमं व्यावर्त्तयितुमयं दीर्घशब्दो विकृतिषूक्थ्यादिषु ग्रहाधिक्येन दीर्घत्वं, तस्माद्वाक्येन प्रकरणं बाधित्वा विकृतिषु तन्निवेशः। प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्व्वमुक्तः। सन्तर्दनबाधस्तु साक्षात् श्रूयते "हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्त्यसन्तृणे हि हनू" इति। तस्मान्न प्रकृतौ निवेशः। तत्रैव पञ्चमपादे चिन्तितं।

"आख्यातव्या* वषट्कारा एव किं भक्षहेतवः।
किं वाभिषवहोमौ च तत्राद्योऽस्तूक्तया दिशा ॥
हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्।

* आख्या वचो इति का० पा०।

इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरः" ॥ इति।

होतुस्त्व मम इत्यत्र समाख्या भक्षहेतुः। हारियोजनवाक्यन्तु वषट्कर्त्तुः प्रथमभक्ष इत्यत्र वषट्कार इत्येवमुक्तत्वात् त्रय एव भक्षहेतव इति चेत्। मैवं। "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति श्रूयते। उत्तरवेद्याः प्रतीचीने सदः प्राचीनमण्डपेऽभिषवः उत्तरवेद्यां होमः सदसि भक्षणं। तत्राभिषवहोमयोर्व्वचनान्तरप्राप्तयोरभिधेयतया तौ निमित्तत्वेनानूद्य भक्षणं विधीयते, तस्मात् समाख्यादिवत् एतयोरपि हेतुत्वमस्ति। षष्ठाध्यायस्य चतुर्थपादे चिन्तितं।

"अभिषुत्य ततो हुत्वा खादेदेकैकहेतुना।

संहत्य वा निमित्तोक्तौ साहित्याविधितोऽग्रिमः॥

होमाभिषवकर्त्तात्र भक्षाङ्गत्वेन चोद्यते।

निमित्तताऽऽर्थिकी तस्मात् साहित्यं हेतुगं मतं"॥ इति।

ज्योतिष्टोमे श्रूयते "हविर्धाने ग्रावभिरभिषुत्य सदसि भक्षयन्ति" इति। तत्राभिषवहोमयोरेकैक एव भक्षहेतुः साहित्यस्याविधेयत्वात्। अभिषवहोमावत्र निमित्तत्वेनोच्येते तत्र साहित्यविधौ वाक्यं भिद्येत अभिषवहोमौ भक्षणहेतू। तौ च सहिताविल्येवं तद्भेदः। तस्मात्साहित्यस्याविधेयत्वादभिषवहोमयोः प्रत्येकं भक्षणनिमित्तहेतुत्वमित्येवं प्राप्ते ब्रूमः। नात्र निमित्तमुपन्यस्यते। किन्तु होमाभिषवयोः कर्त्तोर्भक्षणं प्रत्यङ्गत्वेन पूर्व्वमप्राप्तत्वाद्विधीयते। तथा सत्यभिषवहोमयोर्य्यन्नि-

मित्तत्वं प्रतीयते तदार्थिकरिति वाक्यभेददोषाभावात् साहित्यं प्रतीयमानं विवक्षितमिति सहितयोरेव तयोर्निमित्तत्वमिति। अत्र सर्व्वेषां यजुष्ट्वान्नास्ति छन्दः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः॥ ० ॥

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानः प्रतक्वासि नभस्वानसंमृष्टोऽसि हव्यसूद ऋतधामासि सुवर्ज्योतिर्ब्रह्मज्योतिरसि सुवर्धामाजोऽस्येकपादहिरसि बुध्नियो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥ १ ॥

अनीकेनाष्टौ च॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः॥

द्वितीयानुवाके हविर्धानगतोपरवनिर्माणमुक्तं। अथावशिष्टेष्वाग्नीध्रीयसदःप्रभृतिस्थानेषु धिष्णियाः तृतीयेऽनुवाकेऽभिधीयन्ते। कल्पः "आग्नीध्रीयं खात्वा सफ्येनोद्धृत्यावोक्ष्य चात्वाले-

पुरीषं सिकता इति निवपति, विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीरिति तं परिमण्डलं धिष्णियं करोति सिकताभिरभ्राशितं करोत्यथातः सदसि धिष्णियान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति, श्वात्रोऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य, तुथो वो विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छंसिन, उशिगसि कविरित्युत्तरतः पोतुः, अङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुः, अवस्युरसि दुवस्वानित्युत्तरतो च्छावाकस्य, अथ दक्षिणे वेद्यन्ते मार्जालीयं निवपति शुन्ध्यूरसि मार्जालीय इति, सर्व्वेष्वेव रौद्रमनुवर्त्तयत्यथाष्टावनुदिशति, सम्राडसि कृशानुरित्याहवनीयमुपतिष्ठते, परिषद्योऽसि पवमान इत्यास्तावं, प्रतक्वासि नभस्वानिति चात्वालं, असंमृष्टोऽसि हव्यसूद इति शमित्रपणं, अथ सदसो द्वारि तिष्ठन् ऋतधामासि सुवर्ज्योतिरित्यौदुम्बरीमुपतिष्ठते, ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनं, अथात्रैव तिष्ठन् गार्हपत्यमुपतिष्ठते, अजोऽस्येकपादहिरसि बुध्निय इति यं प्रहास्यन्तो भवन्ति'' इति। तत्र रौद्रेणेति वाक्यं सर्व्वमन्त्रशेषत्वादन्ते समाम्नायते। अभ्राशितं समन्ताद्यथा न भ्रश्यति तथा करोति शुभ्रं वा करोति। हे अग्नीध्रीय त्वत्तोऽन्यद्धिष्णियविहरणात् त्वं विभूरसि विविधं भवसि। हविषां प्रवाहयितृत्वात् प्रवाहणोऽसि। हे होत्रीय त्वं वह्निर्यो हव्यवाहनः तद्रूपोऽसि। हे मैत्रावरुणीय श्वात्रो मित्रः प्रचेता वरुणस्तदुभयरूपोऽसि। हे ब्राह्मणाच्छंसिसम्बन्धिन् तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा

विभजतीत्याम्नातो विश्वाभिरूपो यस्तद्रूपोऽसि। हे पोत्रीय त्वमुशिक् कमनीयः कविर्विद्वानसि। हे नेष्ट्रीय सोमरक्षको याववाहरि बभ्रारिनामको तद्रूपोऽसि। हे अच्छावाकसम्बन्धिन् अवस्य ते त्वा वाताय स्वाहा दुवस्य ते त्वा वाताय स्वाहेत्याम्नातावसु दुवस्वन्तौ वातविशेषौ तद्रूपोऽसि। हे मार्जालीय त्वं शुन्ध्युः शोधकः पात्रप्रक्षालनेन लेपमार्जकस्थानभूतोऽसि। हे आहवनीय सम्यक्राजमानः कृशानुरसि। हे आस्ताव स्तोत्रस्थान परिषद्यः परितः सदयोग्यः पवमानः पूतोऽसि। हे चात्वाल कृष्णविषाणत्यागार्थं प्रतक्वाऽसि प्रकृष्टगमनविषयोऽसि। नभस्वान् अन्तरवकाशवान् पशुश्रपणप्रदेश राक्षसैरसंमृष्टोऽसि। हे हव्यसूद हृदयादिहव्यपाचकोऽसि। हे औदुम्बरि ऋतधामा सामगानामृतमवश्यम्भावि धाम उपवेशनस्थानं यस्याः तादृशी स्वर्ज्योतिः उन्नतत्वेन स्वर्गप्रकाशिकाऽसि। हे ब्रह्मसदन त्वं ब्रह्मज्योतिः ब्रह्मनामकस्यर्त्विजः प्रोक्षणादिकर्माभ्यनुज्ञानरूपं ज्योतिर्यस्मिन् स्थाने तादृशमसि सुवर्धाम स्वर्गसदृशं स्थानं यस्य तथाविधमसि। हे नूतनगार्हपत्य यो देवः प्रोष्ठपदा नक्षत्रमज एकपाद्देवतेत्याम्नातः तद्रूपोऽसि। पुरातनं गार्हपत्यमित ऊर्ध्वमृत्विजः परित्यक्ष्यन्तो भवन्ति। हे त्याज्यगार्हपत्य यो देवः प्रोष्ठपदा नक्षत्रं अहिर्बुध्नियो देवतेत्याम्नातः तद्रूपोऽसि। आग्नीध्रीयमारभ्य पुराणगार्हपत्यान्तेषु षोडशसु स्थानेषु अभिमन्यमान हे अग्ने त्वदीयेन रौद्रेण सैन्येन राक्षसेभ्यो मां पाहि कर्मफलप्रदानेन मां पाहि। पिपृहि पूर्णमनोरथं कुरु। महि-

नाशरूपां हिंसां मा कुरु। तानेतान्सर्वानुपेत्यानुष्ठानं विधत्ते "चात्वालाद्धिष्णियानुपवपति योनिर्वै यज्ञस्य चात्वालं यज्ञस्य सयोनित्वाय" (सं० ६का०।३प्र०।१अ०) इति। पुरीषमादायोत्तरवेद्याः करणाच्चात्वालं यज्ञस्य योनिः तादृशाच्चात्वालाद्धिष्णियाद्धिष्णियनामकानां स्थलविशेषाणां निवपने यज्ञः सर्व्वोऽपि स्वयोनियुक्तो भवति। कालान्तरे अनुष्ठेयान्यपि कानिचिद्धिष्णियप्रसङ्गादिह विधीयन्ते। तत्राग्नीध्रीयधिष्णियस्थितादङ्गारादिधिष्णियेषु अग्निस्थापनं विधत्ते "देवा वै यज्ञं पराजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते" (सं० ६का०।३प्र०।१अ०) इति। पराजयन्त पराजितमकुर्व्वन्तं यज्ञमसुरा अगृह्णन्। पुनस्तं यज्ञमाग्नीध्रदेवतासामर्थ्येनाऽसुरेभ्यः अवच्छिद्य देवता अयजन् अग्नीध्रस्यापराजितस्थानत्वात् ततो विहरणं युक्तं। प्रैषमन्त्रमुत्पादयति "पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुत आहाग्नीदग्नीन् विहर बर्हिस्तृणाहि पुरोडाशाꣳ अलं कुर्व्विति यज्ञमेवापजित्य पुनस्तन्वाना यन्ति" (सं० ६का०।३प्र०।१अ०) इति। बहिष्पवमानंनाम प्रातस्सवने सामगैर्गायमानमुपास्मै गायत इत्यादिकं स्तोत्रं तत्तु गायन्तं ऋत्विजो धावन्ति। यथा लोके पराजित्य पलायन्ति तद्वत्। ततस्तोत्रे समर्पिते सत्याग्नीध्रं सम्बोध्याग्निविहरणादिप्रैषे उक्ते यज्ञपराजयादपावृत्य पुनः प्रसारितवन्तो

भवन्ति। विहरणे विशेषं विधत्ते "अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाथो सम्भरत्येवैनत्"(सं० ६का०।३प्र०।१अ०) इति। प्रातस्सवनमाध्यन्दिनसवनयोराग्नीध्रीयगतैरङ्गारैर्दग्धकाष्ठैर्विहरेत्। तृतीयसवने तु शलाकाभिर्दीप्ताभिस्तृणमुष्टिभिर्विहरेत्। तत्र सोमस्य गायत्रीमुखेन पीतत्वान्नास्ति सोमे* तेजः। दीप्तासु शलाकासु सारूपतेजोऽस्तीति सशुक्रत्वाय सतेजस्त्वाय तथा कुर्वन्ति। किञ्चैतत् तृतीयसवनमितरसदृशं कृत्वा सम्भरन्ति सम्यक् पोषयन्ति। पूर्व्वोक्तधिष्णियसङ्घं प्रशंसति "धिष्णिया वा अमुष्मिन् लोके सोममरचन् तेभ्योऽधि सोममाहरन् तमन्ववायन् तं पर्य्यविशन्" (सं०६का०।३प्र०।१अ०) इति। स्वानभ्राजादय इव धिष्णियदेवता अपि सोमं रचन्ति आह्रीयमाणं सोममनु स्वयमप्यागत्य परित उपविष्टाः तस्मात् प्रशस्ता धिष्णियाः। एतद्वेदनं प्रशंसति "य एवं वेद विन्दते परिवेष्टारं" (सं०६का०।३प्र०।१अ०) इति। सेवकजनमित्यर्थः। केषुचित् धिष्णियेषु सोमाहुतिं विदधाति "ते सोमपीथेन व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान् देवा अब्रुवन् द्वे द्वे नामनी कुरुध्वमथ प्राप्स्यथ नवेत्यग्नयो वा अथ धिष्णियास्तस्माद्विनामा ब्राह्मणोर्द्धुकस्तेषां ये नेदिष्ठं पर्य्यविशन् ते सोमपीथं प्राप्नुवन्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात् तेषु जुह्वति" (सं० ६का०।३प्र०।१अ०) इति। ते धिष्णियाः सोमपानेन वि-

* नाग्निष्टोमे इति का० पा०।

युक्ताः। ततस्ते देवेषु मध्ये सोमपानमस्माकमस्त्वित्यैच्छन्त। एकै-कनाममात्रधारणेन युष्माकं सोमपानयोग्यता सर्व्वथा नास्ति, नामद्वये तु स्वीकृते पाक्षिकी तद्योग्यतेति देवैरुक्ता अग्निनाम-धिष्णियनाम च कृतवन्तः। यस्मान्नामद्वयमुत्कर्षहेतुः तस्माल्लोके देवदत्तादिनाम प्रथमं धृत्वा पश्चात् तपोविद्यादिभिराचा-र्यापाध्यादिकं द्वितीयनाम दधत् सत्कारेण समृद्धा भवन्ति विप्राः। नामद्वयधारिणां तेषां मध्ये ये चत्वार आहवनीयादयः सोमस्यात्यन्तसमीपे निविष्टास्ते समीपवर्त्तित्वेन सोमपानयोग्या इति तेषु सोमं जुहुवुः। द्विनामधारित्वेनेतरेषामपि प्रसक्तं सोमपानं वारयति "अतिहाय वषट्करोति विच्छिन्ते सोमपी-थेनार्ध्यन्त" (सं०६का०।३प्र०।१अ०) इति। ये दूरवर्त्तिनो मैत्रावरुणधिष्णियादयस्तानतिलङ्घ्य समीपस्थेभ्य एव वषट्का-रस्तथापि अनुवषट्कारप्रदानाम आहुतिस्तु ऐतरेयब्राह्मणश्रुतौ तदाहुतिदेवतात्वेन चतुर्णामेव श्रवणात् तानतिहायवषट्करो-तीत्युक्तं युक्तं। सा च श्रुतिः "सोमस्याग्ने वि होत्यनुवषट्करोति तेन धिष्णियान् प्रीणाति" इति। तस्मात् तेषां वषट्कार-पूर्व्वको होमः। इतरे तु सोमपानेन व्यार्ध्यन्त हि यस्मात् पूर्व्वोक्तस्य वियोगस्य प्रतीकारं सामीप्यलक्षणं न सम्पादितवन्तः। द्वितीयनामप्रयुक्तस्तूत्कर्षस्तेषां सोमाभावेऽप्याज्यस्याघारणादे-वोपपद्यते। सोमाहुतीनां दिग्व्यवस्थां विधत्ते "देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन् ताꣳस्ताभिः प्राणु-दन्त याः प्रतीचीर्ये पश्चादसुरा आसन् ताꣳस्ताभिरपानुदन्त

प्राचोरन्या आहुतयो हूयन्ते प्रत्यङ्‌ङासीनो धिष्णियान् व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान् प्रणुदते तस्मात् पराचीः प्रजाः प्रवीयन्ते प्रतीचीर्जायन्ते" (मं०६का०।३प्र०।१अ०) इति। प्राङ्मुखेन हूयमाना: प्राची: उत्तरवेदिगता: यस्मादाहुतिषु द्वैविध्यं तस्माल्लोकेऽपि प्रजा: पित्रा यन्मुखेन प्रवीयन्ते निषिच्यन्ते तद्विपरीतदिङ्मुखा उत्पद्यन्ते। अध्वर्यो: प्रत्यागमनं निषेधनिन्दाभ्यामुन्नयति "प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ् धिष्णियानतिसर्पेत् प्राणान् सङ्कर्षेत् प्रमायुकस्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै प्राणो वाङ्पानो यदध्वर्युः प्रत्यङ् होतारमतिसर्पेदपाने प्राणं दध्यात् प्रमायुकः स्यात्" (मं०६क०।२प्र०।१अ०) इति। अतिसर्पेदतिक्रम्य गच्छेत् होता यज्ञस्य नाभिः मध्यदेशे वर्त्तते प्राणवत् प्राग्वर्त्तिनोऽध्वर्यो: प्रत्यग्गमनमयुक्तं। ऋत्विज उपगायन्तीति विधिप्राप्तगानमध्वर्योर्निषेधति "नाध्वर्य्युरुपगायेद्वाग्वीर्यो वा अध्वर्य्युर्यदध्वर्य्युरुपगायेदुद्गात्रे वाचꣳ सम्प्रयच्छेदुपदासुकाऽस्य वाक् स्यात्"(मं०६का०।३प्र०।१अ०) इति। उद्गात्रा सामानि गीयमाने पृष्ठतस्तदङ्गीकरणमुपगानं उपदासुका उपक्षयशीला:। प्रकारान्तरेणाध्वर्यो: प्रत्यग्गमनं विधातुं चोद्यमुद्भावयति "ब्रह्मवादिनो वदन्ति नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोतीयादथ कथा दाक्षिणानि होतुमेति" (मं०६का०।३प्र०।१अ०) इति। अध्वर्यो: सद उल्लङ्घ्य प्रत्यग्गमनं निषिद्धं दाक्षिणहोमः प्राचीनवंशे नूतनगार्हपत्ये

कर्त्तव्यः तत्कतथं घटते असंस्थिते ऽसमाप्ते कथा केन प्रकारेण। उक्तचोद्यस्य परिहाराभासमाशङ्कते "यामो हि स तेषामिति" (सं०६का०।३प्र०।१अ०) इति। याम उपरमो यस्मात् स दाक्षिणहोमः। तेषां देवानां सम्बन्धिनः कर्म्मण उपरमकालीनः अतो लौकिकगमनत्वाद्देवा अनुज्ञास्यन्ति। इत्यमुत्तराभासं दूषयति "कस्मा अह देवा यामं वाऽयामं वानुज्ञास्यन्तीति"(सं०६का०।३प्र०।१अ०)इति। अहेत्युक्तविषयमुत्तरवादिनोक्तं तन्न भवति कस्मै प्रयोजनाय कर्म्मणे उपरतिमनुपरतिं वा अनुज्ञास्यन्ति, न हि तदनुज्ञया देवानां किञ्चित् प्रयोजनं पश्यामः। ततः प्रत्यग्गमनस्य निषिद्धत्वाद्दाक्षिणहोमो न घटत एवेति चोद्यं सुस्थितं। तस्य मुख्यं परिहारं दर्शयन् प्रत्यग्गमनं विधत्ते "उत्तरेणाग्नीध्रं जुहोति दाक्षिणानि न प्राणान् सङ्कर्षति" (सं०६का०।३प्र०।१अ०) इति। अग्नीध्रहविर्धानयोर्मध्ये गत्वा यत् सदोऽतिक्रमणं तदेव निषिद्धं। अयं त्वाग्नीध्रं वामतः परित्यज्य तस्मादुत्तरतः प्रत्यङ्मुखो गत्वा प्राचीनवंशे दाक्षिणानि जुहुयात्। ततो नोक्तदोषः। इत्थं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति। तत्र चात्वालाद्धिष्णियानुपवपति इति सामान्यशास्त्रेणाग्नीध्रादीनां प्राजहितान्तानां षोडशानामपि निवपने प्रसक्ते मार्जालीयान्तानामष्टानामेवेति विशेषं विधत्ते "न्यन्ये धिष्णिया उप्यन्ते नान्ये यान्निवपति तेन तान् प्रीणाति" (सं०६का०।३प्र०।१अ०) इति। इतरेषामाहवनीयादीनां प्राजहितान्तानामष्टानामुपस्थानं विधत्ते

"यान्न निवपति यदनुदिशति तेन ताम्" (सं०६का०।२प्र०।१अ०) इति। प्रीणातीत्यनुवर्त्तते। अनुदेशो मन्त्रेणोपस्थानं।

अत्र विनियोगसङ्ग्रहः।

"विभूः पदत्रयात्मानो मन्त्राः षोडश निर्वपेत्।
धिष्ण्याद्दिशेच्च सर्व्वेषु रौद्रेणेत्यनुदिश्यते" ॥ इति।

अत्र मीमांसा नास्ति। छन्दसी उक्तैव।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहाऽयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रून् जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ। उरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्र प्रयज्ञपतिं तिर। सोमो जिगाति गातुवित् ॥ १ ॥

देवानामेति निष्कृतमृतस्य योनिमासदमदित्याः सदोऽस्यदित्याः सद आसीदैष वो देवसवितः सोमस्तꣳ रक्षध्वं मा वो दभदेतत् त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण

नमो देवेभ्यः स्वधा पितृभ्य इदमहं निर्वरुणस्य पाशात् सुवरभि ॥ २ ॥

विश्वेषं वैश्वानरं ज्योतिरग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि ॥ ३ ॥

गातुविद्भ्येकचिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥

तृतीयानुवाके धिष्णिया वर्णिताः। एतावता वेदिगतविशेषकृत्स्नावान्तरनिर्माणं समाप्तं। अथ तस्यां वेद्यामग्नीषोमीयपशुर्वक्तव्यः। तस्य चाग्नीषोमयोः प्रणीतयोः पश्चादनुमुचितत्वात् तत्प्रणयनाय वैसर्जनहोमश्चतुर्थेऽभिधीयते। कल्पः "स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनहोमं जुहोति, त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति स्रुवेणाप्तुं प्रस्कन्दयति, जुषाणोऽप्तुराज्यस्य वेतु स्वाहेति पूर्व्वया द्वारोपनिष्क्रामति, अयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रून् जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातवित्यथाहवनीये स्रुवाहुतिं जुहोति, उरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्र प्रयज्ञपतिं तिर

स्वाहा" इति। तनूं शरीरं कृन्तन्ति छिन्दन्तीति तनूकृन्ति रक्षांसि। द्विषन्तीति द्वेषांसि। अन्यैरस्मद्विरोधिभिरभिचरद्भिः कृतानि प्रेरितानीत्यन्यकृतानि। हे सोम त्वं तादृशेभ्यो नियन्तासि। यथा तादृशानि नास्मान् बाधन्ते तथा अस्मानन्यत्र सुरक्षितप्रदेशे स्थापयित्वा पालयसि, तस्मात् त्वमेवास्माकं उरु प्रभूतं वरूथं बलमसि तस्मै तुभ्यमिदं हुतमस्तु। आशुं प्रस्कन्दयतीत्यत्राशुशब्द आज्यविन्दुवाची, मन्त्रे त्वत्पदेहवाची। हे सोम त्वं जुषाणो अस्मासु प्रीतिमान्। रक्षसामदर्शनायाशुरत्वद्देहः सन् आज्यस्य वेतु विन्दुं पिब तवेदं हुतमस्तु। पूर्व्वद्वारेण निष्क्रामन्तो यमग्निं प्रणयन्ति अयमग्निरस्माकं वरिवः कृणोतु श्रेयः करोतु। अयं मृधो वैरिणः प्रभिन्दन् पुर एतु अग्रे गच्छतु। अयं जर्हृषाणः हृष्टान्तःकरणः शत्रून् जयतु। वाजस्यान्नस्य सातिर्लाभो यस्मिन् सङ्ग्रामे स वाजसातिः तस्मिन्नयं अस्मदर्थं वाजं जयतु वशीकरोतु। हे विष्णो व्यापिन् आहवनीय अस्मदनुग्रहार्थं उरु विक्रमस्व वैरिषु बहुलं पराक्रमं कुरु, नोऽस्माकं क्षयाय निवासार्थं उरु कृधि बहुलं गृहधनादिकं सम्पादय। घृतेन ज्वालोद्भवात् घृतयोनिः। हे घृतयोने हूयमानमिदं घृतं पिब, यज्ञपतिं यजमानं प्रतिर अतिशयेन वर्द्धय। मन्त्रान् व्याचिख्यासुरादौ हेतुं विधत्ते• "सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि" (सं०६ का०।२प्र०।२अ०) इति। अवान्तरदीक्षाया विसर्जनार्थत्वादेतानि होमकर्म्माणि वैसर्जनानि। तत्प्रकारः सूत्रे दर्शितः "उपस्थे

ब्रह्मा राजानं कुरुते स मयि व्रतानां क्रयध्वमिति सम्प्रेष्यति यज-
मानस्यामात्यान् सꣳक्रयन्नध्वर्युं यजमानोऽन्वारभते यजमानं
पत्नी पत्नीमितरे पुत्रभ्रातरोऽहतेन वाससा अमात्यान् सम्प्र-
च्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहो-
ति'' इति। व्रतामात्यशब्दौ बन्धुवाचकौ। प्रचरणी जुह्वासदृशी।
विशेषान् क्रमेण विधत्ते ''द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्य-
जमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाक्रमत आह-
वनीये जुहोति सुवर्गमेवैनं लोकं गमयति'' (सं०६का०।३प्र०।
२अ०) इति द्वाभ्यां। त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु
यन्तासि वरूथꣳ स्वाहा, जुषाणो अप्तुराज्यस्य वेतु स्वाहा'' इत्ये-
ताभ्यां आग्नीध्रे होमस्य मन्त्रो विधास्यते। आहवनीये उरु वि-
ष्णोरिति मन्त्रः। होमात् पूर्व्वमेव ब्रह्मणा सोम आहर्त्तव्य इति
विधत्ते ''देवान् वै सुवर्गं लोकं यतो रक्षाꣳस्यजिघाꣳसन्
ते सोमेन राज्ञा रक्षाꣳस्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लो-
कमायन् रक्षसामनुपलाभायात्तः सोमो भवत्यथ वैसर्जनानि
जुहोति रक्षसामपहत्यै''(सं०६का०।३प्र०।२अ०) इति। यतो
गच्छतं आप्तुं रक्षोभिरुपलब्धुमशक्यमल्पदेहमाप्तो भवति स्वी-
कृतोऽभवत् तत ऊर्ध्वं कृतो होमो रक्षांस्यपहन्ति। प्रथममन्त्रे
पूर्व्वभागेऽभिप्रेतं सोमस्य सामर्थ्यमुपपादयति ''त्वꣳ सोम तनू-
कृद्भ्य इत्याह तनूकृद्ध्येषः'' (सं०६का०।३प्र०।२अ०) इति।
तनुच्छिद्रां रक्षसामपि तनुं कृण्वन्ति छिनत्तीत्येष सोमोऽत्यन्तं
तनूकृत् तस्माद्द्वेषोभ्योऽस्मान् पालयितुं समर्थः। द्वितीयभागे

विशेष्यं पूरयति "देवेभ्योऽन्यक्तेभ्य इत्याहान्यक्ता हि र-
क्षाꣳसि" (सं० ६का०।३प्र०।२अ०) इति। तृतीयभागे उरु
वरूथमित्यस्य वाक्यस्य शेषं पूरयति "उरु यन्तासि वरूथमि-
त्याहोरु नस्कृधीति वा वै तदाह" (सं० ६का०।३प्र०।२अ०)
इति। बहुबलमस्मदर्थं कुर्वित्येतदेव सभागो ब्रूते। द्वितीयमन्त्रे
त्वसुशब्दसूचितमाह "जुषाणो असुराज्यस्य वेत्वित्याहासुमेव
यजमानं कृत्वा सुवर्गं लोकं गमयति रक्षसामनुपलाभाय"
(सं० ६का०।३प्र०।२अ०) इति। प्राचीनवंशात् निष्क्रम्याग्नी-
जिगमिषुभिरनुष्ठेयानि सोमस्वीकारादीनि षड्विधत्ते "आ-
सोमं ददत आग्रावण आवायव्यान्याद्रोणकलशमुत्पत्नीमाग-
यन्त्यन्वनाꣳसि प्रवर्त्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं
लोकमेति" (सं० ६का०।३प्र०।२अ०) इति। सोमं हविर्धाने
नेतुमाददीरन्। ग्रावाणो अभिषवार्थाः। वायव्यान्युलूखलसदृ-
शानि ग्रहपात्राणि। द्रोणकलशः प्रौढं काष्ठपात्रं। एतान्याद-
दीरन्, पत्नीं स्वस्थानादुत्थाप्यानयेयुः। सोमाद्यौषधद्रव्यार्थं
यत् तृतीयं शकटं तदेवं महदावृत्तत्वादनांसीति बहुवचनेनो-
च्यते। तदनु पुनः पुनः प्रवर्त्तयेयुः, एवं सति यजमानस्य
स्वं यावदस्ति तेन सर्व्वेण सह स्वर्गं प्राप्नोति। विधत्ते "नय-
वत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै" (सं० ६का०।
३प्र०।२अ०) इति। अग्ने नय सुपथेत्यसौ नयवती। तत्र सूत्रं
"शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्य अग्नी-
षोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति सम्प्रेष्यति प्रणीयमाना-

चानुब्रूहीति वा प्रथमायां त्रिरनूक्तायां अयं नो अग्निर्व्वरिवः
कृणोत्वित्यग्निः प्रथमा सोमप्रथमा वा प्राञ्चोऽभिप्रव्रजन्त्या आ-
ग्नीध्रीयेऽग्निं प्रतिष्ठाप्य अग्ने नयेत्यर्धमाज्यशेषस्य जुहोति" इति।
प्रचरण्यां चतुर्गृहीतस्याज्यस्यार्धं गार्हपत्ये मन्त्रद्वयेन हुतम-
वशिष्टेऽप्यर्धमाज्यमाग्नीध्रे हुत्वा इतरदाहवनीये होतुं शेषयेत्।
विधत्ते "ग्रावणो वायव्यानि द्रोणकलशमाग्नीध्र उपवासयति"
(सं०६का०।३प्र०।२अ०) इति। स्थापयेदित्यर्थः। तद्वत्सोम-
स्यापि स्थापनप्राप्तौ तद्वारयितुं ग्रहणं विधत्ते "विह्येनं तैर्गृह्णीते
यत् सहोपवासयेदपुवायेत" (सं०६का०।३प्र०।२अ०) इति।
एनं सोमं तैर्ग्रावादिभिर्विसृज्य नेतुं गृह्णीरन्। यदि कश्चित् तैः
सह स्थापयेत् तदानीमभिषवभीत्या सोमस्योदरं पूति भवेत्।
अत्राज्यशेषस्याहवनीये होमाय उरु विष्णो इति यो मन्त्रः यश्च
ततः पूर्व्वोऽयं नो अग्निरिति यो मन्त्रस्तावुपेक्षितौ। कल्पः "त्र-
ह्मणो राजानमादाय पूर्व्वया द्वारा हविर्धानं प्रपादयति,
सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमा-
सदं" इति। गातुविन् मार्गज्ञः। सोमो जिगाति गच्छति। कं देशं
गच्छति। आसीदत्यस्मिन् हविर्धानदेश इत्यासदः देवानामाम-
इमेति। कीदृशं। निष्कृतं अलङ्कृतं। ऋतस्य यज्ञस्य योनिः कारणं
ग्रहचमसादिहविषामत्रावस्थितत्वात्। विधत्ते "सौम्यर्चा प्रपा-
दयति स्वयैवैनं देवतया प्रपादयति" इति। कल्पः "अथ
दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति, आदित्याः
सदोऽस्यदित्याः सद आसीदेति कृष्णाजिने राजानं" इति।

स्पष्टार्थतां दर्शयति "अदित्याः सदोऽस्यदित्याः सद आसीदेत्याह यथायजुरेवैतत्" (सं० ६ का०। ३ प्र०। २ अ०) इति। कल्पः "अथैनं देवताभ्यः सम्प्रयच्छति, एष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभत्" इति । एतावन्तं कालं यजमानः सोममरक्षत । इत ऊर्ध्वं हे देवा युष्मदीयं सोमं यूयमेव रक्षध्वं । यद्यपि इन्द्रादयो देवाः सर्व्वे सम्बोधनीयाः तथापि प्रेरकत्वादशेषोपलक्षणार्थं सवितैव सम्बोध्यते। मा वो दभत् सोमं रक्षमाणान् युष्मान् कश्चिदपि मा हिंसीत्। सवितृसम्बोधनतात्पर्य्यमाह "यजमानो वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सम्प्रयच्छति" (सं० ६ का०। ३ प्र०। २ अ०) इति । बोधायनः "सम-दायोपतिष्ठते, एतत् त्वꣳ सोमदेवो देवानुपागा इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण" इति । हे सोम देवः सन् भवदीयान् देवान् एतदिदानीं प्राप्तोऽसि, अहमपि मनुष्यः सन् मदीयान् मनुष्यान् इदमिदानीं प्राप्तोऽस्मि। कीदृशोऽहं। पुत्रादिप्रजया पश्वादिधनपुष्ट्या च सह वर्त्तमानः। मन्त्रभागयोर्द्वयोः प्रसिद्धिं तृतीयभागे विपक्षबाधञ्च दर्शयति "एतत् त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन् देवानुपैतीदमहं मनुष्यो मनुष्यानित्याह मनुष्यो३ ह्येष सन् मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात् सह प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिः सहेमं लोकमुपावर्त्तते" (सं० ६ का०। ३ प्र०। २ अ०) इति । बोधायनः "नमो

देवेभ्य इति प्राञ्चमञ्जलिं करोति, स्वधा पितृभ्य इति दक्षिणां, प्रत्यङ्ङथोपनिष्क्रामति, इदमहं निर्व्वरुणस्य पाशात् इत्यथा-हवनीयमुपतिष्ठते, सुवरभि विख्येषं वैश्वानरं ज्योतिः'' इति। आपस्तम्बः "इदमहं मनुष्यानिति प्रदक्षिणमावृत्य, नमो देवेभ्य इति प्राचीनमञ्जलिं कृत्वा, स्वधा पितृभ्य इति दक्षिणे, इदमहं निर्वरुणस्य पाशात् इत्युपनिष्क्रम्य, सुवरभिविख्येषं इति सर्व्वं वि-हरमनुवीक्षते, वैश्वानरं ज्योतिः इत्याहवनीयं'' इति। मन्त्र-स्यार्थप्रसिद्धिं दर्शयति "नमो देवेभ्य इत्याह नमस्कारो हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि पितृणां'' (१०६का०।३प्र०।२अ०) इति। निर्व्वरुणस्य पाशादित्यत्र नि-र्गच्छामीति अध्याहर्त्तव्यं। एतदेवाभिप्रायं दर्शयति "इदमहं निर्व्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यते'' (सं०६ का०।३प्र०।२अ०) इति। कल्पः "अथ यजमानोऽवान्तरदीक्षां विसर्जयति, अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम त-नूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि'' इति। अवान्तरदीक्षाया आदौ यजमानः स्वतनुमग्नौ सङ्कल्पेनाऽवस्थाप्य अग्नितनूञ्च स्वस्मिन्नवस्थाप्य सह व्रतनियममुपचक्रमे, इदानीन्तु शरीर-व्यत्ययस्यासमाहितत्वादृतिनोरग्नियजमानयोः स्वोचितव्रतमे-वास्तु। अत्र "सुवरभिविख्येषं वैश्वानरं ज्योतिः'' इत्येतौ मन्त्रौ परोडाशब्राह्मणे स्पष्टत्वादुपेक्षितौ। अस्य तु मन्त्रस्य प्रतीकग्रहण-पूर्व्वकं तात्पर्य्यमाह "अग्ने व्रतपत आत्मनः पूर्व्वा तनूरादेयेत्या-

ऊः को हि तद्वेद वसीयान् स्वे वशे भूते पुनर्व्वा ददाति न वेति" (सं० ६ का०।३ प्र०।२ अ०) इति। अग्ने व्रतपत इत्येतावत् प्रतीकं। स्वकीया पूर्व्वा तनूरग्निसकाशात् सहसा स्वीकार्य्येति बुद्धिमन्त आऊः । कुतः । वसीयान् अत्यन्तधनिकः प्रभुः परकीये वस्तुनि स्ववशीभूते सति पुनः स प्रभुर्ददाति वा न वेति यत् तत् को नाम वेद, ततो वशीभावात् प्रागेवादेया । ग्रावादीनामाग्नीध्रे स्थापनं यत् पूर्व्वमुक्तं तत् प्रशंसति "ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवं विद्वान् ग्रावृण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दति" (सं० ६ का०।३ प्र०।२ अ०) इति। मलिम्लुसेना विरोधितस्करसेना। अत्र विनियोगसङ्ग्रहः।

"त्वं जुषा पश्चिमे वह्नौ वैसर्जनहुतिर्द्वयं ।
शालामुखीयतो वह्निं धृत्वा प्राञ्चोऽभियान्ति हि ॥
उरु कृत्वा पूर्व्ववह्नौ सोमो राजानमग्रतः ।
हविर्धानं नयत्यत्र चर्म्मसंस्तीर्य्य सादयेत् ॥
अदितयादेष सोमं निर्दिशेत निमन्त्रयेत् ।
इदं दक्षिणमावृत्य नमः प्रागञ्जलिः स्वधा ॥
दक्षिणाञ्जलिरेतस्मान्निर्गच्छन् मण्डपादिकं ॥
सुवर्व्विहारमोक्षित्वा वैश्वा पूर्व्वाग्निमीक्षते ।
अग्ने वह्नेरुपस्थानं मन्त्राः षोडश कीर्त्तिताः" ॥ इति ।

अथ मीमांसा। प्रथमाध्यायस्य तृतीयपादे चिन्तितं ।

"वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः ।
प्रमाणं वा श्रुत्यबाधात् प्रमाश्याद्दष्टकादिवत् ॥

दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात्।

सर्व्ववेष्टनवद्बाधहीनाप्येषा न हि प्रमा'' ॥ इति।

इदं स्मर्यते "वैसर्जनवासोऽध्वर्य्युर्गृह्णाति" इति। सेयं स्मृतिः सर्ववेष्टनस्मृतिवत् प्रत्यक्षश्रुत्या न बाध्यते। ततोऽष्टकादिस्मृतिवत् मूलवेदानुमापकेन प्रमाणमिति प्राप्ते ब्रूमः। कदाचित् कश्चिदध्वर्युर्लोभादेतद्वासो जग्राह। तन्मूलैवैषा स्मृतिरित्यपि कल्पना सम्भवतीति दृष्टानुसारिणी चेयं कल्पना दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात्। तथा सत्यस्याः स्मृतेरन्यथाऽनुपपत्तौ अष्टकादिमूलश्रुतिवत् मूलश्रुतिर्न कल्पयितुं शक्यते। अतो बाधाभावेऽपि मूलवेदाभावान्नेयं स्मृतिः प्रमाणं।

अथ छन्दः। त्वꣳ सोमेति गायत्री। अयं नो अग्निरिति त्रिष्टुप्। उरु विष्णोरित्यनुष्टुप्। सोमो जिगातीति गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

अत्यन्यानगान्नान्यानुपागामर्वाक्त्वा परैरविदं परोवरैस्तं त्वा जुषे वैष्णवं देवयज्यायै देवस्त्वा सविता मध्वानक्त्वोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम

यं त्वा यꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायाच्छिन्नो रायः सुवीरः॥ १॥

यं दश च॥ ५॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः॥ * ॥

चतुर्थानुवाके वैसर्जनहोमे ऽवान्तरदीक्षां विसृज्याग्नीषोमयोराग्नीध्रीये हविर्धाने च प्रणयनमुक्तं। अथ पञ्चममारभ्यैकादशान्तेषु सप्तस्वनुवाकेषु प्रणीतयोरग्नीषोमयोः पशुर्वक्तव्यः। तत्रास्मिन् पञ्चमेऽनुवाके पश्वङ्गस्य यूपस्य छेदनमभिधीयते। बोधायनः "पुनः पूर्व्वया द्वारा उपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूपस्तष्टो भवति यत्र वा वत्स्यन्मन्यते स यः समे भूमौ स्वाद्योनौ रूढो बहुपर्णो बहुशाखो प्रति शुष्काग्रो प्रत्यगुन्नतस्तमुपतिष्ठते, अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोवरैस्त्वा जुषे वैष्णवं देवयज्यायै इति" इति। आपस्तम्बः "अतिक्रम्य यूप्याऽन्यं जोषयते, तमभिमन्त्रयते, अत्यन्यानगामित्यथैनमुपस्पृशति, तं त्वा जुषे वैष्णवं देवयज्यायै" इति। वृक्षा द्विविधाः यूप्या अयूप्याश्च। पालाशखादिरादयो यूप्याः। निम्बजम्बीरादयो अयूप्याः। हे पुरोवर्त्ति यूपवृक्ष त्वत्तोऽन्यान् कांश्चिद्यूप्यानपि समप्रदेशजन्मादिलक्षणरहितान् अत्यगां अन्यांस्त्वयूप्यान् नोपागां त्वां तु अविदं लब्धवानस्मि। कीदृशं।

परैरर्व्वाक् उत्कृष्टैर्लक्षणैः प्रत्यासन्नं तल्लक्षणयुक्तमित्यर्थः। पुनः कीदृशं। परोवरैः निकृष्टैर्लक्षणैः दूरवर्त्तिनं तद्रहितमित्यर्थः। हे वृक्ष तं त्वां विष्णुदेवताकं देवयजनार्थं सेवे। विधत्ते "वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतयाऽच्छैति" (सं०६का०।३प्र०।३अ०) इति। उरु विष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं हुत्वा ततो यूपं प्राप्तुं गच्छेत्। यथोक्तमन्त्रार्थे प्रसिद्धिं दर्शयति "अत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति नान्यानुपैत्यर्व्वाक् त्वा परैरविदं परोवरैरित्याहार्वाग्घ्येनं परैर्विन्दति परोवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते" (सं०६का०।३प्र०।३अ०) इति। कल्पः "देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सर्व्वतो मूलं पर्य्यणक्ति, ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भद्वयमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना प्रहरति" इति। मध्वा मधुरेणाज्येन। एतदेवाभिप्रेत्याह "देवस्त्वा सविता मध्वानक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै" (सं०६का०।३प्र०।३अ०) इति। विधत्ते "स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परापतति यः प्रथमः शकलः परापतेत् तमप्याहरेत् सतेजसमेवैनमाहरति" (सं०६का०।३प्र०।३अ०) इति। स्वधितिभयात् पतितस्य वृक्षतेजस आहरणाय शकलाहरणं। कल्पः "प्राञ्चं वोदञ्चं वा प्रयन्तमनुमन्त्रयते,'द्दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसीः पृथिव्या सम्भव"

इति। हे छिन्नवृक्ष त्वं पतन् दिवं मा लेखीः मा विदारीः। पृथिव्या सम्भव संयुज्यस्व अवतिष्ठस्व । अप्रसक्तप्रतिषेधबुद्धिं वारयति "इमे वै लोका यूपात् प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरित्याहैभ्य एवैनं लोकेभ्यः शमयति" (सं०६का०।३प्र०।३अ०) इति। प्रयतः पततः। कल्पः "अथाऽऽव्रश्चने हिरण्यं निधाय सम्परिस्तीर्याभिजुहोति, वनस्पते शतवल्शो विरोह स्वाहेति" इति। विधत्ते "वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति" (सं०६का०।३प्र०।३अ०) इति। आव्रश्च्यते वृक्षो यस्मात् मूलादित्याव्रश्चनं भूयांसो बहवो वल्शाः पलाशशाखा विशेषाः। कल्पः "सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशति" इति। विरोहेवेत्याशीरर्थो विवक्षित इत्याह "सहस्रवल्शा वि वयꣳ रुहेमेत्याहाशिषमेवैतामाशास्ते" (सं०६का०।३प्र०।३अ०) इति। कल्पः "अन्वग्रꣳ शाखाः प्रश्नयति, यं त्वा यꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति" इति। हे छिन्नवृक्ष तेतिजानः तीक्ष्णोऽयं स्वधितिः यं त्वां महते सौभगाय दर्शनीयत्वाय तिर्यक्शाखाच्छेदनेन प्रणिनाय प्रकर्षेणयूपत्वं प्रापयामास ततस्तादृशेन त्वया छेदनान्न भेतव्यं। कल्पः "अच्छिन्नो रायःसुवीर इत्यग्रं परिवासयति" इति। हे यूप त्वमच्छिन्नो भव। मन्त्रसामर्थ्येन छेदव्यथा तव मा भूत्। कीदृशस्त्वं। सुवीरः शोभना वीरा यजमानपुत्रपौत्रादयो येन त्वया लभ्यन्ते स त्वं सुवीरः। तादृशस्त्वं रायो धनानि

यजमानाय देहि । यं त्वाऽयमच्छिद्ब्रो राय इत्येतौ मन्त्रौ उपेचितौ । योऽयं यूपार्थो वृचच्छेदः पूर्व्वमुक्तः तत्र छेदे छेद्यवृचस्य प्रदेशं विधत्ते "अनचसङ्गं वृश्चेत्" (सं०६का०।३प्र०।३अ०) इति । छिन्नावशिष्टस्य मूलस्योपरि गच्छतः शकटस्याचो यथा न प्रसज्यते तथा नीचं मूलमवस्थाप्य छिन्द्यात् । विपचे बाधकमाह "यदचसङ्गं वृश्चेदध ईषं यजमानस्य प्रमायुकꣳ स्यात्" (सं०६का०।३प्र०।३अ०) इति । यदि छिन्ने वृचमूले शकटस्याचः प्रसज्येत तदा यजमानसम्बन्धि गोवत्सादिकं ईषाया अधोमरणशीलं भवेत् । शकटस्य प्राचीनं दीर्घकाष्ठमीषा । शाखाया यूपार्थं छेदनं निन्दति "यं कामयेताऽप्रतिष्ठितस्स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति" (सं०६का०।३प्र०।३अ०) इति । वृचमारुह्य जायत इत्यारोहो शाखा । स च भूमावनुत्पन्नत्वादप्रतिष्ठितः तस्य यूपत्वेन यजमानोऽप्रतिष्ठित एव भवति । अपर्णमपि निन्दति "यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति"(सं०६का०।३प्र०।३अ०)इति । वनस्पतीनां मध्ये एष पर्णरहितः शुष्काग्रश्चापशव्यः पशुभ्यो न हितः । बहुपर्णं विधत्ते "यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै वनस्पतीनां पशव्यः पशुमानेव भवति" (सं०६का०।३प्र०।३अ०) इति । भूमौ समप्रदेशे स्वबीजादुत्पन्नं विधत्ते "प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः प्रत्येव

तिष्ठति" (सं०६का०।१प्र०।१अ०) इति। स्वाद्योनेरित्यनेन वृक्षजन्या शाखा व्यावर्त्यते। पश्चिमदिग्वोन्नतं विधत्ते "यः प्रत्यङुपनतस्तं वृश्चेत् स हि मेधमभ्युपनतः"(सं०६का०।३प्र०।३अ०) इति। मेधो यज्ञः स चोत्तरवेद्यां क्रियमाणो यूपस्थानात् प्रत्यग्भवति। अतो मेधमभिलक्ष्यैव उपनतः। यूपस्य काम्यानि परिमाणानि विधत्ते "पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो नमति षडरत्निं प्रतिष्ठा कामस्य षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्करी पशवः शक्करी पशूनेवावरुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन सम्मितं तेजस्त्रिवृत् तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदश प्रजापतिः प्रजापतेराप्त्या एकविंशत्यरत्निं प्रतिष्ठाकामस्यैकविंशस्तोमानां प्रतिष्ठाप्रतिष्ठित्यै" (सं०६का०।३प्र०।३अ०) इति। चतुर्विंशत्यङ्गुलो अरत्निः। उत्तरो यज्ञः सोमविकृतिः। विधत्ते "अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजोगायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन सम्मितः" (सं०६का०।३प्र०।३अ०) इति। गायत्र्यास्तेजस्त्वमग्निना सहोत्पन्नत्वात्। यज्ञमुखत्वञ्च प्रातःसवने प्रयोज्यत्वात्। अतोऽष्टमङ्ख्याद्वारा तेजोगायत्री यज्ञमुखैः

समाना भवति। तस्मात् तत्त्वणेन यूपस्य अष्टावश्रयः कार्याः। अत्र विनियोगसङ्ग्रहः।

"अतिवृत्तं मन्त्रयित्वा तं त्वा यूपतरुं स्पृशेत्।
देवस्त्वन्मूलमभ्यज्य त्वोषदर्भान्तरायतः॥
स्वधि च्छिन्द्याद्दिवं प्राच्यां पातयेद्दनशेषिते।
मूले हुत्वा सहेत्यात्मास्पर्शो यं त्वाऽङ्गकानि च॥
अच्छित्ययस्य सच्छिन्द्याद्दश मन्त्रा उदीरिताः"॥ इति।

अथ मीमांसा। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

"यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा।
प्रयाजवत्तदङ्गत्वान्नयनं चापकृष्यतां॥
अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा।
प्रयाजाघारवैषम्याच्छ्रुतमात्रापकर्षणं"॥ इति।

ज्योतिष्टोमे श्रूयते वैसर्जनहोमकाले प्राचीनवंशगतो वह्निराग्नीध्रीये प्रणेतव्यः सोमस्य प्राचीनवंशे पूर्व्वस्थापितः इदानीं हविर्धाने प्रणेतव्यः। तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः। तदेतत् सर्व्वं सुत्यादिनात् प्राचीन औपसथ्ये दिने प्राप्ते तत्र यूपच्छेदो दिनत्रयात् पूर्व्वस्मिन् काले प्रकृष्टः। दीक्षासु यूपं छिनत्तीति तद्विधानात्। तस्मिन्नपकृष्टे प्रयाजन्यायेन तदन्ताङ्गसमूहस्य अपकर्षात् प्रणयनमप्यपकृष्यतामिति प्राप्ते ब्रूमः। प्रयाजाघारादीनामेकमेव प्रधानं। क्रत्वङ्गत्वेनैकप्रयोगान्तःपातित्वादवश्यं भावी परस्परक्रम इति प्रयाजापकर्षे तदन्ताङ्गसमूहापकर्षो युक्तः। इह तु प्रणयनं सोमयागाङ्गं। यूपच्छेदस्त्वग्नीषो-

मीयपशोरङ्गमिति प्रणयनच्छेदयोर्नान्योन्यक्रमो विवचितः। तस्माच्छ्रुतस्य यूपच्छेदमात्रस्यापकर्षः। एकादशाध्यायस्य हतीयपादे चिन्तितं।

"अग्नीषोमीयभिन्नेषु यूपो भिन्नोऽथ तन्त्रता।
उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः"॥ इति।

ज्योतिष्टोमे पशव अग्नीषोमीयसवनीयानूबन्ध्यास्त्रयो विहिताः, तेषु यूपच्छेदो युक्तः। कुतः। अग्नीषोमीय प्रत्यचवचनेन तदुपदेशात, इतरयोश्चोदकाभ्यामतिदेशादिति प्राप्ते ब्रूमः। न तावदग्नीषोमीयपशोः कर्म्मणः काले यूपस्योत्पत्तिः। ततः प्रागेव यूपोत्पत्तिकालः। दीचासु यूपं छिनत्ति क्रीते राजनीति तत्कालविधानात्। अत आधानवत् सर्वार्थत्वं सम्भवति। यथा स्वकाले सम्पन्नमाधानं तद्वाक्यविशेषैस्तेषु तेषु कर्म्मसु सम्बध्यते तथा स्वकाले छेदनादिना निष्पन्नो यूपः प्रत्यचचोदकोक्तिभ्यां तत्र तत्र विनियुज्यते। तस्मात् तन्त्रेण यूपः सम्पादनीयः। तत्रैव द्वितीयपादे चिन्तितं।

"यूपैकादशिनी यूपाहुतेर्भेदोऽथ तन्त्रता।
सामीप्यभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः"॥ इति।

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात् सामीप्यानाञ्च भेदादिति प्राप्ते ब्रूमः। न तावदत्यन्तसामीप्यं सम्भवति यूपदाहप्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेयं। तथा

सति देशैक्यमश्रवादाकृतेस्तन्त्रता अष्टमाध्यायस्य* तृतीयपादे चिन्तितं।

"अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः।
अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणात् पुनः" ॥ इति।

यदा यूपार्थं खादिरमलब्ध्वा अखादिरे तक्षणादिना संस्कृते सति पश्चान्मुख्यः खादिरो यदि पशुनियोजनात् प्रागेव लभ्यते तदा तक्षणादिसंस्कृतः प्रतिनिधिरखादिर एव ग्राह्यः, असंस्कृतात् संस्कृतस्य प्रशस्तत्वादिति चेत्। मैवं। मुख्यखादिरे पुनस्तक्षणादिसंस्कारः कर्त्तव्यः। तथा सति संस्कृतस्य मुख्यस्य लाभात् प्रतिनिधिः संस्कृतोऽपि परित्याज्यः। तत्रैवान्यच्चिन्तितं।

"पशौ नियुक्ते खादिरलाभे कार्यं पुनर्न वा।
साद्गुण्याय पुनः कार्यं मुख्या वृत्तिर्गुणान्न हि" ॥ इति।

यदा संस्कृते प्रतिनिधौ पशुर्नियुज्यते तत ऊर्ध्वं खादिरो यदि लभ्येत तदापि पूर्व्वन्यायेन मुख्यलाभात् साद्गुण्याय मुख्ये यूपे पुनर्नियोजनं कार्य्यमिति चेत्। मैवं। गुणभूतो यूपः। पशुनियोजनं प्रधानं। न हि गुणानुसारेण प्रधानस्यावृत्तिर्युक्ता तस्मान्न नियोजनं पुनः कार्य्यं। तत्रैवान्यच्चिन्तितं।

"अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा तु किं।
अतो बहुगुणालोपान्न मुख्यायास्तु लोपनं" ॥ इति।

यदा अमुख्योऽखादिरः स्थूलत्वात् तक्षणादिसंस्कारयोग्यः मुख्यस्तु खादिरः सूक्ष्मत्वादयोग्यः तदा तक्षणादिबहुगुणलोपो

---

* षष्ठाध्यायस्य इति का० पा०।

मा भूदिति प्रतिनिधिरेव आदरणीय इति चेत्। मैवं। मुख्यसिद्धये गुणलोपस्य सोढुं शक्यत्वात् तस्मात् कृशोऽपि मुख्य एवोपादेयः। तत्रैवान्यच्चिन्तितं।

"नियोजनेऽप्ययोग्यश्चेत् खादिरः किं तदा भवेत्।
मुख्यत्वेन स एव स्यात् तद्वैयर्थ्येन हेतुना" * ॥ इति।

यदा त्वत्यन्तकृशत्वात् तक्षणादिरहितोऽपि खादिरः योजनेऽप्ययोग्यः तदापि मुख्यत्वात् खादिर एवोपादेय इति चेत्। मैवं। उपात्तस्य मुख्यस्य वैयर्थ्यात् प्रयोजनाभावात् नियोजनयोग्यः प्रतिनिधिरेव ग्राह्यः। अत्र नास्ति छन्दः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः॥ * ॥

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषो यवयाऽरातीः पितृणाꣳ सदनमसि स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ताद्देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳह ते ते धामान्युश्मसि॥ १॥ गमध्ये गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः। विष्णोः

* न ह्यौतरत् इति का० पा०।

कर्म्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा। तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततं। ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्य्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह परिवीरसि परि त्वा दैवीर्विशोऽव्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या अन्तरिक्षस्य त्वा सानाववगूहामि ॥ २ ॥

उश्मसी पोपमेकान्न विꣳशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

पञ्चमे ऽनुवाके यूपच्छेदो वर्णितः। छिन्नस्य यूपस्य स्थापनं षष्ठेऽनुवाके वर्ण्यते। कल्पः "यूप एष प्रक्षालितः प्रपन्नः सम्पन्नचषालः प्रागवटादुपशेते तमुत्तरेणाहवनीयं तिष्ठन् पराञ्चं प्रोक्षयति, पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा" इति। प्रोक्षामीति शेषः। चषालो यूपाग्रे प्रतिमुच्यमानः कटकः। लोकत्रयाभिमानीदेवताप्रीत्यर्थं प्रोक्षणमित्याह "पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति" (सं०६का०।३प्र०।४अ०) इति। नाक्षोदुम्बर्या इवाग्रमारभ्याधोमुखप्रोक्षणं किन्तु मूलमारभ्योर्ध्वमुखमिति विधत्ते "पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः" (सं०६का०।३प्र०।४अ०) इति। कल्पः "अवटे

अपोऽवनयति, शुन्धतां लोकः पितृषदन इति यवान् प्रस्कन्दति, यवोऽसि यवयास्मद्द्वेषो यवया रातीरिति बर्हिर्हस्तं व्यतिषज्याऽवस्तृणाति, पितृणाꣳ सदनमसि" इति। यूपस्थापनार्थो यो अवटः तस्मिन् प्रोक्षणशेषं निनीय यवान् प्रक्षिप्य बर्हिर्मुष्टेरर्धं प्रागग्रमूर्ध्वमुदगग्रमित्येवं प्रतिषज्य बर्हिरवस्तृणीयात्। एतानर्थान् विधत्ते "क्रूरमिव वा एतत् करोति यत् खनत्यपोऽवनयति शान्त्यै यवमतीरवनयत्यूर्ग्वै यवो यजमानेन यूपः सम्मितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति पितृणाꣳ सदनमसीति बर्हिरवस्तृणाति पितृदेवत्या ३ आꣳ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य्य मिनुयात् पितृदेवत्यो निखातस्याद्बर्हिरवस्तीर्य्य मिनोत्यस्यामेवैनं मिनोति" (सं० ६ का०।३ प्र०।४ अ०) इति। यद्यप्यत्र यूपावटखननं नाम्नातं तथाप्यौदुम्बर्यामाम्नातं तस्यैवानुवृत्तिमभिप्रेत्य यत् खनतीत्यनूद्यते तदनुवृत्तये समानविषयत्वं प्रत्यभिज्ञापयितुमेव तत्र विहितमप्यवनयनादिकं पुनरत्र विधीयते। कल्पः "यूपशकलमवास्यति, स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तात्" इति। शोभन आवेशो यूपावटस्थितिलक्षणो यस्मिन् प्रथमशकले स स्वावेशः। हे शकल त्वं स्वावेशोऽसि। यूपस्य त्रयो नेतारः प्रथमशकलः स्वरुश्चषालश्चेति तेषां नेतॄणां मध्ये त्वमग्रेगाः प्रथमभावी वनस्पतिरूपो यूपस्त्वामधिष्ठास्यति तस्य वित्तात् तं यूपं अनुजानीहि। विधत्ते "यूपशकलमवास्यति सतेजसमेवैनं मिनोति" (सं० ६ का०।३ प्र०।४ अ०) इति। यत् पूर्वत्राक्त

"स्वधितेर्वृचस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परापतति" इति शकले प्रचिप्ते सति तेजसा सहितमेवैनं यूपं स्थापितवान् भवति। कल्पः "अथ प्रवृह्य चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वा ऽनक्तु" इति। मध्वा मधुरेण तेजोरूपेणाज्येन। तदिदं दर्शयति "देवस्त्वा सविता मध्वा ऽनक्त्वित्याह तेजसैवैन-मनक्ति" (सं०६का०।३प्र०।४अ०) इति। कल्पः "अन्तरतो बाह्यतश्च स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति, सुपिप्पलाभ्यस्त्वौ-षधीभ्यः" इति। यूपस्याग्रभागः पूर्व्वमच्छिन्नो रायः सुवीर इति मन्त्रेण छिन्नस्तेन निष्पादितश्चतुरङ्गुलोच्छ्रितः सच्छिद्रश्च-षालः। हे चषाल त्वां यूपाग्रे प्रतिमुञ्चामि। किमर्थं। शोभन-फलसंयुक्तौषधार्थं। विधत्ते "सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रतिमुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्ति" (सं० ६का०। ३प्र०।४अ०) इति। यस्मात् फलार्थमग्रे चषालः प्रतिमुक्तः तस्माच्छिरस्यग्रे फलग्रहणं। विधत्ते "अनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाग्निः सम्मिता यदग्निष्ठामग्निमनक्ति यजमानमेव तेजसानक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसानक्ति" (सं०६का०। ३प्र०।४अ०) इति। तच्चणेन निष्पादितास्वष्टासु अश्रीषु मध्ये येऽयमाहवनीयाग्निसमीपे स्थिता साऽग्निष्ठा तामाज्येनानक्ति। तदेवमञ्जनममन्त्रकमिति बोधायनस्य मतं "अथ स्रुवेणाग्निष्ठा-मश्रिमभिघारयन्नाह, यूपायाऽज्यमानायानु ब्रूहि" इतिएता-वता एवाभिधानात्। आपस्तम्बस्तु समन्त्रकतामाह "देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण सन्ततमवच्छिन्दन्नग्निष्ठामश्रिमन-

क्षोपरात्'' इति। अवटे चिप्यमाणे मूलभाग उपरं मूलतो नष्टमुपरमिति। विधत्ते "सर्व्वतः परिमृशत्यपरिवर्गमेवास्मिन् तेजो दधाति" इति। यजमाने कमप्यवयवमवर्जयित्वा तेजो दधातीति। कल्पः "उच्छ्रयति, उद्दिवꣳ स्तभानान्तरिचं पृण पृथिवीमुपरेण दृꣳह" इति। वाक्यत्रयप्रयोजनमाह "उद्दिवꣳ स्तभानान्तरिचं पृणेत्याहैषां लोकानां विधृत्यै" (मं०६का०।३प्र०।४अ०) इति। बौधायनः "अथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति, ते ते धामानि, विष्णोः कर्म्माणि, इति द्वाभ्यां मयत्राग्निष्ठामश्रिमाहवनीये मन्यादयति। तद्यूपस्य चषालं परीचयति, "तद्विष्णोः परमं पदꣳ सदापश्यन्ति सूरयः। दिवीव चक्षुराततं'' इति। आपस्तम्बः "ते ते धामानीत्यवटे ऽवदधाति विष्णोः कर्म्माणि पश्यतेति द्वाभ्यामाहवनीयेनाग्निष्ठाꣳ सम्मिनोति" इति। आद्यो मन्त्र एवमाम्नातः "ते ते धामान्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः'' इति। ते तानि ते तव धामानि स्थानानि उश्मसि कामयामहे। गमध्यै गन्तुं गावो गन्तारः। भूरिशृङ्गा बहुदीप्तयः। अयासः अनपाया अत एव उरुगायस्य महात्मभिर्गीयमानस्य भूरेर्महतः। हे यूपाभिमानिन् विष्णो तव तानि स्थानानि गन्तुं कामयामहे यदि गन्तारो बहुदीप्तयो वर्त्तन्ते न कदाचिदपयन्ति। एष्वेव स्थानेषु महात्मभिर्गीयमानस्य महतो विष्णोस्तत्परमं पदमवभाति तादृशस्थानप्राप्तिहेतवे कर्मणि यूपोऽस्मिन्नवटे तिष्ठतु। विधत्ते "वैष्णव्यर्चा कल्पयति

वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयति" (सं० ६का०।३प्र०।४अ०) इति। ते ते धामानीत्यमो वैष्णवी कल्पयति उच्छ्रयेत्। मन्त्रान्तरं त्वेवमाम्नातं "विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा" इति। हे जना विष्णोः कर्म्माणि सृष्टिस्थितिसंहारचरितानि पश्यत यतो यैः कर्मभिः व्रतानि भवदीयलौकिकवैदिककर्माणि पस्पशे सृष्टवान् निर्मितवान् सविष्णुरिन्द्रस्य युज्यो योग्यः सखा। तद्विष्णोरिति मन्त्रस्यायमर्थः। सूरयो विद्वांसो वेदान्तपारं गता विष्णोस्तत्परमं पदं स्वरूपं सदा पश्यन्ति। कीदृशं। दिवि आकाशे निरावरणं प्रसृतं चक्षुरिव आततं व्याप्तं तादृशस्य विष्णोरनुग्रहात् वैष्णवस्य यूपस्याग्निष्ठामश्रिमाहवनीयेन सम्मितां स्थापयामीत्यर्थः। अस्मिन् स्थापने विष्णोःकर्म्माणि तद्विष्णोरिति मन्त्रद्वयं विनियुङ्क्ते "द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै" (सं०६का०।३प्र०।४अ०) इति। ते ते धामानीत्यादीनां त्रयाणां मन्त्राणां पदार्था उपेक्षिताः। अग्निष्ठाश्रिस्थापने पूर्व्वपक्षं दर्शयति "यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाऽतिनावयेत् तेजसैवैनं देवताभिरिन्द्रियेण व्यर्द्धयति" (सं०६का०।३प्र०।४अ०) इति। तक्षणवेलायामष्टा स्वश्रिषु काञ्चिदश्रिमियं अग्निष्ठेति प्रज्ञातां कुर्य्यात् तामश्रिं यूपस्य पश्चिमभागे स्थितादाहवनीयमतिलङ्घ्य दक्षिणत उत्तरतो वा नावयेत् न प्रापयेत्। तथा सति तेजआदिभिर्व्यर्धयति वियोजयति। सिद्धान्तं दर्शयति "यं कामयेत तेजसैनं देवताभिरिन्द्रियेण

समर्धयेयमित्यग्निष्ठां तस्याग्निमाहवनीयेन सम्मिनुयात् तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति" (सं०६का०।३प्र०।४अ०) इति। कल्पः "अथैनं प्रदक्षिणं पर्यूहति, ब्रह्मवनिं त्वा क्षत्रवनिᳪ सुप्रजावनिᳪ रायस्पोषवनिं पर्य्यूहामीति मैत्रावरुणदण्डेन संहन्ति, ब्रह्म दृᳪह क्षत्रं दृᳪह प्रजां दृᳪह रायस्पोषं दृᳪह" इति। मन्त्रयोः स्पष्टार्थतां दर्शयति "ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्" (सं०६का०।३प्र०।४अ०) इति। कल्पः "त्रिः प्रदक्षिणं परिव्ययति, परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमᳪ रायस्पोषो यजमानं मनुष्याः" इति। हे यूप त्वं परिवीरसि परितो रशनया वीतो वेष्टितोऽसि। दैवीर्विशो देवसम्बन्धिन्यः प्रजा मरुद्गणादयः त्वां परितो व्ययन्तां वेष्टयन्तु, तद्वदिमं यजमानं धनपुत्रभृत्यादिमनुष्याः परिव्ययन्ताम्। कल्पः "स्वरुमादाय,अन्तरिक्षस्य त्वा सानाववगूहामि इत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहति" इति। हे स्वरो त्वं अन्तरिक्षलोकवर्त्तिनो रशनागुणस्य सानौ पार्श्वेऽवगूढं करोमि। मन्त्रयोरर्थ उपेक्षितः। विधत्ते "परिव्ययत्यूर्ग्वै रशना यजमानेन यूपः सम्मितो यजमानमेवोर्जा समर्धयति" (सं०६का०।३प्र०।४अ०) इति। ओषधिविशेषैर्दर्भैरुत्पन्नत्वात् रशनाया ऊर्ग्रूपत्वतया यूपस्य सम्बन्धे सति यूपप्रमाणहेतुर्यजमान एवान्नेन समृद्धो भवति। रशनाया मध्यमगुणस्य देशं विधत्ते "नाभिदघ्ने परिव्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जन्ते" (सं०६का०।३प्र०।४अ०) इति। असौ अस्य यजमानस्य

नाभिदघ्ने उदरे ऊर्जं स्थापयति। ततः सर्व्वे तत्र ऊर्जा भुञ्जते भुक्तामूर्जं धारयति। प्रशंसार्थं निन्द्यं पक्षमुपन्यस्यति "यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां वा तस्या वाचीं वा वोहेदूर्जैवैनं व्यर्धयति" (सं०६का०।३प्र०।४अ०) इति। उदरसदृशान्नाभिदघ्नादूर्ध्वमधो वा रशनावेष्टने यजमानमन्नेन वियोजयति। कामनाभेदेन देशविशेषं विधत्ते "यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नियच्छति यदि कामयेता वर्षुकः स्यादित्यूर्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति" (सं०६का०।३प्र०।४अ०) इति। नाभिदघ्नदेशादवाचीनमधोदेशवद्धां पुनरप्यवोहेत् अपकर्षेत्। तेन वृष्टिं नियच्छति न्यग्भावेन प्रवर्त्तयति। ऊर्ध्वप्रदेशवद्धां पुनरप्युदूहेत् उत्कर्षेत्। तेन वृष्टिमुद्यच्छति ऊर्ध्वं प्रवर्त्तयति निवारयतीत्यर्थः। यूपं सर्व्वदेवताप्रीतिहेतुतया स्तौति "पितॄणां निखातं मनुष्याणामूर्ध्वं निखातादारशनाया ओषधीनाꣳ रशनाविश्वेषां देवानामूर्ध्वꣳ रशनाया आचषालादिन्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्व्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्व्वा एव देवताः प्रीणाति" (सं०६का०।३प्र०।४अ०) इति। निखातमपरं पितॄणां प्रियं निखातरशनादेशयोर्मध्यं मनुष्याणां रशनादेश ओषधीनां तद्देशचषालयोर्मध्यं विश्वेषां देवानां चषालदेश इन्द्रस्य अतिरिक्तं साध्यानां। तच्च सूत्रे दर्शितं "यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्य अतिरिक्तं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा" इति। पुनरपि स्वर्गलोकावगतिहेतुतया यूपं स्तौति "यज्ञेन वै देवाः

सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नो ऽन्वाभवष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन् तमृषयो यूपेनैवानुप्राजानन् तद्यूपस्य यूपत्वं यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै"(सं० ६का०।३प्र०।४अ०) इति। देवाः पुरा कदाचिद्यज्ञं कृत्वा तेन यज्ञेन सुवर्गं गच्छन्तः मनुष्या अप्यस्मानन्वागत्यास्मत्सदृशास्ते भविष्यन्तीति मत्वा यूपेन मनुष्यान् योपयित्वा मोहयित्वा स्वयमेव स्वर्गं गता यूपः सर्व्वदेवत्य इत्यज्ञात्वा काष्ठमात्ररूप इति बुद्धिर्मोहः। ऋषयस्तु यूपमाहात्म्यस्यातीन्द्रियस्यापि द्रष्टारः। तेनैव विदिततत्त्वेन यूपेन देवा ननु तं स्वर्गं प्रज्ञातवन्तः। तत् तस्मान्मनुष्यमोहनहेतुत्वाद्यूपस्य यूपनाम सम्पन्नं। यूपविमोहन इत्यस्माद्धातोर्यूपशब्दो निष्पन्नः। एवञ्च सति विदितमाहात्म्यस्य यूपस्यानेन स्वर्गः प्रज्ञायते। आहवनीयात् पूर्व्वदेशे यूपस्थापनाय विधत्ते"पुरस्तान् मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञातꣳ हि तद्यदतिपन्न आऊरिदं कार्य्यमासीदिति"(सं०६का०।३प्र०।४अ०) इति। अत्र सूत्रं "अग्रेणाहवीयं यूपावटं खनत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि"इति। विधिवाक्ये पुरस्ताच्छब्दः पूर्व्वदेशवाची। अर्थवादे तु पूर्व्वकालवाची। यज्ञस्य सम्बन्धी यत् कर्त्तव्यमनुजातं तत् सर्व्वमनुष्ठानात् पूर्व्वमेव प्रज्ञायते। तथा च ब्राह्मणान्तरं"आचतुर्थात् कर्म्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामि" इति। यत् तु पूर्व्वं न ज्ञातं तत् पश्चाद्बुद्धमपि सत् अज्ञातमेव यस्मांल्लोके विस्मरणेनान्यथा करणेन वा कस्मिंश्चिदनुष्ठेये अतिपन्ने विनष्टे सति पश्चात् क्लिश्यन्त आऊरिदं गमनादिकं अध्यय-

नादिकं वा तस्मिन्नेव दिने कार्य्यमासीत् न त्वस्माभिस्तदानीं प्रज्ञातमिति। तस्मात् पूर्व्वकालस्य प्रज्ञानार्हत्वेन प्रशस्तत्वात् पूर्व्वदेशोऽपि पूर्व्वत्वसाम्येन प्रशस्तः। अथ यदुक्तं चषालादतिरिक्तं साध्यानामिति तत् समर्थ्यते "साध्या वै देवा यज्ञमत्यमन्यन्त तान् यज्ञो नास्पृशत् तान् यद्यज्ञस्यातिरिक्तमासीत् तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेतद्यूपस्य तदूर्ध्वं चषालात् तेषां तद्भागधेयं तानेव तेन प्रीणाति" (सं०६का०।३प्र०।४अ०) इति। साध्या नामका देवाः पुरा यज्ञक्लृप्तं यज्ञभागमतिलङ्घ्याधिको भागोऽस्माकमस्त्वित्यमन्यन्त। तान् अधिकलिप्समानान् यज्ञो नास्पृशत्। तर्हि किं अस्पृशत्। एतत् यज्ञस्यातिरिक्तमिहासीत् तत् तानस्पृशत्। किं अतिरिक्तं। यदग्नावग्निं मथित्वा प्रहरणमस्ति तदन्ययज्ञेऽभावादिहातिरिक्तं यदपि चषालादूर्ध्वं यूपाग्रं तदपि यजमानपरिमाणादधिकत्वादतिरिक्तं। तदुभयं साध्यानां प्रीतिहेतुः। यूपप्रसङ्गात् स्वकाले स्वरुहोमं विधत्ते "देवा वै सꣳस्थिते सोमे प्र स्रुचो हरन् प्रयूपं ते ऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां निष्क्रयणमपश्यन् स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुमयज्ञवेशसाय" (सं०६का०।३प्र०।४अ०) इति। पुरा देवाः समाप्ते सोमयागे स्रुचो यूपञ्चाग्नौ प्राहरन् अग्नौ प्रहर्तुं सङ्कल्पितवन्तः। ततो यज्ञविनाशो मा भूदिति विचार्य्य प्रस्तरेण स्रुचः स्वरुणा यूपञ्च निष्क्रीतवन्तः। तस्मात् सोमसमाप्तौ प्रस्तरमग्नौ प्रहरेत् स्वरुञ्च जुहुयात्। स्वरुः यूप-

तक्षणे प्रथमः शकलः। तथा च सूत्रं "अव्रतचणानां स्वरुम-धिमन्थनशकलं" इति। अत्र विनियोगसङ्ग्रहः।

"पृथिव्येषद्वं पुरे वात्र खावे प्रथमपातितं।
शकलं त्ववटे चिप्ता देवोऽग्निष्ठाश्रिकाञ्जनं॥
सुप्यारोपस्वषालाग्रे स्युदि यूपं समुच्छ्रयेत्।
ते तेऽवटे चिपेद्विष्णो द्वाभ्यां यूपस्य कल्पनं॥
ब्रह्मद्वयं गतो यूपो रज्वा संवेष्ट्यते परि।
अन्त स्वरुं तत्र गूहेदिति सप्तदशेरिता"॥ इति।

अथ मीमांसा। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

"अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत्।
देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते॥
बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ।
मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते"॥ इति।

अग्नीषोमीयपशौ यूपं मिनोति इति प्रकृत्य श्रूयते अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति। यूपं संस्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति। बुभुत्सायां तन्निर्णयाय यूपमूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यं। तस्य च मीयमानस्य वेद्यभ्यन्तरभागोऽङ्गत्वेन विधीयत इति चेत्। मैवं। यथा संस्कृतो वेद्यन्तरभागोऽर्धमन्तर्वेदीत्यनेन वाक्येन विधीयते तद्वदसंस्कृतो वेदिबहिर्भागोऽप्यर्धं बहिर्वेदीत्यनेन वाक्येन विधातव्यं। ततो वाक्यं भिद्येत। यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितो संस्कृतो लौकिको देशो मीयमानयूपोचितो विधीयते तदा

नास्ति वाक्यभेदः। तस्माल्लौकिकदेश एवात्र यूपाङ्गत्वेन विधीयते न तु संस्कृतवेदिभागः।

अथ छन्दः। ते ते धामानीति त्रिष्टुप्। विष्णोः कर्माणि तद्विष्णोरित्युभे गायत्र्यौ। इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः॥ * ॥

इषे त्वोपवीरस्युपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवतीरमध्वमग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा घृतेनाक्ते वृषणं दधाथां गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं छन्दोऽनुप्रजायस्व जागतं छन्दोऽनुप्रजायस्व भवतं॥ १ ॥

नः समनसौ समोकसावरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः। अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाकर्भागधेयं॥ २ ॥

भवतमेकचित्वारिꣳशच्च॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ० ॥

षष्ठेऽनुवाके यूपस्थापनमुक्तं। तस्मिन् यूपे पशुं नियोक्तुं उपाकरणमस्मिन् सप्तमेऽनुवाकेऽभिधीयते। बोधायनः "अथैतं पशुं पल्पूलितं अन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात् प्रत्यङ्मुखमुपस्थापयति, तमिषे त्वेति बर्हिषी आदायोपाकरोति, उपवीरस्युपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसुरण्व रेवतीरमध्वं" इति। पल्पूलितं स्नापितं। आपस्तम्बः "इषे त्वेति बर्हिषी आदत्ते, उपवीरसीति प्लक्षशाखां, बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात् प्रत्यञ्चं पशुमुपाकरोति, उपो देवान् दैवीर्विशः" इति। हे बर्हिः इषे पशुलक्षणायान्नायेष्यमाणाय त्वामाददे। बर्हिरिति जातावेकवचनं। उपाकर्तुं वेति गच्छतीत्युपवीः। हे प्लक्षशाखे त्वमुपवीरसि। उपो समीपे प्रागुः प्राप्ताः। के। उपाक्रियमाणपशुसम्बन्धिहृदयाद्यवयवा इत्यर्थाल्लभ्यते। कान् प्राप्ताः। देवानग्नीषोमादीन्। दैवीर्विशः देवसम्बन्धिनीः प्रजाश्च। किञ्च वह्नीः यागनिर्वाहकान् उशिजः शेषभक्षणकामान् प्राप्ताः। हे बृहस्पते वसूनि हृदयादिद्रव्याणि धारय पोषय। हे पशो ते त्वदीयानि हव्यानि स्वदन्तां स्वादूनि भवन्तु। हे देव त्वष्टृनामकवसु पशुद्रव्यं रण्व रमणीयं कुरु। हे रेवतीः क्षीरादिधनवन्तः। हे पशवः रमध्वं यजमानगृहे क्रीडध्वं। कल्पः "अग्नेर्जनित्रमसीत्यभिमन्थनशकलं निदधाति, वृषणौ स्थ इति प्राञ्चौ दर्भौ, उर्वश्यसीत्यधरारणीमादत्ते, पुरूरवा इत्युत्तरारणिं, घृतेनाक्ते वृषणं दधाथामित्युभे ऽभिमन्त्र्य, आयुरसीति समवधायेति" इति।

हे शकल त्वमग्नेर्जनित्रमसि। हे दर्भौ युवां वृषणौ वीर्य्यसेचकौ स्थः। हे अधरारणे त्वं उर्व्वश्या सदृशी भवसि। हे उत्तरारणे त्वं पुरूरवसा समानासि। हे उभे अरणी युवां घृतेनाक्ते सत्यौ सेचनं पोषयतां। हे अरणिद्वय मातापितृस्थानीय त्वं आयुरसि। यज्ञस्यायुस्थानीयमसि पुत्रस्थानीयवह्निमुत्पादयतां। यज्ञाभिवृद्धिकरत्वात् यद्यपि तत्र पाठक्रमेण इषे त्वादय उपाकरणमन्त्राः प्रथमं व्याख्यातव्याः तथापि पूर्व्वानुवाके प्रसङ्गाद्यदुक्तं "अतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरति" इति तद्विस्पष्टयितुमादौ अग्निमन्थनमन्त्रान् व्याचिख्यासुः मन्थनविशिष्टमग्निप्रहरणं विधत्ते "साध्या वै देवा अस्मिन् लोक आसन् नान्यत् किञ्चन मिषत्तेऽग्निमेवाग्नये मेधायालभन्त न ह्यन्यदालभ्यमविन्दन् ततो वा इमाः प्रजाः प्रजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय" (सं०६का०।३प्र०।५अ०) इति। मनुष्यपश्वादिसृष्टेः पुरा लोके साध्यनामका देवा आसन्। अन्यत् किमपि ईषत् प्राणिजातं नासीत्। ते च साध्याः प्रजाकामास्तद्धेतवे यज्ञाय आलभन्त अन्यदालम्भनयोग्यं पशुजातमलब्ध्वा अग्निमेव पशुत्वेन अग्नये देवतायै आलभन्त पुरुषारण्यपशुन्यायेन पर्य्यग्निकरणान्तान् संस्कारान् अकुर्व्वत। तथा चाश्वमेधकाण्डे श्रूयते "पर्य्यग्निकृतं पुरुषं चारण्याꣳश्चोत्सृजन्त्यहिꣳसायै" इति। तथाग्न्यालम्भनरूपाद्यज्ञात् एष प्रजा असृजन्त। तस्मात् पूर्व्वसिद्धाग्नौ मथिताग्नेः प्रहरणं प्रजोत्पत्तये भवति। अत्र मन्थनकालश्चिन्त्यते। उपाकरणमारभ्यमारपर्य्यन्तो

व्यापार आलम्भनशब्दार्थः, किं तस्मादालम्भादूर्ध्वमग्निर्मन्थनीयः, आहोस्विदुपाकरणानन्तरमिति। तत्र प्रथमपक्षे दोषमाह "रुद्रो वा एष यदग्निर्यजमानः पशुर्य्यत् पशुमालभ्याग्निं मन्थेद्रुद्राय यजमानमपि दध्यात् प्रमायुकः स्यात्" (सं०६का०।३प्र०।५अ०) इति। रुद्रः क्रूरः। पशोर्यजमाननिष्क्रयणरूपत्वात् पशुर्यजमानः। तत आलम्भादूर्ध्वमग्निमन्थने हविर्भूतं यजमानमपि रुद्राय दद्यात्। ततो यजमानो मरणशीलः स्यात्। तस्मिन्नेव पक्षे गुणमपि दर्शयति "अथो खल्वाहुरग्निः सर्व्वा देवता हविरेतद्यत् पशुरिति यत्पशुमालभ्याग्निं मन्थति हव्यायैवासन्नाय सर्व्वा देवता जनयति" (सं० ६का०।३प्र०।५अ०) इति। "ते देवा अग्नौ तनूः संन्यदधत तस्मादाहुरग्निः सर्व्वा देवताः" इति श्रुतेः। अग्नेः सर्व्वदेवतारूपत्वं पशोर्हविष्ट्वं प्रसिद्धं। तथा सत्यालभ्य मन्थने प्रत्यासन्नाय हविषे सर्व्वा देवता जनयति सन्निधापयति। द्वितीयपक्षं सिद्धान्तत्वेनोपादत्ते "उपाकृत्यैव मन्थ्यस्तन्नेवालब्धं नेवाऽनालब्धं" (सं० ६का०।३प्र०।५अ०) इति। उपाकरणेनालम्भ उपक्रान्तः अतो यथोक्तगुणः सिध्यति। असमारणेनाममाप्तत्वाद्यथोक्तदोषो न भविष्यति। द्वयोर्मन्त्रयोरर्थं प्रसिद्धिं दर्शयति "अग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ ह्येतौ" (सं० ६का०।३प्र०।५अ०) इति। स्त्रीमन्त्रपुरुषमन्त्रकृतं समवधानमन्त्रैर्मिथुनत्वसिद्धिं दर्शयति "उर्व्वश्यस्यायुरसीत्याह मिथुनत्वाय" (सं० ६का०।३प्र०।५अ०) इति। वृषण-

शब्देन निषिक्तवीर्यस्थानीय उत्पाद्यो वह्निर्विवक्षित इत्याह "घृतेनाक्ते वृषणं दधाथामित्याह वृषणꣳ ह्येते दधाते ये अग्निं" (सं०६का०।३प्र०।५अ०) इति। ये अधरोत्तरारणी वह्निं धारयतः एते वृषणं सिक्तवीर्य्यं दधाते इति मन्त्रेणो-च्यते। बोधायनः "अथ प्रजातीर्वाचयति, गायत्रं छन्दोऽनु-प्रजायस्व त्रैष्टुभं छन्दोऽनुप्रजायस्व जागतं छन्दोऽनुप्रजायस्व इति प्रदक्षिणमग्निं मन्थति" इति। आपस्तम्बः "अग्नये मथ्य-मानायानुब्रूहीति सम्प्रेष्यति, मथ्यमानायानुब्रूहीति वा, प्रथ-मायां त्रिरनूक्तायां त्रिःप्रदक्षिणमग्निं मन्थति, गायत्रं छन्दोऽनु-प्रजायस्वेति प्रथमं, त्रैष्टुभमिति द्वितीयं, जागतमिति तृतीयं, ततो यथाप्राशु मन्थति" इति। हे अग्ने होत्रा पठ्यमानं गायत्रं छन्दो ऽनुलक्ष्य त्वं प्रजायस्व। एवमितरत्रापि योज्यं। प्राशु क्षिप्रमित्य-र्थः। छन्दसां साधनत्वं अनेन मन्त्रेण दर्शितमित्याह "गायत्रं छ-न्दोऽनुप्रजायस्वेत्याह छन्दोभिरेवैनं प्रजनयति" (सं०६का०। ३प्र०।५अ०) इति। होतारं प्रत्यध्वर्य्योः प्रैषमन्त्रमुत्पादयति "अग्नये मथ्यमानायानुब्रूहीत्याह" (सं०६का०।३प्र०।५अ०) इति। होतुरभि त्वा देव सवितरित्येतामृचं। विधत्ते "सावित्रीमृ-चमन्वाह सवितृप्रसूत एवैनं मन्थति" (सं०६का०।३प्र०।५अ०) इति। पुनः प्रैषद्वयमुत्पादयति "जातायानुब्रूहि प्रह्रियमा-णायानुब्रूहीत्याह काण्डे काण्ड एवैनं क्रियमाणे समर्द्धयति" (सं०६का०।३प्र०।५अ०) इति। मथनकाण्ड एको मथितस्य जन्मकाण्डोऽपरः जातस्य पूर्व्वाग्नौ प्रहरणकाण्डोऽन्यः। तत्र

सर्व्वत्र प्रैषे सति मन्त्रैरग्निः समृद्धो भवति। होतुर्मन्त्रान् विधत्ते "गायत्रीः सर्व्वा अन्वाह गायत्रच्छन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्द्धयति" (सं० ६का०।३प्र०।५अ०) इति। मन्थन-कालेऽनुवचनीया अभि त्वा देव सवितरित्याद्याः। जाते सति उत ब्रुवन्तु जन्तव इत्यादिकं। प्रहरणकाले प्रदेवं देववीतय इत्यादिकमनुब्रूयात्, ताः सर्व्वा ऋचो गायत्र्यः। अग्निश्च गायत्र्या सहोत्पन्नत्वाद्गायत्रच्छन्दाः। कल्पः "भवतं नः समनसावित्यग्रेणोत्तरपरिधिमाहवनीये प्रहरति सन्धिना वा, अग्नावग्निश्चरति प्रविष्ट इति प्रहृत्य स्रुवेणाभिजुहोति" इति। मन्त्रौ त्वेवमाम्नातौ "भवतं नः समनसौ समोकसावरेऽपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः। अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाकर्भागधेयं" इति। योऽग्निः पुराऽऽहवनीये वर्त्तते यश्चेदानीं मथितस्तस्मिन् प्रक्षीयते तौ युवामस्मान् प्रति सुमनसौ समानमनस्कौ विप्रतिपत्तिरहितौ। समोकसौ समाननिवासस्थानौ। पापचित्त-रहितौ भवतं। यज्ञस्य यज्ञपतेश्च हिंसां मा कुरुतं। अद्यास्मिन् कर्म्मणि नोऽस्मान् प्रति शिवौ शान्तौ भवतं। एवं मथितोऽग्निः आहवनीयाग्नौ प्रविष्टश्चरति। कीदृशः। ऋषीणां मन्त्राणां ऋत्विजां वा पुत्रस्तैरुत्पादितत्वादधिकं राजत इत्यधिराजः। हे मथिताग्ने ते तुभ्यं स्वाहाशब्दमुच्चार्य्य मन्त्रेण जुहोमीति देवतानां भागधेयं मिथुयाकः मिथ्याभूतं मा

कुरुतं। शिवौ भवतमिति प्रार्थनायाः प्रसिद्धिं दर्शयति "अग्निः पुरा भवत्यग्निं मथित्वा प्रहरति तौ सम्भवन्तौ यजमानमभिसम्भवतो भवतं नः समनसावित्याह शान्त्यै" (सं०६का०।३प्र०।५अ०) इति। यजमानं भक्षयितुमभिलक्ष्य परस्परसंयुक्तत्वात् तच्छान्त्यै प्रार्थनीयौ। अग्नावग्निरिति मन्त्र उपेक्षितः। विधत्ते "प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्द्धयत्यथो तेजसा" (सं०६का०।३प्र०।५अ०) इति। समर्द्धयतीत्यन्वयः। उत्तरभाविनोऽपि मथनमन्त्रा आत्मुक्थ्यनादौ व्याख्याताः। अथ पूर्व्वभाविन उपाकरणमन्त्रान् व्याचिख्यासुर्विधत्ते "इषे त्वेति बर्हिरादत्त इच्छत इव ह्येष यो यजते" (सं०६का०।३प्र०।६अ०) इति। एष यजमानो देवेभ्यो दातुं पशुरूपं हविरिच्छत्येव तस्मादिष इत्युच्यते। पशुसमीपे देवानाक्रयतीति प्लक्षशाखा उपवीरित्युच्यते। तदेतद्दर्शयति "उपवीरसीत्याहोप ह्येनानाकरोति" (सं०६का०।३प्र०।६अ०) इति। हृदयाद्यवयवा देवान् देवप्रजास्तु प्राप्ता इति यद् व्याख्यातं तत् प्रसिद्धमित्याह "उपो देवान् दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति" (सं०६का०।३प्र०।६अ०) इति। यद्वा हृदयादय एव पदार्थत्वेन दैवप्रजा भूत्वा देवान् प्राप्नुवन्ति। वह्निशब्दो वाहकवाचीत्यभिप्रेत्य दर्शयति "वह्नीरुशिज इत्याह ऋत्विजो वै वह्नय उशिजस्तस्मादेवमाह" (सं०६का०।३प्र०।६अ०) इति। अत्र पशुप्रदत्वेन

बृहस्पतिप्रार्थनमित्याह "बृहस्पते धारया वसूनीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनवरुन्धे" (सं०६का०।३प्र०।६अ०) इति। हृदयादीनि स्वादूकर्तुं इयमाशीरित्याह "हव्या ते स्वदन्तामित्याह स्वदयत्येवैनां" (सं०६का०।३प्र०।६अ०) इति। मिथुनरूपपशुप्रदत्वेन त्वष्टुः प्रार्थनमित्याह "देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति" (सं०६का०।३प्र०।६अ०) इति। रेवतीशब्दः पशुपर इत्याह "रेवतीरमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति" (सं०६का०।३प्र०।६अ०) इति।

अत्र विनियोगसङ्ग्रहः।

"इषे बर्हिः समादत्ते उपेति प्लक्षशाखिकां।
उपो पशुमुपाकृत्य ह्यग्नेः शकलसंस्थितिः॥
वृषाऽत्र दर्भौ संस्थाप्य उर्वोऽरणिमधः क्षिपेत्।
पुरूत्तरां समादत्ते आयुरित्युपरि क्षिपेत्॥
घृते सम्मन्त्र्य गायेति त्रिभिर्मथ्नाति निक्षिपेत्।
भवत् पूर्वाऽनलेऽथाग्नौ होमो मन्त्राश्चतुर्दश"॥ इति।

अत्र विशेषमीमांसा नास्ति।

अथ छन्दः। भवतं नः समनसाविति पङ्क्तिः। अग्नावग्निरिति त्रिष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

आदद ऋतस्य त्वा देवहविः पाशेनाऽऽरभे धर्षा मानुषानद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यपां पेरुरसि स्वात्तञ्चित् सदेवꣳ हव्यमापो देवीः स्वदतैनꣳ सं ते प्राणो वायुना गच्छताꣳ सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा घृतेनाक्तौ पशुं त्रायेथाꣳ रेवतीर्यज्ञपतिं प्रियधा विशतोरो अन्तरिक्ष सजूर्देवेन ॥ १ ॥

वातेनाऽस्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः पृथिव्याः सम्पृचः पाहि नमस्त आतानाऽनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणाऽऽपो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वोभूयास्म ॥ २ ॥

देवेन चतुश्चत्वारिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥

सप्तमेऽनुवाके पशोरुपाकरणं प्राधान्येनोक्तं । अथोपाकृतस्य विशसनमष्टमेऽनुवाके विधीयते । बोधायनः "अथ रशनामादत्ते, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति" इति । अत्र आम्नात आदद इति मन्त्रो

देवस्य त्वेत्यनेन पूर्यते। आपस्तम्बः "सावित्रेण रशनामादाय पशोर्दक्षिणबाहौ परिवीयोर्ध्वमुत्कृष्य, ऋतस्य त्वा देवहविः पाशेनाऽऽरभ इति, दक्षिणेऽधःशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्षा मानुषानित्युत्तरतो यूपस्य नियुनक्ति, दक्षिणत एकादशिमान्" इति। हे रशने त्वामाददे। देवहविः पशो ऋतस्य यज्ञस्य सिद्ध्यर्थं त्वां पाशेनारभे बध्नामि। हे विनियुज्यमानपशो देवत्वप्राप्त्या मानुषानुपद्रवान् ताडनादीन् धर्ष अभिभव। विधत्ते "देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै" (सं० ६ का०।३ प्र०।६ अ०) इति। ऋतशब्दार्थमाह "ऋतस्य त्वा देवहविः पाशेनारभ इत्याह सत्यं वा ऋतꣳ सत्येनैवैनमृतेनारभते" (सं० ६ का०।३ प्र०।६ अ०) इति। अवश्यम्भाविफलोपेतत्वाद् यज्ञस्वरूपं सत्यं। तेन निमित्तेन एनं पशुं बध्नाति। बन्धनप्रकारं विधत्ते "अक्ष्णया परिहरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चति व्यावृत्त्यै" (सं० ६ का०।३ प्र०।६ अ०) इति। अक्ष्णया पूर्वोक्तया दक्षिणपादादिशिरोभागपर्यन्तया वक्रया परिहरति वेष्टयति। लोके तु मांसभक्षिणो वध्यं पशुं प्रत्यञ्चं स्वाभिमुखमवस्थाप्य गले पाशं प्रतिमुञ्चन्ति। अतस्तद्व्यावृत्तये वक्रबन्धनं विधत्ते "धर्षा मानुषानिति नियुनक्ति धृत्यै" (सं० ६ का०।३ प्र०।६ अ०) इति। नियुनक्ति यूपे निरन्तरं बध्नीयात् तच्च बन्धनं धृत्यर्थं पलायननिवारणार्थं। कल्पः "अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति, अपां पेरुरसीति पाययति,

स्वात्तञ्चित्सदेवꣳ हव्यमापो देवीः स्वदतैनमित्युपरिष्टादधस्तात् सर्वतश्च प्रोक्ष्य" इति। हे पशो त्वामद्भिरोषधीभिश्च प्रोक्षामि। दर्भैरपामुत्पूतत्वादस्त्योषधीनामपि प्रोक्षणसाधनत्वं। पितृमातृस्थीकृताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वेन प्रोक्षणं युक्तमित्याह "अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः सम्भवति यत् पशुः" (सं० ६का०।३प्र०।६अ०) इति। पेरुशब्दः पातृवाचीत्याह "अपां पेरुरसीत्याहैष ह्यपां पाता यो मेधायारभ्यते" (सं० ६का०।३प्र०।६अ०) इति। यज्ञार्थमालभ्यमानस्य पशोरित ऊर्ध्वं उदकपानाभावादिदानीमेव पातृत्वं। हे आपो देव्यः स्वात्तञ्चित् स्वादुभूतमपि सदेवं देवतार्थं हव्यं होतुं योग्यमेनं पशुं स्वदत स्वादुकुरुत। अनेन मन्त्रेण स्वादुता भवति इत्याह "स्वात्तञ्चित् सदेवꣳ हव्यमापो देवीः स्वदतैनमित्याह स्वदयत्येवैनं" (सं० ६का०।३प्र०।६अ०) इति। त्रिभिर्मन्त्रैरनुष्ठेयानि विधत्ते "उपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति" (सं०६का०।३प्र०।६अ०) इति। अथ होतारं प्रति अध्वर्योः प्रैषमन्त्रमुत्पादयति "अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै" (सं०६का०।३प्र०।७अ०) इति। अग्निः समिद्धो भ्रातृव्यानभिभवति। अग्नेः समिन्धनाय होत्रासूच्यमानानामृचां चोदकप्राप्तानां पञ्चदशसङ्ख्यामपोह्य सप्तदश सङ्ख्यां विधत्ते "सप्तदश सामिधेनीरन्वाह सप्तदशः

प्रजापतिः "प्रजापतेराप्त्यै" (सं०६का०।३प्र०।७अ०) इति। आ-श्रावयेत्यादिभिरक्षरैः प्रजापतेः सप्तदशत्वं। तमेव विविधमनूद्य प्रशंसति "सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनुप्रजायन्ते प्रजानां प्रजननाय" (सं०६का०।३प्र०।७अ०) इति। हेमन्तशिशिरयोः समासेनेति बह्वृचब्राह्मणाम्नानादृतूनां पञ्चसङ्ख्या। प्रजाः संवत्सरं गर्भे स्थित्वा पश्चात् प्रजायन्ते। अमन्त्रकं प्रथमाघारं विधत्ते "देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै" (सं०६का०।३प्र०।७अ०) इति। बहुनियमोपेतसामिधेन्यनुवचनेन श्रान्ताः सन्तः पश्चात् कर्त्तव्ययज्ञं नान्वपश्यन्। ततः प्रजापतिस्तूष्णीमाघारेण मन्त्रविषयव्यापारजन्यबुद्धेः श्रममपनीतवान्। तमेव विधिमनूद्य प्रशंसति "असुरेषु वै यज्ञ आसीत् तं देवास्तूष्णीꣳ होमेनावृञ्जत यत् तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते" (सं०६का०।३प्र०।७अ०) इति। असुरा गूढचारिणो भूत्वा देवैरनुष्ठितमवगत्य स्वयमपि तथैवानुतिष्ठन्ति। तथा च श्रुत्यन्तरं "देवा वै यद् यज्ञेऽकुर्व्वत तदसुरा अकुर्व्वत" इति। तं वृत्तान्तमवगत्य देवा गूढचारिणामग्रे प्रथममाघारममन्त्रकं कृतवन्तः। तं दृष्टवन्तोऽसुराः सहसा गत्वा कृत्स्नं यज्ञं तूष्णीं कृत्वा नाशितवन्तः। तमभिप्रेत्य तं देवास्तूष्णीꣳ होमेनावृञ्जतेत्युच्यते। त्रयाणां परिधीनां मार्जनं प्रत्येकं तदावृत्तिश्च

विधत्ते "परिधीन् सम्मार्ष्टि पुनात्येवैनां त्रिस्त्रिः सम्मार्ष्टि त्र्या-वृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्यै" (सं०६का०।३प्र०।७अ०) इति। परिधिषु पतितस्य भस्मादेरपनयनेन ते शुद्धा भवन्ति। तिस्र आवृत्तयो यस्यासौ त्र्यावृत्। त्रिः प्रथमामन्वाहेत्यादिषु तत्प्रसिद्धं। आवृत्त्या तदादरं दृष्ट्वा रक्षसां भयातिशयो भवति। त्रिषु परिधिषु नव सम्मार्जनान्युक्तानि। तत्रानुक्तैस्त्रिभिर्वक्ष्यमाणैः सम्मार्जनैः सह द्वादशसम्पत्तिः। अत एव दर्शपूर्णमासब्राह्मणे श्रूयते "परिधीन्त्सम्मार्ष्टि। पुनात्येवैनां। त्रिर्मध्यमं। त्रयो वै प्राणाः। प्राणानेवाभिजयति। त्रिर्दक्षिणार्ध्यं। त्रय इमे लोकाः। इमानेव लोकानभिजयति। त्रिरुत्तरार्ध्यं। त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति। त्रिरुपवाजयति। त्रयो वै देवलोकाः। देवलोकानेवाभिजयति। द्वादश सम्पद्यन्ते" इति। तया सङ्ख्यया सम्वत्सरदेवतां तोषयति। किञ्चास्य यजमानस्य स्वर्गप्रापणाय तां संवत्सरदेवतामुपदधाति समीपे समानयति। पूर्व्वं स्रौवाघारो विहितः। अथ स्रुचाऽऽघारं विधत्ते "शिरो वा एतद् यज्ञस्य यदाघारोऽग्निः सर्व्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्व्वा देवता अवरुन्धे" (सं०६का०।३प्र०।७अ०) इति। आघारस्य होमेषु प्रथमभावित्वेन शिरोरूपत्वं। यद्यपि पशोरिष्टिविकृतित्वादेवाघारं द्वयं प्राप्नोति तथापि तद्विकृतित्वमेव निश्चेतुं तदीय-

त्रिकृत्वेनात्र पुनर्विहितं। कल्पः "स्रुच्यमाघार्य्य प्रत्याक्रम्य जुह्वा पशुꣳ समनक्ति, सं ते प्राणो वायुना गच्छतामिति शिरसि, सं यजत्रैरङ्गानीत्यꣳसोत्सलयोः, सं यज्ञपतिराशिषेति श्रोण्यामिति" इति। उत्सलशब्देन ककुदुच्यते। हे पशो ते तव प्राणो वायुना सङ्गच्छतां। हृदयाद्यङ्गानि यजत्रैर्यागविशेषैः संयुज्यन्तां। यज्ञपतिराशिषा संयुज्यतां। स्रुचाऽऽघारशेषेण पश्वञ्जनं विधत्ते "शिरो वा एतद् यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य्य पशुꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रतिदधाति" (सं०६का०। ३प्र०।७अ०) इति। आत्मा ग्रीवाया अधोवर्त्ती देहः। प्राणस्य बाह्यवायुसङ्गमो युक्त इत्याह "सं ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं जुहोति" (सं०६का०।३प्र०।७अ०) इति। अस्य यज्ञस्य फलेन यजमानो युज्यत इत्येवमर्थमभिप्रेत्य मन्त्रं दर्शयति "सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याशिषं गमयति" (सं० ६का०।३प्र०।७अ०) इति। मध्यममन्त्रेण हृदयाद्यङ्गानि यागविशेषैर्योजयतीत्येतावदन्वेयं। पूर्व्वं शिरस्यञ्जनं विहितं। इदानीं ककुदि श्रोण्याञ्च अञ्जनं विधत्ते। अथ वा पूर्व्वविधेः साधारणत्वात् तमेवानूद्य प्रशंसति "विश्वरूपो वै त्वाष्ट्र उपरिष्टात् पशुमभ्यवमीत् तस्मादुपरिष्टात् पशोर्नावद्यन्ति यदुपरिष्टात् पशुꣳ समनक्ति मेध्यमेवैनं करोति" (सं०६का०।३प्र०।७अ०) इति। त्वष्टुः पुत्रो विश्वरूपः पशुमभिप्राप्य उपरिष्टात् पृष्ठभागे वमनमकरोत्। तस्माद् याज्ञिका हृदयादिवदुपरिभागान् नावद्यन्ति

तं भागमञ्जनेन शुद्धं करोति। विधत्ते "ऋत्विजो वृणीते छन्दाꣳस्येव वृणीते" (सं०६का०।३प्र०।७अ०) इति। वक्ष्यमाणसङ्ख्यासाम्यात् ऋत्विजां छन्दस्त्वं। सप्तत्वसङ्ख्यां विधत्ते "सप्त वृणीते सप्त ग्राम्याः पशवः सप्तारण्याः सप्त छन्दाꣳस्युभयस्यावरुध्यै" (सं०६का०।३प्र०।७अ०) इति। होताऽग्नीध्रोऽध्वर्युर्मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टा चेति। सप्तग्राम्यादिकं व्याख्यातं। चोदकप्राप्तेषु प्रयाजेषु सङ्ख्यां विधत्ते "एकादश प्रयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्रयजति" (सं०६का०।३प्र०।७अ०) इति। प्राणशब्देन तदाधारभूतानि छिद्राण्युच्यन्ते। तानि च शिरसि सप्त अधस्तात् द्विः नाभिर्दशमी आत्मा देहः। अत एकादशसङ्ख्यायाः कृत्स्नं पशुं प्रति यजति। अन्तिमप्रयाजस्य कालान्तरं विधत्ते "वपामेकः परि शय आत्मैवात्मानं परिशये" (सं०६का०। ३प्र०।७अ०) इति। वपां परि वपाहोमसमीपे शये शेते तस्मिन् काले यजेदित्यर्थः। चरमप्रयाजो देहत्वेन निरूपितत्वात् पशोरात्मा वपापि मुख्यावयवत्वादात्मा अतस्तयोः सामीप्यं युक्तं। कल्पः "जुह्वा स्वरुस्वधीतो अनक्ति, द्विः स्वरुꣳ सकृत्स्वधितेरन्यतरां धाराꣳ स्वरुमन्तर्धाय स्वधितिना पशुꣳ समनक्ति, घृतेनाक्तौ पशुं त्रायेथामिति शिरसि" इति। हे स्वरुस्वधिती इति सम्बोधनीयं। स्वरुस्वधितिघृतानामुपयोगं दर्शयति "वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन् घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवेनं वशे

हत्वाऽऽलभते" (सं०६का०।३प्र०।७अ०) इति। त्रिविधेन वज्रेणैनं पशुं वशीकृत्य मारयति। विधत्ते "पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायाऽस्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति" (सं०६का०।३प्र०।७अ०) इति। अत्र प्रकारः सूत्रे ऽभिहितः "आहवनीयादुल्मुकमादायाग्नीध्रः, परिवाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयꣳ शामित्र-देशं चात्वालमाज्यानि चेत्येके" इति। तेन पर्यग्निकरणेन एनं पशुं सर्व्वमपि हुतमेव करोति। तच्च हुतत्वं स्कन्दनदोषरा-हित्याय भवति। होमादूर्ध्वं स्कन्दनेऽपि तद्दोषो न भवति। आवृत्तिं विधत्ते "त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञो ऽथो रक्षसामपहत्यै" (सं०६का०।३प्र०।८अ०) इति। कल्पः "रेव-तीर्यज्ञपतिं प्रियधा विशतेति वपाश्रपणीभ्यां पशुमन्वारभेते ऽध्वर्य्युर्यजमानश्च" इति। हे रेवतीः धनवन्तः पशववयवा यज-मानं प्रति प्रियधारिण्यो भवत हविष्ट्वेन यज्ञं आविशत। तत्र विचारं दर्शयति "ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वा-रभ्या३ इति" (सं०६का०।३प्र०।७अ०) इति। प्रथमपक्षे दोष-माह "मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमा-युको यजमानः स्यात्" (सं०६का०।३प्र०।८अ०) इति। द्वितीय-पक्षेऽपि दोषमाह "अथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत् पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद् यजमानो हीयेत" (सं०६का०।३प्र०।८अ०) इति। दोषद्वयपरिहाराय प्रकारान्तरं विधत्ते "वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं

नेवाऽनन्वारब्धं" (मं०६का०।३प्र०।८अ०) इति। याभ्यां दारुमयीभ्यां वपा पच्यते ते वपाश्रपण्यौ। प्रैषमन्त्रमुत्पादयति "उपप्रेष्य होतर्हव्या देवेभ्य इत्याहेषितꣳ हि कर्म्म क्रियते" (मं० ६का०।३प्र०।८अ०) इति। हे होतर्देवेभ्यो वपादीनि हव्यानि कर्तुं उपप्रेष्य पशुसमीपे शमितॄन् प्रेरय। लोके हि प्रभुणा प्रेषितं कर्म्म सहसा क्रियते। मन्त्रस्तु स्पष्टार्थ इत्याह "रेवतीर्यज्ञपतिं प्रियधा विशतेत्याह यथायजुरेवैतत्" (मं०६का०। ३प्र०।८अ०) इति।कल्पः "आहवनीयादुल्मुकमादायाग्नीध्रः पूर्व्वः प्रतिपद्यते, शमिता पशुं नयति, उरो अन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयति" इति। मन्त्रस्त्वेवमाम्नातः "उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः" इति। अत्र अन्तरिक्षशब्देन पशोः श्रोत्रादिच्छिद्रेष्ववस्थित इन्द्रियसमुदाय उपलक्ष्यते। हे उरो अन्तरिक्ष विस्तीर्णेन्द्रियसमुदाय अस्य पशोरभिमानिदेवेन वातेन प्राणवायुना आत्मना जीवात्मना च सजूः सह हविषा यज हविर्देहि। किञ्च अस्य पशोस्तनुवा भविष्यता देवशरीरेण सम्भव संयुज्यस्व। हे वर्षीयो विस्तीर्णेन्द्रियसमुदाय वर्षीयसि अतिविस्तीर्णे यज्ञे यज्ञपतिं यजमानं धाः स्थापय। मन्त्रोऽयमुपेक्षितः। विधत्ते "अग्निना पुरस्तादेति रक्षसामपहत्यै" (मं०६का०।३प्र०।८अ०) इति। उल्मुकेन सह पशोः पुरस्तादाग्नीध्रो गच्छेत्। कल्पः "अभिपर्य्यग्निकृते देश उल्मुकं निदधाति स शामित्रस्तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य, पृथिव्याः

सम्पृचः पाहीति बर्हिरुपास्यत्युपाकरणयोरन्यतरत्" इति। हे बर्हिः भूमेः सम्पर्कात् रक्षस्व। विधत्ते "पृथिव्याः सम्पृचः पाहीति बर्हिरुपास्यत्यस्कन्दायाऽस्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति" (सं०६का०।३प्र०।८अ०) इति। पशुसम्बन्धि यदङ्गं बर्हिषि स्कन्देत् तत् भूमौ पतनाभावादस्कन्नमेव। अथ कथञ्चिदधः पतितेऽप्येनं बर्हिषदमेव करोति। विधत्ते "पराङावर्त्ततेऽध्वर्युः पशोः सञ्ज्ञप्यमानात् पशुभ्य एव तं निह्नुत आत्मनोऽनाव्रस्काय" (सं०६का०।३प्र०।८अ०) इति। अध्वर्युर्मार्यमाणं पशुं दृष्ट्वा ततः पराङ्मुखः पर्यावर्त्तते। तेन पशुभ्यो निह्नुते पशुं न मारयामीत्येवमपलपति। स च अपलापः स्वस्य दोषाभावाय भवति। वेदनं प्रशंसति "गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद" (सं०६का०।३प्र०।८अ०) इति। अत्र सूत्रं "प्रत्यक्शिरसमुदीचीनपादममायुं कृण्वन्तं सञ्ज्ञपयतेत्युक्त्वा पराङावर्त्ततेऽध्वर्युरिति" इति। कल्पः "ततः प्रतिप्रस्थाता पत्नीमुदानयति, नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते" इति। आसमन्तात् तेनो व्याप्तिर्यस्य सूर्यरश्मेः स आतानः। एतदेव दर्शयति "पश्चाल्लोका वा एषा प्राच्युदानीयते यत् पत्नी नमस्त आतानेत्याहादित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति" (सं०६का०।३प्र०।८अ०) इति। पश्चात् प्रतीच्यां दिशि निर्मिता शाला लोकनिवासस्थानं यस्याः सा पश्चाल्लोका तादृशी यदा प्राचीं गच्छति तदानीमाभिमुख्येन सूर्यरश्मिर्भवतीति तन्नमस्कारो युक्तः। बोधायनः

"अथैनामन्तरेण चात्वालोत्करावुदङ्ङुपरि निष्क्रमय्य प्राचीमुदानयन् वाचयति, अनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरप्सु वाचयति, आपो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म" इति। आपस्तम्बः "अनर्वा प्रेहीति प्राचीमुदानयत्यनुमन्त्रयत इत्येके, आपो देवीः शुद्धायुव इति चात्वाले पत्न्यपोवमृशति" इति। हे पत्नि त्वमनर्वा शत्रुरहिता सती घृतप्रवाहमनु प्रजया सह धनपुष्ट्या सह प्रयाहि। घृतस्य कुल्यामित्यनेन सर्व्ववस्तुसम्पूर्णं स्थानमुपलक्ष्यते। हे आपो देव्यो यूयं देवानूढ्वं यागप्रदेशं प्रापयत। कीदृश्यो यूयं। शुद्धायुवः शुद्धिमस्मदीयामिच्छन्तीति शुद्धायुवः। यूयन्तु स्वत एव शुद्धाः। वयमपि युष्माभिः परिवेष्टिताः शुद्धाः सन्तो युष्माकं परिवेष्टितारो भूयास्म। एतौ मन्त्रौ व्याचष्टे "अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाशिषमेवैतामाशास्त आपो देवीः शुद्धायुव इत्याह यथायजुरेवैतत्" (सं० ६का०।३प्र०।८अ०) इति।

अत्र विनियोगसङ्ग्रहः।

"आददे रज्जुमादाय ऋत बध्नाति तं पशुं।
धर्ष यूपे नियुक्तोऽद्भ्यः प्रोक्ष्यापां पाययेदपः॥
स्वात्तं सर्व्वत्र सम्प्रोक्ष्य सन्ते मूर्द्धिसमञ्जनं।
संयां सयोः संय पश्चात् घृतेन स्वरुशस्तके॥
रेव अपण्णुपस्पर्श उरो उत्तरतो नयेत्।

पृथि बर्हिरवस्थाप्य नमः पत्नीरविं भजेत्।
अनपत्नीं नयेदापः स्पृशन् मन्त्रास्तु षोडश'' ॥ इति।

अथ मीमांसा। द्वितीयाध्यायस्य प्रथमपादे चिन्तितं।

''गच्छतामिति शब्दस्याऽनुषङ्गोऽस्ति न वोपरि।
सं यज्ञपतिरित्यत्र योग्यत्वात् सोऽस्ति पूर्व्ववत्॥
तदेकवचनं मध्ये मन्त्रेऽङ्गानीत्यनेन हि।
नान्वेति तद्व्यवायेन नोपर्य्यप्यनुषज्यते'' ॥ इति।

अग्नीषोमीयपशौ श्रूयते ''सं ते प्राणो वायुना गच्छताᳬ सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा'' इति। अयमर्थः। भो पशो तव प्राणवायुर्वाह्यवातेन सङ्गच्छतां। तव हृदयाद्यङ्गानि यागविशेषैः सङ्गच्छन्तां। यज्ञपतिराशिषा संयुज्यतामिति। तत्र यज्ञपतिरित्यस्मिन् तृतीयमन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात् प्रथममन्त्रगतस्य गच्छतामिति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनान्वेतुं योग्यत्वात् पूर्व्ववद् बुद्धिस्थत्वेन सन्निहितत्वादाकाङ्क्षासन्निधियोग्यतानां सम्बन्धादेतत् क्रियापदमनुषज्यत इति प्राप्ते ब्रूमः। मध्यममन्त्रे बहुवचनान्तेन अङ्गानीत्यनेनान्वेतुमयोग्यत्वात् तद्व्यवायेन बुद्धिसन्निधिलोपान्नास्त्यनुषङ्गः। ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं वाक्यशेषोऽध्याहर्तव्यः। अष्टमाध्यायस्य प्रथमपादे चिन्तितं।

''न पशाविष्टिकः स्याद् वा* न कपालाद्यभावतः।
स्याद् व्यक्तद्रव्यदेवत्य प्रयाजसुच्यसाम्यतः'' ॥ इति।

---

* चोदकं स्यादा इति का० पा०।

अग्नीषोमीयपशावैष्टिकविध्यन्तरं नास्ति। कुतः। तस्य पूर्व्व-वदत्र निर्वापकपालादिलिङ्गाभावादिति चेत्। मैवं। "आग्नेय-मष्टाकपालं निर्वपेत्" इत्युत्पत्तिवाक्ये यथा द्रव्यदेवतेव्यक्ते त-थाग्नीषोमीयं पशुमित्यत्रापि, न तु सोमेन यजेतेत्यत्रेव देव-ताया अव्यक्तत्वं, तदेतद् व्यक्तद्रव्यदेवत्वमेव लिङ्गं। एकादश प्रयाजान् यजतीति प्रयाजवत्त्वं द्वितीयं स्रुचमाघार्य्यं, जुह्वा प-शुꣳ समनक्तीत्याघाराञ्जने लिङ्गान्तरे, आलम्भो लिङ्गान्तरं इष्टावपि तेषामालम्भ इति दर्शनात् तस्मादस्ति पशावैष्टिको विध्यन्तः। पञ्चमाध्यायस्य तृतीयपादे* चिन्तितं।

"प्रयाजेष्वपकर्षो ऽनूयाजेषूत्कर्ष इत्यमू।
श्रुतमात्रे तदन्तेषु तदाद्येषु च वाऽयिमः॥
अन्येषां मुख्यकालत्वान् मैवं व्युत्क्रमशङ्कितः।
प्रयाजान्ते ह्यनूयाजादिके चैतौ समूहतः"॥ इति।

अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रूयते तिष्ठन्तं पशुं प्रयजन्तीति। प्रकृतौ हविष्यासादिते पश्चात् प्रयाजा इज्यन्ते इहापि पशुसञ्ज्ञपनादूर्ध्वं हविष्यासादिते पश्चादेव प्रयाजा-श्चोदकेन प्राप्ताः। ते चात्र वचनाज्जीवत्येव पशावपकृष्यन्ते। तथा सवनीयपशावनूयाजानामुत्कर्षः श्रूयते आग्निमारुतादूर्ध्वमनू-याजैश्चरन्तीति। तत्र प्रयाजमात्रस्यापकर्षः श्रुतः अनूयाजमा-त्रस्योत्कर्षः तावुभौ श्रुत्यनुसारेण तथैवाङ्गीकर्त्तव्यौ। यदि प्रया-

---

* प्रथमपादे इति का० पा०।

जान्तस्याऽङ्गकलापस्यापकर्षः स्यात् तदा प्रयाजेभ्यः पूर्व्वभाविनामाघारमामिधेन्यादीनां ततोऽप्यपकर्षादत्यन्तव्यवहितानां प्रधानकालीनत्वं न स्यात्। प्रयाजमात्रेऽपकृष्टे सति आघारादीनां मुख्यकालीनत्वं न लुप्यते। एवं अनूयाजमात्रे उत्कृष्टे तत ऊर्द्ध्वभाविनां सूक्तवाकशंयुवाकादीनामनुत्कर्षात् प्रधानसन्निधिर्न विनश्यति। तस्मात् प्रयाजमात्रस्यापकर्षो ऽनूयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः। प्रकृतौ पदार्थाऽनुष्ठानक्रमस्य क्लृप्तत्वात् सक्रमाणामेव पदार्थानां चोदकेनातिदेशाद् व्युत्क्रमे सति पूर्व्वेण पदार्थेन उत्तरपदार्थस्य बुद्धावनुपस्थितत्वादनुष्ठानमेव लुप्येत, तस्मात् प्रयाजान्तस्य कर्म्मसमूहस्यापकर्षः अनूयाजादेरङ्गसमूहस्योत्कर्षः। तत्रैव तृतीयपादे चिन्तितं।

"एकादशप्रयाजाः किं प्रत्येकं स्यादुतान्यथा।
सङ्ख्यावृद्धिरिहाद्योऽस्तु प्रतिमुख्यं गुणो यतः॥
प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति।
सङ्ख्यावृद्धिः प्रयोगात्तु साऽऽवृत्त्या सम्भविष्यति"॥ इति।

अग्नीषोमीयपशौ श्रूयते एकादशप्रयाजान् यजतीति। तत्र चोदकप्राप्तेषु पञ्चसु प्रयाजेष्वेकैकस्य प्रयाजस्य इयमेकादशत्वसङ्ख्या युक्ता। कुतः। प्रयाजानुद्दिश्य सङ्ख्यागुणे विहिते सति प्रतिप्रधानगुणस्याभ्युपेयत्वादिति प्राप्ते ब्रूमः। न ह्येकैकस्य प्रयाजस्य स्वरूपमात्रमुपजीव्येयमेकादशत्वसङ्ख्या सम्पादयितुं शक्या। नापि पञ्चप्रयाजसमुदायस्य स्वरूपे सास्ति। तस्मात् प्रयोगद्वारा सम्पादनीया। प्रयाजस्य चावर्त्तयितुं शक्यत्वात् पञ्चप्र-

याजान् द्विरावृत्य पुनरपि चरमप्रयाजे सकृदावर्त्तिते सत्य-
कादशत्वसङ्ख्या सम्पद्यते।

अथ छन्दः। उरो अन्तरिचेति त्रिष्टुप्। आपो देवीः शुद्धायुव इत्यनुष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके अष्टमोऽनुवाकः॥ * ॥

वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायताꣳ श्रोत्रन्त आप्यायतां या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत् ते क्रूरं यदास्थितं तत् त आप्यायतां तत् त एतेन शुन्धतां नाभिस्त आप्यायतां पायुस्त आप्यायताꣳ शुद्धाश्चरित्राः शमद्भ्यः॥ १ ॥

शमोषधीभ्यः शं पृथिव्यै शं महोभ्यामोषधे त्राय-स्वैनꣳ स्वधिते मैनꣳ हिꣳसी रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इदमेनमधमं तमो नयामीषे त्वा घृतेन द्यावापृथिवी प्रोर्णुवाथामच्छिन्नो रायः सुवीर उर्वन्तरिक्षमन्विहि वायो वीहि स्तोकानाꣳ स्वाहोर्ध्वनभसं मारुतं गच्छतं ॥ २ ॥

अद्भ्यो वीहि पञ्च च॥ ९ ॥

## इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ * ॥

अष्टमानुवाके मञ्ज्ञपनमुक्तं। मञ्ज्ञप्तस्य पशोः वपोत्खेदो नवमे विधीयते। बोधायनः "मानुपूर्व्वं पशोः प्राणानाप्याययति, वाक्त आप्यायतामिति वाचं, प्राणस्त आप्यायतामिति प्राणं, चक्षुस्त आप्यायतामिति चक्षुः, श्रोत्रं त आप्यायतामिति श्रोत्रं, तानेव पुनः संस्पृशति, या ते प्राणान्कुग्जगाम या चक्षुर्या श्रोत्रं यत् ते क्रूरं यदास्थितं तत् त आप्यायतां, तत् त एतेन शुन्धतामिति, नाभिस्त आप्यायतामिति नाभिं, पायुस्त आप्यायतामिति पायुं, सङ्गृह्य पदः प्रक्षालयति, शुद्धाश्चरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्यै शं महोभ्यामिति, शिष्टा दक्षिणतोऽनुपृष्ठं निनयेत्" इति। आपस्तम्बोऽत्र किञ्चिद्विशेषमाह "या ते प्राणान् कुग्जगामेति हृदयदेशे शुद्धाश्चरित्रा इति पादानेकैकमाप्याय्य जपति, शमद्भ्य इति, पुरा लोकानां भूमेः प्रवणाच्छमोषधीभ्यः शं पृथिव्या इति, भूम्यां शेषं निनीय" इति। हे पशो त्वदीया वागिन्द्रियं गोलकत्यागशोकं मन्यज्य स्वीकरिष्यमाणदेवतादेहे सुखेनाप्यायतां वर्द्धतां। एवमन्यत्रापि। कश्चिन्निर्याणकाले हृदयपुण्डरीके सङ्कुचितान् तव प्राणवायून् चक्षुरादीन्द्रियाणि च यः शोको जगाम यच्च बन्धनं मुखनिरोधादिकं क्रूरमस्माभिः कृतं यदपि छेदादिकमास्थितं कर्तुमुपस्थितं तव तत्सर्व्वमाप्यायतां शाम्यतु। किञ्च तावत् तव त-

त्प्राणादिकमेतेन जलेन शुन्धतां भाविदेहप्रवेशाय शुद्धं भवतु। चरित्रैभिरिति चरित्राः पादाः तेऽपि शुद्धाः सन्तु। याभिरद्भिः प्रोक्षणं क्रियते याश्चौषधयो बर्हिःस्वरूपेण पशोरधः स्थापिताः या च पृथिवी म्रियमाणं पशुं बिभर्त्ति यौ चाहोरात्रौ पशुमारणकालतया उपस्थितौ तेषां सर्व्वेषां शं सुखं भवतु। शोकप्रसक्तिं दर्शयन् व्याचष्टे "पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक्त आप्यायतां प्राणस्त आप्यायतामित्याह प्राणेभ्य एवास्य शुचꣳ शमयति" (सं०६का०।३प्र०।९अ०) इति। शुग्व्यथां विधत्ते "सा प्राणेभ्योऽधि पृथिवीꣳ शुक् प्रविशति शमहोभ्यामिति निनयत्यहोरात्राभ्यामेव पृथिव्यै शुचꣳ शमयति" (सं०६का०।३प्र०।९अ०) इति। प्राणेभ्योऽपनीता शुक् पृथिवीमधिष्ठाय तदीयदेवताशरीरे प्रविशति। एवं कालादौ प्रवेशः। प्रविष्टायाः शुचः शान्तिर्निनयनेन भवति। कल्पः "ओषधे त्रायस्वैनमित्युपाकरणतृणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना पार्श्वतस्तिर्यगाच्छ्यति" इति। मा हिꣳसीरित्येतस्याभिप्रायमाह "ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै पार्श्वत आच्छ्यति मध्यतो हि मनुष्या आच्छ्यन्ति तिरश्चीनमाच्छ्यत्यनूचीनꣳ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै" (सं६का०।३प्र०।९अ०) इति। वपोत्खेदनार्थं दक्षिणपार्श्वे छिन्द्यात्। मांसाहारास्तु मनुष्या नाभिदेशे छिन्दन्ति। तत्राप्यनूचीनं पशोर्दैर्घ्यमनुसृत्य तदुभयवैलक्षण्यमिह कार्य्यं।

बोधायनः "अथैतस्यैव बर्हिषोऽणिमत्सपते स्थविमदुभयतो लोहितेनाङ्क्त्वा इमां दिशं निरस्यति रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इद-मेनमधमं तमो नयामि" इति। आपस्तम्बः "बर्हिषोऽग्रं स-व्येन पाणिनाऽऽदत्तेऽथ मध्यं यत आर्छति तदुभयतो लोहि-तेनाङ्क्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्या-ऽथैनत् सव्येन पदाऽभितिष्ठति, इदमहꣳ रक्ष इति" इति। विधत्ते "रक्षसां भागोऽसीति स्थविमतो बर्हिरङ्क्त्वाऽपास्यत्य-स्यैव रक्षाꣳसि निरवदयते" (सं०६का०।३प्र०।९अ०) इति। स्थूलस्य भावः स्थविमा, तस्मात् सप्तम्यर्थे तसिः स्थविमतः। स्थविमच्छब्देन बर्हिषो मूलभागः स्थूलत्वादुपलक्ष्यते। तस्मिन् भागे रक्तेन बर्हिरङ्क्त्वा निरस्येत्। तथा सत्यस्यैव रक्षांसि निःशेषेण भागवन्ति कृत्वा अपनयति। द्वितीयं मन्त्रं व्याचष्टे "इदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनं द्वेष्टि तावु-भावधमं तमो नयति" (सं०६का०।३प्र०।९अ०) इति। अधमं तमो महद्दुःखं। कल्पः "इषे त्वेति वपामुत्खिद्य, घृतेन द्यावापृथिवी प्रोर्णुवाथां, इति वपया द्विशूलां प्रच्छाद्य" इति। हे वपे यजमानस्य देवतायाश्चेष्यमाणान्न सिध्यर्थं त्वामुत्खि-दामि। हे शूलद्वयरूपे द्यावापृथिवी द्यावापृथिवीतुल्ये वपा-श्रपण्यौ घृतसमानया वपया भवदीयस्वरूपं प्रोर्णुवाथां आ-च्छादयतं। विधत्ते "इषे त्वेति वपामुत्खिदतीच्छत इव ह्येष

योयजते'' (सं०६का०।३प्र०।९अ०) इति। अत्र शूलाग्रेण वपां छिन्द्यात् न वेति विचारं हृदि निधाय पक्षद्वयेऽपि दूषणमुपन्यस्यति ''यदुपतृन्द्याद्रुद्रोऽस्य पशून् घातुकस्याद्यन्नोपतृन्द्यादयता स्यात्'' (सं०६का०।३प्र०।९अ०) इति। छेदनमन्तरेण धृतापि नियन्तुमशक्यत्वादितस्ततो पतेत्। दोषद्वयास्पृष्टं पक्षान्तरं विधत्ते ''अन्ययोपतृणत्त्यन्यया न धृत्यै'' (सं०६का०।३प्र०।९अ०) इति। एकया शाखया छिन्द्यादितरया न छिन्द्यात्। तथा सति धृतापि भवति रुद्रस्य न हिनस्ति। वपाशब्दशूलशब्दौ परित्यज्य घृतशब्दप्रयोगस्य द्यावापृथिवीशब्दप्रयोगस्य च तात्पर्य्यमाह ''घृतेन द्यावापृथिवी प्रोर्णुवाथामित्याह द्यावापृथिवी एव रसेनानक्ति'' (सं०६का०।३प्र०।९अ०) इति। कल्पः ''अधस्तात् परिवासयति, अच्छिन्नो रायः सुवीरः'' इति। अयं वपाभागः छिद्यमानोऽपि मन्त्रसामर्थ्येन व्यथानुत्पत्तेर्न छिन्नः। कीदृशो भागः। शोभना वीरा यजमानस्य पुत्रपौत्रादयो यस्य सः सुवीरः तादृशः रायो धनानि प्रयच्छतु। स्पष्टार्थमाह ''अच्छिन्नो रायः सुवीर इत्याह यथायजुरेवैतत्'' (सं०६का०।३प्र०।९अ०) इति। कल्पः ''उर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति'' इति। हे पवे त्वमुत्खेदनरूपस्य क्रौर्यस्य शान्तये विस्तीर्णमन्तरिक्षमनुप्रविश्याहवनीयदेशं गच्छ। इममेवार्थं दर्शयति ''क्रूरमिव वा एतत् करोति यद्वपामुत्खिदत्युर्वन्तरिक्षमन्विहीत्याह शान्त्यै'' (सं०६का०।३प्र०।९अ०) इति। वपाश्रयण्योः स्पर्शं विधत्ते ''प्रवा एषो ऽस्माल्लोकाच्च्यवते

यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रतितिष्ठति" (सं०६का०।३प्र०।८अ०) इति। वपायाः पुरतः पशोरिव वह्निं विधत्ते "अग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येनान्वेति" (सं०६का३प्र०।८अ०) इति। अग्नेः सर्व्वदेवतात्मकत्वात् तस्य पृष्ठतो वपानयने सर्व्वा अपि देवता हव्येनानुगता भवन्ति। कल्पः "आहवनीयस्यान्तिमेष्वङ्गारेषु वपायै प्रतितप्यमानायै बर्हिषोऽग्रमुपास्यति, वायो वीहि स्तोकानां" इति। द्विशूलया शाखया धार्यमाणाया वपाया उपरि "त्वामु ते दधिरे" इति मन्त्रेण आज्ये हुते सति तत्प्रकाशात् पतन्तो विन्दवः स्तोकाः। हे वायो तान् स्तोकान् विभक्तान् कुरु पिबेत्यर्थः। व्यतिरेकमुखेनाहवनीयस्योत्तरपार्श्ववर्त्तिष्वङ्गारेषु वपायाः अपणं विधत्ते "नान्तममङ्गारमतिहरेद् यदन्तमङ्गारमतिहरेद्देवता अतिमन्येत" (सं०६का०।३प्र०।८अ०) इति। अङ्गारस्य सर्व्वदेवतात्मकत्वात् तदवज्ञया देवता एवाऽवज्ञाता भवन्ति, तस्मादस्मिन्नेवाङ्गारे वपां अपयेत्। वीहीत्यत्र विशब्दस्यार्थं दर्शयति "वायो वीहि स्तोकानामित्याह तस्माद्विभक्ताः स्तोका अवपद्यन्ते" (सं०६का०।३प्र०।८अ०) इति। पतन्तीत्यर्थः। वपाया अधस्ताद्बर्हिरग्रस्थापनविधिमर्थवादेनोन्नयति "अग्रं वा एतत् पशूनां यद्वपाग्रमोषधीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्यथो ओषधीष्वेव पशून् प्रतिष्ठापयति" (सं०६का०।३प्र०।८अ०) इति। अग्रं श्रेष्ठं। ओषध्यग्रेण बर्हिषा पश्वग्ररूपाया वपायाः समृध्यर्थं ओषधीषु

पशुप्रतिष्ठापनार्थं बर्हिरग्रं वपाया अधःस्थापयेदित्यर्थः। अथाग्निमप्रयाजार्थं मैत्रावरुणं प्रति अध्वर्योः प्रैषमन्त्रमुत्पादयति "स्वाहाकृतीभ्यः प्रेष्येत्याह यज्ञस्य समिष्ट्यै" (सं० ६का०।३प्र०। ८अ०) इति। स्वाहाशब्दबहुला कृतिर्मन्त्रप्रयोगो यासामग्निमप्रयाजदेवतानां ताः स्वाहाकृतयः तदर्थं हे मैत्रावरुण होतारं प्रेरय। मैत्रावरुणस्तु "होता यक्षदग्निं स्वाहाज्यस्य" इत्यादिमन्त्रेण होतारं प्रेष्यति। स च होता "सद्यो जातो व्यमिमीत" इत्यादिकां याज्यां पठति। ततोऽध्वर्युरग्निमप्रयाजं यजति। एवमयं प्रैषो यज्ञस्य समिष्ट्यै सम्यगिष्ट्यै सम्पद्यते। प्रयाजशेषेण हविर्भिघारणं विधत्ते "प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभिघारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति" (सं०६का०।३प्र०।८अ०) इति। दधिमिश्रमाज्यं पृषदाज्यं। पृषदाज्यस्य वपायाश्चाभिघारणेन वपारूपे पश्वात्मनि पृषदाज्यरूपौ पशूनां प्राणापानौ स्थापयति। कल्पः "प्रतिप्रस्थाता आहवनीये वपाश्रयणी प्रहरति, स्वाहोर्ध्वनभसं मारुतं गच्छतमिति, प्राचीं दिवशूलां प्रतीचीमेकशूलामिति" इति। हे वपाश्रपण्यौ युवां स्वाहा कृते सत्यौ ऊर्ध्वनभःसञ्ज्ञकं मरुत्पुत्रं गच्छतं। तत्प्राप्तावुपयोगं दर्शयति "स्वाहोर्ध्वनभसं मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्रहरति तेनैवैने प्रहरति" (सं० ६का०।३प्र०।८अ०) इति। व्यत्यस्तायतां विधत्ते "विषूची प्रहरति तस्माद्विष्वञ्चौ प्राणापानौ" (सं०६का०।३प्र०।८अ०) इति। प्राण ऊर्ध्ववृत्ति-

रपानो ऽधोवृत्तिरिति तयोर्व्यत्यासः। अत्र विनियोगसङ्ग्रहः।

"वागष्टाप्यायने शेषं शमद्दो निनयेद्भुवि।
ओष स्वधि यथापूर्वं रत्त दर्भं सलोहितं॥
त्यजेदिदं बाधनीयमिष उत्खिद्यते वपा।
घृते अपण्यावाच्छाद्य अच्छित्या ह्रन्यते वपा॥
उरु पूर्व्वानलं गत्वा वायो दर्भमधः क्षिपेत्।
स्वाहा अपण्युपक्षेपो मन्त्रा एकोनविंशतिः"॥ इति।

अत्र मीमांसाकन्दसी न स्तः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः॥ * ॥

सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहैन्द्रः प्राणो अङ्गे अङ्गे निदेध्यदैन्द्रोऽपानो अङ्गे अङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳ समेतु विषुरूपा यत्सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्तु श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य॥ १॥

त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै घृतं घृतपावानः पिबत वसां वसा पावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय दिशः प्रदिश

आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥ २ ॥

वातस्याष्टाविंशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥

नवमेऽनुवाके वपायागोऽभिहितः। अथ दशमे वसाहोमोऽभिधीयते। कल्पः "अथ शमितुर्हृदयशूलमादाय तेन हृदयमुत्खिद्य* तं शमित्रे प्रदाय पृषदाज्येन हृदयमभिघारयति, सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति" इति। हे हृदय तव मनस्थानीयेन पृषदाज्येन देवानां मनः सङ्गतमस्तु। एवं प्राणेऽपि योज्यं। हव्यं त्वां देवानां प्रियं घृतवद् यथा भवति तथा स्वाहा अभिघारयामि। सोऽयं मन्त्र उपेचितः। अभिघारणं विधित्सुरादौ वपोत्खेदप्रयुक्तछिद्रापिधानरूपं पश्वङ्गं पुरोडाशं विधत्ते "पशुमालभ्य पुरोडाशं निर्व्वपति समेधमेवैनमालभते" (सं०६का०।३प्र०।१०अ०) इति। मेधः सारः। पुरोडाशस्य व्रीहिसारत्वात् सारोपेतं पशुमालब्धवान् भवति। निरुप्तस्य होमकालं विधत्ते "वपया प्रचर्य्य पुरोडाशेन प्रचरत्यूर्ज्जं पुरोडाश ऊर्जमेव पशूनां मध्यतो दधात्यथो पशोरेव छिद्रमपि दधाति" (सं०६का०।३प्र०।१०अ०) इति। "जात-

* उपवन्य इति का० पा०।

वेदो वपया गच्छ देवान्" इति मन्त्रेण वपां हुत्वा पश्चात् पुरोडाशहोमः। वपाहोमहृदयादिहोमयोर्मध्ये पशूनामुदरस्थानं अतस्तत्रैवौजं पुरोडाशरूपमन्नं स्थापितवान् भवति। किञ्च वपाछेदेन यत्पशोश्छिद्रं तत् पिहितं भवति। उत्तरदेशे हृदयादिहविः पचन्तं शमितारं प्रति प्रश्नमन्त्रमुत्पादयति "पृषदाज्यस्योपहत्य त्रिः पृच्छति, शृतꣳ हवीः ३ शमितरिति त्रिषत्याहि देवाः" (सं०६का०।३प्र०।१०अ०) इति। पृषदाज्यस्य पात्रगतस्यांशं स्रुवेणोपहत्य पृथक् स्वीकृत्य मन्त्रेण त्रिः पृच्छेत्। शृतं पक्वं। प्लुतिः प्रश्नार्था। त्रिरुक्तं सत्यमिति बुद्धिर्येषां ते त्रिषत्याः। व्यतिरेकमुखेनोत्तरविधिमुन्नयति "योऽशृतꣳ शृतमाह स एनसा" (सं०६का०।३प्र०।१०अ०) इति। युज्यत इति शेषः। तस्माच्छृते सत्युत्तरं ब्रूयादिति प्रत्युत्तरविधिः। अत्र सूत्रं "अथ प्रतिप्रस्थाता पृषदाज्यस्योपहत्य* जुह्वां समानीयान्तरेण चात्वालोत्करावुदङुपनिष्क्रम्य पृच्छति, शृतꣳ हवीः३ शमितरिति, शमितैष उत्तरतो हृदयशूलं धारयन् तिष्ठति, स शृतमिति प्रत्याह, तं तथैव द्वितीयमुत्क्रम्य पृच्छति, तं तथैवेतरः प्रत्याह, तं तथैव तृतीयमुत्क्रम्य पृच्छति, तं तथैवेतरः प्रत्याह" इति। अत्र "सं ते मनसा मनः" इत्यस्य मन्त्रार्थमुपेत्याभिघारणं विधत्ते "प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभिसमेति यत् पृषदाज्येन हृदयमभि-

---

* विहृत्य इति का० पा०।

धारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति" (सं०६का०।३प्र०।१०अ०) इति। अभिसमेति आभिमुख्येन जीवात्मा हृदयदेशमागच्छति सङ्गच्छते। प्लक्षनामकस्य शाखामवदानाधारत्वेन विधत्ते "पशुना वै देवाः सुवर्गं लोकमायन् ते मन्यन्त मनुष्या नो ऽन्वाभविष्यन्तीति तस्य शिरश्छित्वा मेधं प्राक्षारयन् स प्लक्षो ऽभवत् तत् प्लक्षस्य प्लक्षत्वं यत् प्लक्षशाखोत्तरबर्हिर्भवति स मेधस्यैव पशोरवद्यति" (सं०६का०।३प्र०।१०अ०) इति। पशुना सह स्वर्गं गच्छन्तो देवा मनुष्याणां स्वैः सहागमनं मा भूदित्यभिप्रेत्य तद्वारयितुं पशोः शिरः छित्वा मेधं रसं प्राक्षारयन् अस्रावयन्। स रसो भूमौ पतित्वा प्लक्षवृक्षोऽभवत्। तस्मात् प्रक्षारणादुत्पन्नस्य प्लक्षनाम सम्पन्नं। तच्छाखां बर्हिष ऊर्ध्वं स्थापनादुत्तरबर्हिरित्युच्यते। तदवस्थापनेन सरसस्यैव पशोर्हविरवत्तं भवति। अत्र सूत्रं "जुह्वपभृतोर्हिरण्यशकलमवधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन् सम्प्रेष्यति, मनोतायै हविषोऽवदीयमानस्याऽनुब्रूहीति, हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो यथाकाममितरेषां मध्यतो गुदस्यावद्यति" इत्युक्तमिति। पक्वस्य हृदयादिहविष आहवनीयं प्रत्यानयने मार्गविशेषं विधत्ते"पशुं वै ह्रियमाणꣳ रक्षाꣳस्यनुसचन्ते ऽन्तरा यूपञ्चाऽऽहवनीयञ्च हरति रक्षसामपहत्यै" (सं०६का०।३प्र०।१०अ०) इति। अनुसचन्ते अनुगच्छन्ति। यूपस्याहवनीयस्य च रक्षोघातित्वात् तयोरन्तराले भयं नास्ति। होतारं प्रति प्रैषमन्त्रमुत्पादयति "पशोर्वा आलब्धस्य मनोऽपक्रामति मनोतायै हविषो

ऽवदीयमानस्यानुब्रूहीत्याह मन एवास्यावरुन्धे" (सं०६का०।३प्र०।१०अ०) इति। अग्निर्देवता मनोता, "त्वं ह्यग्ने प्रथमो मनोता" इति मन्त्राम्नानात्। मनस्यूता सम्बद्धा मनोता। सङ्ख्याविशिष्टान्यवदानानि विधत्ते "एकादशावदानान्यवद्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्यावद्यति" (सं०६का०।३प्र०।१०अ०) इति। नाभिसहितानि दशच्छिद्राणि प्राणाः, देह आत्मा, अत एकादशसङ्ख्यया कृत्स्नोऽपि पशुरवत्तो भवति। तान्येकादशाङ्गानि सूत्रेऽभिहितानि "हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यं दोरुभयपार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि" इति। क्रमं विधत्ते "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधिनिर्वदत्येतद्वै पशोर्यथापूर्व्वं" (सं०६का०।३प्र०।१०अ०) इति। लोके प्रथमं हृदयेन निश्चिनोति तत्पश्चाज्जिह्वया वदति। पुनरपि तदेव निःशेषेणोच्चध्वनिना वदति तदानीमुरस ऊर्ध्वदेशगतबलेन वदति। तस्माद्धृदयादीनां त्रयाणां अंशक्रमेणावद्येत। एतदेव क्रमावदानं पशोरङ्गेषु यथापूर्व्वं भवति। यथा लोके अभिवदनव्यवहारः पूर्व्वं प्रवृत्तः तथैव भवति। उत्तरेष्वङ्गेषु हृदयादिवत् प्रसक्तं क्रमं वारयति "यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्व्वमेवास्य पशोरवत्तं भवति" (सं०६का०।३प्र०।१०अ०) इति। उक्तप्रकारेण यस्य पशोर्हृदयादीनि त्रीण्यङ्गान्यवदाय उत्तरेषामैच्छिकक्रमेऽपि पूर्व्वं हृद-

याद्यङ्गं यथा न दोषकारि तथैव उत्तरमपि भवति। एकादशस्वङ्गेषु गुदकाण्डरूपमङ्गमुत्तममध्यमाधमभागैस्त्रेधा विभज्य त्रिषु तेषु भागेषु मध्यमोत्तमभागयोर्विकल्पेनावदानं विधत्ते "मध्यतो गुदस्यावद्यति मध्यतो हि प्राण उत्तमस्यावद्यत्युत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवाजामि" (सं०६का०।३प्र०।१०अ०) इति। प्राणवायुर्मुखमध्ये वर्त्तते स्वयं जीवनहेतुत्वात्। चक्षुरादिषु सर्व्वेषूत्तमश्च। अतो यदीतरं मध्यमभागं स्वीकुर्य्यात् यदीतरमुत्तमभागं तदुभयमपि जामित्वन्न भवति किन्तु अनालस्यं दोषरहितमित्यर्थः। हृदयाद्यवदानानि प्रशंसति "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवावदयते तदवदानानामवदानत्वं" (सं०६का०।३प्र०।१०अ०) इति। ब्रह्मचर्येण वेदाभ्यासेन ब्रह्मचारित्वेन गुरुगृहे वसतीति ब्रह्मचारिवासी वेदाभ्यासादिभिरपाकर्त्तव्यं यदृणं तत् हृदयाद्यवदानैरेवापाकरोति। ऋणमवदयते एभिरित्यवदानत्वं। स्विष्टकृदर्थं त्र्यङ्गावदानं विधत्ते "देवाऽसुराः संयत्ता आसन् ते देवा अग्निमब्रुवन् त्वया वीरेणासुरानभिभवामेति सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्व्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्द्धस्य ततो देवा अभवन् परासुरा यत् त्र्यङ्गाणाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवति" (सं०६का०।३प्र०।१०अ०) इति। उद्धारं

उत्कृष्टं भ्रियमाणं उत्तमभागं उद्धरै स्वीकारवाणि। पशोः पूर्व्वार्धस्य सम्बन्धि दोर्हस्तं मध्यतः पशुमध्यभागसम्बन्धि गुदं अपरार्धस्य सम्बन्धिनीं श्रोणीं। वक्रगतिं विधत्ते "अद्दणयाऽवद्यति तस्मादद्दणया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै" (सं०६का०।३प्र०।१०अ०) इति। गवादयः शयनकालेऽङ्गानि पादान् अद्दणया वक्रत्वेनावस्थापयन्ति। अत्र वक्रगतिः सूत्रे दर्शिता "दक्षिणं दोः सव्या श्रोणिर्गुदद्वतीयमिति सैाविष्ट कृतानि" इति। विधत्ते "मेदसा स्रुचैा प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति" (सं०६का०।३प्र०।११अ०) इति। जीर्णपटसदृशं हृदयवेष्टनं मेदः। स्रुचैा जुहूपभृतैा हृदयमेदसा आच्छादयेत्। सति मेदोबाहुल्ये पशवो रूपवन्तो भवन्ति। तत्र कञ्चिद्विशेषं विधत्ते "यूषन्नवधाय प्रोर्णोति रसो वा एष पशूनां यद्यूरसमेव पशुषु दधाति" (सं०६का०।३प्र०।११अ०) इति। यूषशब्देन मांसेन सह पक्कं जलमुच्यते। तस्मिन् जले मेदः प्रक्षिप्य तेनाच्छादयेत्। कल्पः "अथ पशोरवदानानि सम्मृशति, ऐन्द्रः प्राणो अङ्गे अङ्गे निदेध्यदैन्द्रो ऽपानो अङ्गे अङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत् सलक्ष्माणो भवथ देवत्रायन्तमवसे सखायोऽनु त्वा मातापितरो मदन्तु" इति। इन्द्रदेवताकः प्राणः स पशोस्तस्मिन् हृदयाद्यङ्गे निदेध्यत् निधीयतां स्थाप्यतां। तद्वदपानोऽपि विबोभुवत् विशेषेण भवतु तिष्ठतु। हे देव त्वष्टस्ते तव अनुग्रहेण भूरि सर्व्वमङ्गजातं संसमेतु छेदनेन विश्लिष्टमपि समवेतं भवतु। हे हृदयाद्यवयवाः

यूयं विषुरूपा विलक्षणरूपा अपि सलक्ष्माणो हविष्ट्वेन समान-लक्षणा भवथ। यद्यस्मात् पूर्वं विषुरूपाः तस्मादित ऊर्ध्वं सलक्ष्मत्वं सम्पादनीयं। हे पशो देवत्रा देवेषु यन्तं गच्छन्तं त्वां सखायः इतरे पशवो मातापितरश्चानुमदन्तु। किमर्थं। अत्रमे त्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्व्वं सेवितुं। बोधायनः "अथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्बतः, श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै" इति। आपस्तम्बः "श्रीरसीति पार्श्वेन वसाहोमं प्रयौति, वातस्य त्वा ध्रज्यै इति, तेनैवापि दधाति" इति। मांसपाक-भाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा, सा च हूयत इति होमशब्दाभिधेया। पार्श्वशब्देन तत्रत्यमस्थि विवक्षितं, तस्यास्थ्नोऽग्र-भागः स्थूलः कुम्बशब्दाभिधेयः, तेन वसारूपं होमद्रव्यं पात्रे गृहीतं प्रयौति आलोडयेदिति बोधायनवाक्यार्थः। मन्त्रार्थस्तु हे वसे श्रीरसि आश्रयणीयासि तस्मादाहवनीयोऽग्निः त्वां श्रीणातु आश्रयतु स्वीकरोतु। आपश्च त्वां समरिणन् सम्यक् प्राप्नुवन्तु तव शोषो मा भूत्। हे वसे त्वामपि दधामि। किमर्थं। वातस्य ध्रज्यै वायोर्गतये। पूष्णो रꣳह्यै आदित्यस्य गतये। अप्सम्बन्धिनीनामोषधीनां रोहिष्यै प्ररोहार्थं। त्वयि पिधानेन सुरक्षितायां त्वदीयहोमः सुकृतेन वायुगमनादिरूपो जगद्व्यवहारः सुस्थिता भवतीति स्तूयते। आलोडनं विधत्ते "पार्श्वेन वसाहोमं प्रयौति मध्यं वा एतत् पशूनां यत् पार्श्वꣳ रस एष पशूनां यद्वसा यत् पार्श्वेन वसाहोमं प्रयौति मध्यत एव पशूनाꣳ रसं दधाति"

(मं०६का०।३प्र०।११अ०) इति। अवदानसंमर्शनमन्त्रस्य पूर्व्व-भागे अत ऐन्द्र इत्यसौ तद्धितो देवतावाचीत्याह "घ्नन्ति वा एतत् पशुं यत् संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रो ऽपान ऐन्द्रः प्राणो अङ्गे अङ्गे निदेध्यदित्याह प्राणापानावेव पशुषु दधाति" (मं०६का०।३प्र०।११अ०) इति। सञ्ज्ञपनं हननं गलनिरोधाद्युपघातेन सम्पद्यते तेनोपद्रवेणापनीतयोः प्राणापानयोः पुनः स्थापनं कर्त्तव्यं। द्वितीयभागे त्वष्टृशब्दाभिप्रायमाह "देव त्वष्टर्भूरि ते सꣳसमेत्वित्याह त्वाष्ट्रा हि देवतया पशवः" (मं०६का०।३प्र०।११अ०) इति। तृतीयभागे हृदयाद्याकारेण वैलक्षण्यं हविष्ट्वेन सालक्षण्यञ्च प्रसिद्धमित्याह "विषुरूपा यत्सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति" (मं०६का०।३प्र०।११अ०) इति। चतुर्थभागे अनुमदन्तुशब्दस्याभिप्रायमाह "देवत्रायन्तमवसे सखायोऽनु त्वा मातापितरो मदन्त्वित्याहाऽनुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयति" (मं०६का०।३प्र०।११अ०) इति। श्रीरसि वातस्येत्येतौ मन्त्रावुपेक्षितौ। बोधायनः "सोऽर्द्धर्चे याज्यायै वसाहोमं जुहोति, घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति, वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति, दिशः प्रदिश आदिशो विदिश उद्दिश स्वाहा दिग्भ्यो नमो दिग्भ्यः" इति। आपस्तम्बः "याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति, घृतं घृतपावानः पिबतेत्युद्रेकेण

दिशः प्रतिदिश इति प्रतिदिशं जुहोति, मध्ये पञ्चमेन प्राश्नमुत्तमꣳ सꣳस्थापयति, नमो दिग्भ्य इत्युपतिष्ठते" इति। उद्रेकः प्रैषः। घृतपावानो देवा अचत्यं घृतं पिबत। हे वसापावानः इमां वसां पिबत। हे वसे त्वमन्तरिक्षाभिमानो देवगणस्य हविरसि अतोऽन्तरिक्षाभिमने त्वां स्वाहा जुहोमि। दिशः प्राच्यै दिशे स्वाहेति प्रैषः। प्रदिशो दक्षिणायै। एवमन्यत्रापि। षष्ठे तु मन्त्रे सर्व्वाभ्यो दिग्भ्यः स्वाहेति योज्यं स्पष्टत्वात्। मन्त्रा उपेक्षिताः। विधत्ते "अर्धर्चे वसाहोमं जुहोत्यसौ वा अर्द्धर्च इयमर्द्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनानक्त्यथो दिग्भ्य एवोर्जꣳ रसमवरुन्धे" (सं०६का०।३प्र०।११अ०) इति। याज्यायाः पूर्व्वोत्तरयोरर्द्धर्चयोरभिमानिन्यौ देवौ द्यावापृथिव्याविति। मध्ये होमेन उभे ऽपि रसेनाक्ते भवतः। उद्रेकहोमेन दिग्देवतास्तृप्यन्ति। यजमानस्यापि दिशां सकाशादन्नरसप्राप्तिर्भवति। अवदानपूर्व्वकं द्वौ प्रैषमन्त्रौ मैत्रावरुणं प्रति उत्पादयति "प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं वानस्पत्याः खलु वै देवतया पशवो यत् पृषदाज्यस्योपहत्याऽऽह वनस्पतये ऽनुब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधाति" (सं०६का०।३प्र०।११अ०) इति। पृषदाज्यस्योपहत्य पात्रगतं पृषदाज्यं स्रुवेण जुह्वामवदायेत्यर्थः प्रैषयोरयमर्थः। हे मैत्रावरुण त्वं वनस्पतिदेवतायै अनुब्रूहि पुरोऽनुवाक्यां पठ, ततो याज्यां पठितुं होतारं प्रेरयेति। एवं सति वनस्पतिदेवताकेषु पशुषु पृषदाज्यरूपौ प्राणापानौ दधाति। अथेडार्थं तस्य

तस्य हृदयाद्यङ्गस्यांशमेकत्र समवद्यति। विधत्ते "अन्यस्यान्यस्य समवत्तꣳ समवद्यति तस्मान्नानारूपाः पशवः" (सं०६का०।३प्र०।११अ०) इति। समवत्तं अवत्तशेषं अवदेयानामङ्गानां बहुविधत्वात्। तस्माल्लोमलभ्याः पशवोऽपि बहुविधाः। सर्व्वेष्ववदानेषु मांसनिसृतजलेनोपसेचनं विधत्ते "यूष्णोऽपसिञ्चति रसो वा एष पशूनां यद्रसमेव पशुषु दधाति" (सं०६का०।३प्र०।११अ०) इति। हविःशेषस्य इडाभागस्य भक्षणायेडोपाह्वानं होतुर्विधत्ते "इडामुपह्वयते पशवो वा इडा पशूनेवोपह्वयते चतुरुपह्वयते चतुष्पादो हि पशवः" (सं०६का०।३प्र०।११अ०) इति। इडादेवताया गोरूपत्वात् पशवो वा इडेत्युक्तं यद्यपि तच्चोदकादेव प्राप्तं तथाप्याघारवदिष्टिविकृतिलद्योतनाय पुनर्विधानं। अत्र इडावदाने मेदसा उपस्तरणाभिघारणे विधातुं तद्व्यतिरेकं निन्दति "यं कामयेताऽपशुः स्यादित्यमेदस्कं तस्मा आदध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति" (सं०६का०।३प्र०।११अ०) इति। स्निग्धद्रवरहितं मांसममेदस्कं एनं यजमानं पशूनां निर्भजति निरस्यति। अतो यजमानः पशुरहितो भवति। विधत्ते "यं कामयेत पशुमान्त्स्यादिति मेदस्वत् तस्मा आदध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनवरुन्धे पशुमानेव भवति" (सं०६का०।३प्र०।११अ०) इति। अत्र सूत्रं "मेदसोऽपस्तीर्य मेदसाभिघारयति" इति। पृषदाज्येनाऽनूयाजहोमं विधत्ते "प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं

पश्चात् तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्ये-नाऽनूयाजास्तस्मादेतन्मिश्रमिव पश्चात् सृष्टꣳ हि" (सं०६का०।३प्र०।११अ०) इति। यथा प्रथमसृष्टेनाज्येन प्रथमभाविनः प्रयाजा इज्यन्ते, यथा वा मध्यतः सृष्टेन पशुना मध्यतो यजते, तथा पश्चात् सृष्टेन पृषदाज्येन पश्चाद्भाविनोऽनूयाजा यष्टव्याः। यस्मादेकं द्रव्यं न पर्य्याप्तमितिबुध्या पश्चाद्द्रव्यान्तरेण सहैतद्यद्विहितं तस्मादेतत् पृषदाज्यं दधिमिश्रमेव चोदकप्राप्तं। त्रित्वसङ्ख्यामपोद्य सङ्ख्यां विधत्ते "एकादशानूयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनुयजति"(सं०६का०।३प्र०।११अ०) इति। पृषदाज्यं प्रशंसति "घ्नन्ति वा एतत् पशुं यत् सञ्ज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां यत् पृषदाज्यं यत् पृषदाज्येनानूयाजान् यजति प्राणापानावेव पशुषु दधाति" (सं०६का०।३प्र०।११अ०) इति। अत्र विनियोगसङ्ग्रहः।

"सन्ते ऽभिघार्य हृदयमैन्द्रो ऽवत्ताभिमर्शनं।
श्रीः पार्श्वेन वसां योनि वात पार्श्वा हृता वसा॥
घृतं वसाहुतिः षड्भिर्दिग्घोमा नम इत्यतः।
दिश्युपस्थानमत्रैते मन्त्रा द्वादश वर्णिताः" ॥ इति।

अथ मीमांसा। द्वादशाध्यायस्य प्रथमपादे चिन्तितं।

"पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया।
अस्ति वा विध्यभावान्नो ह्यन्यरार्थत्वतोऽध्ववत्" ॥ इति।

अग्नीषोमीयपश्वर्थानि चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनु-

ष्ठितानि तैः पशुपुरोडाशस्योपकारो नास्ति । कुतः । इष्टिविकृतित्वादुपकारबोधकस्य विधेरभावात् । चोदकस्तु दर्शपूर्णमासवत् पशुरनुष्ठेय इत्येवंरूपत्वात् पशोरेव तदुपकारं बोधयति । ननु पशुपुरोडाशस्यापीष्टिविकृतित्वात् तत्रापि चोदकोऽस्तीति चेत् । बाढं । अतएव भिन्नचोदकबलात् पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानीति प्राप्ते ब्रूमः । यद्यपि पश्वर्थैः पुरोडाशस्य उपकारक इत्येतादृशं शास्त्रं नास्ति तथाप्ययमुपकारोऽर्थतः प्राप्तो न वारयितुं शक्यते । यथा प्रदीपस्य वेदिप्रकाशार्थं निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यं तथा पशुतन्त्रमध्ये ऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत तस्मादन्यार्थैरस्तूपकारः । तत्रैवान्यच्चिन्तितं ।

"आज्यभागौ पुरोडाशे नस्तस्तौ वाऽस्य चोदकः ।
लुप्तस्ततो न तौ मैवं प्रयोगांशस्य लोपनात्" ॥ इति ।

तौ न पशौ करोतीतिनिषेधादाज्यभागयोः पशावभावेन पुरोडाशे प्रसङ्गसिद्धिर्नास्ति । ततस्तौ विचार्येते । तत्र पुरोडाशे आज्यभागौ नस्त इति तावत् प्राप्तं । कुतः । पुरोडाशविषयस्य चोदकस्य लुप्तत्वात् । अन्यथा प्रयाजादीनामपि पुनरनुष्ठानापत्तेरिति प्राप्ते ब्रूमः । न तावत् पुरोडाशांशे चोदको लुप्यते चोदकाभावात्, पूर्वोक्तप्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते न चोदकं । अन्यथा प्रयाजादीनां पुरोडाशाङ्गत्वाभावेन प्रसङ्गसिद्धेरप्यवक्तव्यत्वात् । ननु प्रसङ्गबाधेऽपि आज्यभागौ नस्त इति चेत् । न । आज्यभागौ प्रति बाधितायाः प्रसङ्गसिद्धेरभा-

त्वात्। ततः प्रसिद्धाङ्गविषयप्रयोगांशस्यैव बाधादबाधिते न प्रयोगवचनांशेन आज्यभागावनुष्ठाप्येते। यथा देवदत्ते यज्ञदत्ते च यज्ञदत्ते याममारूढे देवदत्तयानं निवर्त्यते न तु वस्त्रालङ्कारादि तद्वत्। दशमाध्यायस्य तृतीयपादे चिन्तितं।

"प्रयाजैकादशत्वादि विशेषविधिभिर्युते।
पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः।
लाघवाद्गुणमात्रस्य विधेः सोऽस्त्यतिदेशतः"॥ इति।

अग्नीषोमीयपशावेकादशप्रयाजाः श्रुताः चातुर्मास्येषु नवप्रयाजाः श्रुताः। यथा वायव्यपशौ हिरण्यगर्भ इत्याघारमन्त्रः। इत्यादिभिर्युतेषु पश्वादिषु प्राकृतेतिकर्त्तव्यता सामिधेन्यादिर्नास्ति।कुतः। सङ्ख्यामन्त्रादिगुणविशिष्टस्य प्रायाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेरिति पूर्व्वः पक्षः। पश्वादिविधिस्तावदितिकर्त्तव्यतामाकाङ्क्षति। तत्र प्राकृताङ्गान्यतिदिश्य वा तदाकाङ्क्षा पूर्य्यतां विधास्यमानान्यङ्गान्तराण्युपदिश्यवेति विवक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः ततश्चातिदेशतः प्राप्तप्रयाजाद्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति। गुणविशिष्टाङ्गविधौ तु गौरवं स्यात्। तस्मात् सङ्ख्यान्तरमन्त्रान्तराभ्यां पूर्व्वयोः सङ्ख्यामन्त्रयोर्बाधेऽपि प्रयाजाघारसामिधेन्यादीतिकर्त्तव्यता प्राप्नोत्येवातिदेशादिति राद्धान्तः। दशमाध्यायस्य सप्तमपादे चिन्तितं।

"पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता।

आद्यचोदनया सैवमवदानपृथक्कृतः" ॥ इति ।

अग्नीषोमीयं पशुमालभेतेत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तं। कुतः। अग्नीषोमीयदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात्। न हि हृदयाद्यङ्गानि साक्षात् पशुर्भवतीति प्राप्ते ब्रूमः।"हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अवद्यति, अथ वक्षसोऽवद्यति, दोष्णोऽवद्यति, पार्श्वयोरवद्यति" इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते। अवदानञ्च हविष्ट्वप्रयोजकः संस्कारः पुरोडाशादौ होतुं अवदीयमानत्वंदर्शनात्। हविःशब्दस्य कर्मणि व्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते। पश्वाकृतिचोदनात् तु हृदयाद्यङ्गद्वारेण देवतासम्बन्धादुपपद्यते तस्मात् प्रत्यङ्गं हविर्भेदः। तत्रैवान्यच्चिन्तितं।

"एकेनाङ्गेन सर्व्वैर्वा यद्वैकादशभिर्यजिः ।
एकेन यागसंसिद्धेर्हविषां भेदतोऽखिलैः ॥
एकादशभिरन्येषां परिसङ्ख्या भवेद्यतः ।
न त्रिदोषा गत्यभावादंसुतोक्तेश्च सोचिता" ॥ इति ।

प्रत्यङ्गं हविर्भेदे स्थिते सति त्रेधायागे संशयः। तत्रानिर्द्दिष्टविशेषेण येन केनाप्यङ्गेन यागः कर्त्तव्यः तावतैव यागस्य सिद्धेरित्येकः पक्षः।चोदितपश्वङ्गत्वं परिगणितेषु हृदयादिष्वङ्गेषु चांसशिरः प्रभृतिषु समानं। ततो हृदयादिवदंसादीनां हविर्भेदत्वाद् यागमन्तरेण हूयमानत्वलक्षणहविष्ट्वस्यापर्यवसानात् सर्व्वैरङ्गैर्याग इति द्वितीयः पक्षः। हृदयादिभिरेकादशभिरेवाङ्गैर्यागः कर्त्तव्यः। कुतः। अन्येषां अंसादीनां परिसङ्ख्या-

त्वात्। कुतः। चोदकेन सर्व्वेषामङ्गानामवदाने प्राप्ते हृदयादि-वाक्येनांसादयः परिसङ्ख्यायन्ते। ननु परिसंख्यायां विधिः स्वार्थं जह्यात् परार्थं कल्पेत प्राप्तञ्च बाधेतेति दोषत्रयं प्रसज्येत। प्रसज्यतां नाम सति हि गत्यन्तरे तेषां दोषत्वं। परिसंख्यायास्तु ते त्रयः स्वरूपमिति कृत्वा न दोषतां भजन्ते। किञ्च। द्वयानि मांसान्यभिमृशति शृताशृतानीति केषाञ्चिन् मांसानामपक्वत्व-मुच्यते। पाकस्तु हविषो मांसस्य प्रति नियतः। तस्मादशृतत्वो-क्तिरंसादिपरिसङ्ख्यां गमयति। एतदेवाभिप्रेत्यांसादिप्रतिषेधः श्रुत्या वर्ण्यते "नांसयोरवद्यति न शिरस" इत्यादिना। तस्मा-देकादशभिरेव यागः कर्त्तव्यः। तत्रैवान्यच्चिन्तितं।

"इज्याशेषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः।
आद्यः प्रकृतिवन्मैवं पूर्वार्धेत्युक्तिशेषतः"॥ इति।

पशौ श्रूयते त्र्यङ्गैः स्विष्टकृतं यजतीति। तत्रेज्यार्थानां हृद-याद्येकादशाङ्गानां मध्ये यैः कैश्चित्त्र्यङ्गैरिज्याशेषभूतैः स्विष्टकृद्धोतव्यः। कुतः। प्रकृतिविशेषेण पुरोडाशेन स्विष्टकृतो हुत-त्वात्। अत्रापि चोदकेन तथात्वादिति प्राप्ते ब्रूमः। "दोष्णः पूर्वार्धादग्नये समवद्यति गुदस्य मध्यतः श्रोण्या जघनः" इति वाक्यशेषेण हृदयादिभ्य एकादशभ्योऽन्यानि त्रीण्यङ्गानि स्विष्ट-कृते समाम्नायन्ते। न च हृदयादिष्वपि गुदादीन्याम्नातानी-ति शङ्कनीयं तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात् "हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यं दोरुभयपार्श्वे दक्षिणा श्रोणिर्गुद-तृतीयमिति दैवतानि, दक्षिणं दोः सव्या श्रोणिर्गुदतृतीय-

मिति सोविष्टकृतानि'' इति। तस्मादग्निज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमः। अष्टमाध्यायस्य तृतीयपादे चिन्तितं।

"पुरोडाशस्य सान्नाय्यस्य वा धर्मः पशौ यतः।
दैवैक्यमाद्यस्तस्मान्नो हविर्जन्मादिसाम्यतः'' ॥ इति।

अग्नीषोमीयपशौ अग्नीषोमीयपुरोडाशस्य पशुधर्मः कार्यः। कुतः। दैवतैक्यादिति चेत्। मैवं। सान्नाय्यं पशोरुत्पन्नं। पशुरपि पशोरुत्पन्नः श्रवणार्थमुखात्। सान्नाय्यपश्वोः समो हविः साम्यञ्च बलीय इत्युक्तं। तस्मात् सान्नाय्यस्य धर्मः कार्यः। अत्र छन्दो नास्ति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः॥ * ॥

समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहाऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय शुगसि तमभिशोच योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ १ ॥

असि षट्त्रिंशतिश्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

दशमेऽनुवाके वसाहोमो वर्णितः। एकादशे गुदकाण्डेन उपयट्संज्ञका होमा उच्यन्ते। कल्पः "अग्नीध्रादौपयजानङ्गारानाहरति होत्रीय उपयज उपयजति शामित्रान्निरूढपशुर्वत्से, उत्तरस्यां वेदिश्रोण्यां गुदकाण्डमेकादशधा तिर्यक् छित्वा असम्भिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रति प्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रति मन्त्रꣳ सर्वाणि हुत्वा, अद्भ्यस्त्वौषधीभ्य, इति बर्हिषि लेपं निमृज्य, मनो मे हार्दि यच्छ तनूं इति जपति" इति। मन्त्रास्त्वेवमाम्नाताः "समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहाद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय" इति। हे हविः समुद्रादिनामकान् देवान् गच्छ। हे लेप त्वामप्कार्यौषधिसिध्यर्थं बर्हिषि निमार्ज्मि। हृदये भवो हार्दो हर्षः सोऽस्यास्तीति हार्दि। हे समुद्रादिदेवतासमूह मे हार्दि हर्षयुक्तं मनः प्रयच्छ। त्वत्प्रसादात् तनूं उत्तमजातियुक्तं शरीरं त्वचं कान्तिमद्रूपं तथा गुणवन्तं पुत्रं तत् पौत्रञ्चाशीय प्राप्नुयाम्।

उपयजो विधत्ते "यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवाऽसृजत यदुपयज उपयजति प्रजा एव तद्यजमानः सृजते" (सं०६का०।४प्र०।१अ०) इति। ज्योतिष्टोमयज्ञस्य सृष्टिसाधनत्वेऽपि साक्षात् साधनत्वं उपयजामेव अनूयाजसमीप इज्यत इत्युपयजः। पशोः पाय्वात्यभागं द्रव्यत्वेन विधत्ते "जघनार्धादवद्यन्ति जघनार्द्धाद्धि प्रजाः प्रजायन्ते" (सं०६का०।४प्र०।१अ०) इति। त्रेधा विभक्ते गुदकाण्डे स्थूलभागं विधत्ते "स्थविमतो ऽवद्यति स्थविमतो हि प्रजाः प्रजायन्ते" (सं०६का०।४प्र०१अ०) इति। निर्गमनकाले निर्गन्तुं सुकरात् स्थूलात् छिद्रात् प्रजा उत्पद्यन्ते। क्रमेण छिन्नानां भागानां साङ्कर्य्यं वारयति "असम्भिन्दन्नवद्यति प्राणानामसम्भेदाय" (सं०६का०।४प्र०।१अ०) इति। अग्रभागं प्रथमतो ऽवदाय पश्चान्मूलभाग इत्येतादृशं विपर्यासं निषेधति "न पर्यावर्त्तयति यत् पर्यावर्त्तयेदुदावर्त्तः प्रजाग्राहुकः स्यात्" (सं०६का०।४प्र०।१अ०) इति। उदावर्त्तो रोगविशेषः। समुद्रादिमन्त्राणां सर्व्वेषां प्रजोत्पत्तावुपयोगं विवक्षुः समुद्रजलस्य रेतः साम्यमभिप्रेत्याह "समुद्रं गच्छ स्वाहेत्याह रेत एव तद्दधाति" (सं०६का०।४प्र०।१अ०) इति। अन्तरिक्षस्याऽवकाशप्रदानेन उपयोगं दर्शयति "अन्तरिक्षं गच्छ स्वाहेत्याहाऽन्तरिक्षेणैवास्मै प्रजाः प्रजनयत्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते" (सं०६का०।४प्र०।१अ०) इति। प्रेरकत्वेन सवितुरुपयोग इत्याह "देवꣳ सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्रजनयति"

(सं०६का०।४प्र०।१अ०) इति। उत्पत्तिकालत्वेनाहोरात्रो-पयोगमाह "अहोरात्रे गच्छ स्वाहेत्याहाऽहोरात्राभ्यामेवास्मै प्रजाः प्रजनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते" (सं०६का०। ४प्र०।१अ०) इति। प्राणापानप्रदत्वेन मित्रावरुणयोरुपयो-गमाह "मित्रावरुणौ गच्छ स्वाहेत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति" (सं०६का०।४प्र०।१अ०) इति। देव-तात्वेन सोमोपयोगमाह "सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजाः" (सं०६का०।४प्र०।१अ०) इति। प्रजापते-र्यजमानप्रदत्वेन यज्ञस्योपयोगमाह "यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति" (सं०६का०।४प्र०।१अ०) इति। पशुप्रदत्वेन छन्दसामुपयोगमाह "छन्दांसि गच्छ स्वाहेत्याह पशवो वै छन्दांसि पशूनेवाऽवरुन्धे" (सं०६का०। ४प्र०।१अ०) इति। धारणाय द्यावापृथिव्योरुपयोगमाह "द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृ-थिवीभ्यामुभयतः परिगृह्णाति" (सं०६का०।४प्र०।१अ०) इति। वृष्टिप्रदानेन नभस उपयोगमाह "नभो दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नियच्छति" (सं० ६का०।४प्र०।१अ०) इति। प्रतिष्ठाप्रदानेन वैश्वानरस्योपयोग माह "अग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति" (सं०६का०।४प्र०।१अ०) इति। अद्भ्यस्त्वौष-धीभ्य इति मन्त्र उपेक्षितः। मनो मे हार्दि यच्छेति प्रार्थनायाः प्रसङ्गमाह "प्राणानां वा एषोऽवद्यति योऽवद्यति गुदस्य मनो

मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुपह्वयते" (सं०६का०। ४प्र०।९अ०) इति। गुदस्य प्राणाधारत्वेन तदवदाने सति स्थानभ्रष्टाः प्राणाः पुनर्मन्त्रेण यथास्थानं स्थापिता भवन्ति। कल्पः "अग्रेण यूपं स्फ्येनोद्धृत्याऽवोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति, शुगसि तमभिशोच योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म, इत्यथाऽद्भिर्मार्जयन्ते, धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च" इति। हे हृदयशूल त्वं शुगसि शोकरूपमसि अतो द्वेष्टारं द्वेष्यञ्चाभिप्राप्य शोचय। हे वरुण त्वमितः धाम्नो धाम्नः तत्तद्द्वेष्टृद्वेष्यस्थानाच्छोकप्रापकात् अस्मान् मोचय। हे आपो हे अघ्निया हे वरुण इत्येवं वयं तदा तदा अस्माकं इष्टप्राप्त्य-निष्टनिवारणार्थं देवं त्वां शपामहे बाधामहे। महतां प्रत्यक्षं नामग्रहणमेव तावन्महान्द्रोहः। तथा च श्रूयते "यो वै वसी-याꣳसं यथानाममुपचरति। पुण्यार्त्तिं वै स तस्मै कामयते" इति। न केवलमत्र नामग्रहणं किन्त्वस्मदपेक्षिततत्तत्कार्यसा-धनप्रयासश्च तेनोभयेन जन्यं यत् पापमस्ति हे वरुण ततः पापात् अस्मान् मोचय। मन्त्रावेतावुपेक्षितौ। शूलोद्वासनं विधत्ते "पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदयशूल-मभिसमेति यत् पृथिव्याꣳ हृदयशूलमुद्वासयेत् पृथिवीꣳ शुचार्पयेद्यदप्स्वपः शुचार्पयेच्छुष्कस्य चार्द्रस्य च सन्धावुद्वास-यत्युभयस्य शान्त्यै" (सं०६का०।४प्र०।९अ०) इति। उद्वा-सनकाले ध्यानं विधत्ते "यन्द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति"

(मं० ६ का०।४ प्र०।१ अ०) इति। अत्र विनियोगसङ्ग्रहः।

"समुद्रं गुदकाण्डस्य होमो अञ्जस्तु बर्हिषि।
लेपं मार्ष्टि मनो जप्यः शुक्यन्वावार्द्रशुष्कयोः॥
त्यक्त्वा शूलं धाम्नमृज्यं भवेत् पञ्चदशोदिताः"॥ इति।

अत्र मीमांसा छन्दसी न स्तः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः॥ * ॥

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माँ आविवासति हविष्माँ अस्तु सूर्यः। अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेन्द्राग्नियोर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ विश्वेषां देवानां भागधेयीः स्थ यज्ञे जागृत॥१॥

हविष्मतीश्चतुस्त्रिंशत्॥ १२॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥ ०॥

एकादशेऽनुवाके गुदकाण्डहोमो वर्णितः। एतावता अग्नीषोमीयपशुः समाप्तः। अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानां अपामुपादानं द्वादशेऽनुवाकेऽभिधीयते। कल्पः "अथ यो वीडितः कुम्भस्तं याचति, तमादायान्तरेण चात्वा-

लोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तदेति, मान्तमावहन्तीरत्येति, न स्थावराणां गृह्णाति, प्रतीपं तिष्ठन् गृह्णाति, छायायै चातपतश्च सन्धौ गृह्णाति, हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माꣳ आविवासति हविष्माꣳ अस्तु सूर्य्यः" इति। वीडितो दृढः। इमा गृह्यमाणा वसतीवरीसंज्ञका आपः स्वसंस्कारेण सोमेन हविष्मत्यो भवन्तु। देव इन्द्रोऽपि हविष्मानस्तु। अध्वरो यागोऽपि हविष्मान् आविवासति समन्तादिशेषेण प्रवर्त्ततां। वसतीवरीणां प्रकाशकत्वेन सूर्य्योऽपि हविष्मानस्तु। विधीयते "देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन् वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन् प्रातर्न समशक्नुवन् तदप्सु प्रावेशयन् ता वसतीवरीरभवन् वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवारभ्य गृहीत्वोपवसति" (सं० ६ का०।४ प्र०।२ अ०) इति। पुरा कदाचिद् देवा आग्नीध्रमण्डपे स्थित्वा यज्ञशालां अंशेन इदं मम इदं ममेत्येवं व्यभजन्त। ततः सर्व्वैः स्वस्वभागेषु विभक्तेषु यदवशिष्टं तदुद्दिश्य परस्परं अब्रुवन् इदमवशिष्टं इदानीं साधारणेनास्माकमेव तिष्ठतु प्रातर्विभागं करिष्याम इति। यस्माद्वसत्विति देवैरुक्तं तस्मात् तस्यांशस्य देवोक्तियोगात् वसतीवरीति नाम सम्पन्नं। वसत्वित्युक्त्या उर्वरितं यत् शेषभूतं तद्वत्य आपो वसतीवर्यः। ततः प्रातःकाले पुनः समागत्य तस्मिन्नवशिष्टे विभागं कर्तुं नाशक्नुवन् तस्याल्पत्वेन बहूनामपर्याप्तत्वात्। तस्य साधारणस्यैकेन गृहीतुमशक्यत्वात् अप्सु तत् परित्यक्तवन्तः। तास्वापो वसतीवर्य्यो

ऽभवन् ततो यज्ञांशत्वात् वसतीवरीर्गृह्णीयात्। तद्ग्रहणेन यज्ञमेवोपक्रम्य दृढं धारयित्वा तत्समीपे वसति। तस्य ग्रहणस्य सूर्यास्तमयात्। पूर्व्वकालं व्यतिरेकमुखेन विधत्ते "यस्याऽगृहीता अभिनिम्रो चेदनारब्धोऽस्य यज्ञः स्याद् यज्ञं विच्छिन्द्यात्"(सं०६का०। ४प्र०।२अ०) इति। अगृहीता एता अभिलक्ष्य निम्रो चेदस्तमियात् तदा पूर्व्वदिने यज्ञोऽनुपक्रान्तो भवेत्। ततः परेद्युरनुष्ठितोऽपि विच्छिन्न एव स्यात्। कथञ्चिदस्तमये सति तदा प्रतीकारं विधत्ते "ज्योतिष्या वा गृह्णीयाद्धिरण्यं वा ऽवधाय स शुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् स गृहीतवसतीवरीकः" (सं०६का०।४प्र०। २अ०) इति। उक्तया द्योतिताः इत्याद्यः पक्षः। कुम्भे हिरण्यमवधाय तत् सहिता इति द्वितीयः पक्षः। सोमयाजि गृहे कुम्भगता इति तृतीयः पक्षः। उक्तमेव विधिमनूद्य प्रशंसति "वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवारभ्य गृहीत्वोपवसति" (सं०६का०।४प्र०।२अ०) इति। पशुप्राप्तिहेतुतया पशुत्वं। ग्रहणकाले प्रवाहाभिमुख्यं विधत्ते "यदन्वीपं तिष्ठन् गृह्णीयान्निर्मार्गुका अस्मात् पशवः स्युः प्रतीपं तिष्ठन् गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाति" (सं०६का०।४प्र०। २अ०) इति। प्रवाहो यन्मुखं तन्मुखेनावस्थानं अन्वीपं तद्वैपरीत्यं प्रतीपं निर्मार्गुका विनश्वराः प्रतिरुध्य विनाशं निवार्य। प्रवाहगतोदकं विधत्ते "इन्द्रो वृत्रमहन्त्सोऽ३ऽपोऽ३ऽभ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् तदत्यमुच्यत ता वह-

न्तीरभवन् वहन्तीनां गृह्णाति या एव मेध्या यज्ञियाः सदेवा आपस्तासामेव गृह्णाति" (सं० ६ का०।४प्र० २ अ०) इति। प्रवाहेष्वत्यन्तसमीपस्थं जलं व्यतिरेकमुखेन विधत्ते "नान्तमा-वहन्तीरतीयाद्यदन्तमावहन्तीरतीयाद्यज्ञमतिमन्येत" (सं० ६का०।४प्र०।२अ०) इति। अन्तमा अन्तिकतमाः। अतिमन्येत अवजानीयात्। वहन्तीष्वपि नदीषु या ह्रदवर्त्तिन्यः स्थावरा आपः यास्च तटाकादिस्थितास्तासां ग्रहणं निषेधति "न स्था-वराणां गृह्णीयात् वरुणगृहीता वै स्थावरा यत् स्थावराणां गृह्णीयात् वरुणेनास्य यज्ञं ग्राहयेत्" (सं० ६का०।४प्र०।२अ०) इति। अपां ग्रहणाय छायातपयोः सन्निदेशं विधत्ते "यद्वै दिवा भवत्यपो रात्रिः प्रविशति तस्मात् ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवत्यपोऽहः प्रविशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै चातपतश्च सन्धौ गृह्णात्यहोरात्रयोरेवास्मै वर्णं गृह्णाति" (सं० ६का०।४प्र०।२अ०) इति। अहर्यदा वर्त्तते तदानीमप्सु रात्रिः प्रविशति। तत्र जलवर्णस्य शुक्लस्य रात्रि-वर्णस्य कृष्णस्य च मेलनादीषत्ताम्रा इवापो दिने दृश्यन्ते। यथा राहुग्रस्ते चन्द्रे ताम्रत्वं तद्वत्। यदा तु रात्रिः प्रवर्त्तते तदा-नीमहः अप्सु प्रविशति। तत्र शुक्लकृष्णवर्णयोर्मेलनादापो रात्रौ चन्द्रवत् अतिश्वेता दृश्यन्ते तस्माद्वर्णद्वयोपेते सन्निदेशे गृह्णीयात्। जलविशेषणेन मन्त्रगतहविष्मच्छब्देन हविः सम्पादकत्वं विव-चितमित्याह "हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति" (सं० ६का०।४प्र०।२अ०) इति। सूर्य्यशब्देनापां प्रका-

शोपेतत्वं विवक्षितमित्याह "हविष्माꣳ अस्तु सूर्य्य इत्याह सगु-क्राणामेव गृह्णाति" (सं०६का०।४प्र०।२अ०) इति। मन्त्रग-तस्य छन्दस उपयोगमाह "अनुष्टुभा गृह्णाति वाग् वा अनु-ष्टुब्वाचैवैना: सर्व्वया गृह्णाति"(सं०६का०।४प्र०।२अ०) इति। कल्प: "अग्नेर्वोपन्नगृहस्य सदसि सादयामीत्यपरेण शालामु-खीयमुपसादयति, सुम्नाय सुम्निनी: सुम्ने मा धत्तेति, सर्वेषु वसतीवरीणां सादनेषु यजमानो जपति निशायां वसतीवरी: परिहरत्यन्तर्वेद्यासीने यजमाने पत्न्याञ्च नादीक्षितमभिपरि-हरेत् सव्येंऽसे अत्याधायापरेण प्राजिहितं परिक्रम्य पूर्व्वया द्वारोपनिर्हृत्य दक्षिणेन वेदिं गत्वा दक्षिणेन मार्जालीयं धि-ष्णियं परीत्य दक्षिणस्यामुत्तरवेदिश्रोण्याꣳ सादयति, इन्द्रा-ग्नीयोर्भागधेयी स्थेति, दक्षिणेꣳसे अत्याधाय यथेतं गत्वा पूर्व्वया द्वारोपनिर्हृत्योत्तरेण वेदिं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्योत्तरस्यामुत्तरवेदिश्रोण्याꣳ सादयति, मित्रावरुणयो-र्भागधेयी स्थेति, सव्येꣳसे अत्याधाय यथेतं गत्वाऽपरेणाग्नीध्रीयं धिष्णियमुपसादयति, विश्वेषां देवानां भागधेयी स्थेति, यज्ञे जागृतेति सर्वा अभिमन्त्रयते" इति। पाठस्तु "अग्नेर्वोपन्न-गृहस्य सदसि सादयामि सुम्नाय सुम्निनी: सुम्ने मा धत्तेन्द्रा-ग्नियोर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ यज्ञे जागृत" इति। हे वसतीवर्यो युष्मान् अविन-श्वरगृहस्य शालामुखीयस्याग्ने: सदसि समीपस्थाने स्थापयामि। हे आप: सुम्नाय सर्व्वप्राणिसुखाय प्रवृत्ता: सुम्निनी: स्वय-

मपि सुखवत्यो यूयं मां यजमानं सुम्ने सुखे धत्त स्थापयत। यूयं यक्ष्यमाणानामिन्द्रादिदेवानां भागरूपा स्थ। तस्माद्यज्ञे जाग्रत रक्षो निवारणाय सावधाना भवत। अग्नेर्वं सुम्नायेति द्वौ मन्त्रावुपेक्षितौ। हविष्मतीरित्यारभ्य ऋचः पादेषु या चतुः संख्या या च शालामुखीयोत्तरवेद्याग्नीध्रीयस्थानत्रय-विशिष्टा सादनसङ्ख्या तदुभयं सह प्रशंसति "चतुष्पदयर्चा गृह्णाति त्रिः सादयति सप्त सम्पद्यन्ते सप्तपदा शक्करी पशवः शक्करी पशूनेवावरुन्धे" (सं०६का०।४प्र०।२अ०) इति। शा-लामुखीयोत्तरवेद्याः सादनं विधत्ते "असौ वै लोकाय गार्ह-पत्य आधीयते ऽमुष्मा आहावनीयो यद्गार्हपत्य उपसादयेद-स्मिन् लोके पशुमान्त्स्याद् यदाहवनीये ऽमुष्मिन् लोके पशु-मान्त्स्यादुभयोरुपसादयत्युभयोरेवेनं लोकयोः पशुमन्तं क-रोति" (सं०६का०।४प्र०।२अ०) इति। स्थानत्रयं सूचोक्तं यत् परिभ्रमणं तद्विधत्ते "सर्व्वतः परिहरति रक्षसामपहत्यै" (सं०६का०।३प्र०।२अ०) इति। मन्त्रचतुष्टयस्पष्टार्थतां दर्श-यति "इन्द्राग्नियोर्भागधेयी स्थेत्याह यथायजुरेवैतत्" (सं० ६का०।४प्र०।२अ०) इति। विधत्ते "आग्नीध्र उपवासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्याऽपराजितं तदेवैना उपवासयति" (सं०६का०।४प्र०।२अ०) इति। तदेव तस्मिन्नेव यद्विहितं वहन्तीनां गृह्णातीति तदेव प्रशंसति "यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यवचरन्ति य-द्वहन्तीनां गृह्णाति क्रियमाणमेव तद् यज्ञस्य शये रक्षसामन-

न्ववचाराि" (सं०६का०।४प्र०२अ०) इति। विततस्य वि-स्तीर्णस्य यज्ञस्य यतो यदङ्गं विमृश्य न क्रियते तदेव छिद्र-मनुप्रविश्य रक्षांस्यवचरन्ति अपकुर्व्वन्ति वहन्तीग्रहणेन तदङ्गं क्रियमाणमेव शये शेते भवति। आग्नीध्रे मादितानां तृतीयसव-नगताभिषवपर्यन्तं धारणं विधत्ते "न ह्येता ईलयन्त्या तृती-यसवनात् परिशेरे यज्ञस्य सन्तत्यै" (सं०६का०।४प्र०।२अ०) इति। एता आपो न ह्यवगमयन्ति किन्तु परिशेरे अवति-ष्ठन्ते स्थापयेदित्यर्थः। अत्र विनियोगसङ्ग्रहः।

"हविर्गृह्णाति वसतीवरीरग्नेस्तु मादयेत्।
शालामुखीयतः पश्चात् सुत्वा सुन्वी* जपेत् पुनः॥
इन्द्रमित्रद्वयादेहि श्रोणौरा मादयेत् क्रमात्।
विश्वे ह्याग्नीध्र धिष्ण्यस्य पश्चादामादयेत् पुनः॥
यज्ञेति मन्त्रयेत् मन्त्राः सप्तमन्त्रा इहोदिता"॥ इति।

अत्र मीमांसा नास्ति।

अथ छन्दः। हविष्मतीत्यनुष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥ *॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वोर्द्ध्वमिम-मध्वरं कृधि दिवि देवेषु होत्रा यच्छ सोमराजन्नेह्यव-राह मा भेर्मा सं विक्था मा त्वा हिंसिषं प्रजास्त्वम्-

* स्वामो इति का०

पावरोह प्रजास्त्वामुपावरोहन्तु शृणोत्वग्निः समिधाहवं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषोनु ॥ १ ॥

यन्नः शृणोतु देवः सविताहवं मे। देवीरापोऽअपान्नपाद्य ऊर्म्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्राधत्त शुक्रः शुक्रपेभ्यो येषां भागस्थ स्वाहाकार्पिरस्यपापां मृग्रः समुद्रस्य वोक्षित्या उन्नये। यमग्ने पृत्सुमर्त्त्यं मावो वाजेषु यज्जुना। सयन्ताःशश्वतीरिषः ॥ २ ॥

नु सप्तचत्वारिःशच्च ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ * ॥

द्वादशेऽनुवाके सोमाभिषवार्थानां वसतीवरीणां ग्रहणमुक्तं। अभिषोतव्यस्य सोमस्य शकटादुपावरोहस्त्रयोदशे ऽनुवाके ऽभिधीयते। अथ महारात्रे बुध्वा सोमपात्राण्यासाद्य सोममवरोहयेत्। कल्पः "अथैतच्चर्मफलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति, यज्ञप्रतिनिष्ठेति वा तूष्णीं वा तस्मिन् मुखान् ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेषे सोमः राजानमुपावहरति, हृदे त्वा मनसे त्वेति द्वाभ्यां" इति। मन्त्रो विमाम्नातो "हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वार्ध्वमिम-

मध्वरं कृधि दिवि देवेषु होत्रा यच्छ सोमराजन्नेह्यवरोह मा भेर्मा संविक्था मा त्वा हिꣳसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु"। हे सोम त्वां हृदे हृदयवद्भ्यो मनुष्येभ्यो मनसे मनस्विभ्यः पितृभ्यो दिवे द्युलोकवासिभ्यो विशेषतः सूर्य्याय चोपावहरामि। त्वमिमं प्रवृत्तं अध्वरं विनाशरहितं ऊर्द्ध्वं उन्नतं समाप्तं कृधि कुरु। दिविस्थेषु देवेषु होत्रा अस्मदीयान्याह्वानानि स्तोत्ररूपाणि यच्छ अवस्थापय। हे सोम राजन्नेहि अभिषवस्थाने समागच्छ।शकटादवरोह। मा भैषीः। मा च संविक्थाः कम्पिष्ठाः। अहन्तु त्वां मा हिंसिषं। अतस्त्वं देवलोके गत्वा दैवीः प्रजाः उपावरोह प्राप्नुहि प्रजाश्च त्वामुपावरोहन्तु प्राप्नुवन्तु। अत्र उपावहरेदिति विधिं सूचयन् हृदयादिशब्दानां यथोक्तार्थं दर्शयति "ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद् यः सोममुपावहरन्त्सर्व्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्य्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्व्वाभ्य उपावहरति "(सं०६का०।४प्र०।१अ०) इति। यो हृदे त्वेति मन्त्रेण सर्व्वदेवतार्थमुपावहर्तुं जानाति स एव मुख्योऽध्वर्युरिति ब्रह्मवादिनामुक्तिः सोमराजन्निति मन्त्र उपेक्षितः। विधत्ते "पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामवरुन्धे" (सं०६का०।४प्र०।१अ०) इति। रात्रौ निद्रां कुर्व्वन्तो मनुष्या उषःकाले प्रबुध्य परस्परं वाक् प्रवचनं कुर्वन्ति

पक्षिणः शब्दं कुर्वन्ति तद्धि वाचः प्रवदनं प्रातःकालात् पूर्वं होत्रा ऽनुवक्तव्यऋक्समूहः प्रातरनुवाकः। उपाकरणं नाम होतारं प्रति प्रैषोक्तिः। अत्र सूत्रं "पुरा वाचः पुरावा वयोभ्यः प्रातर्यावभ्यो देवेभ्यो ऽनुब्रूहीति" इति। प्रवदितोः प्रवदनात्। प्रातरनुवाकस्य प्रथमामृचं विधत्ते "अपोऽग्रे ऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभिवाचं विसृजति" (मं०६का०।४प्र०।३अ०) इति। अपोऽभिलक्ष्य तत्प्रतिपादिकामृचमग्रे प्रथमं व्याहरेत्। आपो रेवतीः स्थ यथा हि वस्व इत्येतामृचमित्यर्थः। तत ऊर्ध्वं वक्तव्या ऋचो विधत्ते "सर्वाणि छन्दांꣳस्यन्वाह पशवो वै छन्दांꣳसि पशूनेवावरुन्धे" (मं०६का०।३प्र०।३अ०) इति। अत्र तत्तच्छन्दोयुक्ता ऋग्विशेषाः ग्रन्थबाहुल्यभयाद्बह्वृचब्राह्मणे स्पष्टत्वाच्च नात्रोदाह्रियन्ते। प्रातरनुवाकस्य समाप्तौ पठनीयामृचं कामनाभेदेन विकल्पितां विधत्ते "गायत्रिया तेजस्कामस्य परिदध्यात्त्रिष्टुभेन्द्रिय कामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजान्न कामस्य" (मं०६का०।३प्र०।३अ०) इति। परिदध्यात् समापयेत्। कल्पः "यत्राभिजानात्यभूदुषारुशत्पशुरिति तत् प्रचरण्या जुहोति, शृणोत्वग्निः समिधा हवं म इति" इति। अभूदुषा इत्येषा प्रातरनुवाकस्य परिधानीया तां होत्रा पठ्यमानां यदाध्वर्युर्जानाति तदा जुहुयात्। मन्त्रस्त्वेवमाम्नायते "शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषोऽनु यज्ञꣳ शृणोतु देवः सविता हवं मे"

इति। सम्यगिध्यते अनया आज्याहुत्येति समिधाहुतिः। तया समिद्धोऽग्निः मे हवं मदीयमाह्वानं शृणोतु। हे आपः गृहीष्यमाणा यूयमपि शृणुत। कीदृश्यः। धिषणा विद्योपेताः। देव्यो देवतारूपाश्च। हे ग्रावाणः अभिषवार्थमिहोपस्थिता यूयं विदुषो नु विद्वांस एव सन्तो यज्ञं शृणुत। सविता देवो मदीयाह्वानं शृणोतु। अग्न्यादिश्रवणप्रयोजनमाह "शृणोत्वग्निः समिधा हवं म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैति" (सं०६का०।४प्र०।३अ०) इति। एकधनसंज्ञकाः पन्नेजनीसंज्ञकाश्चाऽप आनेतव्याः, अतो मन्त्रेण देवताभ्यो विज्ञाप्य ता आपः प्राप्तुं गच्छति। प्रैषमन्त्रमुत्पादयति "अप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते" (सं० ६का०।४प्र०।३अ०) इति। हे होतः आनेतव्या अप उद्दिश्य प्र देवत्रा ब्रह्मणे गातुरेत्वित्यादिका ऋचः इष्य पठेत्यर्थः। लोकेऽपि इषितमभीष्टं कर्म सम्यक् क्रियते। प्रैषान्तरमुत्पादयति "मैत्रावरुणस्य चमसाध्वर्यवाद्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति" (सं०६का०।४प्र०।३अ०) इति। चमसिनामृत्विजां परिचारकाश्चमसाध्वर्यवः। तत्र मैत्रावरुणनाम्न ऋत्विजो यश्चमसाध्वर्युस्तं सम्बोध्या गच्छेति ब्रूयात्। तदनेन प्रैषेणोदकप्रवर्त्तकमित्रावरुणदेवताद्वयेन सहैवैना आपः प्राप्तुं गच्छति। कल्पः "अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय संप्रैषमाह "अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्र-

वैकधनिन एतं नेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन* वसतीव-रीभिश्च चात्वाले प्रत्युपतस्थस्वति यथा संप्रैषं ते कुर्व्वन्ति, य-त्रापस्तद्यन्यथाप्सु बर्हिः प्रास्याभिजुहोति, देवीरापो अपान्नपाद्य उर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागस्थ स्वाहा"इति। न पातयत्युदकमध्ये गूढ-तया स्थितोऽपि तदुदकं न विनाशयतीति नपात् अपान्नपा-दिति वह्निविशेषस्य संज्ञा। हे आपो देव्यो, हे वह्ने यूयं य उर्मिर्युष्मदीयस्तं देवत्रा देवेषु धत्त स्थापयत। किमर्थं। देवेभ्यः देवार्थं,अस्माभिर्देवानुदिश्य होतुमित्यर्थः। कीदृश ऊर्मिः।हविष्यः हविषे सोमरूपाय हितः। इन्द्रियावान् प्रीतः सन्निन्द्रियवृद्धि-कारी। मदिन्तमः पीयमानोऽत्यन्तहर्षकारी। कीदृशं तं। शुक्रं दीप्तिमन्तं। कीदृशेभ्यो देवेभ्यः। येषां यूयं भागभृता स्थ तेभ्यः शुक्रपेभ्यः सोमपेभ्यः इदमाज्यं युष्मभ्यं हुतमस्तु। गृहीष्यमा-णानामपां मूल्यत्वेन हविष्ट्वसम्पादनेन च इयमाहुतिरुपयुज्यत इत्याह "देवीरापो अपान्नपादित्याहाहुत्यैवैना निष्क्रीय गृ-ह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति" (सं० ६का०। ४प्र०।३अ०) इति। कल्पः "कार्षिरसीति दर्भैराहुतिमपप्ला-व्य"इति। कार्षिरस्यपापां मृध्रमिति मन्त्रपाठः। हे आज्य त्वं अप्सु हुतं सत् कार्षिः कर्षणीयमनपेतव्यमसि अपां मृध्रं युद्धा-

---

* पत्नीमुदानयोन्नेतर्होतृचमसेन इति ते०।

पलक्षितानिष्टरूपं त्वामपनयामि। *एतमर्थं दर्शयति "का-र्षिरसीत्याह शमलमेवासामपप्लावयति" (सं०६का०।४प्र०।३अ०) इति। शमलं मलिनांशं। कल्पः "समुद्रस्य वोक्षित्या उन्नय इत्यभिद्रुतानां मैत्रावरुणचमसेन गृह्णाति" इति। हे आपः समुद्रवद्युष्माकं अक्षीणत्वाय पूर्व्वैर्द्युवंसतीवरीर्गृहीत्वापि पुनरिदानीमुन्नयामि। अक्षितिं विशदयति "समुद्रस्य वो-क्षित्या उन्नय इत्याह तस्माद्द्यमानाः पीयमानाः आपो न क्षीयन्ते" (सं०६का०।४प्र०।३अ०) इति। यथा चमसेन जलं गृहीतं तथा त्रिभिः कुम्भैरेकधना गृह्णीयात् पन्नेजनीश्च गृह्णीयात्। तथा च सूत्रं "अथैकधना गृह्णाति, इन्द्राय वो जुष्टान् गृह्णामीति वा तूष्णीं वाऽथ पन्नेजनीर्गृह्णाति" इति। विधत्ते "योनिर्वै यज्ञस्य चात्वालं यज्ञा वसतीवरीर्होतृचम-सञ्च मैत्रावरुणचमसञ्च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्रजनयति" (सं०६का०।४प्र०।३अ०) इति। उत्तरवेदेर्निष्पादकतया चात्वालो यज्ञ-योनिः। देवविभक्तयज्ञावशेषत्वाद्वसतीवरीणां यज्ञत्वं। व्यान-यति व्याप्ता अधिकाः करोति। तत्प्रकारः सूत्रे दर्शितः "होतृ-चमसे वसतीवरीभ्यो निषिच्योपरि चात्वालं होतृचमसञ्च मैत्रा-वरुणचमसञ्च सꣳस्पर्श्य वसतीवरीर्व्यानयति, समन्यायन्तीत्य-भिज्ञाय होतृचमसात् मैत्रावरुणचमस आनयति, मैत्रावरुणच-

* मलोपलक्षितानिष्टरूपमिति शोध पाठः का०।

समाह्वोहवचससे" इति। प्रश्नोत्तरमन्त्रावुत्पादयति "अध्व-र्य्योऽवेरपा३ इत्याहोतेमनंनमुरुतेमाः पश्येति वावै तदाह" (सं०६का०।४प्र०।३अ०) इति। स्रुतिः प्रश्नार्था। हे अध्वर्य्यो अपः किं अवेः लब्धवानसि सोऽयं होतुः प्रश्नः। उतेमनंनमु-रित्यध्वर्य्योरुत्तरमन्त्रः लब्धवानस्मीत्येतावदेव न भवति उत अपि तु इं ताः अनन्नमुः उपसम्प्राप्ताः दूरवर्त्तित्वेऽपि सत्वमात्रेण लाभो भवति तदुपसम्प्राप्तिर्लाभादतिरिच्यते। उतेमा इति-वाक्यं मन्त्रस्य व्याख्यानं। हे होतः न केवलं मद्वचनमात्रेण विश्वसिहि किन्त्विमाः पुरोवर्त्तिनीः पश्येत्येवमेव सर्वमन्त्रेणा-ध्वर्य्युर्ब्रूते। कल्पः "अध्वर्य्योऽवेरपा३ इति होता अध्वर्य्युं पृच्छ-त्युतेमनन्नमुरिति प्रत्युक्का प्रचरणीयशेषात् क्रतुकरणं जुहोति यमग्ने पृत्सु मर्त्यमिति" इति। पाठस्तु यमग्ने पृत्सु मर्त्यमावो वाजेषु यञ्जुनाः। सयन्ता शश्वतीरिषः। हे अग्ने यं मर्त्यं पृत्सु सङ्ग्रामेषु आवः रक्षसि किञ्च वाजेष्वन्ननिमित्तं यं मर्त्यं जुनाः गच्छसि हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः। समर्त्य-स्त्वदनुग्रहेण शश्वतीरिषः नित्यान्यन्नानि धनरूपाणि यन्तानि-यंस्यति प्राप्स्यतीत्यर्थः। मन्त्रोऽयमुपचितः। अस्य च क्रतुकरणा-ख्यस्य होमस्य विषयविशेषव्यवस्थितिं विधत्ते "यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ निमार्ष्टि यद्यतिरात्रो यजुर्वदन् प्रप-द्यते यज्ञक्रतूनां व्यावृत्त्यै" (सं०६का०।४प्र०।३अ०) इति। अनुष्ठीयमानस्य कर्म्मणोऽग्निष्टोमत्वे मन्त्रेण क्रतुकरणं जुहुयात्। उक्थ्यत्वे परिधावाज्यलेपं निमृज्यात्। अतिरात्रत्वे तु मन्त्रं

पठन् हविर्धानं प्राप्नुयात्। एवं सत्यग्निष्टोमादीनामनुष्ठास्यमानानां परस्परं व्यावृत्तिरिदानीमेव अवगता "स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः" इत्युपनिषदि। "तत्क्रतुत्वात्" इति वैय्यासिकसूत्रे चोपास्तिष्वपि क्रतुशब्दप्रयोगात् तद्व्यवच्छेदार्थं यज्ञशब्दप्रयोगः।

द्रव्य यज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः॥

इत्यादौ तपः प्रभृतिष्वपि यज्ञशब्दप्रयोगात् तद्व्यवच्छेदाय क्रतुशब्दप्रयोगः। अत्र विनियोगसङ्ग्रहः।

"हृदे सोमदयात् सोमं शकटादवरोहयत्।
अणोऽग्नौ जुहुयाद्देवीरपः हुत्वाथ दर्भकैः॥
अप्सूपप्लावयेत् कार्षिः समुद्रो गृह्यते जलं।
यमग्ने क्रतुकद्धोमो मन्त्राः सप्तेह वर्णिताः"॥ इति।

अथ मीमांसा। तृतीयाध्यायस्य सप्तमपादे चिन्तितं।

"चमसाध्वर्यवो नान्यऋत्विग्भ्योऽन्येऽथवाग्रिमः।
यौगिकया संज्ञया नैवं षष्ठ्या तेभ्यो विभेदनात्"॥ इति।

ज्योतिष्टोमे श्रूयते चमसाध्वर्य्यून् वृणीत इति। ये पूर्वं त्वत्रकार्य्यानुसारेणाध्वर्य्युप्रमुखा ऋत्विज उक्ताः तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्यवः। कुतः। यौगिकसंज्ञया तद्भेदप्रतीतेः। यथा देवदत्त एव पचिक्रियायोगात् पाचको भवति तद्वदध्वर्य्युप्रमुखा एव चमसयोगाच्चमसाध्वर्यव इति चेत्। नैवं। मध्यतः कारिणां चमसाध्वर्यवो न होत्रकाणां चम-

माध्वर्यव इति षष्ठ्या भेदावभासाच्चमसाध्वर्यवः कारिणो होत्रादयो होत्रका मैत्रावरुणादयः। तस्मादृत्विग्भ्योऽन्ये। तत्रैवान्यच्चिन्तितं।

"तान् वृणीतेति बहुता नास्ति वास्ति ग्रहैक्यवत्।
नैवेति चेन्न वैषम्यादुत्पत्तौ बहुता श्रुता"॥ इति।

चमसाध्वर्यून् वृणीत इति यत् बहुत्वं श्रुतं तन्न विवक्षितं। ग्रहैकत्ववदुद्देश्यगतत्वादिति चेत्। मैवं। ग्रहवैषम्यात् ग्रहं सम्मार्ष्टि इत्येतन्न ग्रहाणामुत्पत्तिवाक्यं। चमसाध्वर्यूणां त्वेतदेवोत्पत्तिवाक्यं। ततस्तेषामुपादेयत्वात् तद्गतं बहुत्वं विवक्षितं। तत्रैवान्यच्चिन्तितं।

"नैयत्यास्त्यस्ति वा तेषां न नियामकवर्जनात्।
चमसानां दशत्वेन चमसाध्वर्यवो दश"॥ इति।

स्पष्टोऽर्थः। अथ छन्दः। प्रदणात्वमग्निरिति त्रिष्टुप्। यमग्ने पृत्सिवति गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ * ॥

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वस्त्वꣳ शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे। त्वं वातै॑रकु॒णैर्या॑सि शङ्ग॒यस्त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑। आ वो॒ राजा॑नमध्व॒रस्य॑ रु॒द्रꣳ होता॑रꣳ स॒त्य॒यजꣳ॒ रोद॑स्योः। अ॒ग्निं पु॒रा त॑नयि॒त्नोर॒चित्ता॒द्धि-

रण्यरूपमवसे कृणुध्वं। अग्निर्होता निषसादा यजी-
यानुपस्थे मातुः सुरभावु लोके। युवा कविः पुरुनिष्ठः
॥ १ ॥

ऋतावा धर्त्ता कृष्टीनामुत मध्य इद्धः। साध्वीमक-
र्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्यां।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो
अद्य। अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वी-
रुधः समञ्जन्। सद्योजज्ञानो विहीमिद्धो अख्यदा
रोदसी भानुना भात्यन्तः। त्वे वसूनि पुर्वणीक
॥ २ ॥

होतर्दोषा वस्तो रेरिरे यज्ञियासः। क्षामेव विश्वा
भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके। तुभ्यं
ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक्। अग्ने कामाय
येमिरे। अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ र-
यिवः सुवीरं। अश्याम वाजमभि वा जयन्तो श्याम द्यु-
म्नमजरा जरन्ते। श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमाभरा
॥ ३ ॥

वसो पुरुस्पृहꣳ रयिं। सश्वितानस्तन्यतू रोचन-
स्था अजरेभिर्नानदद्भिर्यविष्ठः। यः पावकः पुरुतमः

पुरूणि पृथून्यग्निरनुयाति भर्वन् । आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः। पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते। आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्र-मभि ॥ ४ ॥

रक्षतादिमं। तस्मै ते प्रतिहर्य ते जातवेदो विचर्षणे। अग्ने जनामि सुष्टुतिं। दिवस्परि प्रथमं जज्ञे अग्निर-स्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्र-मिन्धान एनं जरते स्वाधीः। शुचिः पावक वन्द्योऽग्ने बृहद्विरोचसे। त्वं घृतेभिराहुतः। दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभ-वद्वयोभिः ॥ ५ ॥

यदेनं द्यौरजनयत् सुरेताः। आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके। अग्निः शर्द्धम-नवद्यं युवानꣳ स्वाधियं जनयत् सूदयच्च। स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः। अग्ने रायो ऽन्तमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः। अग्ने स-हन्तमाभर द्युम्नस्य प्रासहा रयिं। विश्वायः ॥ ६ ॥

चर्षणीरभ्यासा वाजेषु सासहत्। तमग्ने पृतनास-

हꣳ रयिꣳ सहस्व आभर। त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः। उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नये। वद्मा हि सूनो अस्य द्मसद्वाचक्रे अग्निर्जनुषा ज्मान्नं। स त्वन्न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः। अग्न आयूꣳषि॥ ॥ ७ ॥

पवस आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनां। अग्ने पवस्व स्वपा। अस्मे वर्चः सुवीर्यं। दधत् पोषꣳ रयिं मयि। अग्ने पावक रोचिषा मन्द्रया देवजिह्वया। आ देवान् वक्षि यक्षि च। स नः पावक दीदिवोऽग्ने देवाꣳ इहावह। उप यज्ञꣳ हविश्च नः। अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुचीरोचत आहुतः। उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतीꣳष्यर्चयः॥ ८ ॥

पुरुनिष्ठः पुर्वणीक भराभि वयोभिर्य आयूꣳषि विप्रः शुचिश्चतुर्दश च॥ १४॥

देवस्य रक्षो हणो विभूस्त्वꣳ सोमात्यन्यान गां पृथिव्या इषे त्वाददे वाक्ते सन्ते समुद्रꣳ हविष्मतीर्हृद त्वमग्ने रुद्रश्चतुर्दश॥ १४॥

देवस्य गमध्यै हविष्मतीः पवस एकचिंशत् ॥ ३१ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ ० ॥ हरिः ॐ ॥

समाप्तश्चायं तृतीयप्रपाठकः ॥ ० ॥

त्रयोदशेऽनुवाके हविर्धानशकटादधिषवणफलकयोरुपरि सोमोऽवरोहितः। अथाभिषवो वक्तव्यः। तथाप्यध्यापकसम्प्रदायेन प्रपाठकसमाप्तिरूपत्वाच्चतुर्दशेऽनुवाके काम्ययाज्याः क्रमप्राप्ता अभिधीयन्ते। तत्र काम्येष्टिकाण्डे रक्षोघ्नेष्ट्यूर्ध्वं इष्ट्यन्तरं विधत्ते "अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्व्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमावृश्चति ताजगार्तिमार्च्छति"(सं०।२ का०।२ प्र०।२ अ०)इति। रुद्रवते घोरतनूयुक्ताय। अभिचरन् शत्रुं मारयन् तस्मै रुद्रवते अग्नये एनं शत्रुं आवृश्चति समन्ताच्छित्वा प्रयच्छति ताजक् तदानीमेव। तत्र पुरोऽनुवाक्यामाह "त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्द्धो मारुतं पृक्ष ईशिषे। त्वं वातैररुणैर्यासि शं गयस्त्वं पूषा विधतः पासि नुत्मना" इति। हे अग्ने त्वं रुद्रो घोरतनूयुक्तः। असुरः शत्रूणां निरसिता। दिवो द्युलोकस्य मह उत्सवरूपः हविर्वहनेनोत्सवकारित्वात्। त्वं मारुतं शर्द्धो मरुतां सम्बन्धिबलं बलवत्त्वेन प्रसिद्धानां मरुद्गणानामपि त्वदनुग्रहेणैव बलं भवति। अतः पृक्ष ईशिषे मरुद्भिः सम्पृक्तः तदीयं सैन्यं निय-

मम्मे। किञ्च। त्वं शं गयः सुखं प्राप्तो वायुवेगैररुणवर्णैरश्वैर्यासि। किञ्च पोषकः। त्वं नुत्मना स्वयमेव पासि। कान्। विधतः हविषा परिचर्यां विदधतो यजमानान्। अथ याज्यामाह "आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः। अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वं" इति। हे ऋत्विग्यजमानाः वो युष्माकमवमे रक्षणाय अग्निं आकृणुध्वं वशीकुरुत। कदा। तनयित्नोरचित्तात् न विद्यते चित्तं यस्मिन् मरणे तदचित्तं शत्रुणा विस्तारितात् भवदीयमरणात् पूर्व्वमेव। कीदृशमग्निं। अध्वरस्य राजानं यज्ञस्वामिनं। रुद्रं शत्रून् प्रति क्रूरं। होतारं फलदानाय भक्तानामाह्वातारं। रोदस्योः सत्ययजं द्युलोके भूलोके च सत्यमवश्यम्भाविफलं यजति ददाति सत्ययजः तं। हिरण्यरूपं तत्सदृशं फलं। इष्ट्यन्तरं विधत्ते "अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद् यस्य गावो वा पुरुषा वा प्रमीयेरन् यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत्सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्यै" (सं०२का०।२प्र०।२अ०) इति। सुरभिमते भेषज्यातनूयुक्ताय। यस्य यजमानस्य गावो वा भृत्या वा दैविकेन रोगबाहुल्येन बहवो म्रियेरन् स्वयं वा कदाचिदपमृत्योर्भीतोऽभवेत् तादृशो निर्वपेत् पूतीगन्धस्य शवगन्धस्य निवृत्तये सुगन्धयुक्ताय कुर्य्यात्। तत्र पुरोऽनुवाक्या "अग्निर्होता निषसादा यजीयानुपस्थे मातुः सुरभावुलोके। युवा कविः पुरुनिष्ठ ऋतावा धर्त्ता कृष्टीनामुत मध्य इद्धः" इति। अयमग्निर्मातुरुपस्थे

वेदे: समीपवर्त्तिनि सुरभावुलोके सुरभिगन्धयुक्त एवाहवनीयस्थाने निषसाद उपविष्टः। कीदृशोऽग्निः। होता देवानामाह्वाता। यजीयान् मानुषाद्धोतुरतिशयेन यष्टा। युवा नित्यं तरुणः। कविर्मेधावी। पुरुनिष्ठः पुरुषु गार्हपत्यादिस्थानेषु बहुषु स्थितः। ऋतावा सत्यवान्। कृष्टीनां धर्त्ता मनुष्याणां पोषकः। अपि च मध्ये मनुष्याणामुदरे इद्धः जाठराग्निरूपेण दीप्तः। अथ याज्या "साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम्। स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य" इति। अयमग्निः अद्य नो देववीतिं अस्माभिर्देवेभ्यो दत्तां भक्ष्यां पुरोडाशाहुतिं साध्वीमकः स्वादुमकरोत्। अतो यज्ञस्य जिह्वां जिह्वास्थानीयां गुह्यां गोप्यामग्निदेवतां अविदाम वयमद्य लब्धवन्तः। सुरभिः पुरोडाशाज्यादिसुगन्धोपेतः सोऽग्निरायुर्वसानः अस्मदीयमायुराच्छादयन् गोपायन्नागात् आगच्छतु। अद्य नोऽस्मदीयां देवहूतिं भद्रामकः देवार्थं होमं यथाशास्त्रं करोतु। इत्यन्तरं विधत्ते "अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् सङ्ग्रामे संयत्ते भागधेयेनैवैनꣳ शमयित्वा परानभिनिर्दिशति यमवरेषां विध्यन्ति जीवति स यं परेषां प्रमीयते जयति तꣳ सङ्ग्रामं" (सं०२का०।२प्र०।२अ०) इति। क्षामवते क्षुधायुक्ताय। युद्धे प्रत्यासन्ने सति जयार्थी निर्वपेत्। स्वदत्तेनाग्निभागेन स्वविषयमग्निं शान्तं कृत्वा परान् शत्रून् वक्तराभिमुख्येन निर्दिशति हन्तुं प्रदर्शयति। तथा सत्यवरेषां स्वसैन्यगतानां मध्ये यं पुरुषं शत्रवो विध्यन्ति सः जीवति।

परेषां शत्रुसैन्यगतानां मध्ये यं पुरुषं इतरे विध्यन्ति सः प्रमीयते अतो यजमानो जयति। यथा जयार्थिन एषेष्टिः तथा वहुबन्धुमरणनिवारणार्थिनोऽप्येतामिष्टिं विधत्ते "अभि वा एष एतानुच्यति येषां पूर्व्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां पुरायुषो परः प्रमीयते" (सं०२का०।२प्र०।२अ०) इति। पूर्व्वापरा ज्येष्ठाः कनिष्ठाश्च। अन्वञ्चो विच्छेदरहिताः। येषां बन्धूनां मध्ये बहवो विच्छेदमन्तरेण म्रियन्ते एतानभिलक्ष्य एषः क्षामवानग्निरुच्यति समवैति। कुतः। पुरुषाहुतेरेव तत्प्रियत्वात् पुरोडाशेनाग्निः शाम्यति। तत एषां बन्धूनां मध्ये ज्येष्ठे जीवति सति अपरः कनिष्ठः आयुःसम्पूर्त्तेः पूर्व्वमपमृत्युना न म्रियते। गृहदाहादिनिमित्तीकृत्यापि तामेवेष्टिं विधत्ते "अभि वा एष एतस्य गृहानुच्यति यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद् भागधेयेनैवैनꣳ शमयति नास्यापरं गृहान् दहति" (सं०२का०।२प्र०।२अ०) इति। स्पष्टोऽर्थः। अपरं यथा भवति तथा न दहति पुनर्न दहतीत्यर्थः। अस्यां त्रिविधायां क्षामवतेष्टौ पुरोऽनुवाक्यामाह "अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः" इति। अयमग्निरक्रन्दत्। अस्मदनिष्टनिवारणार्थं गर्जतु। किमिव। स्तनयन्निव। द्यौः यथा द्युलोकस्थो मेघो गर्जन् सस्यशोषभीतिं निवारयति तद्वत्। किं कुर्व्वन्। क्षाम दाहकमस्म-

द्विरद्धं रेरिहत् लेलिहानः। वीरुधः समञ्जन् पुष्पलतावदस्मद-नुकूलानि सम्यगभिव्यञ्जयन्। हि यस्मात् जज्ञान उत्पद्यमानः सद्यः ईं इदानीमेव इद्धो दीप्तः व्यख्यत् विविधं जगत् प्रख्याप-यति। रोदसी द्यावापृथिव्योरन्तर्भानुना रश्मिना स्वयमाभाति समन्तात् प्रकाशते। अथ याज्या "त्वे वसूनि पुर्व्वणीक होतर्दोषा-वस्तोरेरिरे यज्ञियासः। क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौ-भगानि दधिरे पावकः" इति। हे पुर्व्वणीक अत्यन्तबहुल होतः देवानामाह्वातः दोषा रात्रौ वस्तो दिवा च यज्ञियासो यज्ञा-र्हाणि वसूनि हवींषि एरिरे आगच्छन्ति। त्वदनुग्रहात् पूर्व्वं क्षा-मेव दग्धपटादिकमिव विश्वा भुवनानि निःसाराणि भूत्वा पा-वके त्वयि अनुगृह्णाति सति पश्चात् सौभगानि सन्दधिरे सौभाग्यं प्राप्नुवन् तादृशस्त्वं अस्माननुगृहाणेत्यर्थः। इष्ट्यन्तरं विधत्ते "अ-ग्नये कामाय पुरोडाशमष्टाकपालं निर्व्वपेद् यं कामो नोपनमेद-ग्निमेव कामꣳ स्वेन भागधेयेनोपधावति स एवैनं कामेन समर्ध-यत्युपैनं कामो नमति"(सं० २का०।२प्र०।३अ०) इति। कामाय कामप्रदाय कामितोऽर्थो यं यजमानं न प्राप्नुयात् स निर्व-पेत्। तत्र पुरोऽनुवाक्या "तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षि-तयः पृथक्। अग्ने कामाय येमिरे"। हे अङ्गिरस्तम अतिशयेन अङ्गसारोपेत अग्ने सुक्षितयो वेदिरूपशोभनभूमियुक्ता विश्वाः सर्वास्ताः प्रजाः पृथक्कामयमाना विविधकामितार्थसिद्धिप्रदाय तुभ्यं येमिरे नियमं स्वीकृतवन्तः। अथ याज्या "अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ रयिवः सुवीरं। अश्याम वाज-

मभिवाजयन्तो ऽश्याम द्युम्नमजराजरन्ते” इति। हे अग्ने तवोती त्वदीयरक्षया तं काममभीष्टफलं अश्याम व्याप्नुयाम। किञ्च। हे रयिवः हे धनवन् सुवीरं शोभनपुत्रपौत्राद्युपेतं रयिं धनं अश्याम। किञ्च। वाजयन्तोऽन्नमिच्छन्तो वयं वाजमन्नमभि अभितोऽश्याम। किञ्च। हे अजर तव प्रसादादजरमक्षयं द्युम्नं यशोऽश्याम। इष्ट्यन्तरं विधत्ते “अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वाग्निमेव यविष्ठꣳ स्वेन भागधेयेनोपधावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य युवते विपाप्मना भ्रातृव्येण जयते” (सं०२का०।२प्र०।३अ०) इति। यविष्ठायातिशयेन वियोगकारिणे युवते वियोजयति। यजमानः पापिना वैरिणा वियुक्तो जयति। एतामेवेष्टिं पर प्रयुक्ताभिचारनिवारणाय विधत्ते “अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्य्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोपधावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन् स्तृणुते” (सं०२का०।२प्र०।३अ०) इति। यवयति वियोजयति। अभिचरन् वैरी एनं इष्टिकारिणं न स्तृणुते हन्तुं न शक्नोति। एतस्यां द्विविधायामिष्टौ पुरोऽनुवाक्यामाह “श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमाभर। वसो पुरुस्पृहꣳ रयिं” इति। हे अग्ने रयिमाभर धनमाहर। यविष्ठ अतिशयेन वियोगकारिन्। भारत ऋत्विग्भिर्भरणीय। वसो आहुतिनिवासभूत। कीदृशं रयिं। श्रेष्ठं प्रशस्ततरं। द्युमन्तं दीप्तिमन्तं। पुरुस्पृहं पुरुभिर्बहुभिः स्पृहणीयं। मणिमुक्तादिरूपं। अथ याज्या “स श्वितान-

स्तन्यतु रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः। यः पावकः पुरु-तमः पुरूणि पृथून्यग्निरनुयाति भर्वन्" इति। योऽग्निः पावकः शोधयिता। पुरुतम आहवनीयगार्हपत्यादिनामभिर्यविष्ठादि-विशेषणैश्चात्यन्तबहुविधः। पुरूणि बहूनि। पृथूनि विस्तृतानि पुरोडाशादिहवींषि भर्वन् भक्षयन्ननुयाति यजमानगृहमनुदिनं गच्छति। सोऽग्निर्वक्ष्यमाणगुणोपेतः। शिश्वितानो दीप्यमानः। तन्यतुः फलानां विस्तारयिता। रोचनस्था दीप्तिमत्सु देवय-जनेष्ववस्थितः। अजरेभिर्जरारहितैः। नानदद्भिः स्तुतिं कुर्वाणै-र्देवैः संयुतः। यविष्ठः अतिशयेन वैरिवियोक्ता। इष्ट्यन्तरं विधत्ते "अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद् यः कामयेत सर्व्वमायुरियामित्यग्निमेवायुष्मन्तꣳ स्वेन भागधेयेनो-पधावति स एवास्मिन्नायुर्दधाति सर्व्वमायुरेति" (सं०२का०। २प्र०।३अ०) इति। आयुष्मते आयुःप्रदाय। तत्र पुरोऽनु-वाक्यामाह "आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः। पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते" इति। हे यजमान ते तुभ्यं वरेण्यः श्रेष्ठोऽयमग्निः विश्वत आयुर्दधत् सम्पूर्णमायुर्दधातु। अपमृत्युना गृहीतोऽपि ते प्राणः पुनरस्यानुग्रहेण आयति त्वद्देहं समागच्छतु। ते तव यक्ष्मं व्याधिं परासुवामि विनाशयामि। अथ याज्या "आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयो-निरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं" इति। हे अग्ने त्वमायुर्दा एधि यजमानस्यायुःप्रदो भव। कीदृ-शस्त्वं। हविषो जुषाणः पुरोडाशं सेवमानः। घृतप्रतीको घृता-

पक्कमः आघारप्रयाजादीनां घृतेन हूयमानत्वात्। घृतयोनिः अवसानेऽप्यनूयाजादौ घृतमेव योनिः जन्म उत्पत्तिकारणं यस्याऽसौ घृतयोनिः तादृशस्त्वं। मधु स्वादुतमं। चारु शोधितत्वेन निर्मलं। गव्यं घृतं पीत्वा पिता पुत्रमिव इमं यजमानमभितो रक्ष। इष्ट्यन्तरं विधत्ते "अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद् भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येव" (मं०२का०।२प्र०।२अ०) इति। जातवेदसे उत्पन्नधनाय। भवत्येव भूतिं प्राप्नोत्येव। तत्र पुरोऽनुवाक्या "तस्मै ते प्रतिहर्य्यते जातवेदो विचर्षणे। अग्ने जनामि सुष्टुतिं" इति। विविधाश्चर्षणयो मनुष्या यजमानादयो यस्याऽसौ विचर्षणिः। हे विचर्षणे जातवेदाग्ने प्रतिहर्य्यते प्रतिदिनं यजमानगृहं गच्छते तस्मै ते शोभनां स्तुतिं जनामि जनयामि। अथ याज्या "दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः" इति। अग्निः प्रथमं दिवस्परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः। अस्मत्परि अस्मदीयमनुष्यलोकस्योपरि जातवेदा द्वितीयं जज्ञे प्रसिद्धमग्निरूपेण द्वितीयं जन्म प्राप्तवान्। अप्सु समुद्रे तृतीयं जज्ञे बडवानलरूपेण उत्पन्नः। अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्याऽसौ नृमणाः। एनमीदृशमग्निं इन्धानः पुरोडाशादिना दीपयन्। स्वाधीः स्वायत्तचित्तः। जरते जरापर्य्यन्तं परिचरतीत्यर्थः। इष्ट्यन्तरं विधत्ते "अग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद् रुक्कामोऽग्नि-

मेव रुक्मन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् रुचं दधाति रोचत एव" (सं०२का०।२प्र०।३अ०) इति। रुक्मते कान्तिमते। रोचते कान्तिमान् भवति। तत्र पुरोऽनुवाक्या "शुचिः पावक वन्द्योऽग्ने बृहद्विरोचसे। त्वं घृतेऽभिराहुतः" इति। हे पावक शोधयितरग्ने शुचिः वन्द्यस्त्वं घृतप्रभृतिभिर्हव्यैः समन्ताद्हुतः सन् बृहद्विरोचसे। अथ याज्या "दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः" इति। दृशानो दर्शनीयरूपः। रुक्मः सुवर्णसदृशोऽग्निः। उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते। किं कुर्वन्। दुर्मर्षं इतरैरतिरस्कार्य्यं आयुः जीवनं श्रिये श्रयितुं रुचानो वाञ्छन्। तथाविधोऽग्निः वयोभिरन्नैर्हविर्भिरमृतोऽभवत् यत् यस्मादेनमग्निं द्यौर्द्युलोकवासी देवगणः सुरेताः सन्नजनयत् तस्मादस्यामृतत्वं युक्तं। इष्ट्यन्तरं विधत्ते "अग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत् तेजस्कामोऽग्निमेव तेजस्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् तेजो दधाति तेजस्व्येव भवति" (सं०२का०।२प्र०।३अ०) इति। तेजस्वते प्रभावते नियमनसामर्थ्यवते वा। तत्र पुरोऽनुवाक्या "आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके। अग्निः शर्धमनवद्यं युवानꣳ स्वाधियं जनयत् सूदयच्च" इति। यत् तेजः इषे अभीष्टसिद्धये नृपतिं यजमानपालकमग्निं आसमन्तादानट् व्याप्नोत्, यदपि शुचि रेतः शुद्धं वीजं मातापितृभ्यां निषिक्तं तेन तेजसा तेन च वीजेन द्यौः द्युलोकस्थोऽग्निः।

अभीके प्रत्यासन्नकाले शर्द्धादिविशेषणोपेतं पुरुषं जनयद्दत्वा-दयति। सूदयञ्च विरोधिपापं नाशयत्यपि। शर्धं बलवन्तं। अनवद्यं दोषरहितं। युवानं तरुणं। स्वाधियं स्वायत्तचित्तं। अतो यजमानाय तेजो दातुमग्निः शक्नोति। अथ याज्यामाह "स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः। अग्ने रायोऽनृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः" इति। सः यज-मानः त्वोतः त्वया रक्षितः। केन साधनेन। तेजीयसा अत्यन्त-तेजोयुक्तेन मनसा। उत किञ्च। किञ्च हे अग्ने स्वपत्यस्य शोभन-पुत्रपौत्रादियुक्तस्य शिक्षोः शक्तुमिच्छतः नृतमस्य मनुष्यतमस्य मनुष्येषु श्रेष्ठस्य यजमानस्य रायः शिक्ष धनानि देहि। ते प्रभूतौ त्वदनुग्रहेण प्रभुत्वे सति वयं वस्वः वसुमन्तमाः सुष्टुतयश्च शोभनस्तुतियुक्ता बहुयागानुष्ठानेन स्तोत्रशस्त्रैः प्रभूता भूया-स्म। इष्ट्यन्तरं विधत्ते "अग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत् सीक्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोपधावति तेनैव सहते यꣳ सीक्षते" (सं०२का०।२प्र०।३अ०) इति। साहन्त्याय सहिष्णवे वैरिणामभिभवित्रे। सीक्षमाणः सोढुमभि-भवितुमिच्छुः। यं वैरिणं सीक्षते तं तेनानुगृहीतोऽभिभवति। तत्र पुरोऽनुवाक्या "अग्ने सहन्तमाभर द्युम्नस्य प्रासहा रयिं। विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत्" इति। हे अग्ने द्युम्न-स्यास्मदीयस्य यशसः सहन्तं अभिभवितारं वैरिणं प्रासहा प्रसभं आभर अस्मद्वशे समानय। रयिं तदीयं धनञ्चानय। यो भवान् चर्षणी मनुष्यसेना विश्वा अस्मात्प्रतिपक्षभूताः

सर्वा अभ्यसामहत् अभिभवेत्। किं निमित्तं। वाजेष्वस्मदीयेष्वन्नेषु निमित्तभूतेषु। केन साधनेन। आसा त्वत्सन्निधानेन पराभिभवाय त्वत्सन्निध्यतिरिक्तप्रयत्नो नापेक्षित इत्यर्थः। अथ याज्या "त्वमग्ने पृतना सहं रयिं सहस्व आभर। त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः" इति। हे अग्ने तं शत्रुं सहस्व अभिभवस्व। पृतना सहं परकीयसेनाभिभवक्षमं रयिं धनं आभर आहर। हि यस्मात् त्वं सत्यः परमार्थभूतो बाधरहितः। अद्भुतः आश्चर्य्यचरित्रः। तस्माद्गोमतो बहुगोयुक्तस्य वाजस्यान्नस्य दाता त्वमेव। इष्ट्यन्तरं विधत्ते "अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद् यः कामयेतान्नवान्त्स्यामित्यग्निमेवान्नवन्तं स्वेन भागधेयेनोपधावति स एवैनमन्नवन्तं करोत्यन्नवानेव भवति" (सं० २का०।२प्र०।४अ०) इति। अन्नवते बह्वन्नयुक्ताय। तत्र पुरोऽनुवाक्या "उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नये" इति। अग्नये स्तोमैस्तोत्रैर्विधेम परिचर्य्यां कुर्मो। कीदृशाय। उक्षान्नाय वशान्नाय उक्षा वृषभः वशा वन्ध्या तत्पशुद्वयं क्वचिद्यागे हविष्ट्वेन श्रूयते "यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं वशामालभेतैन्द्रमुक्षाणं" इति। यद्यप्यत्र देवता अन्या तथापि हविरग्नावेव हूयत इति अग्निरुक्षान्नो वशान्नश्च। एतदन्नान्तरस्याप्युपलक्षणं। सोमयुक्तानि पृष्ठ्यस्तोत्राणि यस्यासौ सोमपृष्ठः। अनेकस्तोत्रसत्त्वतद्देवतासंयुक्तः सोमोऽप्यस्यान्नमित्यर्थः। वेधसे अन्नस्य विधात्रे। अथ याज्या "वद्मा हि सूनो अस्य सद्मसद्वा चक्रे अग्निर्जनुषा ज्मान्नं। स त्वन्न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः"

इति। हे सूनो पुत्रवदभिमतकारिन्नग्ने त्वं वय्यासि वदत्यन-येति वय्या वाक् तदभिमानिदेवत्वेन तद्रूपोऽसि। अस्मिन्नर्थे श्रुत्यन्तरप्रसिद्धिद्योतनाय हिशब्दः। "अग्निर्वाग् भूत्वा मुखं प्रा-विशत्" इति श्रुत्यन्तरं। सोऽग्निरस्मदर्थमन्नं अज्म गृहं चक्रे। त-न्नाम सुपाठात् विवाहाग्निर्जायमान एव गृहाश्रमं कारयति। कीदृशोऽग्निः। अद्मसद्वा अद्यत इत्यद्मान्नं तस्मिन्नद्मनि सीद-तीति अद्मसद्वा। भुक्तमन्नं जरयितुं जठराग्निरूपेण अत्र सी-दति। केन व्यापारेणान्नं अज्म चक्रे। जनुषा जन्ममात्रेण न तु व्यापारान्तरेण। न हि सङ्कल्पसिद्धस्य व्यापारापेक्षाऽस्ति। हे ऊर्जसने रसप्रद त्वं नोऽस्मभ्यं ऊर्जं रसं धा धेहि। राजेव जेः राजा यथा जयति तद्वज्जय। वृकवर्द्धिंसको वृकः अवृके हिं-सादोषरहिते यजमाने त्वमनुग्रहीतुं अन्तः क्षेपि निवससि। इष्ट्यन्तरं विधत्ते "अग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद् यः कामयेतान्नादः स्यामित्यग्निमेवान्नादꣳ स्वेन भागधेयेनो-पधावति स एवैनमन्नादं करोत्यन्नाद एव भवत्यग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद् यः कामयेतान्नपतिः स्यामित्यग्नि-मेवान्नपतिꣳ स्वेन भागधेयेनोपधावति स एवैनमन्नपतिं करो-त्यन्नपतिरेव भवति (सं०२का०।२प्र०।४अ०) इति। अन्नम-त्तीत्यन्नादः। तीव्रदीपनयुक्तः अन्नपतिः बह्वन्नस्वामी। अन-योरपि इष्ट्योरन्नमात्रलिङ्गसाधारण्यात् एतदेव याज्या पुरो-ऽनुवाक्या युगलं द्रष्टव्यं। यद्वा शाखान्तरेष्वन्नादलिङ्गकं अ-न्नपतिलिङ्गकञ्चान्वेषणीयं। इष्ट्यन्तरं हविस्त्रयोपेतं विधत्ते

"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचय आयुरेवास्मिन् तेन दधात्युत यदीतासुर्भवति जीवत्येव" (सं०२का०।२प्र०।४अ०) इति। पवमानाय पापानां शोधयित्रे। पावकाय पापानां शुद्धिहेतवे। शुचये औज्ज्वल्यहेतवे। द्वितीयतृतीयवाक्ययोरपि पुरोडाशमष्टाकपालं निर्वपेदित्यनुवर्तते। ज्योगामयावी दीर्घरोगयुक्तः। उत अपि च यद्यपि इतासुर्गतासुर्भवेत् तथापि जीवत्येव, तत्र नीरोगो भवतीति किमु वक्तव्यं। पुनरप्येतामेवेष्टिं फलान्तराय विधत्ते "एतामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधाति उत यद्यन्धो भवति प्रैव पश्यति" (सं०२का०।२प्र०। ४अ०) इति। तत्र फलभेदेन द्विविधायामस्यामिष्टौ प्रथमहविषः पुरोऽनुवाक्या "अग्न आयूꣳषि पवस आसुवोर्जमिषं चनः। आरे बाधस्व दुच्छुनां" इति। हे अग्ने आयूंष्यस्मदीयजीवनानि पवसे यथा वर्धते तथा शोधयसे। ऊर्जं चीरादिरसं इषमन्नञ्च नोऽस्माकमासुव आभिमुख्येन प्रेरय। दुच्छुनामुपद्रवं आरे दूरे नीत्वा बाधस्व विनाशय। अथ याज्या "अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं। दधत् पोषꣳ रयिं मयि" इति। हे अग्ने शोभनमपः कर्म यस्यासौ स्वपाः तादृशस्त्वं। अस्मे

अस्मदीयं वर्चो ब्रह्मवर्चसं सुवीर्यं शोभनं सामर्थ्यञ्च पवस्व शोधयस्व वर्धयेत्यर्थः। पुष्टिं रयिं धनञ्च मयि दधत् स्थापय। द्वितीयहविषः पुरोऽनुवाक्या "अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान् वक्षि यक्षि च" इति। हे अग्ने पावक शोधक देव द्योतनात्मक रोचिषा दीप्तिमत्या मन्द्रया स्निग्धया जिह्वया वाचा देवान् वक्षि यक्षि आवह यज च। अथ याज्या "स नः पावक दीदिवो ऽग्ने देवाꣳ इहावह। उप यज्ञꣳ हविश्च नः" इति। हे पावक शोधक दीदिवो दीप्यमानाग्ने नोऽस्मदर्थं देवानिह कर्मणि आवह। अस्माकमिमं यज्ञं हविश्च उप देवसमीपे प्रापय। तृतीयहविषः पुरोऽनुवाक्या "अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुची रोचत आहुतः" इति। अयमग्निः प्रथमं तावच्छुचिव्रततमः स्वत एव शुचिव्रततमः अतिशयेन शुद्धं व्रतमाचरणं दाहपाकप्रकाशरूपं यस्यासौ तादृशः। तत ऊर्ध्वं विप्राभिमानित्वादपि शुचिः। ततो ऽप्यूर्ध्वं विद्वदभिमानित्वेन शुचिः। ततोऽप्यूर्ध्वमाभिमुख्येन हुतः शुचिर्दीप्तिमान् रोचते शोभते। अथ याज्या "उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतीꣳष्यर्चयः" इति। हे अग्ने शुचयः शुद्धास्तव शुक्रा रश्मयो भ्राजन्तः प्रकाशमानाः उदीरते उद्गच्छन्ति। तथार्चयः पूजकाः ज्योतींषि भासकानि देवतारूपाणि प्राप्नुवन्ति। अत्र विनियोगसङ्ग्रहः।

"त्वं याज्या रुद्रवद्यागे ह्यग्निः सुरभिमंयुते।

अन्नं चामवते* तुभ्यं कामिनि श्रेष्ठमित्यमी ॥
यविष्ठयुत आयुष्ट आयुष्मति तथोपरि ।
जातवेदयुते तस्मै शुची रुक्म युते तथा ॥
आयत्तेजोयुते ह्यग्नेः साहन्त्यगुणसंयुते ।
उचान्नसंयुते ह्यग्ने वपमानयुते तथा ॥
अग्ने पावकवत्यग्निः शुचावष्टौ च विंशतिः ।'' इति ।

अत्र मीमांसा नास्ति । अथ छन्दः । त्वमग्ने रुद्र इत्यादयः षट् । अश्यामतं, सश्चितान, आयुर्दा अग्ने, दिवस्परि, दृशानो रुक्म, आयदिषे, सतेजीयसा, वस्माहि सूनो इति च त्रिष्टुभः । तुभ्यं ता, श्रेष्ठं यविष्ठ, तस्मै ते, शुचिः पावकोचान्नाय्येत्येता, अग्न आयूंषि, इत्यादयश्च षट् गायत्र्यः । आयुष्टेऽग्ने सहन्तं, त्वमग्ने पृतना सहमित्येता अनुष्टुभः ।

इति वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्दशोऽनुवाकः ॥ * ॥

"वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः'' ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरश्रीवीरबुक्कमाहाराजस्याज्ञापरिपालकेन माधवाचार्य्येण विरचिते वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठकः सम्पूर्णः ॥ ० ॥

---

* युजे इति का० ।

श्रीवेदव्यासाय नमः।

# अथ तैत्तिरीयसंहिताभाष्ये

## प्रथमकाण्डे चतुर्थप्रपाठकः।

हरिः ॐ॥

आददे ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमिन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावते श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकं॥ १॥

सोमः पिबतु यत् ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचो धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टं प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निष्पर। यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ २॥

युष्माकꣳ स्वरयत्ते नव च ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चर्थतुप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

श्रीवेदव्यासाय नमः ।

यस्य निश्वसितं वेदा यो देवेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

तृतीयप्रपाठके प्राधान्येनाग्नीषोमीयपशुः प्रतिपादितः । तत ऊर्ध्वं वसतीवरीग्रहणं चोक्तं । तावता सुत्यादिवसात् पूर्व्वदिवसेषु यत् कर्त्तव्यं तत् समाप्तं । तत उपरितनेनानुवाकेन सुत्यादिवसकर्त्तव्यप्रारम्भाय सोमोपावहरणमुक्तं । अथ चतुर्थप्रपाठके सुत्यादिने कर्त्तव्या ग्रहाः प्राधान्येन प्रतिपाद्यन्ते । तत्र अनुवाकार्था विनियोगसङ्ग्रहे दर्शिताः ।

"ग्रहप्रश्नेऽनुवाकास्तु चत्वारिंशदिहोदिताः ।
सोमाभिषव एकस्मिन् पञ्च त्रिंशत्तु तद्ग्रहः ॥
दाक्षिणानि समिष्टाख्ययजूंष्यवभृथस्तथा ।
काम्ययाज्या इति प्रोक्ता अर्था अत्रानुवाकगाः"॥ इति ।

प्रथमानुवाके पात्रेषु रसग्रहणाय पूर्व्वमुपावहृतस्य सोमस्याभिषवो विधीयते । कल्पः "अथैतेषां ग्राव्णां यः सुतन्तुरिव तमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादाय अभिमन्त्रयते, ग्रावास्यध्वरकृद्दे-

वेभ्यो गभीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमिति" आदद इत्याम्नातो मन्त्रो देवस्य त्वेत्यनेन पूरितः। हे ग्रावन् अभिषवसाधन त्वं यज्ञनिष्पादको दृढः पाषाणोऽसि तत इमं यज्ञं देवेभ्यः देवार्थं गभीरं गहनं कुरु। उत्कृष्टेन वज्रसदृशेन त्वयाऽहं सोममीदृशं करोमि। कीदृशं। सुषुतं सम्यगभिषुतं। मधुमन्तं स्वादुत्वोपेतं। पयस्वन्तं क्षीरवत् रसोपेतं। वृष्टिवनिं आहुतिसूर्यद्वारा वृष्टिप्रदं। तथा च स्मर्य्यते।

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"॥ इति।

इन्द्रार्थमेव सोमं करोमि। विधत्ते "देवस्य त्वा सवितुः प्रसव इति ग्रावाणमादत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्य्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै" (सं०६का०।४प्र०।४अ०) इति। ग्रावासीति मन्त्र उपेक्षितः। कल्पः "अथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपांशुसवनमभिमिमीते, इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावते" इति। हे सोम त्वामिन्द्रार्थं मिमे। कीदृशायेन्द्राय। वृत्रघ्ने मेघविदारयित्रे। वृत्रतुरे वृत्रासुरघातिने। अभिमातिघ्ने पापघातिने। आदित्यार्थं तृतीयसवने गृह्यमाणत्वादादित्यवते। प्रातःसवने विश्वान् देवानुद्दिश्य गृह्यमाणत्वाद्विश्वदेव्यावते। विधत्ते "प्रश्वो वै सोमो व्यान उपाꣳशुसवनो यदुपाꣳशुसवनमभि-

मिमीते व्यानमेव पशुषु दधाति" (सं०६का०।४प्र०।४अ०) इति। पशुप्राप्तिहेतुत्वात् सोमस्य पशुत्वं। "प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनः" इति रूपकं वक्ष्यति। अतोऽस्य व्यानत्वं। उपांशुनामकग्रहार्थं सोमः सूयते येन पाषाणेन स उपांशुसवनः तमभिलक्ष्य सोमो मातव्यः। सर्वमन्त्रेष्विन्द्रशब्दप्रयोगस्य तात्पर्य्यमाह "इन्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम आह्रियते" (सं०६का०।४प्र०।४अ०) इति। सौमिकदेवेष्विन्द्रस्य प्राधान्यं इन्द्रपीतस्येत्यादि मन्त्रस्य च प्रसिद्धिं हिशब्दो द्योतयति। विधत्ते "पञ्चकृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे पञ्चकृत्वस्तूष्णीं दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे" (सं०६का०।४प्र०।४अ०) इति। सोमो यथा क्रीतः तद्वदयमपि मातव्यः। कल्पः "अथ मितं राजानं होतृचमसीयाभिरुपसृजति, श्वात्रा स्थ वृत्रतुरो राधो गूर्त्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबतु" इति। हे आपो यूयमेवंविधा स्थ। किं विधाः स्थ कीदृश्यः। श्वात्राः शीघ्रकारिण्यः। वृत्रतुरो वृत्रघातिन्यः। राधोऽन्नं गूर्त्ताः सम्पादयितुमुद्यताः। अमृतस्य सोमस्य पत्नीः पालयित्र्यः। तास्तथाविधा यूयं देवीर्देवतारूपाः। देवत्रा देवेषु इममस्मदीयं यज्ञं स्थापयत। किञ्चोपहूता अनुज्ञाताः सत्यः सोमस्यांशं पिबत सोमश्चानुज्ञातो युष्माकमंशं पिबतु। उपहूताः सोमस्य पिबतेत्यस्य म-

न्त्रांशस्याभिप्रायमाह "श्वात्रा स्थ वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथः" (सं०६का०।४प्र०।४अ०) इति। अस्मिन् मन्त्रे पिबतेति यदुच्यते तदेवाब्देवतानां सोमपानं। वेदनं प्रशंसति "य एवं वेद नाप्स्वार्त्तिमार्च्छति"(सं०६का०।४प्र०।४अ०)इति। जले मरणं न प्राप्नोति। बोधायनः "अथैनं प्रयौति, यत् ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमाना-योरुराया कृध्यधि दात्रे वोचः" इति। आपस्तम्बः "यत् ते सोम दिवि ज्योतिरिति राजानमभिमन्त्रयते" इति। हे सोम त्रिषु लोकेषु त्वदीयं यज्ज्योतिरस्ति तेन ज्योतिषा अस्मै यजमानाय राया धनेन समृद्धिं कुरु विस्तीर्णं स्थानं कृधि कुरु। किञ्च अधिकोऽयं यजमानो भक्तेति दात्रे फलप्रदायेन्द्राय ब्रूहि। दिवीत्यादे-स्तात्पर्यमाह "यत् ते सोम दिवि ज्योतिरित्याहैभ्य एवैनं लोकेभ्यः सम्भरति" (सं०६का०।४प्र०।४अ०)इति। लोकत्रयेणैनं सोमं सम्यक्पोषयति। कल्पः "तिरश्चर्मफलके अभिमृशति। धिषणे वीडूसती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिष मा मा हिꣳसिष्टं" इति। हे धिषणे सोमस्य चर्मणो वा धार-यित्र्यौ वीडूसतौ विश्लिष्टे सत्यौ वीडयेथां पुनरप्यभिषवादिघातेन विश्लेषो मा भूदिति दृढं स्तम्भयतं। ऊर्जं सोमरसं दधाथां युवां धारयतं। ऊर्जं मे मह्यं धत्तं प्रयच्छतं। अहं युवां मा हिꣳ-सिषं। युवामपि मा मा हिꣳसिष्टं। मन्त्रोऽयमुपेक्षितः। कल्पः "एकग्रहायाग्रꣳ राजानमुपरि न्युप्य होतृचमसे ऽꣳशूनवधाय तस्मिन् ग्रावाणमुपाꣳशुसवनमुपरि निधाय त्रिः प्रदक्षिणमुपरि-

परिस्रावयन् निग्राभमुपैति, प्रागपागुदगधरागिति, यां भार्यां कामयेत तां मनसा ध्यायेत, अम्ब निष्वरेति" इति। "प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निष्वर" इति मन्त्रपाठः । प्रागादयो या दिशस्ताः सर्व्वाः हे सोम त्वां प्रत्याभिमुख्येन धावन्तु। हे अम्ब मातृस्थानीय सोम निष्वर अंशुभ्यो रसात्मना निर्गच्छ । प्रागादिमन्त्रः सोमनिग्रहणहेतुत्वान्निग्राभ इत्युच्यते। उपरवोऽभिषवाधारः पाषाणः । तस्मिन् सोममवस्थाप्य निग्राभमन्त्रं पठेत् । दिशामाधावनोक्तेस्तात्पर्यमाह "सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनुप्राविशत् प्रागपागुदगधरागित्याह दिग्भ्य एवैनꣳ सम्भरत्यथो दिश एवास्मा अवरुन्धे" (सं० ६का०।४प्र०।४अ०) इति। अम्ब मातरित्यादयः शब्दाः स्त्रीणामुपलालनाय प्रयुज्यन्ते, अतोऽम्बशब्दप्रयोगेणात्र तद्ध्यानविधिः सूच्यत इत्यभिप्रेत्य व्याचष्टे "अम्ब निष्वरेत्याह" (सं० ६का०।४प्र०।४अ०) इति। यस्मादम्बेत्युपलालनमाह तस्माद्ध्यायेदित्यभिप्रायः । वेदनं प्रशंसति "कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद" (सं० ६का०।४प्र०।४अ०) इति। कल्पः "प्रतिप्रस्थाता राजन्येवांशूꣳ द्वौ द्वावपि सृजति, यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा" इति। यः सोम उपांशुग्रहाय पर्याप्त उपरेऽन्युप्तः स्वात्रा स्थेति मन्त्रेण वसतीवरीभिरुपसृष्टस्तस्मात् सोमादपादाय षडंशवः स्थापिताः। तथा चोक्तं "उपसृष्टस्य राज्ञः षडꣳशूनार्द्रानसꣳश्लिष्टानादाय चर्म्मणि निधाय" इति। त्रिष्वपि सवनेषु महा-

भिषवेषु तेषां षण्णामंशूनां मध्ये द्वौ द्वावंशू संसृजेत्। हे सोम त्वदीयं यन्नाम शत्रुभिरदाभ्यं अतिरस्कार्यं जागृवि जागरूकं हे सोम तस्मै सोमाय ते तादृक्सोमनामधारिणे तुभ्यमिदं सोमांशुद्वयं स्वाहा हुतमस्तु। सोमायेत्युक्तेरभिप्रायमाह "यत् ते सोमादाभ्यं नाम जागृवीत्याहैष वै सोमस्य सोमपीथः" (सं०६का०।४प्र०।४अ०) इति। यथा वह्नौ होममन्त्ररेणैवापां सोमपानमुक्तं तथा सोमस्याप्येष एवं मन्त्रेणांशुद्वयप्रक्षेपः। सोमपानवेदनं प्रशंसति "य एवं वेद न सौम्यामार्त्तिमार्च्छति" (सं०६का०।४प्र०।४अ०) इति। सोमयागविनाशं न प्राप्नोति। षण्णामंशूनां सङ्घातात् पृथक्करणं विधत्ते "घ्नन्ति वा एतत् सोमं यदभिषुण्वन्त्यꣳशूनपगृह्णाति त्रायत एवैनं" (सं०६का०।४प्र०।४अ०) इति। अंशूनामपनयने च अभिषवरूपा द्वधादेनं सोमं पालयति। महाभिषवे तत्संसर्गं विधत्ते "प्राणा वा अꣳशवः पशवः सोमोꣳशून् पुनरपि सृजति प्राणानेव पशुषु दधाति" (सं०६का०।४प्र०।४अ०) इति। त्रिषु सवनेषु पृथगंशुसंसर्गं विधत्ते "द्वौ द्वावपि सृजति तस्माद् द्वौ द्वौ प्राणाः" (सं०६का०।४प्र०।४अ०) इति। चक्षुःश्रोत्रघ्राणेन्द्रियरूपाः प्राणाः प्रत्येकं द्वौ द्वौ भूत्वा तत्तच्छिद्रेषु वर्त्तन्ते। अत्र विनियोगसङ्ग्रहः।

"आददेऽश्मानमादाय ग्रावासीत्यभिमन्त्रयेत्।
इन्द्रा सोममिति: पञ्च स्वात्रा निग्राभ्यसेचनं॥
यत् ते सोमं मन्त्रयित्वा धिषेति फलके स्पृशेत्।

प्राक् त्रिः प्रदक्षिणाम्नावो ह्यम्ब पत्नीं विचिन्तयेत् ॥

यत् ते मह्येत्यभिषवे ह्युंशुयोगो नवेरिताः'' ॥ इति ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

वाचस्पतये पवस्व वाजिन् वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा स्वाङ्कृतोऽसि मधुमतीर्न इषः कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिः प्राणाय त्वा ॥ १ ॥

वाचः सप्तचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

प्रथमानुवाके उपांशुग्रहणाय सोमाभिषवमन्त्रोऽभिहितः । अथ द्वितीये तूपांꣳशुग्रहोऽभिधीयते । बौधायनः ''अन्तर्दधाति प्रतिप्रस्थाता प्रथमाभ्यामंशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्नित्यन्तर्दधाति, प्रतिप्रस्थाता मध्यमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूत इत्यन्तर्दधाति  प्रतिप्रस्थातोत्तमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्देवो

देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा" इति । आपस्त-म्बस्त्वेकमन्त्रतामाह "अष्टौ कृत्वोऽग्रेऽभिषुणोत्यथ प्रतिप्रस्थाता-पाᳫंशुपात्रं धारयन्नुपात्तानामुपरि द्वावᳫंशू अन्तर्दधाति तस्मिन्नभिषुतमध्वर्युरञ्जलिनाऽभिगृह्णाति वाचस्पतये पवस्व वाजिन्नित्येवं विहितौ द्वितीयस्तृतीयश्चापि वा एकादशकृत्वो द्वितीयमभिषुणोति द्वादशकृत्वस्तृतीयं" इति। हे वाजिन् अन्न-प्रद सोमपतये पालकदेवार्थं वाचः सम्बन्धिना मन्त्रेण पवस्व शुद्धो भव। वृषा रसरूपत्वेन वर्षणसमर्थः त्वं गभस्तिपूतः पूर्व्व-मरण्ये सूर्यरश्मिना पूतः इदानीन्तु वृष्णोर्वर्षणसमर्थस्य सोम-स्यांशुभ्यामन्तर्धापिताभ्यां पवस्व। किञ्च। त्वमपि देव एव सन् देवानां सोमपां पवित्रं शुद्धिहेतुरसि। येषां देवानां भागोऽसि तेभ्यो देवेभ्यस्त्वां गृह्णामि। विधत्ते "प्राणो वा एष यदुपाᳫं-शुर्यदुपाᳫंश्वग्रा ग्रहा गृह्यन्ते प्राणमेवानुप्रयन्ति" (सं०६ का०। ४प्र०।५अ०) इति। यज्ञस्य प्राणस्थानीय उपाᳫंशुः। अपान-वागादिस्थानीयास्त्वन्तर्यामैन्द्रवायवादयः। अतः प्राणत्वेन मुख्यत्वात् प्रथमतस्तद्ग्रहणं युक्तं। त्रिषु पर्यायेषु विलक्षणसङ्ख्या-विशिष्टमभिषवं विधत्ते "अरुणो ह स्माहौपवेशिः प्रातःसवन एवाहं यज्ञᳫं सᳫंस्थापयामि तेन ततः सᳫंस्थितेन चरामी-त्यष्टौ कृत्वोऽग्रेऽभिषुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाप्नोत्येकादश कृत्वो द्वितीयमेकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनᳫं सवनं माध्यन्दिनमेव सवनं तेना-प्नोति द्वादशकृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं

तृतीयसवनमेव तेनाप्नोत्येताꣳ ह वा व स यज्ञस्य सꣳस्थितिमु-वाचाऽस्कन्दायाऽस्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दति” (सं०६का०।४प्र०।५अ०) इति। उपवेशस्य पुत्रः कश्चिदरुण-नामा यथोक्तत्रिविधाभिषवरूपामेव यज्ञस्य समाप्तिमुवाच। तदेतदविनाशाय सम्पद्यते। समाप्तस्य यज्ञस्य सम्बन्धि यद्वस्तु नश्यति तदविनष्टमेव। त्रिष्वपि पर्यायेष्वष्टसङ्ख्येति पक्षान्तरं विधत्ते “अथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद तस्मादष्टावष्टौ कृत्वोऽभिषुत्यं” (सं०६का०।४प्र०।५अ०) इति। अतिवादे गायत्र्येव न वर्त्तते। त्रिष्टुप् जगत्यौ तु वर्त्तेते। अधिकाक्षर-युक्ततया पठ्यमानत्वमतिवादः। न चासावल्पाक्षराया गायत्र्याः सम्भवति। यद्यपि प्रातःसवने छन्दोऽन्तराण्यपि सम्भवन्ति तथापि गायत्र्येवाभिमानिनी देवता। गायत्र्या अतिवादाभावं यो वेद तं प्रति शत्रुरप्यनतिवादुको भवति, अनिन्दको भव-तीत्यर्थः। यस्माद्गायत्र्येव सवनमभिमन्यते तस्मात् तदीययैव सङ्ख्यया प्रातःसवने त्रिष्वपि पर्यायेष्वभिषोतव्यं। मन्त्रस्य प्रथम-भागे वाक्शब्दतात्पर्यमाह “ब्रह्मवादिनो वदन्ति पवित्रवन्तो ऽन्ये ग्रहा गृह्यन्ते किं पवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं पवयति” (सं० ६का०।४प्र०।५अ०) इति। उपांशुव्यतिरिक्ता ग्रहा दशा पवित्रनामकेन वस्त्रेण शोधिता गृह्यन्ते न तूपांशुः। तस्य किं शोधकमिति प्रश्नः। मन्त्र एव शोधकमित्युत्तरं। भागा-

न्तराणामर्थः प्रसिद्ध इत्याह "वृष्णो अ॒ꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू यो सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पवयति देवो देवानां पवित्रमसीत्याह देवो ह्येष सन् देवानां पवित्रं येषां भागोऽसि तेभ्यस्त्वेत्याह येषाꣳ ह्येष भागस्तेभ्य एनं गृह्णाति" (सं०६का०।४प्र०।५अ०) इति। बोधायनः "प्रतिप्रस्थातुर्ग्रहमादत्ते स्वाङ्कृतोऽसीत्यथैनमवेक्षते मधुमतीर्न इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति" इति। आपस्तम्बस्त्वेकमन्त्रतामाह "स्वाङ्कृतोऽसीत्यध्वर्युर्ग्रहमादाय" इति। हे उपांशुग्रह स्वाङ्कृतोऽसि मया स्वीकृतोऽसि। मधुमतीरिषो मधुराण्यन्नानि नोऽस्मदर्थं कृधि कुरु। देवजन्मनि मनुष्यजन्मनि च स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यो हिताय त्वां स्वीकरोमि। स्वाङ्कृतशब्देन प्राणरूपस्य ग्रहस्य स्वाधीनत्वं विवक्षितं। मधुमतीशब्देन स्वादुत्वं। दिव्यपार्थिवशब्देन जन्मद्वयमिति दर्शयति "स्वाङ्कृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषः कृधीत्याह सर्वमेवास्मा इदꣳ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणं दधाति" (सं०६का०।४प्र०।५अ०) इति। बोधायनः "उपोत्तिष्ठति मनस्त्वाष्ट्वित्युर्वन्तरिक्षमन्विहीत्याहवनीये जुहोत्यन्वारब्धे यजमाने, स्वाहा त्वा सुभवः सूर्याय" इति। आपस्तम्बः "उर्वन्तरिक्षमन्विहीति दक्षिणेन होतारमतिक्रामति येन वा होता प्रतिपादयेत् मनस्त्वाऽष्ट्विति दक्षिणतोऽवस्थाय दक्षिणं परिधिसन्धिमन्ववहृत्य स्वाहा त्वा सुभवः सूर्यायेति दक्षिणतः

प्राञ्चमृजुꣳ सन्ततं दीर्घꣳ कृत्वा देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमे परिधौ लेपं निर्मार्ष्टि" इति। हे प्राणरूपोपांशुग्रह त्वां मनः अष्टु व्याप्नोतु। विस्तीर्णमन्तरिक्षमनुसृत्य त्वमाहवनीयदेशं गच्छ। हे सुभवः शोभनभवः सद्भावः शोभनमध्यवस्थितिलक्षणो यस्य प्राणस्य सोऽयं सुभवः। हे प्राण त्वा त्वद्रूपं ग्रहं सूर्याय वहिःप्राणरूपाय स्वाहा जुहोमि। सूर्यस्य प्राणरूपत्वमाथर्वणिकैराम्नातं "आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णाति नः" इति। हे लेप त्वां मरीचिपेभ्यः मरीचिपालकदेवतार्थं परिधौ मार्ज्मि। क्रमेण मन्त्रान् व्याचष्टे "मनस्त्वाष्ट्वित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहादित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणाति" (सं०६का०।४प्र०।५अ०) इति। स्वभवसः स्वशरीरे अवस्थिता देवाः प्राणवायवः। तत्र प्राणेभ्यः स्वाहेत्युक्ते तेषां प्रत्यक्षहोमो भवतीति तत्परित्यज्य सूर्यायेत्युक्त्वादयं परोक्षहोमः। यद्वा स्वभवस इति वक्तव्ये सति सुभवस इत्युक्त्या परोक्षत्वं। रश्मिनामकाश्चेतना देवा अचेतनानां मरीचीनां पालकाः। लेपमार्जने हस्तस्याधोमुखत्वं उर्ध्वमुखत्वञ्च फलभेदेन विधत्ते "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचाहस्तेन निमृज्याद्वृष्टिमेव नियच्छति यदि कामयेताऽवर्षुकः स्यादित्युत्तानेन निमृज्याद्वृष्टिमेवोद्यच्छति" (सं०६का०।४प्र०।

५ अ०) इति। वैरिणं प्रत्यभिचरता पुरुषेण होमात् पूर्वं पाठ्यं मन्त्रमुत्पादयति "यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन् हन्ति" (मं०६का०।४प्र०।५ अ०) इति। हे प्राणरूप सूर्य अमुं देवदत्तादिनामकं वैरिणं प्रथमतो मारय पश्चात् त्वां प्रति होष्यामि। एतन्मन्त्रं श्रुत्वा देव आहुतिमपेक्षमाण एवं वैरिणं मारयत्येव। वैरिणो दूरदेशवर्त्तित्वमत्यभिचरतोऽनुष्ठानविशेषं विधत्ते "यदि दूरे स्यादातमितोस्तिष्ठेत् प्राणमेवास्यानुगत्य हन्ति" (मं०६का०।४प्र०।५ अ०) इति। आतमितोराग्लानेः, यावन्तं कालं निरुच्छ्वासः स्यातुं शक्नोति तावत् तिष्ठेत्। ततोऽयं निरोधोऽस्य वैरिणः प्राणमनुगत्य मारयत्येव। बोधायनः "अथ प्रदक्षिणमावृत्या आग्रयणस्याल्यां ग्रहस्य सꣳस्रावमवनयति, एष ते योनिरित्यथैतस्मिन्नुपाꣳशुपात्रे अꣳशुं प्रास्यति, अथैनद्दक्षिणत उपाꣳशुमवनेन सꣳस्पृष्टं सादयति पाणाय त्वेति" इति। आपस्तम्बः "सर्व्वमाग्रयणस्याल्यां सम्पातमवनीय, एष ते योनिः प्राणाय त्वेति रिक्तं पात्रमायतने सादयित्वा तस्मिन्नꣳशुमवास्य तं तृतीयसवने अपिसृज्याभिषुणुयात्" इति। हे संस्राव एष ते आग्रयणाख्यस्ते तव योनिः स्थानं। अथवा हे उपांशुपात्र एषः खरस्य दक्षिणांसप्रदेशः ते स्थानं। अतः प्राणदेवतासन्तोषार्थं त्वामत्र सादयामि। खरो नाम दक्षिणस्य हविर्धानस्य पुरस्तान्मृदं प्रक्षिप्य निष्पादितो देशः पात्रप्रयोगार्थः। तथा च सूत्रं "खरे पात्राणि प्रयुनक्ति अग्निर्देवतेति दक्षिणेऽꣳसे उपाꣳशुपात्रꣳ सामो देवता इति उत्तरांसेऽन्तर्यामस्य

वृहन्नसीति ते अन्तरेण ग्रावाणमुपाꣳशुसवनं दक्षिणामुखꣳ सꣳस्पृष्टं पात्राभ्यां तमपरेण प्रत्यञ्चि द्विदेवत्यपात्राणि'' इत्यादि। एष ते योनिः प्राणाय त्वेत्ययं मन्त्र उपेक्षितः। अभिचरतः पात्रासादनाय मन्त्रान्तरमुत्पादयति ''यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति'' (सं०६का०।४प्र०।५अ०) इति। हे उपाꣳशुपात्र प्राणरूपं त्वाममुष्य वैरिणः प्राणे सादयामि स्थापयामीत्युक्ते सति असन्नो विनाशरहितो यजमानः प्राणो वैरिणः प्राणं सादयति विनाशयति। अभिषुतः सोमरसः प्रतिप्रस्थातृहस्तगत उपांशुपात्रे यदा गृह्यते तदा ग्रहान्तरवद्दस्त्रेण शोधनं न भवति किन्त्वंशुभिरितीति विधत्ते ''षड्भिरꣳशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति'' (सं०६का०।४प्र०।५अ०) इति। नात्र षणामंशूनां युगपत् प्रयोगः किन्तु त्रिषु पर्यायेष्विति विधत्ते ''त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति'' (सं०६का०।४प्र०।५अ०) इति। नात्र वक्ष्यमाणग्रहेष्विव दशापवित्रेणाभिस्रुतया धारया ग्रहणं किन्तु त्रिष्वपि पर्यायेष्वध्वर्योरञ्जलिनेति विधत्ते ''ब्रह्मवादिनो वदन्ति कस्मात् सत्यात्त्रयः पशूनाꣳ हस्तादाना इति यत्त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्मात्त्रयः पशूनाꣳ हस्तादानाः पुरुषो हस्तीमर्कटः'' (सं०६का०।४प्र०।५अ०) इति। गोमहिषादयः सर्व्वे पशवो मुखादानाः। एते तु त्रयो हस्तादानाः। पुरुषोऽपि ''ब्रह्मणे ब्राह्मणमाल-

भते" इत्यादौ आलभ्यत्वात् पशुः। अत्र विनियोगसङ्ग्रहः।

"वाचो ह्युपांशुग्रहणं स्वमादत्तेऽन्यहस्ततः।

उरु गत्वा मनस्त्वेति वेदेर्दक्षिणतस्थितिः॥

स्वाहा जुहोति देवेभ्यो मध्यमे परिधौ तथा।

लेपंनिमार्ष्टीषपात्रं मादयेत् सप्तवर्णिताः"॥ इति।

अत्र मीमांसा नास्ति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ *॥

ॐ॥ उपयाम गृहीतोऽस्यन्तर्य्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्व्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टूर्व्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा॥ १॥

देवेभ्यः सप्त च॥ ३॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः॥ ०॥

द्वितीयानुवाके उपांशुग्रहोऽभिहितः। अथ तृतीयमारभ्य षट्त्रिंशान्तेष्वनुवाकेष्वन्तर्यामादिकाः षोडशान्ता ग्रहा अभि-

धीयन्ते तत्र पौर्वापर्यं पाठ एव नियामकः। कल्पः "उदित आदित्येऽन्तर्यामं गृह्णात्यतिपावमानस्य राज्ञ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व" इति। अतिपवमानस्य दशापवित्रेणात्यन्तशुद्धस्य। हे सोमरस त्वमुपयामगृहीतोऽसि। उपयामः पृथिवी "इयं वा उपयामा" इति श्रुतेः। पृथिव्यामुत्पन्नं दारुमयमन्तर्यामसञ्ज्ञकं पात्रमुपयामशब्देनोच्यते। हे मघवन् अन्तर्यच्छ इदं पात्रमस्माकं भ्रातृव्येभ्योऽन्तर्धानं यथा भवति तथा नियमय। ततः सोमं पालय। रायो धनानि उरुष्य रक्ष। समिषः समीचीनान्यन्नानि यजस्व देहि। द्यावापृथिव्यौ तवानुग्रहादन्तर्दधामि व्यवधायके करोमि। विस्तीर्णमन्तरिक्षमप्यन्तर्दधामि। हे मघवन् अवरैः परैश्च सर्वैर्देवैः सजोषा सह अस्मिन्नन्तर्यामग्रहे मादयस्व त्वं हृष्टः सन्नन्यानपि हर्षय। अन्तर्यामपात्रे सोमरसग्रहणं विधत्ते "देवा वै यद्यज्ञे कुर्वत तदसुरा अकुर्वत ते देवा उपाꣳशौ यज्ञꣳ सꣳस्थाप्यमपश्यन् तमुपाꣳशौ समस्थापयन् ते सुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन् तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्ते" (सं०६का०।४प्र०।६अ०) इति। देवयज्ञागमनुतिष्ठतामसुराणां व्यामोहार्थं उपांशुग्रहे यज्ञं समापनीयं मत्वा रहसि देवास्तं तथा चक्रुः। तं प्रकारमज्ञात्वा कु-

द्धानसुरानिन्द्रोऽन्तर्यामग्रहेणान्तर्हितानकरोत्। ततो भ्रातृव्यान्तर्द्धानाय अन्तर्यामो गृहीतव्यः। मन्त्रभागे द्यावापृथिव्युक्तेः प्रयोजनमाह "अन्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते" (सं०६का०।४प्र०।६अ०) इति। सजोषेत्यादेः प्रयोजनमाह "ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन् मघवन्ननु न आभजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीद् ये चैव देवाः परे ये चावरे तानुभयानन्वाभजत् सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजति"(सं०६का०।४प्र०।६अ०) इति। यदैश्वर्यं प्राप्तुं वयमिच्छावन्तः स्मः इदं सर्व्वमिन्द्र एवाभूत् प्राप्तवानिति मत्वा ते देवा अब्रुवन् हे मघवन् त्वामनु अस्मानपि भागिनः कुर्विति। तत इन्द्रःसजोषेत्यादिवाक्येनानुजज्ञौ। तयानुज्ञया ये चोत्कृष्टा देवाः ये च निकृष्टास्तान्सर्वान् भागिनोऽकरोत्। अतोऽद्यापि सजोषेत्याद्युक्त्या सर्वान् भागिनः करोति। मादयस्वेत्यत्र यथा भागलाभेन देवानां हर्षस्तथा यज्ञविघ्नाभावेन यजमानस्यापि हर्षं द्योतयति "अन्तर्यामे मघवन् मादयस्वेत्याह यज्ञादेव यजमानं नान्तरेति" (सं०६का०।४प्र०।६अ०) इति। मन्त्रोपक्रमगतस्य गृहीतशब्दस्य प्रयोजनमाह "उपयामगृहीतोऽसीत्याहापानस्य धृत्यै" (सं०६का०।४प्र०।६अ०) इति। अपानदेवताया अन्तर्यामाभिमानितया तस्मिन् गृहीते प्राणिनामपानो धृतो भवति। नात्रोपांशोरिवाञ्जलिना ग्रहणं किन्तु दशापवित्र-

नाभिस्रुतया धारयेत्यभिप्रेत्याह "यद्भावपवित्रो गृह्णीयात् प्राणमपानोऽनुन्यृच्छेत् प्रमायुकः स्यात् पवित्रवानन्तर्यामो गृह्यते प्राणापानयोर्विधृत्यै" (सं० ६ का० ।४ प्र०।६ अ०) इति। प्राणवृत्तिः स्वभावतो वहिर्गच्छत्यतः प्राणरूपस्योपांशोः पवित्रेण नियमनं नापेक्षितं। यद्यन्तर्यामोऽपि तद्वदपवित्रः स्यात् तर्ह्यनियमितत्वात् तद्रूपोऽपानोऽपि निर्गच्छन्तं प्राणमनु निर्गच्छेत् ततः प्राणापानयोरभावात् म्रियेत। पवित्रेण नियमिते त्वपाने अग्रे तदविनाभूतः प्राणो निर्गच्छन्नपि नात्यन्तं देहं परित्यजेत्। तस्मादुभयोर्धारणाय दशापवित्रेणान्तर्यामं गृह्णीयात्। तत्प्रकारः सूत्रेऽभिहितः "अदाभ्याꣳशुमुपाꣳशुपावनौ चापि सृज्य सर्वेऽध्वर्यवो दिग्भ्यो मद्याभिषवमभिषुण्वन्ति अभिषुतमध्वर्युरञ्जलिना सꣳमिश्रति तमुन्नेतान्तरेषेणाहृत्योत्तरत आधवनीये अवनयत्युद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनं दशापवित्रं वितन्वन्ति पवित्रस्य च यजमानो नाभिं कृत्वा तस्मिन् होतृचमसेन धाराꣳ स्रावयति उदचनेनोन्नेता आधवनीयाद्धोतृचमस आनयति सन्तता धारा स्रावयितव्या धाराया अन्तर्यामं गृह्णाति सर्वाꣳस्रुतो ग्रहानाध्रुवात्" इति। "ग्रहणादूर्ध्वमन्तर्यामस्योपाꣳशुवत्स्वाकृतान्तादिमन्त्रप्रयोगः कर्त्तव्यः। स्वाकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा" इति। एते मन्त्रा उपेक्षिताः। उपांश्वन्तर्यामपात्रयोरासादने मध्यगतेनोपांशु

सवनेन सह स्पर्शं विधत्ते "प्राणापानौ वा एतौ यदुपांशुश्चान्तर्यामौ व्यान उपांशुसवनो यं कामयेत प्रमायुकः स्यादित्यसंस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ विच्छिनत्ति ताजक् प्रमीयते यं कामयेत सर्व्वमायुरियादिति संस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सन्तनोति सर्व्वमायुरेति" (सं० ६का०।४प्र०।६अ०) इति। अत्र सूत्रं "सर्व्वमाग्रयणस्थाल्यां सम्पातमानीय एष ते योनिरपानाय त्वेति रिक्तं पात्रमायतने सादयित्वा व्यानाय त्वेति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्यां" इति। अत्र विनियोगसङ्ग्रहः।

"उपान्तर्यामकस्तत्र स्वाङ्कृतादि तु पूर्व्ववत्"। इति

अत्र मीमांसा छन्दसी न स्तः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः॥ * ॥

आ वायो भूष शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्व्वपेयं। उपयामगृहीतोऽसि वायवे त्वेन्द्रवायू इमे सुताः। उप प्रयोभिरागतमिन्दवो वामुशन्ति हि। उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा॥ १ ॥

आवायो चिचत्वारिंशत्॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

कल्पः "ऐन्द्रवायवं गृह्णात्या वायो भूष शुचिपा उप नः सहस्रन्ते नियुत इत्यनुद्रुत्योपयामगृहीतोऽसि वायवे त्वेति गृहीत्वा उपयम्येन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति गृहीत्वा पवित्रदशाभिः परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति सादयति" इति। मन्त्रास्त्वेवं पठ्यन्ते "आ वायो भूष शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्व्वपेयं। उपयामगृहीतो ऽसि वायवे त्वेन्द्रवायू इमे सुताः। उप प्रयोभिरागतमिन्दवो वामुशन्ति हि। उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा" इति। हे वायो त्वमागत्य ग्रहान् भूष अलंकुरु। हे शुचिपाः शुद्ध सोमपास्त्वं नो अस्मानुपगच्छ। हे विश्ववार विश्वव्यापक ते सहस्रं नियुतः सन्ति। नियुच्छब्देन वायुवाहनभूता अश्वा उच्यन्ते। तत अन्धः सोमरसरूपमन्नं मद्यं हर्षकरं तस्मादुपो समीपे त्वामयामि प्राप्नोमि। हे देव यस्य सोमरसस्य सम्बन्धि रसद्रव्यं पूर्व्वपेयं प्रथममेव पातव्यमिति मनो दधिषे धृतवानसि तादृशेन सोमेन त्वामुपयामीत्यन्वयः। हे सोमरस त्वमुपयामेन पृथिवीरूपदारुपात्रेण गृहीतोऽसि त्वां वायवे गृह्णामि। हे इन्द्रवायू इमे सोमाः सुताः अभिषुताः अतो युवां प्रयोभिः एतैः सोमरसरूपैरन्नैर्निमित्तभूतैः उप समीपे आ-

गतं आगच्छन्तं हि यस्मात् इन्दवः सोमरसा वामुशन्ति युवां कामयन्ते। हे सोम दारुपात्रेण गृहीतोऽसि इन्द्रवायुभ्यां त्वां गृह्णामि। हे पात्र एषः खरस्यैकदेशस्ते योनिः तव स्थानं अतो ऽत्र सजोषाभ्यां समानप्रीतिभ्यां इन्द्रवायुभ्यां इन्द्रवाय्वर्थं त्वां सादयामि। एते मन्त्रा उपेक्षिताः। द्विदेवत्यग्रहेष्वस्य प्राथम्यं विधत्ते "वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्रयन्ति" (सं०६का०।४प्र०।७अ०) इति। ऐन्द्रवायवमैत्रावरुणाश्विनग्रहाणामभिमानिदेवता वाक्चक्षुःश्रोत्राभिधाः तस्मादैन्द्रवायवो वागित्युच्यते। तस्य प्राथम्ये सति वाचं पुरतः प्रयन्ति चक्षुरादयोऽनु प्रयन्ति। तत्प्राथम्यं प्रकारान्तरेण प्रशंसति "वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्नन्" (सं०६का०।४प्र०।७अ०) इति। अभिषवः सोमदेवताया हननं। तदेव प्राथम्यं द्रढयितुं पुनरपि वायुं प्रशंसति अथवा वायुस्तुत्या वायवे गृह्णीयादिति विधिरुन्नेया "सोऽपूयत् तं देवा नोऽपाधृष्णुवन् ते वायुमब्रुवन्निमं नः स्वदयेति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो वायुरेव स्वदयत् तस्माद्यत् पूयति तत् प्रवाते विषजन्ति वायुर्हि तस्य पवयिता स्वदयिता" (सं०६का०।४प्र०।७अ०) इति। अयं सोमो हतः सन् अपूयत् दुर्गन्धोऽभवत्। नोऽपा धृष्णुवन् स्वादुकर्तुं नाशक्नुवन् मैत्रावरुणाश्विनादीन्यपि

ग्रहपात्राणि वायव्यानीत्युच्यन्ते। अत एवाम्नातं "आग्रावृष आवायव्यानि" इति। लोके यद्वस्तु द्रवाधिक्यात् पूतिगन्धोपेतं भवति तच्छोषयितुं प्रकृष्टे वायौ विषजन्ति प्रसार्य स्थापयन्ति, अतस्तादृशस्य वस्तुनो वायुः शोधयिता स्वादुकर्ता च सर्व्व-ग्रहसाधारणमुपयामगृहीतोऽसीत्यमुं मन्त्रं व्याचष्टे "तस्य वि-ग्रहणं नाविन्दन्त्सादितिरब्रवीद्वरं वृणा अथ मया विगृह्णीध्वं मद्देवत्या एव वः सोमाः सन्ना असन्नित्युपयामगृहीतोऽसीत्या-हादितिदेवत्यास्तेन यानि हि दारुमयाणि पात्राणस्यैतानि योनेः सम्भूतानि यानि मृण्मयानि साचात् तान्यस्यै तस्मादेव-माह" (सं०६का०।४प्र०।७अ०) इति। विविधदेवतार्थत्वेन गृह्यते तेन मन्त्रेण तादृशं मन्त्रं नालभन्त। अदितिः पृथिवी। मया भूमिप्रतिपादकमन्त्रेण ये युष्माकं सोमास्ते सर्वेऽपि होम-काले युष्मद्देवत्यत्वेऽपि आसादनकाले मद्देवत्याः सन्त्विति भूमे-र्वरः। उपयामगृहीतोऽसि इत्येतादृशं मन्त्रं भूमिराह। उप-यामेन भूमिसम्बन्धिपात्रेण गृहीत इति मन्त्रार्थः। तेनैतन्म-न्त्रप्रयोगेण पूर्व्वोक्तवरेण च सोमा अदितिदेवत्या द्विविधानि सोमपात्राणि दारुमयाणि ग्रहरूपाणि मृन्मयानि चाग्रयण-स्थाल्यादीनि। तत्रास्या भूमेः सम्बन्धिनो या वृचरूपा योनि-स्तस्याः संभूतानि ग्रहादीनि स्थाल्यादीनि तु साचादेव भूमेः कार्याणि। तस्मादुपयामगृहीत इत्येवं मन्त्रो ब्रूते। ऐन्द्रवायवो-रेकस्मिन् पात्रे सहग्रहणं विधत्ते "वाग्वै पराच्यव्याकृतावदत् ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै

मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते" (सं० ६का०।४प्र०।७अ०) इति। येयं वैदिकमन्त्ररूपा वाक् सा पूर्व्वं पराचिसमुद्रघोषवदैक्यरूपेण दण्डायमाना तस्यां वाच्येतावदेकं वाक्यं। तस्मिन् वाक्येऽप्येतावदेकं पदं। तस्मिन् पदे मन्त्रे प्रकृतिरयं प्रत्यय इत्येवं विभज्य सर्व्वतः करणं व्याकरणं तद्रहितत्वादव्याकृतैवाऽवदत् प्रवृत्ता तां मध्यतोऽवक्रम्य वाक्यपदादिरूपेण तत्र तत्र विच्छिद्य विभिन्नं कृतवान् ऐन्द्रवायवग्रहणमुपसंहरति "तस्मात् सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वरावणीत" (सं० ६का०।४प्र०।७अ०) इति। यस्मादिन्द्र एकमेव सहग्रहणरूपं वरमवृणीत् तस्मात् सकृदेव इन्द्रस्य सोमग्रहणं यस्माच्च वाचं मध्यतो विभक्तवान् तस्मादुभयोर्वाय्वर्थग्रहणयोर्मध्ये इन्द्रार्थं ग्रहणं। आ वायो भूषेति केवलस्य वायोरादौ ग्रहणं इन्द्रवायू इमे सुता इत्यत्र वायुः पश्चात् पठ्यते। तस्मादिन्द्रस्य मध्यं स्थानं। तस्माद्वायोर्ग्रहाग्रत्वमेको वरः। सर्व्वपात्राणां वायव्यत्वं द्वितीयो वरः। तस्मात् तस्य द्विःसोमग्रहणं इत आरभ्य विनियोगसङ्ग्रहः "षट्त्रिंशानुवाकस्यान्ते उदाहरिष्यते" इति।

अथ मीमांसा। दशमाध्यायस्य पञ्चमपादे चिन्तितं।

"पुरो पांशोरुत स्वस्य स्थाने स्यादैन्द्रवायवः।
आद्याग्रत्वविधेर्मैवं धारा युक्तोग्रतोक्तितः"॥ इति।

ज्योतिष्टोमे श्रूयते "ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति। मन्त्रकाण्डविधिकाण्डयोर्ग्रहाणामयं पाठक्रमः। उपांशुग्रहः प्रथमः। अन्तर्यामग्रहो द्वितीयः। ऐन्द्रवायवग्रहस्तृतीयः। मैत्रावरुणग्रहस्तुर्थ इत्यादि। तत्र ऐन्द्रवायवस्याग्रत्वविधानादुपांशुग्रहात् पूर्व्वमेव ग्रहणमिति पूर्व्वः पक्षः। नैतद्युक्तं। अग्रत्वस्य धाराग्रहापेक्षत्वादैन्द्रवायवादयो धाराग्रहाः तद्वाक्यधारया गृह्णाति श्रुतत्वात्। एवं सति पाठक्रमो न बाध्यते। तस्मादैन्द्रवायः स्वस्थैव स्थाने ग्रहीतव्यः। तत्रैवान्यच्चिन्तितं।

"सर्व्वादौ स्वस्य वा स्थाने काम्यस्यादैन्द्रवायवः।
पुनर्विधेरादिमोऽन्यः कामायैतद्विधानतः"॥ इति।

ज्योतिष्टोम एवं श्रूयन्ते "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्व्वं प्रजाः कल्पेरन्" इति। सोऽयं काम्य ऐन्द्रवायवः सर्व्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ स्यात्। कुतः। धाराग्रहादित्वस्य पूर्व्वमेव सिद्धौ सत्यां पुनरप्यग्रताविधानादिति प्राप्ते ब्रूमः। नात्र सर्वाग्रत्वं विधातुं शक्यं धाराग्रहाणां प्रकृतत्वात्। अतो यथाप्राप्ताग्रत्वोपेतानां धाराग्रहाणां कामसंयोगमात्रं विधीयत इति स्वस्थान एवायमैन्द्रवायवग्रहः। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

"रथन्तरं साम सोमे भवेत् तद्वद्बृहज्जगत्।
ऐन्द्रवायवशुक्राद्यणाऽग्रास्य ग्रहाः श्रुताः॥
रथन्तरादिसंयुक्तमन्यत् कर्माथवा गुणः।

गायत्र्यादियुतात् पूर्व्वादन्यद्वा वृत्तितो गुणैः ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके।
ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परं" ॥ इति।

ज्योतिष्टोमप्रकरणे श्रूयते "यदि रथन्तरसामा सोमस्यादैन्द्रवायवाग्रान् ग्टह्णीयाद्यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रान्" इति सोमशब्देन सोमलतासाधनको यागोऽभिधीयते। तस्मिंश्च यागे माध्यन्दिनसवने पृष्ठ्यस्तोत्रे रथन्तरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि। अभि त्वा शूरेत्येतस्यां योनौ उत्पन्नं रथन्तरं। त्वामिद्धि हवामह इत्येतस्यामुत्पन्नं बृहत्। जगतीछन्दस्कायामुत्पन्नं जगत् ऐन्द्रवायवमैत्रावरुणआश्विनशुक्रामन्थ्याग्रयणउक्थ्यो ध्रुव इत्यादिनामका ग्रहाः प्रातःसवने ग्टह्यन्ते। दारुपात्रेषु सोमरसस्य ग्रहणात् ग्रहा भवन्ति। सोमयागस्य रथन्तरसामोपेतत्वपक्षे तेषु ग्रहेष्वैन्द्रवायवः प्राथमिकः, बृहत्सामोपेतत्वपक्षे शुक्रः प्राथमिकः, जगत्सामोपेतत्वपक्षे आग्रयणः प्राथमिक इति विषयवाक्यस्यार्थः। तत्र प्रकृतो ज्योतिष्टोमो गायत्र्यादिसामोपेतः तद्व्यावृत्त्यर्थमिह रथन्तरादयो गुणाः कीर्त्यन्ते। तस्मादैन्द्रवायवाग्रत्वादिगुणोपेतानि कर्मान्तराणि विधीयन्त इति प्राप्ते ब्रूमः। यदि रथन्तरसामा सोमस्यादित्युक्तौ यः सोमशब्दः तेन प्रकरणेन चात्र ज्योतिष्टोमः समर्प्यते। तस्मिन् समर्पिते यथोक्तग्रहाग्रत्वगुणो विधीयते न च रथन्तरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः सम्भवति। तस्य प्रातःसवनादौ गायत्र्यादिसामो-

पेतत्वात् पृष्ठ्यस्तोत्रे रथन्तरादियागस्यापि सम्भवात् किं तर्हि व्यावृत्य इति चेत्, तर्हि रथन्तरबृहज्जगतां परमार्थतो व्यावृत्तिरिति वक्ष्यामः। रथन्तरादयः पृष्ठ्यस्तोत्रे विकल्पिताः। तत्र रथन्तरानुवादेनेतरौ पक्षौ व्यावर्त्येते, एवमितरत्रापि, तस्मादयं गुणविधिः। ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः। न हि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति। अत एव दशमाध्यायस्य पञ्चमपादस्य पलाशाधिकरणे प्रथमवर्णके यदि जगत्सामवाक्योक्तमाग्रयणाग्रत्वे विकृतौ विषुवनामके मुख्येऽहनि व्यवस्थापितं, वाढं, तत्रापि नात्र कश्चिद् विरोधः। आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकं किन्त्वन्येन विहिते सोमयागे यत्र जगत्साम सम्भवति तत्र गुणविधायकमित्येतावत एवात्र प्रतिपाद्यत्वात्। तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

"ऐन्द्रवायवशेषस्य सकृद्भक्ष उताऽसकृत्।
पूर्वन्यायात् सकृद्भक्षो द्विर्भक्षो वचनाद्भवेत्" ॥ इति।

ज्योतिष्टोमे योऽयमैन्द्रवायवग्रहः तत्र संस्कार्यस्य सोमस्यैकत्वात् सकृदेव शेषकार्यमिति चेत्। मैवं। द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोतीति वचनाद्द्विर्भक्षणं।

अथ छन्दः। अवायो भूषेति त्रिष्टुप्। इन्द्रवायू इति गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ * ॥

अयं वां मित्रावरुणा सुतः सोमं ऋतावृधा। ममेदिह श्रुतꣳ हवं। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ॥ १ ॥

अयं वां विꣳशतिः ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

कल्पः "अयं वां मित्रावरुणेति मैत्रावरुणं गृहीत्वा शृतशीतेन पयसा श्रीत्वा एष ते योनिर्ऋतायुभ्यां त्वेति सादयति" इति। मन्त्रपाठस्तु "अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतꣳ हवं। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा" इति। हे ऋतावृधा सत्यस्य वर्द्धकौ मित्रावरुणौ वां युवयोः सोमः सुतोऽभिषुतः इति हेतौ यस्मादभिषुतः तस्मादिह कर्म्मणि मम हवं मदीयमाह्वानं श्रुतं युवां शृणुतं। ऋतायुभ्यां सत्यमिच्छद्भ्यां मित्रावरुणाभ्यां। स्पष्टमन्यत्। मन्त्रानुपेक्ष्य गृहीतस्य सोमरसस्य क्षीरमेलनं विधित्सुः प्रस्तौति "मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाहꣳ सर्व्वस्य वा अहं मित्रमस्मीति तमब्रुवन् हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोमꣳ श्रीणन्निति तस्मान् मैत्रावरुणं पयसा श्रीणन्ति तस्मात् पशवोऽपाक्रामन् मित्रः सन् क्रूरमकरिति" (सं०६का०।४प्र०।८अ०) इति। हनाम त्वया सहिता

वयमित्यर्थः। नाहं सोमं हन्मीति शेषः। सर्व्वमित्रत्वमहनने हेतुः। अतएवास्माकमपि मित्रत्वात् हनामैव अस्मदीयं कार्यं हननरूपं त्वया सहैव कुर्मः। श्रीणन् मिश्रयन् क्रूरं सोमवधं कृतवतस्तस्मान् मित्राद्भीताः पशवोऽपक्रान्ताः। विधत्ते "क्रूरमिव खलु वा एष करोति यः सोमेन यजते तस्मात् पशवोऽपक्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्द्धयति पशुभिर्यजमानं" (सं०६का०।४प्र०।८अ०) इति। तत् तेन श्रयणेन मित्रदेवयजमानयोः पशुसमृद्धिर्भवति। अस्तु यजमानस्य पशुसमृद्धिः मित्रस्य कुतस्त्वित्याशङ्क्य तदर्थमेव च तस्य वृतत्वादित्याह "पुरा खलु वा वैवं मित्रो ऽवेदपमत् क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत" (सं०६का०। ४प्र०।८अ०) इति। क्रूरं सोमवधं कृतवतो मत्तोपक्रमिष्यन्तीत्यमुमर्थं मित्रः सोमवधात् पुरैव खलु अवेत् विदितवान् तस्मादेव कारणात् पशुसमृद्धिहेतुं चीरमिश्रणमवृणीत। अथ मित्रावरुणयोरेकेनैव पात्रेण ग्रहणं विधत्ते "वरुणं देवा अब्रुवन् त्वयाꣳशभुवा सोमꣳ राजानꣳ हनामेति सो ब्रवीद्वरं वृणै मह्यञ्चैवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रं" (सं०६का०।४प्र०।८अ०) इति। अंशं द्रव्यभागं भवति प्राप्नोतीत्यंशभूर्दायादः। सोमो वरुणश्च परस्परं दायादौ "इन्द्रो वरुणः सोमो रुद्रः" इत्यादिना बृहदारण्यके क्षत्रियत्वेनैककुलवर्त्तित्वस्य समाम्नातत्वात्। यस्मादंशभुवा वरुणेन सह सोमं

हनामेति देवैरुक्तं तस्माल्लोकेऽपि तथा कुर्व्वन्ति। तद्यथा रामो विभीषणेन अग्रभुवा सहितो रावणं जघान। वैश्यशूद्रयोरप्यु-दाहार्यं। मैत्रावरुणग्रहस्यैन्द्रवायवानन्तर्यं विधत्ते "न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो विवासयतमिति तावब्रूतां वरं वृणावहा एक एवावत्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः पूर्व्वो मैत्रावरुणाद्गृह्यते" (सं० ६का०।४प्र०।८अ०) इति। इदं कालस्वरूपमव्यावृत्तं अवि-भक्तं पूर्व्वमासीत्। एतावदहरिति दिवा नासीत् एतावती रा-त्रिरिति नक्तं नासीत् इदं अविभक्तं कालस्वरूपं नो अस्मदर्थं विवासयतं विभज्य स्थापयतं। आवत् आवाभ्यां अस्मदीयग्रहा-दित्यर्थः। ननु उपांश्वन्तर्यामावुभावपि मैत्रावरुणात् पूर्व्वमेव गृहीतावित्याशङ्क्याह "प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ" (सं० ६का०।४प्र०।८अ०) इति। प्राणापानयोः सतोः पश्चा-दितरेन्द्रियस्थितिरिति तयोः पूर्व्वभावित्वमविवादं। इतरेषु तु ग्रहेष्वैन्द्रवायव एक एव मैत्रावरुणात् पूर्व्वः वरं लब्ध्वा अ-होरात्रयोः विभागं जनयत इत्याह "मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै" (सं० ६का०।४प्र०।८अ०) इति। सूर्योदयमारभ्य तदस्तमयपर्यन्तं कालोऽहरित्येवं मित्रः कल्पयामास। तत ऊर्ध्वं पुनः सूर्योद-यपर्यन्ता रात्रिरित्येतद्वरुणस्य कल्पनं। तत आरभ्य उदय-कालस्वरूपं व्यौच्छत् विभक्तमासीत्। व्युष्ट्यै अहोरात्रविभा-गाय। अथ छन्दः। अयं वामित्येषा गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतं । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ १ ॥

यावामष्टादश ॥ ६ ॥

प्रातर्युजौ विमुच्येथामश्विनावेह गच्छतं । अस्य सोमस्य पीतये । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ॥ १ ॥

प्रातर्युजावेकान्नविंशतिः ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके षष्ठसप्तमावनुवाकौ ॥ ० ॥

कल्पः "आश्विनं गृह्णाति या वां कशेति ग्रहणमादनौ द्रोणकलशाद्धारा ग्रहाः परिस्रवया गृह्यन्ते वचनादन्यतः" इति । पाठस्तु "या वां कशामधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतं । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा" इति । हे अश्विना अश्विनौ देवौ वां युवयोः या कशा या वाक् तया यज्ञं मिमिक्षतं सेक्तुमिच्छतं निष्पादयतमित्यर्थः । कशासमानया जिह्वयोत्पन्नत्वाद्वागेव अत्र कशा । कीदृशी ।

मधुमती परुषशब्दरहिता। सूनृतावती प्रियवचनोपेता मधुना पूर्णा अतिमाध्वी तादृशीभ्यामश्विमूर्त्तिभ्यां त्वां सोमं सादयामि। आश्विनग्रहाय अन्यो विकल्पितो मन्त्र एवमाम्नायते "प्रातर्युजौ विमुच्येथामश्विनाविह गच्छतं। अस्य सोमस्य पीतये। उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा" इति। हे अश्विनौ युवां प्रातर्युजौ प्रातःकाल एवानेन यजमानेन युक्तौ सन्तौ इतरैर्यजमानैर्विमुच्येथां। इह कर्मण्यागच्छतं। किमर्थं। अस्य सोमस्य पीतये पानाय। स्पष्टमन्यत्। एतान् मन्त्रानुपेक्ष्याश्विनग्रहणं विधत्ते "यज्ञस्य शिरो छिद्यत ते देवा अश्विनावब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन् ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै" (सं०६का०। ४प्र०।८अ०) इति। यज्ञपुरुषः पुरा कदाचिद् देवानां वसु गृहीत्वा देवैः सह योद्धुं सज्यं धनुर्वामहस्ते धृत्वा धनुष एकां कोटिं भूमौ द्वितीयां कोटिं गले च प्रतिष्कभ्याऽतिष्ठत्। तदानीमुपदीकानामभिर्जन्तुभिर्भूमिस्पृष्टे ज्याभागे भक्षिते सति त्रुटितज्याकस्य धनुषः ऊर्ध्वा कोटिः स्वयं उद्गच्छन्ती यज्ञस्य शिरोऽपि छित्वा स्वात्मना सह ऊर्द्धमुदगमयत्। सोऽयं वृत्तान्तः प्रवर्ग्यब्राह्मणे समाम्नातः "तस्य धनुर्विप्लवमानशिर उदवर्त्तयत्" इति। तदिदमत्र संगृह्यते यज्ञशिरोऽच्छिद्यतेति। अत्राप्यग्निष्टोमेऽप्यावयोर्ग्रह एव ग्रहीतव्यः। यद्यप्याश्विनं द्विक-

पालं आश्विनं धूम्रललाममालभेत इति इष्टिपश्वोरस्त्वावयो-र्हविः तथाप्यग्निष्टोमे पूर्व्वं नास्ति तत्रापि लेपमार्जनादिना नावयोः परितोषः किन्तु ग्रहेणैवेत्यभिप्रायः। तस्मादाश्विन-ग्रहग्रहणं यज्ञस्य निष्कृत्यै भवति। आश्विनग्रहणस्य स्तोत्रा-दूर्ध्वकालं विधत्ते "तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्य-चरौ भिषजाविति तस्माद् ब्राह्मणेन भेषजं न कार्यमपूतो ह्ये१षोऽमेध्यो योऽभिषक्तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमा-श्विनमगृह्णन् तस्माद् बहिष्पवमाने स्तुत आश्विनो गृह्यते"(सं० ६का०।४प्र०।८अ०) इति। छन्दोगानामुत्तरग्रन्थोपक्रमे सूक्त-त्रयमुपास्मै गायता नर इत्यादिकमाम्नातं तत्र गायत्रसाम्ना गातव्यं। तदिदं वहिष्पवमानस्तोत्रं। यावश्विनौ चिकित्सारू-पेण मनुष्यचारित्रेण युक्तत्वादपूतौ तयोः स्तोत्रेण शुद्धत्वात्। ततः स्तोत्रादूर्ध्वं तदीयग्रहस्य कालः। विधत्ते "तस्मादेवंवि-दुषा वहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते" (सं०६का०।४प्र०।८अ०) इति। एवंविदुषा स्तोत्रस्य शुद्धिहेतुत्वं जानता उपसद्य अनुष्ठीयः। तत्प्रकारः सूत्रे द-र्शितः "उदञ्चः प्रक्ता बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्त्यध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्त्ता, प्रतिह-र्त्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः" इत्यादि। अत्र प्रसंगाल्लौकिकचिकित्सायां अदृष्टोपकारजनकं कञ्चिदङ्गं विधत्ते "तयोस्त्रेधा भैषज्यं विन्यदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रमुपनिधाय ब्राह्मणं दक्षिणतो नि-

षाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्द्धुकमस्य कृतं भवति" (सं०६का०।४प्र०।९अ०) इति।. अग्न्युदकब्राह्मणैरदृष्टद्वारेणोपकारकं यद्भैषज्यं त्रेधावस्थितं तद्देवास्तयोरश्विनोः स्थापितवन्तः। तस्मादश्विनोरनुग्रहाय लौकिकोऽभिषगुदकुम्भं समीपे निधाय ब्राह्मणमुपवेश्याग्निं चोपसमिध्य भैषज्यं कुर्यात्। तथा सति यावदङ्गजातमावश्यकं तेन सर्वेण सह कृतत्वात् समृद्धं भैषज्यं भवति। अत्र द्विदैवत्यानामैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां तत्तत्प्रतिनिग्राह्य पात्रैः सह होमविधिमर्थवादेनोन्नेतुकामः प्रश्नमुत्थापयति "ब्रह्मवादिनो वदन्ति कस्मात् सत्यादेकपात्राद् द्विदेवत्या गृह्यन्ते द्विपात्रा ह्रयन्ते"इति(सं०६का०।४प्र०।९अ०) इति। ग्रहकाले सोमानामेकैकपात्रत्वमुक्तरीत्या द्रष्टव्यं। होमकाले द्विपात्रत्वं सूत्रे दर्शितं "हविर्धानं गच्छन्त्संप्रेष्यति, वायव इन्द्रवायुभ्यामनुब्रूहि, उपयामगृहीतोऽसि वाक्षसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायव्यस्य प्रतिनिग्राह्यं गृहीत्वा सादयति। ऐन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिस्रवया राजानमुभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसन्धिमन्ववहृत्याध्वरो यज्ञोऽयमस्तु देवा इति परिस्रवया आघारमाघारयति, आश्राव्य प्रत्याश्राविते संप्रेष्यति, वायव इन्द्रवायुभ्यां प्रेष्य, इति वषट्कृते जुहोति पुनर्वषट्कृते जुहुत एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः" इति। प्रश्नस्योत्तरं दर्शयति "यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा ह्रयन्ते तस्मा द्वौ द्वौ बहिष्टात् प्राणाः" (सं०६का०।

४प्र०।८ अ०) इति। चक्षुरादिप्राणानामन्तरेकात्मकत्वाद् ब-हिर्द्वारभेदेन द्वित्वात् तत्साम्यायैकपात्रत्वं द्विपात्रत्वञ्च कुर्यादित्यर्थः। अत्र सवनीयपुरोडाशानां स्विष्टकृति कृते सति द्विदेवत्यग्रहप्रचारो विहितः। पुरोडाशसम्बन्धिन इडोपाह्वानस्यापि स्विष्टकृदनन्तरभावो चोदकप्राप्तः कालः तं बाधित्वा द्विदेवत्यशेषभक्षणादूर्ध्वमुपाह्वानस्योत्कर्षं विधत्ते "प्राणा वा एते यद्विदेवत्याः पशव इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद्द्विदेवत्यान् भक्षयित्वेडामुपह्वयते प्राणानेवात्मन्धित्वा पशूनुपह्वयते" (सं० ६का०।४प्र०।८ अ०) इति। द्विदेवत्यशेषभक्षणेभ्यः प्रागिडायाः पशुरूपाया उपाह्वाने प्राणैर्व्यवहितत्वाद्यजमानो म्रियेत पश्चादाह्वाने तु नायं दोषोऽस्ति। भक्षणे विशेषं विधत्ते "वाग् वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात् पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात् पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति" (सं० ६का०।४प्र०।८ अ०) इति। पुरस्तादग्रतो यथा गृहीतमेवेत्यर्थः। सर्वतः परिहारं शिरःप्रदक्षिणीकृत्येत्यर्थः। पात्राणां सादने पुरोडाशशकलादिसहितत्वं विधत्ते "प्राणा वा एते यद्द्विदेवत्या अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यवचरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये

रक्षसामनन्ववचाराय" (सं०६का०।४प्र०।९अ०) इति। शकलादियोगः सूत्रे दर्शितः "पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति पयस्यामैन्द्रावरुणस्य धाना आश्विनस्य" इति। अन्तरतः प्राणानामरिक्तत्वं नामार्द्रस्थानोपेतत्वं पात्राणामरिक्तत्वेन यज्ञे विस्तृतमप्यङ्गं क्रियमाणमेव सन्तिष्ठतीति रक्षसां सञ्चारद्वारं नास्ति। सादनस्थानं विधत्ते "दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याᳪ सादयति वाच्येव वाचं दधाति" (सं०६का०।४प्र०।९अ०) इति। उत्तरस्य चक्रस्य मार्गे सादयेत्। वर्त्मरूपायां वाच्येव ग्रहरूपां वाचं स्थापयति। सादितानां ग्रहाणामवस्थानावधिं विधत्ते "आतृतीयसवनात् परिशेरे यज्ञस्य सन्तत्यै" (सं०६का०।४प्र०।९अ०) इति। शेरे वसन्तीत्यर्थः। अत्र विनियोगसङ्ग्रहाभावः।

अथ मीमांसा। पञ्चमाध्यायस्य चतुर्थपादे चिन्तितं।

"आश्विनो दशमः पाको यवाऽग्वा ऐच्छिकः क्रमः।
नियतो वाऽग्रिमः पाठः श्रुत्यर्थानां समत्वतः॥
पाठात् क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः।
कॢप्तिर्न शक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः"॥ इति।

ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहस्तृतीये स्थाने पठितः। तस्य च दशमस्थानत्वं वाचकेनैव शब्देन आम्नायते "आश्विनो दशमो गृह्यते" इति। तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ तथाग्निहोत्रहोमादूर्ध्वं यवागूपाकः पठितः। स चार्थवशात् पूर्व्वं प्राप्तः। तत्रार्थपाठौ समबलौ। तस्मादुभयत्रैच्छिकः क्रम

इति प्राप्ते ब्रूमः। पाठो हि न क्रमस्याभिधायकः किन्त्वन्यथानुपपत्त्या क्रमं कल्पयति। दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते ततः पाठादपि श्रुतिः प्रबला। अतः पाठक्रमं कल्पयन् वस्तुसामर्थ्यमनुसृत्यैव कल्पयति। असमर्थश्च यवाग्वाः पूर्वमग्निहोत्रं निष्पत्तुं द्रव्यमन्तरेण होमासम्भवात्। तस्मात् पाठेन वस्तुसामर्थ्यलक्षणोऽर्थ उपजीव्य इत्यर्थस्य पाठात् प्राबल्यं श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः। या वां कशा प्रातर्युजावित्येते गायत्र्यौ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके षष्ठसप्तमानुवाकौ ॥ ० ॥

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति। उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ १ ॥

अयं वेनः पञ्चविꣳशतिः ॥ ८ ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रतीचीनं वृजिनं दोहसे गिराशुं जयन्तमनु यासु वर्द्धसे। उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ १ ॥

तꣳ षड्विꣳशतिः ॥ ९ ॥

## इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके अष्टमनवमानुवाकौ ॥ ० ॥

कल्पः "अयं वेनश्चोदयदिति शुक्रं गृहीत्वा हिरण्येन श्रीत्वा, एष ते योनिर्वीरतां पाहीति सादयति" इति। पाठस्तु "अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपाꣳ सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभीरिहन्ति। उपयामगृहीतोऽसि शण्डायत्वैष ते योनिर्वीरतां पाहि" इति। अयमितीन्द्रो निर्दिश्यते। वेनः कान्तोऽभीष्टः विनकान्ताविव्यस्माद्धातोरुत्पन्नत्वात्। पृश्निरादित्यः तस्य गर्भभूता आपः। तथा चान्यत्र प्रश्नोत्तराभ्यामयमर्थः श्रूयते "क्वेमा आपो निविशन्ते। यदितो यान्ति सम्प्रति" इति प्रश्नः। "आपः सूर्ये समाहिताः। अभ्राण्यपः प्रपद्यन्ते" इत्युत्तरं। अयं वेनः पृश्निगर्भाः चोदयत् अपो वर्षतीत्यर्थः। कीदृशोऽयं। ज्योतिर्जरायुः विद्युल्लक्षणं तेजो जरायुवद्वेष्टनं यस्यासौ ज्योतिर्जरायुः। कुत्रायं वर्षति। रजसो विमाने। धूलेर्विशेषेण निर्माणं यस्मिन् शुष्के भूप्रदेशे तत्र वर्षति। अपां सूर्ये गर्भभावः कथं सम्पन्न इति चेत्। तत्रोच्यते। विप्रा ऋत्विजः। सूर्यस्यापां च सङ्गमे निमित्तभूते सति इममिन्द्रशिशुं स्तनन्धयं शिशुमिव लालयन्ते मतिभिर्मन्त्रसहिताभिराहुतिभिः रिहन्ति यजन्ति इत्यर्थः। आहुतिर्देवताभिरिमा आपो नीयन्ते एतदेवाभिप्रेत्य श्रूयते "भूमिं पर्जन्या जिन्वन्ति। दिवं जिन्वन्त्यग्नयः" इति। हे शुक्रग्रह दारुपा-

त्रेण गृहीतोऽसि शुक्रपुत्राय शण्डाय त्वां गृह्णामि। एष खरै-कदेशस्ते योनिः स्थानं तादृशस्त्वं यजमानस्य वीरतां कर्मशूर-त्वं पालय। कल्पः "तं प्रत्नथेति मन्थिनं गृहीत्वा सक्तुभिः श्रीणाति "एष ते योनिः प्रजाः पाहीति सादयति" इति। पाठस्तु "तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिष-दꣳ सुवर्विदं प्रतीचीनं वृजिनं दोहसे गिराशुं जयन्तमनुयासु वर्द्धसे। उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि" इति। इन्द्रायाजुहुवुरिति ब्राह्मणवाक्यादयं मन्त्र ऐन्द्रः तमिन्द्रं स्तुम इति शेषः। प्रत्नथेत्यादौ थाप्रत्यय उपमार्थः। प्रत्नाः पुरातनाः भृग्वादयो यथा त्वामस्तुवन् तथा वयमपि त्वां स्तुमः। पूर्वथा पित्रादय इव। विश्वथा अतीताः सर्व्वे यजमाना इव। इमथा वर्तमाना इमे यजमाना इव। कीदृश-मिन्द्रं। ज्येष्ठतातिं स्वार्थे तातिप्रत्ययः। बर्हिषदं यागे सन्निहि-तत्वेन तिष्ठन्तं। सुवर्विदं यजमानाय दातव्यस्वर्गं वेत्तीति सुव-र्वित् तं। हे इन्द्र यस्त्वं प्रतीचीनं प्रतिगमनमस्मात् प्रतिकूलं वृ-जिनं वर्जनीयं आलस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाश-यसि तादृशं त्वां स्तुमः। क्व पुनःस्तुमः। यासु क्रियासु त्वं आशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तरादतिशयेना-पेतं यजमानमनु सोमपानेन स्तुत्या च वर्द्धसे तासु क्रियासु तमिन्द्रं स्तुमः। हे मन्थिग्रह त्वमुपयामगृहीतोऽसि शुक्रपुत्राय मर्कनामाय त्वां गृह्णामि। एषः खरप्रदेशस्तव स्थानं त्वं यज-मानस्य प्रजाः पालय। मन्त्रानपेक्ष्य ग्रहौ विधत्ते "बृहस्पति-

देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन् ब्रह्मण्वन्तो सुरास्ते२ एन्योन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यमेतौ शुक्रामन्थिनावगृह्णन् ततो देवा अभवन् परासुरा यस्यैवंविदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना परास्य भ्रातृव्यो भवति" (सं०६का०।४प्र०।१०अ०) इति। ब्रह्मण्वन्तः पुरोहितानुष्ठितमन्त्रसामर्थ्योपेताः उपामन्त्रयन्त रहस्युपच्छन्दितवन्तः। यद्यप्यन्यत्र शण्डामर्कयोर्यज्ञभागो नास्ति तथाप्यत्राप्यग्निष्टोमे सोऽस्तु तत्रापि ग्रहावेव न तु लेपादिः। अत्र गृह्येतामित्येतावदेव शण्डामर्काभ्यां वृतं, न तु हूयेतामिति। ततो देवा ग्रहणमात्रेण स्वकार्यं साधितवन्तः। अथार्थवादेन ग्रहयोरधस्तात्मग्नानां पांसूनामपध्वंसनं विधातुं विधिमुन्नयति "तौ देवा अपनुद्यात्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहापनुदतः" (सं०६का०।४प्र०।१०अ०) इति। देवाः स्वकार्यसिद्धेरूर्ध्वं तौ शण्डामर्कावपसार्य स्वकीयायेन्द्राय तौ शुक्रामन्थिग्रहौ अजुहवुः तस्माद्ग्रहयोरधो लग्नां धूलिमपध्वंसयन् अन्यत्र समाम्नातमपनुत्ताविति मन्त्रं ब्रूयात्। अमुनेत्यत्र द्वेष्यस्य द्वेष्टुस्य नाम ध्यायेत्। अत्र सूत्रं "तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात् पाꣳसूनपध्वꣳसयतापनुत्तौ शण्डामर्कौ सहामुनेत्यपनुत्तः शण्ड इति वाध्वर्युर्द्वेष्यं मनसा ध्यायन् अपनुत्तोमर्क इति प्रतिप्रस्थाता" इति। अन्य-

चाम्नातेन मन्त्रेण ग्रहहोमस्य विधिमर्थवादेनोन्नयति "स प्रथमः सङ्कृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरत्" (सं०६का०।४प्र०।१०अ०) इति। मन्त्रपाठस्तु "स प्रथमः सङ्कृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मा इन्द्राय सुतमाजुहोमि" इति। स इन्द्रः प्रथमो देवानां मुख्यः सर्व्वाधिपतित्वात् समीचीना कृतिर्निर्माणं यस्यासौ सङ्कृतिः। तादृशो विश्वकर्मनामको देवोऽपि स इन्द्र एव मित्रो वरुणोऽग्निः स एव चिकित्वानभिज्ञः बृहस्पतिरपि स एव तादृशाय इन्द्राय अभिषुतं सोमं सर्वतो जुहोमि। यस्मादिन्द्र एतानि विश्वकर्मत्वादीनि रूपाणि करिक्रत् अत्यर्थं कुर्वन् जगदचरत् तस्मात् तत्प्रतिपादकेनानेनैव मन्त्रेण होमो युज्यते। होमात् पुराग्रहावादायाच्छाद्याध्वर्युप्रतिप्रस्थातारौ प्राङ्मुखौ निर्गच्छेतामिति विधत्ते "असौ वादित्यः शुक्रश्चन्द्रमा मन्थ्यपि गृह्य प्राञ्चौ निष्क्रामतस्तस्मात् प्राञ्चौ यन्तौ न पश्यन्ति" (सं० ६का०।४प्र०।१०अ०) इति। पश्चिमदिश्यस्तं गत्वा पुनरुदयाय प्राङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ द्रष्टुं न केऽपि शक्नुवन्ति। तस्माद्ग्रहयोराच्छादनं युक्तं। होमाय प्रत्यङ्मुखत्वं विधत्ते "प्रत्यञ्चावावृत्य जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति" (सं० ६का०।४प्र०।१०अ०) इति। उदयादूर्द्ध्वं प्रत्यङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ सर्वे पश्यन्ति। अतो ग्रहयोराच्छादनमवनीय प्रत्यङ्मुखत्वेनावृत्तिर्होमार्था युक्ता। उत्तरवेदेर-

भितः परिक्रमणं विधत्ते "चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्व्वतः परिक्रामतो रक्षसामपहत्यै"(सं०६का०।४प्र०।१०अ०)इति। अत्र सूत्रं "उत्तरवेदिं परिक्रामतः सुवीराः प्रजाः प्रजनयन् परीहि शुक्रः शुक्रशोचिषेति दक्षिणेनाध्वर्युः प्रतिपद्यते सुप्रजाः प्रजाः प्रजनयन् परीहि मन्थी मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता" इति। तदेतत् सर्वतः परिक्रमणं रक्षोवधाय सम्पद्यते। अत्र चमसहोमे प्राङ्मुखत्वं ग्रहहोमे प्रत्यङ्मुखत्वञ्च विधत्ते "देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन् ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन् ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान् प्रणुदते तस्मात् पराचीः प्रजाः प्रवीयन्ते प्रतीचीर्जायन्ते" (सं०६का०।४प्र०।१०अ०) इति। अत्र सूत्रं "पुरस्तात् प्रत्यञ्चावध्वर्यू जुहुतः पश्चात् प्राञ्चस्समस्मैश्चमसाध्वर्यवो जुह्वति" इति। वाक्यं तु धिष्ण्यप्रस्तावेऽपि गतं। सूत्रकारेणोदाहृतौ परिक्रमणमन्त्रौ प्रदेशान्तरे समाम्नाताविह व्याचष्टे "शुक्रामन्थिनौ वा अनु प्रजाः प्रजायन्तेऽत्रीश्चाद्याश्च सुवीराः प्रजाः प्रजनयन् परीहि शुक्रः शुक्रशोचिषा सुप्रजाः प्रजाः प्रजनयन् परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीराया अत्रीरेताः सुप्रजाया आद्या" (सं०६का०।४प्र०।१०अ०) इति। अत्रीर्भोक्त्र्य उत्तमजातयो

ब्राह्मणादय आद्या भोग्या नीचजातयोर्भृत्यकर्मकरादयः। मन्त्रार्थस्तु शोभना वीरा उत्तमा यासां ताः सुवीराः। शोभनाः सेवाकुशलाः प्रजाः पुत्रादयो यासां ताः सुप्रजाः। हे शुक्रग्रह त्वं यजमानस्य शोभनभोक्तृयुक्ताः प्रजा उत्पादयन्नुत्तरवेदेर्दक्षिणतः परीहि। हे शुक्रग्रह त्वं शुक्रदेवतासम्बन्धिना तेजसा रक्षसामपघातं कुर्विति शेषः। हे मन्थिग्रह त्वं यजमानस्य शोभनसेवकरूपाः प्रजा उत्पादयन्नुत्तरवेदेरुत्तरतः परीहि। हे मन्थिग्रह त्वं मन्थिदेवतासम्बन्धिना तेजसा रक्षांस्यपजहि एता वै सुवीराया इत्यादिकं मन्त्रव्याख्यानं। वेदनं प्रशंसति "य एवं वेदाऽत्त्यस्य प्रजा जायते नाद्या" (सं०६का०।४प्र०।१०अ०) इति। मन्थिपात्रस्य विकङ्कतवृक्षत्वं सक्तुमेलनञ्च विधत्ते "प्रजापतेरक्ष्यश्वयत् तत् परापतत् तद्विकङ्कतं प्राविशत् तद्विकङ्कते नारमत तद्यवं प्राविशत् तद् यवे रमत तद्यवस्य यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सम्भरति" (सं०६का०।४प्र०।१०अ०) इति। सक्तवो यवपिष्टानि। आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति इति वचनादितरपात्रवन्मन्थिपात्रस्यापि सदःप्रवेशः प्राप्नोति, तन्निषेधं प्रश्नोत्तराभ्यामुन्नयति "ब्रह्मवादिनो वदन्ति कस्मात् सत्यान्मन्थिपात्रꣳ सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद् यदश्नुवीतान्धोऽध्वर्युस्यादार्त्तिमार्च्छेत् तस्मान्नाश्नुते"(सं०६का०।४प्र०।१०अ०) इति। आर्त्तपात्रं रोगयुक्तं चक्षुस्स्वरूपमिदं पात्रं।

अथ मीमांसा। दशमाध्यायस्य पञ्चमपादे चिन्तितं।

"स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववद्भवेत्।
स्थानेनैवं तदग्रत्वात् प्राप्तेः स प्रतिकृष्यताम्" ॥ इति ।

ज्योतिष्टोमे श्रूयते "शुक्राग्रान् गृह्णीयादभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्य्यमाणस्य" इत्यादिः। ऐन्द्रवायवन्यायेन शुक्रादीनां स्वस्थाने ग्रहणमिति प्राप्ते ब्रूमः। ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तं शुक्रादीनान्तु तन्नेति वैषम्यं। तथा सति विधीयमानमग्रत्वं पाठक्रमबाधमन्तरेणानुपपन्नत्वात् प्रतिकृष्यते। तत्रैवान्यच्चिन्तितं।

"स सर्वादाविन्द्रवायवादौ वात्राविशेषतः।
सर्वथा वाश्रयादैन्द्रवायवादौ श्रुतेरपि" ॥ इति।

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः। कुतः। विशेषाश्रवणात्। सामान्यतः श्रुतमग्रत्वमनापेक्षिकत्वात् सर्वादौ मुख्यं। नैतदेवं प्रकृतान् धाराग्रहानाश्रित्य फलाय शुक्राद्यग्रत्वविधानात्। किञ्च "धारयेयुस्तं यं कामाय गृह्णीयुः ऐन्द्रवायवं गृहीत्वा सादयेत्" इति श्रूयते। तत्र काम्यस्य शुक्रादेर्धारणाद्वा अनन्तरमैन्द्रवायवस्य ग्रहणं विवक्षितार्थे लिङ्गं। तस्मादैन्द्रवायवादौ प्रतिकर्षः। तत्रैवान्यच्चिन्तितं।

"नापकर्षोपकर्षो वा सादकस्याश्रुतत्वतः।
न सैवं ग्रहशेषत्वात् तत्राशक्तेर्ग्रहान्तरे" ॥ इति।

सर्वत्र ग्रहो गृहीत्वा साद्यते। तथा सति यत्र काम्यस्य ग्रहस्यापकर्षः तत्र सादनस्यापकर्षो न शङ्कनीयः। कुतः। अश्रुतत्वाच्छुक्राग्रानित्यत्र शब्देन यथा ग्रहस्यापकर्षः श्रूयते न

तथा सादनापकर्षप्रतिपादकः कश्चिच्छब्दोऽस्ति। तस्मान्नापकर्षः। नैतद्युक्तं सादनस्य ग्रहशेषत्वात् तच्च शेषत्वमशक्तेरेवगम्यते। न हि पूर्वं ग्रहमसादयित्वा ग्रहान्तरं गृहीतुं शक्यं। अतोऽत्र ग्रहाणामपकर्षे तच्छेषभूतं सादनमप्यपकृष्यते।

अथ छन्दः। अयं वेन इति त्रिष्टुप्। तं प्रत्नथेति जगती।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके अष्टमनवमानुवाकौ॥ * ॥

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वं। उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥ १ ॥

ये देवास्त्रिचत्वारिंशत्॥ १० ॥

त्रिंशत्त्रयश्च गणिनो रुजन्तो दिवं रुद्राः पृथिवीञ्च सचन्ते। एकादशासो अप्सुपदः सुतं सोमं जुषन्तां सवनाय विश्वे। उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः। त्रिंशद्द्विचत्वारिंशत्॥ ११ ॥

## इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके दशमएकादशानुवाकौ ॥ ० ॥

कल्पः "ये देवा दिवीत्युपरिष्टादुपयामया पुरस्तादुपयामेन वा यजुषा द्वाभ्यां धाराभ्यां स्थाल्यामाग्रयणग्रहं गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा" इति। पाठस्तु "ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वं उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः" इति। अप्सुषदः अबुपलक्षितेऽन्तरिक्षे सीदन्तीत्यप्सुषदः। महिना स्वमहिम्ना तत्र सीदन्ति। हे देवा ये यूयं त्रिषु लोकेषु प्रत्येकमेकादशावस्थितास्ते सर्वे यज्ञमिमं सेवध्वं। हे सोम त्वमुपयामेन स्थालीरूपेण पार्थिवपात्रेण गृहीतोऽसि आग्रयणनामासि। सुष्ठु अग्रं श्रैष्ठ्यं तस्य प्रापकः स्वाग्रयणस्तादृशस्त्वं यज्ञं प्रीणय यजमानञ्च प्रीणय सवनान्याभिमुख्येन पालय। विष्णुना रक्षितस्त्वं यजमानस्य प्रजामिन्द्रियेण सामर्थ्यप्रदानेन पालय। एष खरप्रदेशस्तव स्थानं विश्वेभ्यो देवेभ्योऽत्र त्वां सादयामि। ये देवा आग्रयणोऽसीत्येतौ मन्त्रावापस्तम्बमते विकल्पितौ। बोधायनमते ये देवा इति ग्रहणं आग्रयणोऽसीत्यधिवदेत् ये देवा इत्यस्य स्थाने भ्रातृव्यवतो मन्त्रान्तरमाम्नायते "त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथि-

वीश्च सचन्ते। एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे। उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः" इति। एकादशात्मकास्त्रयो गणा येषां सन्तीति गणिनः। ते च त्रय-स्त्रिंशत्सङ्ख्याका रुजन्तः शत्रून् विनाशयन्तः रुद्राः शत्रुनारीणां रोदयितारः। तन्मध्ये केचन दिवं सचन्ते सेवन्ते केचन पृथिवीं सेवन्ते अवशिष्टास्त्वेकादशसङ्ख्याका अनुपलक्षितेऽन्तरिक्षे सीदन्ति। ते विश्वे सर्व्वे सुतमभिषुतं इमं सोमं सवनाय तृतीयसवने से-वन्ते। मन्त्रान् व्याचिख्यासुराग्रयणस्य ग्रहणं विधत्ते "देवा वै यज्ञे कुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान् ग्रहा-नपश्यन् तानगृह्णत ततो वै तेऽग्रं पर्यायन् यस्यैवंविदुष आग्र-यणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्येति" (मं०६का०।४प्र०। ११अ०) इति। आग्रयणमग्रं प्रथमं येषान्ते आग्रयणाऽग्राः। अत्र सूत्रं "यदि रथन्तरसामा सोमस्यादैन्द्रवायवाग्रान् गृह्णी-याद्यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रान् यद्युभयसामा यथाकामी" इति। माध्यन्दिने सवने पृष्ठ्यस्तो-त्राणां आद्ये स्तोत्रे रथन्तराख्यं साम यस्मिन् सोमयागे सयागो रथन्तरसामा। एवमन्यत्रापि योज्यं। एकस्मिन् भागे रथन्तरं भागान्तरे बृहदित्येवमुभयसामत्वं। अग्रं पर्यायन् अग्र्यं पर्याप्ताः। त्रिꣳशत्त्रयस्त्रेति मन्त्रस्य विषयं दर्शयति "रु-ग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाग्रꣳस समा-

मानां पर्य्येति" (सं०६का०।४प्र०।१०अ०) इति। रुग्णो रुजिधातुः सोऽस्यास्तीति रुग्णवती गणिनो रुजन्त इति रुजिधातुर्मन्त्रे दृश्यते। रुक्का रोगमुत्पाद्य। तयोर्मन्त्रयोर्देवसङ्ख्योक्तिः। तान् सर्वानुद्दिश्य गृहीतुमित्याह "ये देवा दिव्येकादश स्थेत्याहैतावती वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति" (सं०६का०।४प्र०।११अ०) इति। सादनमन्त्रे विश्वेभ्य इत्यभिधानं युक्तमित्याह "एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया" (सं०६का०।४प्र०।११अ०) इति। वाग्विसर्गं विधत्ते "वाग्वै देवेभ्योऽपाक्रामद् यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत साऽमन्यत वागं तर्यति वै मेति साऽऽग्रयणं प्रत्यागच्छत् तदाग्रयणस्याग्रयणत्वं तस्मादाग्रयणे वाग्विसृज्यते यत् तूष्णीं पूर्वे ग्रहा गृह्यन्ते" (सं०६का०।४प्र०।११अ०) इति। केनापि निमित्तेन वाग्देवता यज्ञार्थं स्वकीयं रूपं अप्रकाशमाना देवेभ्योऽपक्रम्य दैवैर्वा गृहीतैस्तूष्णीमेव गृहीतेषु सा वागिदममन्यत एते देवा वरदानादिना मत्वं समादधते। किन्तु मयि निरपेक्षा एव स्वकार्यं कुर्वन्तो मामन्तर्यन्ति परित्यजन्त्येवेति। ततो दैवैरनाहूता सा वागाग्रयणं प्रति स्वयमागच्छत्। तस्मादग्रमभिमुखमयति गच्छति वागित्यग्रायणं तत्र दीर्घव्यत्ययादाग्रयणं नाम सम्पन्नं। यद्यस्मात् पूर्वं तूष्णीं गृहीता वाक् नेदानीमागता तस्मादवचोऽस्मिन् काले वागागमनादाग्रयणे गृहीते वाचं विसृजेत् न तु पूर्वग्रहवदुत्तरग्रहं तूष्णीं गृह्णीयात्। ननु पूर्वग्रहेष्वपि प्रतिग्रहं

मन्त्राणामाम्नातत्वात् कथं तूष्णीं ग्रहणं। एवं तर्हि तूष्णीं-शब्दवाग्विसर्गशब्दाभ्यां उपांशूच्चौ ध्वनी विवक्षेयातां। अत-एवोपानुवाक्यकाण्डे समाम्नायते "यान् प्राचीनमाग्रयणाद्ग्रहान् गृह्णीयात् तानुपांशु गृह्णीयात् यानूर्ध्वांस्तानुपब्दिमतः" इति। ध्वनिद्वयं लौकिकदृष्टान्तेन विशदयति "यथा त्सारीयति स आख इयति नापरात्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं विसृजते" (सं० ६ का० ४ प्र० ११ अ०) इति। त्सारी छद्मगतिर्व्याधः त्सरच्छद्मगताविति धातुः। स व्याधो मनस्यादौ विचार्य पश्चाद् वाणानुपावसृजति मुञ्चति वराहान् गजान् पातयितुं। मार्गे यो गर्त आयामेन खन्यते स आखः समैतावति दूरं आखस्तिष्ठति, अहं त्वीषत् पुरो गत इयति दूरे स्थितो नापरात्स्यामि। वराहादिभिः स्वस्य मारणमेकोऽपराधः स्वात्मानं दृष्ट्वा वराहादेः पलायनम-न्योऽपराधः स्वेन मुक्तस्य वाणस्य स्खलनमपराधान्तरं एतत् सर्वमियति दूरे मम न भविष्यतीति निश्चित्य गतिः तत्र स्थित्वा पश्चादवसरे सति पश्चादुद्भूतो यथा वाणान् मुञ्चति त-थैव तत्राध्वर्युर्गूढध्वनिः कांश्चिद्ग्रहान् गृहीत्वा यज्ञं दृढमवष्टभ्य पश्चाद्ध्वनिं प्रकटीकरोतीत्येतदुपपद्यते। विधत्ते "त्रिर्हिङ्क-रोत्युद्गातृनेव तद्वृणीते" (सं० ६ का० ४ प्र० ११ अ०) इति। हिङ्कारस्य सामसु प्रसिद्धत्वात् सामगानां तेन वरणं युक्तं। हिङ्कारस्य कालं विधत्ते "प्रजापतिर्वा एष यदाग्रयणो यदाग्र-यणं गृहीत्वा हिङ्करोति प्रजापतिरेव तत् प्रजा अभिजिघ्रति

तस्माद्वत्सं जातं गौरभिजिघ्नति"(सं०६का०।४प्र०।११अ०)इति। आग्रयणहिङ्कारयोः पौर्वापर्यं यदस्ति तत् तेन प्रजापतिरेव यजमानस्य प्रजानां मूर्द्धन्याघ्राणं करोति, अतएव पशुष्वप्येतद्दीक्ष्यते। त्रिष्वपि सवनेषु आग्रयणं विधत्ते "आत्मा वा एष यज्ञस्य यदाग्रयणः सवने सवनेऽभिगृह्णात्यात्मन्नेव यज्ञꣳ सन्तनोति" (सं०६का०।४प्र०।११अ०) इति। दशापवित्रस्योपरि सोमरसस्य अवनयनं विधत्ते "उपरिष्टादानयति रेत एव तद्दधाति" इति (सं०६का०।४प्र०।११अ०) दशापवित्रस्याधस्तात् स्रवत्या धारया आनयनं विधत्ते "अधस्तादुपगृह्णाति प्रजनयत्येव तत्" इति (सं०६का०।४प्र०।११अ०) सवनत्रयगमाग्रयणं प्रशंसति "ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती सर्वाणि सवनानि वहतीत्येष वै गायत्रियै वत्सो यदाग्रयणस्तमेव तदभिनिवर्तꣳ सर्वाणि सवनानि वहति तस्माद्वत्समपाकृतं गौरभिनिवर्तते" (सं०६का०।४प्र०।११अ०)इति। अल्पाचरत्वात् कनिष्ठा। प्रातःसवने बहिष्पवमानसूक्तानां उपास्मै गायतेत्यादीनां छन्दो गायत्री। माध्यन्दिनसवने माध्यन्दिनपवमानसूक्तस्य अच्छाते जातमन्धस इत्यस्य गायत्रीतृतीयसवनस्यार्भवपवमानसूक्तस्य स्वादिष्ठयेत्यस्य गायत्री एव मुदाहर्तव्यं। यथा गौः अपाकृतं स्ववत्समभिलक्ष्य तृणादिकमपि परित्यज्य निवर्तते तथा गायत्री स्ववत्समाग्रयणं अभिलक्ष्य पुनः पुनर्निवर्त्य सवनानि निर्वहति। ये देवा दिवि त्रिꣳशत्त्रयस्थेत्येते त्रिष्टुभौ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके दशमैकादशानुवाकौ ॥ * ॥

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ॥ १ ॥

उपयामगृहीतोऽसि द्वाविंशतिः ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

कल्पः "स्थाल्योक्थ्यं गृहीत्वोपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत इति ग्रहणमादनौ" इति। पाठस्तु "उपयामगृहीतोऽसीइन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे" इति। हे सोम उपयामेन स्थाल्या गृहीतोऽसि इन्द्राय त्वां गृह्णामि। कीदृशाय। बृहद्वते बृहत्सामप्रियाय, तत्सामयोऽन्यामृचि "त्वां वृत्रेष्विन्द्रसत्पतिं" इति हि श्रुतं। वयस्वते वयोऽन्नं सोमरूपं तस्मै तत्पानार्थं त्वां प्रार्थय इति शेषः। हे सोम विष्णवे त्वां गृह्णामि। एष खरप्रदेशः तव स्थानं उक्थशस्त्रप्रियायेन्द्राय त्वां खरे सादयामि। मन्त्रव्याख्यानायादावुक्थ्यग्रहणं विधत्ते "इन्द्रो वृत्राय वज्रमुदयच्छत् स वृत्रो वज्रादुद्यतादबिभेत् सोऽब्रवीन्मा

मे प्रहारस्ति वा इदं मयि वीर्यं तत् ते प्रदास्यामीति तस्मा उक्थ्यं प्रायच्छत् तस्मै द्वितीयमुदयच्छत् सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत् ते प्रदास्यामीति तस्मा उक्थ्यमेव प्रायच्छत् तस्मै तृतीयमुदयच्छत्तं विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत् ते प्रदास्यामीति तस्मा उक्थ्यमेव प्रायच्छत् तं निर्मायं भूतमहन् यज्ञो हि तस्य मायासीद्यदुक्थ्यो गृह्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते'' (सं०६का०।५प्र०।१अ०) इति। मा मे प्रहाः मां मा प्रहार्षीः। वीर्यमुक्थ्यरूपं श्रेष्ठं वस्तु उक्थ्यस्थाल्यां मन्त्रेण गृहीतः सोम उक्थ्य इत्यर्थः। तस्य सवनत्रयापेक्षया त्रिःप्रदानं। अग्निष्टोमे तृतीयसवने उक्थ्याभावेऽपि संस्थान्तरेषु विद्यते। अथ वा प्रातःसवन एवोक्थ्यस्थाल्या उक्थ्यपात्रे त्रिर्गृहीतत्वं तदपेक्षया त्रिः प्रदानं। तृतीयपर्याये विष्णुर्जहीत्येवं वदन्निन्द्रमन्वतिष्ठत सहकारी सन्नवस्थित उक्थ्यरूपो यज्ञो वृत्रस्य माया यस्मादुक्थ्यलोभेन मोहित इन्द्रो वृत्रं न जघान त्रिष्वप्युक्थ्येषु दत्तेषु निर्मायं मोहयितुमसमर्थं वृत्रं हतवान् तस्मादिन्द्रवद्वैरिगतमिन्द्रियं सामर्थ्यं विनाशयितुमुक्थ्यं गृह्णीयात्। वृत्रेणेन्द्राय दत्तत्वान्मन्त्रेऽपि इन्द्रायेत्युक्तिर्युक्तेत्याह ''इन्द्राय त्वा बृहद्वते वयस्वत इत्याहेन्द्राय हि स तं प्रायच्छत्'' (सं०६का०।५प्र०। १अ०) इति। विष्णोरपि सहकारित्वेन भागित्वात् तन्मन्त्रोऽपि युक्त इत्याह''तस्मै त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति'' (सं०६का०।५प्र०१अ०) इति।

स्थाल्यां गृहीत्वा सादितस्य सोमस्य होमकाले पुनर्दारुपात्रे त्रि-वारग्रहणं विधत्ते "त्रिर्निगृह्णाति त्रिर्हि मन्त्रं तस्मै प्रायच्छत्" (सं०६का०।५प्र०।१अ०) इति। स वृत्रस्तमुक्थ्यं तस्मै इन्द्राय त्रिः प्रायच्छत्। ततः स्थालीगतं सोमं त्रेधा निष्कृष्य पर्यायत्रयेण गृह्णीयात्। दारुपात्रे गृहीतस्यासादनमन्त्रं स्थाल्याभिमर्शनमन्त्रं चोत्पाद्य व्याचष्टे "एष ते योनिः पुनर्हविरसीत्याह पुनः पुनर्ह्यस्मान्निर्गृह्णाति"(सं०६का०।५प्र०।१अ०)इति। हे दारुपात्रे गृहीत सोम तवैषः खरप्रदेशः स्थानं अनेन मन्त्रेण सादयेत्। हे स्थालीगत सोम त्वं गृहीतशेषोऽपि पुनर्गृह्यमाणत्वाद्धविरेवासि अस्मात् स्थालीगतात् सोमाद् ग्रहीष्यमाणं पर्यायद्वयमपेक्ष्य पुनः पुनरित्युक्तिः। अत्र सूत्रं "उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि देवेभ्यो देवायुवमुक्थेभ्य उक्थायुवमित्युक्थ्यात् तृतीयं गृहीत्वैष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयित्वा पुनर्हविरसीति स्थालीमभिमृशति, एवं विहितावुत्तरौ पर्यायौ ताभ्यां प्रतिप्रस्थाता चरति" इति। उक्थ्यहोमचमसहोमान् विधत्ते "चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यः तस्मादुक्थ्यꣳ हुतꣳ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनुयन्ति तस्मादेको बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते" (सं०६का०।५प्र०।१अ०) इति। चक्षुःस्थानीये उक्थ्ये हुते सति अनन्तरमेवेतरस्थानीयाश्चमसा होतव्याः। आत्मा सर्वावयवसङ्घातरूपः पुरुषः। अवयवेषु मुख्यस्य चक्षुषो दृष्टिः पुरतो मार्गे प्रसरति। ततः सङ्घातरूप आत्माऽनु-

गच्छति। एकं मुख्यं परिवृढं गच्छन्तं बहवो भृत्या अनुगच्छन्ति। एको मुख्यश्चक्षुरिव ज्ञापकाचार्योऽपि बहूनां शिष्याणां मध्ये भद्रः पूज्यो भवति। एको मुख्यः स्वतन्त्रः पुरुषः परतन्त्रा बह्वीर्जाया लभते। एभिर्दृष्टान्तैश्चमसानामुख्यानन्तरहोमो युक्तः। अत्र सूत्रं "ग्रहमध्वर्युरादत्ते चमसाꣳश्चमसाध्वर्यव आश्राव्य प्रत्याश्राविते सम्प्रेष्यति, उक्थशा यज सोमानां, इति वषट्कृतानु वषट्कृते जुह्वति भक्षान् हरन्ति" इति। मुख्यचमसे सम्पातस्यावनयनं विधत्ते "यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्तराहवनीयं च हविर्धानं तिष्ठन्नवनयेदात्मानमेव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नवनयेद्यजमानमेव यज्ञयशसेनार्पयति यदि कामयेत सदस्यान्यज्ञयशसेनार्पयेयमिति सद आलभ्याऽवनयेत् सदस्यानेव यज्ञयशसेनार्पयति" (सं०का०।५प्र०।१अ०) इति। यज्ञयशसं यज्ञफलं। आलभ्य प्रविश्य। अत्र सूत्रं "देवेभ्यस्त्वा देवायुवं पृणज्मि यज्ञस्यायुष इति मुख्ये सम्पातमवनयति यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्युक्तं" इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निं। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः। उपयामगृहीतोऽस्यग्नये त्वा वैश्वान-

रायं ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानाम-च्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय ॥ १ ॥

मूर्द्धानं पञ्चचत्वारिꣳशत् ॥ १३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ ० ॥

कल्पः "मूर्द्धानं दिवो अरतिं पृथिव्या इति स्थाल्या ध्रुवं पूर्णं गृह्णात्येष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्ये सादयेत्" इति। पाठस्तु "मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निं। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः। उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय" इति। अत्र गृहीत्वा पश्चाद्ध्रुवोऽसीत्यादिकं पठेत्। तदुक्तं बोधायनेन "अथैनमभिवदते ध्रुवोऽसीति मूर्द्धानमिति मन्त्रे स्तुम इति पदमध्याहृत्याग्निं वयं स्तुम इति योजनीयं। कीदृशमग्निं। दिवो मूर्द्धानं शिरोवदुन्नते देशे सूर्यरूपेणावस्थाय द्युलोकस्य भासकं। अरतिं पृथिव्या अरतिरुपरतिः तद्रहितं। न हि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते किन्तु दाहपाकप्रकाशैः सर्व्वाननुगृह्णन् सर्वदा वर्त्तते। स चाग्निर्वैश्वानरनामकः। यथा दिवि नाको नामाग्निरित्याम्नातं तथा पृथिव्यां वैश्वानरः। ऋताय जातं यज्ञा-

र्थमाहवनीयादिरूपेणोत्पन्नं। कविं स्वभक्ताननुगृहीतुमभिज्ञं। सम्राजं सम्यग्दीप्यमानं जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यं। आसन् ईदृशस्याग्नेरास्ये होतुं देवाः पात्रं सोमग्रहचमसरूपं आ जनयन्त सर्वत ऐन्द्रवायवादिस्थानेषूत्पादितवन्तः। हे सोम स्थालीरूपेणोपयामेन गृहीतोऽसि वैश्वानरनामकायाग्नये त्वां गृह्णामि। हे ग्रह त्वं ध्रुवोऽसि ध्रुवनामरूपकोऽसि। ध्रुवचितिः स्थिरनिवासः। आविश्वदेवशंसनमवस्थानात् ध्रुवाणामादित्यस्थाल्यादीनां मध्ये ऽतिशयेन ध्रुवस्त्वैव व्याख्यानं अच्युतानां अच्युतचित्तम इति। एषोऽनुपोप्तदेशस्तव स्थानं तत्र वैश्वानरायाग्नये त्वां सादयामि। ध्रुवग्रहं विधत्ते "आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो ग्रहाणां गृह्यते तस्मादायुः प्राणानामुत्तमं" (सं०६का०।५प्र०।२अ०) इति। ऐन्द्रवायवाद्यो यथा यज्ञस्य वागादिप्राणरूपास्तथा ध्रुवोऽप्यायुःस्वरूपः, स च ध्रुवोऽन्तर्यामैन्द्रवायवादीनां धाराग्रहाणामुत्तमश्चरमो यथा भवति तथा गृहीतव्यः। अत एव ध्रुवग्रहप्रस्तावे सूत्रकारेणोक्तं "अत्र धारा विरमति" इति। यस्मादायुःस्थानीयो ध्रुवो ग्रहाणामुत्तमः तस्माद्वागादीनां प्राणानां मध्ये जीवनरूपमायुरुत्तमं। सति हि जीवने प्राणाः शोभन्ते। मन्त्रे मूर्द्धशब्दप्रयोगेण ज्ञातीनां मध्ये यजमानं श्रेष्ठं करोतीत्याह "मूर्द्धानं दिवो अरतिं पृथिव्या इत्याह मूर्द्धानमेवैनꣳ समानानां करोति" (सं०६का०।५प्र०।२अ०) इति। आयुषो वैश्वानराभिमानिदेवत्वादायुःस्थानीयस्य ध्रुवस्य ग्रहणे वैश्वानरशब्दो युक्त

इत्याह "वैश्वानरमृताय जातमग्निमित्याह वैश्वानरꣳ हि देवतयायुः" (सं०६का०।५प्र०।२अ०) इति। अस्यामृच्युपरितने यजुषि च वैश्वानरशब्दप्रयोगो नाभेरूर्ध्वाधोवर्त्तिप्राणसाम्यायेत्याह "उभयतो वैश्वानरो गृह्यते तस्मादुभयतः प्राणा अधस्ताच्चोपरिष्टाच्च" (सं०६का०।५प्र०।२अ०) इति। यथा वाक्चक्षुरादय उपरिभागवर्त्तिनो मूकत्वान्धत्वबधिरत्वादिकृतानन्त्यान् व्यवहारनिरोधान् वारयन्तो देहस्यार्द्धं कृत्यं निर्वहन्ति तथा अधोभागवर्त्ती तु प्राणो मलमूत्रनिरोधं महान्तं निरोधं निवारयन्नर्द्धकृत्यं निर्वहति। तथैवान्ये ग्रहा यज्ञस्यार्धं निर्वहन्ति। ध्रुवस्त्वर्धमिति प्रशंसति "अर्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी ध्रुवस्तस्मादर्ध्यवाङ् प्राणोऽन्येषां प्राणानां" (सं०६का०।५प्र०।२अ०) इति। अर्द्धित्वमिति शेषः। ध्रुवस्येतरविलक्षणं स्थाल्यामादनस्थानं विधत्ते "उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्मादस्थ्नान्याः प्रजाः प्रतितिष्ठन्ति माꣳसेनान्याः" (सं०६का०।५प्र०।२अ०) इति। मृदमुपाप्य खरीकृते प्रदेशे ग्रहान्तरासादनं। केवलभूम्यां ध्रुवस्य सादनं। यस्मादेवं वैलक्षण्यं तस्माल्लोकेऽप्यन्या गवादिरूपाः प्रजा अस्थिवत्कठिनेन खुरेण भूमौ तिष्ठन्ति। अन्यास्तु मनुष्यरूपाः प्रजाः पादतलगतेन मांसेन अवतिष्ठन्ते। भूमौ साद्यमानस्य ध्रुवस्योत्तरहविर्धानसमीपदेशं विधत्ते "असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन् तान् देवा ध्रुवेणादृꣳहन् तद्ध्रुवस्य ध्रुवत्वं यद्ध्रुव उत्तरतः साद्यते धृत्यै" (सं०६का०।५प्र०।२अ०) इति। पर्याचिकीर्षन् पर्या-

कर्त्तुमुत्तरत आक्रष्टुमैच्छन्। ध्रुवस्योत्तरदेशे सादनेन सा पृथिवी धृता भवति। अत्र सूत्रं "उत्तरस्य हविर्धानस्याग्रेणो-पस्तम्भनमनुपोप्ते ध्रुवस्थाल्यौ" इति। ध्रुवेऽवस्थितस्य सोमस्य होतृचमसेऽवनयनं विधत्ते "आयुर्वा एतद्यज्ञस्य यद्ध्रुव आत्मा होता यद्धोतृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्यायुर्दधाति"(सं० ६का०।५प्र०।२अ०) इति। अवनयनस्य कालं विधित्सुर्मता-न्तराण्युपन्यस्यति "पुरस्तादुक्थस्याऽवनीय इत्याहुः पुरस्ताद्धा-युषो भुङ्क्ते मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो भुङ्क्त उत्त-रार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुषो भुङ्क्ते"(सं० ६का०।५प्र०। २अ०) इति। उक्थं शस्त्रं। तच्च त्रेधा विभज्य पूर्वभागे शस्यमाने ऽवनयेत्। एवमितरयोरपि। आयुषः पूर्वभागे बाल्ये बहुकृत्वा भुज्यते। मध्यमे भागे बह्वन्नं भुज्यते। उत्तमे भागे शक्त्यभावेऽपि बहुभोक्तुमिच्छति। इदानीं विधत्ते "वैश्वदेव्यामृचि शस्यमा-नायामवनयति वैश्वदेव्यो वै प्रजाः प्रजास्वेवायुर्दधाति" (सं० ६का०।५प्र०।२अ०) इति। उत नोऽहिर्बुध्न्यः शृणोत्वित्येषा वैश्वदेवी। मूर्द्धानं दिवो अरतिं पृथिव्या इति त्रिष्टुप्।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥ * ॥

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेष-श्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृही-तोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा॥१॥

मधुँस्त्वाँऽग्रत् ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ ० ॥

कल्पः "ऋतुग्रहैः प्रचरतो द्रोणकलशाद् गृह्यन्ते न सादयन्ते पूर्वेषाँ शेषेषूत्तरानभिगृह्णीतः पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातोपयामगृहीतोऽसि मधुश्चेत्येतैः प्रतिमन्त्रँ सँसर्पोऽस्यँहस्पत्यायत्वेति त्रयोदशचतुर्दशौ गृह्येते" इति। मन्त्राणां पाठस्तु "मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि सँसर्पोऽस्यँहस्पत्यायत्वा" इति। अत्र मध्वादिशब्दाः क्रमेण चैत्रादिमासानां वाचकाः। सँसर्पाँहस्पतिशब्दयोरर्थोऽन्यत्र दर्शितः। असङ्क्रान्तावेकवर्षे द्वौ चेत् सँसर्प आदिमः क्षयमासो द्विसङ्क्रान्तः स चाँहस्पति सञ्ज्ञक इति। मन्त्रादावुपयामेति प्रयुञ्जीत। हे सोम त्वमुपयामगृहीतो मधुश्चासि। एवमन्यत्रापि योज्यं। ऋतुग्रहं विधत्ते "यज्ञेन वै देवाः सुवर्गं लोकमायन् ते मन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते संवत्सरेण योपयित्वा सुवर्गं लोकमायन् तमृषय ऋतुग्रहैरेवानुप्राजानन् यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै" (सं० ६का०।५प्र०।३अ०) इति। संवत्सरेण योपयित्वा कालविघ्नेन मोहयित्वा यतो ऋषयो मनुष्येष्वभिज्ञाः। सङ्ख्यां विधत्ते "द्वादश गृह्यन्ते द्वादश मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै"

त्रयोदशचतुर्दशयोरप्येतदुपलक्षणं। अत एव सूत्रकार आह "द्वादश त्रयोदश चतुर्दश वा गृह्यन्ते" इति। आद्यावन्ते च द्वयोर्ग्रहणं विधत्ते "मह प्रथमौ गृह्येते महोत्तमौ तस्माद्द्वौ द्वावृतू" (सं०६का०।५प्र०।३अ०) इति। मधुश्च माधवश्चेत्येतौ प्रथमौ। तपश्च तपस्यश्चेत्येतावुत्तरौ। यस्माद् द्वयोः साहित्यमत्र विहितं तस्माद् द्वौ द्वौ मासौ ऋत्ववयवौ। पात्रस्थमेमं वक्नौ स्रावयितुं विलस्य पार्श्वयोर्द्वे मुखे विधत्ते "उभयतो मुखमृतुपात्रं भवति को हि तद्वेद यत ऋतूनां मुखं" (सं०६का०।५प्र०।३अ०) इति। ऋतूनां मुखं ऋतुधर्मप्रवृत्त्यारम्भो यतो यस्मात् कालादारभ्य भवति तत् को नाम वेद तस्मात् ऋतुपात्रस्य मुखद्वयं कुर्यात्। अध्वर्युप्रतिप्रस्थात्रोः प्रैषमन्त्रावुत्पादयति "ऋतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाह द्विपद एव प्रीणाति" (सं०६का०।५प्र०।३अ०) इति। हे मैत्रावरुण ऋतुना निमित्तेन होतारं प्रेष्य। तमिमं मन्त्रं प्रथमतृतीयपञ्चमेष्वध्वर्युर्ब्रूयात्। द्वितीयचतुर्थषष्ठेषु प्रतिप्रस्थाता ब्रूयात्। एवं षट्कृत्वः तद्वचनं। तेन भवत्यृतूनां प्रीतिः। ऋतुभिः प्रेष्येति सप्तमनवमयोरध्वर्युर्ब्रूयात्। अष्टमदशमयोः प्रतिप्रस्थाता। तेन चतुरावर्त्तनेन पशूनां प्रीतिः। ऋतुना प्रेष्येत्यध्वर्युरेकादशे ब्रूयात्, प्रतिप्रस्थाता द्वादशे। तेन द्विरावर्त्तनेन मनुष्याणां पक्षिणाञ्च प्रीतिः पूर्व्वोक्तामेव षट्चतुर्द्विसङ्ख्यां उपजीव्योपजीवकभावेन प्रशंसति "ऋतुना प्रेष्येति

षट्कृत्व आहर्त्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुपजीवन्ति द्विः पुनर्ऋतुनाह तस्माद्विपादश्चतुष्पदः पशूनुपजीवन्ति'' (सं०६का०।५प्र०।३अ०) इति। गवादयश्चतुष्पादः शीतोष्णादिनृधर्म्मानुपजीवन्ति। मनुष्याश्च द्विपादः पशुगतक्षीरादीनुपजीवन्ति। स्वर्गारोहणसोपानरूपेण पुनः प्रशंसति "ऋतुना प्रेष्येति षट्कृत्व आहर्त्तुभिरिति चतुर्द्धिः पुनर्ऋतुनाहाक्रमणमेव तत् सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै'' (सं०६का०।५प्र०।३अ०) इति। आक्रम्यते प्राप्यते स्वर्गोऽनेन सेतुनेत्याक्रमणः सेतुः। यथा सेतोरधोभागो विशालः ऊर्द्धप्रदेशः सङ्कुचितः तथैवात्र षट्चतुर्द्विसङ्ख्या द्रष्टव्या। सोपानेष्येतत् समानं। अध्वर्युप्रतिप्रस्थात्रोर्युगपद्गमनं निषेधति "नान्योन्यमनुप्रपद्येत यदन्योन्यमनुप्रपद्येतर्त्तुर्ऋतुमनुप्रपद्येतर्त्तवो मोहुकाः स्युः'' (सं०।६का०।५प्र०।३अ०) इति। अध्वर्युप्रतिप्रस्थातृभ्यां प्रथमद्वितीयौ ग्रहौ सहगृहीतौ। ततो हविर्धानान्निष्क्रम्य गत्वाऽऽहवनीये हुत्वा पुनः प्रत्यागत्य हविर्धाने ग्रहान्तरं ग्रहीतव्यं। तत्रैकः पुरतोऽन्यः पृष्ठत इत्येवं युगपन्न गन्तव्यं, किन्तु पर्य्यायेण। ऋतुग्रहे यदि तयोः सहगमनं स्यात् तदानीमेकमृतुमन्योऽनुप्रविशेत्,ततः साङ्कर्य्यात् ऋतवो मोहकेतवो भवेयुः। कालभेदवदुभयोर्मार्गभेदं विधत्ते "प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते, प्रसिद्धं प्रतिप्रस्थातोत्तरेण,तस्मादादित्यः षण्मासो दक्षिणेनेति षडुत्तरेण'' (सं०६का०।५प्र०।३अ०) इति। प्रथमतः सिद्धं प्रसिद्धं आदित आरभ्येत्यर्थः। यस्मादृ-

लिङ्गोर्दक्षिणोत्तरौ द्वौ मार्गौ तस्मादादित्यस्यापि दक्षिणायनोत्तरायणे भवतः। अत्र सूत्रं "ग्रहावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता द्वार्बाहुं निश्रयमाण उपरमत्यथाध्वर्युराश्रावयति आश्रावयास्तु श्रौषट् ऋतुना प्रेष्येति वषट्कृते जुहोति निष्क्रामत्येवं प्रतिप्रस्थाता प्रपद्यते तथाध्वर्युः" इति। यदा हविर्धानात् प्रतिप्रस्थाता निष्क्रामति तदाध्वर्युर्हविर्धानं प्रविशति। एवं व्यत्ययेनोभयोर्गमनं। मधुश्चेत्यादिमन्त्रैरेव द्वादश मासानां प्रीतत्वात् संसर्पमन्त्रस्य निर्विषयत्वमाशङ्क्य व्याचष्टे "उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणाति" (सं०६का०।५प्र०।३अ०) इति। अधिकमासस्त्रयोदशः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः॥ * ॥

इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यं। अस्य पातं धियेषिता। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा॥ १॥ ॥१५॥

ओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वाꣳसो दाशुषः सुतं। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥ १॥

इन्द्राग्नी आ गंतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वाꣳसो दाशुषः सुतम् ॥ विश्वे देवासः … इन्द्राग्नी ओ मासो विꣳशतिर्विꣳशतिः ॥ १६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके पञ्चदशषोडशानुवाकौ ॥ ० ॥

कल्पः "अभचितेन पात्रेणाध्वर्युरैन्द्राग्नं गृह्णाति। इन्द्राग्नी आगतꣳ सुतमिति ग्रहणसादनौ" इति। पाठस्तु "इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यं। अस्य पातं धियेषिता। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा" इति। हे इन्द्राग्नी सुतमभिषुतं सोमं प्रत्यागतं आगच्छतं। कीदृशं सोमं। गीर्भिः स्तुतिभिर्युक्तमिति शेषः। नभो नभस्थितैः स्वर्गनिवासिभिर्देवैर्वरेण्यं प्रार्थनीयं। अस्य सोमस्य सम्बन्धिनं स्वकीयमंशं पातं युवां पिबतं। कीदृशौ युवां। धिया अस्मद्बुध्या इषिता प्रार्थितौ। स्पष्टमन्यत्। कल्पः "वैश्वदेवꣳ शुक्रपात्रेण गृह्णात्योमासश्चर्षणीधृत इति ग्रहणसादनौ" इति। पाठस्तु "ओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वाꣳसो दाशुषः सुतं। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः" इति। हे विश्वे देवाः आगतं आगच्छतं। कीदृशाः। ओमासो रक्षितारः। चर्षणीधृतो मनुष्यपोषकाः। अनिष्टनिवारणं रक्षणं इष्टप्रापणं पोषणं। सुतमभिषुतं दाशुषो दत्तवतो यजमानस्य दाश्वाꣳसः फलं पूर्वं दत्तवन्तः। स्पष्टमन्यत्। मन्त्रानुपेक्ष्य ऐन्द्राग्नयहं विधत्ते "सुवर्गाय वा एष लोकाय गृह्यते यदृतुग्रहा ज्योतिरिन्द्राग्नी

यदैन्द्राग्नमृतुमात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्य लोकस्यानुख्यात्यै" (सं०६का०।५प्र०।४अ०) इति। यदेतदृतुपात्रमध्वर्युहस्ते भक्षणीयेन सोमेनोपेतं तेनैन्द्राग्नं गृह्णीयात्। तथा सति ऋतुग्रहैः प्राप्तः स्वर्गः इन्द्राग्निज्योतिषा प्रकाशितो भवति। बलप्रदत्वेनैन्द्राग्नं प्रशंसति "ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवावरुन्धे" (सं०६का०।५प्र०।४अ०) इति। ग्रहान्तरं विधत्ते "वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः सर्व्वाः प्रजाः प्रत्यङुदेति तस्मात् सर्व्व एव मन्यते मां प्रत्युदगादिति" (सं०६का०।५प्र०।४अ०) इति। शुक्रग्रहस्य यत् पात्रं तेन वैश्वदेवं गृह्णीयात्। वैश्वदेवः सर्व्वाः प्रजाः प्रतिशुक्रग्रहाभिमानिन्या आदित्यः प्रत्यङ्प्रत्येकं अभिमुख उदेति। तदेतत्सर्व्वस्याप्यनुभवसिद्धं। तेजःप्रदत्वेन वैश्वदेवं प्रशंसति "वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति" (सं०६का०।५प्र०।४अ०) इति। इन्द्राग्नी ओमास इत्येते गायत्र्यौ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चदशषोडशाऽनुवाकौ ॥ * ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रं। विश्वासाहमवसे नूतनायोग्रꣳसहोदामिह तꣳ

हुवेम। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १ ॥

मरुत्वन्तꣳ षड्विꣳशतिः ॥ १७ ॥

इन्द्र मरुत्व इह पाहि सोमं यथा शार्य्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्म्मन्नाविवासन्ति कवयः सुयज्ञाः। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १ ॥ १८ ॥

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आ सिञ्चस्व जठरे मध्व ऊर्म्मिं त्वꣳ राजासि प्रदिवः सुतानां। उपयाम गृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १ ॥

इन्द्र मरुत्वो मरुत्वानेकान्नत्रिꣳशदेकान्नत्रिꣳशत् ॥ ॥ १९ ॥

महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वत्सस्य वावृधे। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ १ ॥

महानेकान्नविꣳशतिः ॥ २० ॥

महाꣳ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्र्यग्वावृधे वीर्य्यायोरुः पृथुः सुकृतः

कर्तृभिर्भूत्। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ १ ॥

महान्नृवत् पञ्चिंशतिः ॥ २१ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके सप्तदशाष्टादशैकोनविंशविंशैकविंशानुवाकाः ॥ ०॥

कल्पः "मरुत्वन्तमिति स्वेनर्तुपात्रेणाध्वर्युः पूर्वं मरुत्वतीयं गृह्णाति इन्द्र मरुत्व इति स्वेन प्रतिप्रस्थातोत्तरेणोत्तरं" इति। पाठस्तु "मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रं। विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते" इति। "इन्द्र मरुत्व इह पाहि सोमं यथा शार्य्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते" इति। इहास्मिन् कर्मणि तमिन्द्रमाह्वयाम। कीदृशं। मरुद्गणैरुपेतं जलस्य वर्षितारं कामानां वर्द्धयितारं अकुत्सितारं वृत्रादीनां शत्रूणामतिप्रबलत्वादिविभवं दुष्टानां शासितारं विश्वं पालयितुं सहिष्णुं अनलसमित्यर्थः। अवसे रक्षणाय। नूतनाय उग्रं इदानीन्तनेभ्यो वैरिभ्यो जयमानं रक्षितुं तद्वैरिषूग्रमित्यर्थः। सहोदां बलप्रदं। हे मरु-

इणयुक्तेन्द्र त्वमिहास्मिन् कर्म्मणि सोमं पाहि पिब। यथा शार्य्यातिनामकस्य सम्बन्धिनि कर्म्मण्यभिषुतस्य सोमस्यांशमपिबः तद्वत् शूर तव प्रणीतौ प्रणयनेनानुज्ञया सुयज्ञाः पूर्व्वे कवयः तव शर्म्मणि सुखे निमित्तभूते सति आभिमुख्येन विवासन्ति परिचयन्ति तद्वदयमपि यजमान इत्यर्थः। स्पष्टमन्यत्। कल्पः "अभचितेन पात्रेण अध्वर्य्युस्तृतीयं मरुत्वतीयं गृह्णाति मरुत्वाँ२ इन्द्रेति ग्रहणसादनौ" इति। पाठस्तु "मरुत्वाँ२ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आसिञ्चस्व जठरे मध्व ऊर्म्मिं त्वँ२ राजासि प्रदिवः सुतानां। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते" इति। हे इन्द्र मरुद्भिर्युक्तो वर्षिता च त्वं रणाय क्रीडार्थं सोमं पिब। कीदृशं। अनुष्वधं स्वधाशब्दोऽन्नवाची सवनीयपुरोडाशानाचष्टे, ताननुसृत्य वर्तमानं। किञ्च मदाय हर्षाय मध्वो मधुरस्य पीतस्य सोमस्योर्मिं सारं त्वदीयजठरे आसिञ्चस्व स्थापय। त्वं प्रदिवः प्राप्तस्य स्वर्गस्य सुतानां सोमानाञ्च राजासि अत एव प्रार्थ्यसे। स्पष्टमन्यत्। कल्पः "माहेन्द्रँ२ शुक्रपात्रेण गृह्णाति महाँ२ इन्द्रो य ओजसेति ग्रहणसादनौ" इति। पाठस्तु "महाँ२ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ२ इव। स्तोमैर्वत्सस्य वावृधे। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा" इति। वृष्टिमान् पर्जन्य इव य इन्द्र ओजसा बलेन महान् स इन्द्रः वत्सस्थानीयस्य यजमानस्य स्तोमैः स्तोत्रैर्वावृधे वर्धतां। स्पष्टमन्यत्। अस्मिन्नेव माहेन्द्रग्रहे विकल्पितं मन्त्रान्तरमेवमाम्नायते "म-

हा२ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा" इति। अयं महानिन्द्रो नृवन्मनुष्यवदा चर्षणिप्रा चर्षणीर्मनुष्यान् प्रति तदभीष्टभोगैः पूरयतीति चर्षणिप्रा। यथा राजामात्यादिर्मनुष्यः सेवकानभीष्टभोगैः पूरयति तद्वत्। अपि चायं द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोः बर्हा द्विर्यस्येति द्विबर्हा। सहोभिर्बलैरमिनः अमितः उपमानरहितः। अस्मद्रियक् अस्मत्सदृशः वावृधे वृद्धिं प्राप्तः। यथा वयमस्यानुग्रहाद्वृद्धिं प्राप्ताः तथैवायमप्यस्मदीयैर्हविर्भिर्विवृद्धः। एतदेव प्रपञ्च्यते। वीर्याय सामर्थ्यसिद्धये कर्तृभिर्यजमानैरयं सुकृतो भूत् सुष्ठुवर्द्धितोऽभूत्। कीदृशी तस्याभिवृद्धिः। उरुः यशसा विपुलः। पृथुः बलेन विस्तृतः। स्पष्टमन्यत्। मन्त्रा उपेचिताः। त्रीन्मरुत्वतीयग्रहान् विधत्ते "इन्द्रो मरुद्भिः सांविद्येन माध्यन्दिने सवने वृत्रमहन्यन् माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते" (सं०६कां०।५प्र०।५अ०) इति। सांविद्यं सम्प्रतिपत्तिरैकमत्यं। तेषां ग्रहाणां पात्रं विधत्ते "तस्य वृत्रं जघ्नुष ऋतवो मुह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात् ततो वै स ऋतून् प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै" (सं६कां०।५प्र०।५अ०) इति। ग्रहत्रयं वज्ररूपेण प्रशंसति "वज्रं वा एतं यजमानो भ्रातृव्याय प्रहरति यन्मरुत्वतीया उदेव प्रथमेन यच्छति प्रहरति द्वितीयेन स्तृणुते

तृतीयेन" (सं०६कां०।५प्र०।५अ०) इति। स्तृणुते हिनस्ति। धनुःसम्पादनरूपेण पुनः प्रशंसति "आयुधं वा एतद्यजमानः संस्कुरुते यन्महत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः" (सं०६का०।५प्र०।५अ०) इति। सम्पादितस्य धनुषः प्रयोगरूपेण पुनः प्रशंसति "प्रत्येव प्रथमेन धत्ते विसृजति द्वितीयेन विध्यति तृतीयेन" (सं०६का०।५प्र०।५अ०) इति। प्रतिधत्त एव वाणं सन्दधात्येव। प्राणादिप्रीणयितृत्वरूपेण पुनः प्रशंसां कर्तुमाख्यायिकामाह "इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः स हरितो भवत स एतान् महत्वतीयानात्मस्परणानपश्यत् तानगृह्णीत प्राणमेव प्रथमेनास्पृणुताऽपानं द्वितीयेनात्मानं तृतीयेन" (सं०६का०।५प्र०।५अ०) इति। प्रबलेन वैरिकुलेन सह विरोधरूपमपराधं कृतवानस्मीति भीत्या परां परावतमत्यन्तदूरं पलाय्य स हरितो विवर्णोऽभवत्। आत्मस्परणान् स्वस्य भीतिनिवारणेन प्रीणयितृन् प्रति जग्राह प्राणापानक्षेत्रज्ञानां प्रीतिरभूत्। इदानीं प्रशंसति "आत्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्महत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनात्मानं तृतीयेन" (सं०६का०।५प्र०।५अ०) इति। अथ माहेन्द्रग्रहं विधत्ते "इन्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वं स एतं माहेन्द्रमुद्धारमुदहरत वृत्रं हत्वान्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि" (सं६का०।

५प्र०।५अ०) इति। उभियते ग्टह्यत इत्युद्धारो ग्रहः तमुद्हरत अग्टह्णात्। वृत्रहननेनोद्धारेणैवायमन्यासु देवतासु मध्येऽधिको ऽभवत्। माहेन्द्रस्य पात्रं विधत्ते "शुक्रपात्रेण ग्टह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण ग्टह्णाति यजमान एव तेजो दधाति"(सं०६का०।५प्र०।५अ०) मरुत्वन्तमिन्द्रमरुत्वान्मरुत्वो महाꣳ इन्द्रो नृवदित्येतास्त्रिष्टुभः। महाꣳ इन्द्रो य ओजसेति गायत्री।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तदशाष्टादशैकोनविंशविंशैकविंशानुवाकाः॥१७॥१८॥१९॥२०॥२१॥

कदाच न स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा। कदाच न प्रयुच्छस्युभे निपासि जन्मनी। तुरीयादित्यसवनं त इन्द्रियमातस्थावमृतं दिवि। यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवो वित्तरासत्। विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि॥१॥

वः सप्तविꣳशतिश्च ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ ० ॥

कल्पः "आदित्यपात्रेण य आदित्यस्थाल्यां द्विदेवत्यग्रहसंपातास्तेभ्यः सोमं गृह्णाति कदाच न स्तरीरसीति कदाच न प्रयुच्छसीति शृतातङ्क्यं दधि यज्ञो देवानामिति पुनः सोमं गृहीत्वा विवस्व आदित्येति तस्मिन् ग्रावाणमुपाꣳशुसवनमवधाय तेनैनं मेलयित्वा या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृता तङ्क्येन दध्ना पयसा वा वृष्टिकामस्य श्रीत्वा ग्रावाणमुद्गृह्णाति यद्युद्गृहीतस्य ताजक् विन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुको न सादयति" इति। प्रथममन्त्रपाठस्तु "कदाच न स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते। उपयामगृहीतोस्यादित्येभ्यस्त्वा" इति। हे इन्द्र त्वं कदाचिदपि स्तरीः हिंसको न भवसि, किन्तु दाशुषे हविर्दत्तवते यजमानाय फलप्रदानार्थं सश्चसि गच्छसि। कुत्र। उपोपेन्नु यजमानस्यात्यन्तसमीप एव। हे मघवन् भूय इन्नु पुनरेव च देवस्य तव दानं देयं हविः पृच्यते सम्बध्यते यजमानेन हविर्दीयत इत्यर्थः। स्पष्टमन्यत्। उत्तरमन्त्रस्तु "कदाच न प्रयुच्छस्युभे निपासि जन्मनी। तुरीयादित्यसवनं त इन्द्रियमातस्थावमृतं दिवि" इति। प्रशब्दो निषेधार्थः। युच्छधातुः प्रमादार्थः। हे इन्द्र कदाचिदपि न प्रमाद्यसि किन्तु

वर्तमानमागामि चेत्युभे यजमानस्य जन्मनी निपामितरां पालयसि। तृतीयमित्यस्मिन्नर्थे वर्णव्यत्ययेन तुरीयशब्दः प्रयुक्तः। हे आदित्य तृतीयसवनं ते त्वदीयं तस्मिन् सवने इन्द्रियाभिवृद्धिकारणं अमृतसमानं दधि दिवि द्युलोकसमाने हविर्धाने आभिमुख्येन स्थितं। उत्तरमन्त्रस्तु "यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आवोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवो वित्तरासत्" इति। अयं यज्ञपुरुषो देवानां सुम्नं सुखं प्रत्येति जानात्युत्पादयतीत्यर्थः। हे आदित्या अस्मान् मृडयन्तः सुखयन्तो भवथ। युष्माकं सुमतिः अनुग्रहबुद्धिरर्वाचीनेष्वस्मासु प्रवृत्ता सती आववृत्यात् आवर्ततां या सुमतिरंहोश्चिदस्मदीयपापात् व्यावर्तत पापं विनाशयतीत्यर्थः सा सुमतिः वरिवो वित्तरासत् अतिशयेन परिचर्याभिज्ञाभवत्। उत्तरमन्त्रस्तु "विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारः" इति। हे विवस्वः विशिष्टनिवास आदित्य विवस्वन्नामक एषः तृतीयस्तव सोमपीथः पातव्यः सोमस्तेन सोमदर्शनेन मन्दस्व हृष्टो भव, तेन सोमपानेन तृप्तो भव, तव तर्पयितारो वयमपि तृप्ता भूयास्म। उत्तरमन्त्रस्तु "या दिव्या वृष्टिस्तया त्वा श्रीणामि" इति। हे सोम दिव्यवृष्टिहेतुना दध्ना त्वां मिश्रयामि। अत्रादित्यग्रहं विधातुमाख्यायिकामाह "अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् तस्या उच्छेषणमददुस्तत् प्राश्नात् सा रेतो धत्त तस्यै चत्वार आदित्या अजायन्त"(सं० ६ का०।

५प्र०।५अ०) इति। साध्येभ्यः साध्यनामकेभ्यः। आधानप्रकरणोक्तविधानेन सम्पादितो ब्रह्मौदनः। उच्छेषणं हुतशिष्टं। पुत्रचतुष्टयेनाप्यनिवृत्ते कामे पुनः प्रयुक्तवतीत्याह "सा द्वितीयमपचत् सा मन्यतोच्छेषणान् म इमे ऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साग्रे प्राश्नात् सा रेतो धत्त तस्यै वृद्धमाण्डमजायत" (सं०६का०।५प्र०।६अ०) इति। इमे ऽज्ञत चत्वारोऽजायन्त अत्यन्तधनिकपुत्रोत्पत्त्यपेक्षया। होमात् प्रागेव प्राशनेनैतापराधेन तस्याऽऽण्डं गर्भस्थानं वृद्धं गर्भशून्यमभवत्। वृद्धिनिवारणाय पुनः प्रयुक्तवतीत्याह "साऽऽदित्येभ्य एव तृतीयमपचद्भोगाय म इदꣳ श्रान्तमस्त्विति तेऽब्रुवन् वरं वृणामहै योऽतो जायाता अस्माकꣳ स एकोऽसद्योऽस्य प्रजाया-मृद्ध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्यो जायत तस्य वा इयं प्रजा यन्मनुष्यास्तास्वेक एवर्द्धो यो यजते स देवानां भोगाय भवति" (सं०६का०।५प्र०।६अ०) इति। इदमाण्डं श्रान्तं गर्भाभावेन पुरा सन्तप्तं आसीत्। इदानीं मम गर्भधारणेन अदितेर्भोगाय अस्त्वित्युक्त्वा ब्रह्मौदनमादित्येभ्योऽजुहोत्। ततः आण्डाद्यो जायते सोऽस्माकं मध्ये एक आदित्योऽस्तु अस्यादित्यस्य सम्बन्धिन्यां प्रजायां यः समृद्धः सो ऽस्माकं भोगाय भवत्विति वरः। तत आण्डाद्विवस्वान्नामक आदित्य उत्पन्नः। ये मनुष्याः तेऽप्यादित्यस्य प्रजाः वृष्टिद्वारेणोत्पादकत्वात्। तासु प्रजासु यो यजते स एव समृद्धत्वाद्देवानां भोगाय भवति। इत्यमाख्यायिकया ग्रहं देवतां निरूप्य ग्रह-

णायादानं निरूपयितुमाख्यायिकान्तरमाह "देवा वै यज्ञा-द्रुद्रमन्तराऽऽयन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान् प्राप-द्यन्त तान्न प्रतिप्रायच्छन् तस्मादपि वध्यं प्रपन्नं न प्रतिप्रय-च्छन्ति" (सं० ६का०।५प्र०।६अ०) इति। देवा यज्ञं कुर्वन्त-स्तस्मिन् यज्ञे रुद्रं विस्मृतवन्तः। स च रुद्र आदित्याननुप्राप्य अबाधत। तेन बाधिता आदित्या ऐन्द्रवायवादिग्रहान् शरणं प्रपन्नाः। ते च ग्रहदेवतास्तानादित्यान् रुद्राय नैव प्रत्यर्पितवन्तः। तस्माल्लोके परैर्बध्योऽपि चोरादिर्यदि शरणं प्राप्नुयात् तदा तमपरेभ्यो नैव प्रत्यर्पयन्ति। आदित्यग्रहं विधत्ते "तस्माद्द्विदे-वत्येभ्य आदित्यो निर्गृह्यते" (सं०६का०।५प्र०।६अ०) इति। यस्मादादित्या द्विदेवत्यग्रहान् प्रपन्नास्तस्माद् द्विदेवत्यग्रहेभ्यो निषिच्य आदित्यग्रहं गृह्णीयात्। आदित्यानां हुतशेषेण ब्रह्मौदनेनोत्पन्नत्वात् तेषां द्विदेवत्यशेषो युक्त इत्याह "यदुच्छे-षणादजायन्त तस्मादुच्छेषणाद्गृह्यते" (सं० ६का०।५प्र०।६अ०) इति। ग्रहणे कदाचनेत्यादिमन्त्रान् विनियुङ्क्ते "तिसृभिरृ-ग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्बं गर्भो जरायु तदेव तन्मिथुनं" (सं०६का०।५प्र०।६अ०) इति। मातापितृ-रूपं मिथुनं पुत्रेण सह तदेकं त्रयात्मकं। गर्भवेष्टनोदकमुल्बं तद्वेष्टनं पट्टसदृशं जरायुनामकं। तदुभयत उभयरूपं मिथुनं गर्भेण सह त्रयात्मकं, तेन सदृशमिदमृक्त्रयात्मकं। अस्मिन् ग्रहे दधिमेलनं विधत्ते "पशवो वा एते यदादित्य ऊर्ग्दधि दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति" (सं० ६का०।

५ प्र०।६ अ०) इति। आदित्यस्य वृष्टिद्वारा पशूपकारित्वात् पशुत्वं, दध्नो भोज्यत्वात् तद्रूपत्वं। तेन दध्ना सोमं मध्ये मेलयेत्। प्रथममन्त्रेण महत् सोमं गृहीत्वा तृतीयमन्त्रेण पुनर्ग्रहीष्यमाणे मध्यममन्त्रेण दधि प्रक्षिपेदित्यर्थः। दध्नः किञ्चिद्गुणं विधत्ते "शृतातङ्क्येन मेध्यत्वाय तस्मादामा पक्वं दुहे"(सं० ६ का०। ५ प्र०।६ अ०) इति। "शीते बुध्नमातनक्ति" इति वचनात् सान्नाय्यभाण्डे क्षीरे सम्यक् स्थिते सति पश्चादातञ्चनीयं। इह तु उष्ण एव क्षीरे यदातञ्चने न निष्पन्नं दधि तेन मेलनीयं। यस्मादत्रोष्णं क्षीरं तस्माल्लोकेऽपि आमा पाकरहिता गौः पक्वं धारोष्णरूपं क्षीरं दुहे दुग्धे प्रयच्छति। ग्रहस्याच्छादनं विधत्ते "पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाति (सं० ६ का०।५ प्र०।६ अ०) इति। अतः पशून् निरुध्य यजमानार्थमेव तान् गृहीतवान् भवति। अत्र सूत्रं "दर्भैं हस्तेन वा पिधायोत्तिष्ठति" इति। तदेवादित्यग्रहपरिश्रयणमनूद्य प्रशंसति "पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधाति" (सं० ६ का०।५ प्र०।६ अ०) इति। अनेन ग्रहरूपाणां पशूनां घातकाद्रुद्राद्व्यवधानं भवति। मन्त्रगतमादित्यपदं ग्रावपरतया व्याचष्टे "एष वै विवस्वानादित्यो यदुपांशुसवनः स एतमेव सोमपीथं परिश्रय आतृतीयसवनाद्विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवादित्यꣳ सोमपीथेन समर्धयति" (सं० ६ का०।५ प्र०। ६ अ०) इति। विवस्वान्नामकस्यादित्यस्य ग्रावाभिमानित्वा-

ग्रावणस्तद्रूपत्वं। स च ग्रावा एतमेवादित्यग्रहगतं सोमं पातुं तृतीयसवनसमाप्तिपर्यन्तं परितः शेते अतो ग्रावविषयत्वं मन्त्रस्य युक्तं। ग्राग्यदधिश्रपणं समन्त्रकं विधत्ते "या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयाद्वृष्टिमेवावरुन्धे यदि ताजक् प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवकर्षुकः" (सं०६का०।५प्र०।६अ०) इति। अस्यार्थः पूर्व्वमेव सूत्रे स्पष्टमुदाहृतः। ग्रहान्तरवत् सादनादिप्रसक्तौ प्रतिषेधति "न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्यात् तस्मान्नान्वीक्ष्यः" (सं०६का०।५प्र०।६अ०) इति। एष ते योनिरिति मन्त्रस्यानाम्नातत्वान्नात्र गृहीतस्य सादनं सिद्धं। किन्तु तथैव प्रचारः। असन्नाद्गर्भाशयव्यतिरिक्तस्थाने पतितात्। यथा ग्रहान्तरं वषट्कारानुवषट्कारयोर्भिन्नं हूयते। नात्र तथा। किन्तु सकृदेव अनुवषट्कारे तु प्रजा अनुलक्ष्य रुद्रं क्रूरं प्रेरयेत्। अन्वीक्षणेऽध्वयुरन्धोऽभवेत्। इत आरभ्य छन्दो लक्षणग्रन्थादुन्नेतव्यः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः॥ * ॥

वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वाम-

भाजः स्याम। उपयामगृहीतोऽसि देवाय त्वा सवित्रे॥
॥ १ ॥

वामं चतुर्विंशतिः ॥ २३ ॥

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि-
पाहि नो गयं। हिरण्यजिह्वः सुविताय नव्यसे रक्षामा-
किर्नो अघशंस ईशत। उपयामगृहीतोऽसि देवाय
त्वा सवित्रे ॥ १ ॥

अदब्धेभिस्त्रयोविंशतिः ॥ २४ ॥

हिरण्यपाणिमूतये सवितारमुपह्वये। स चेत्ता दे-
वता पदं। उपयामगृहीतोऽसि देवाय त्वा सवित्रे॥१॥

हिरण्यपाणिं चतुर्दश ॥ २५ ॥

सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनि-
र्विश्वेभ्यस्त्वा देवेभ्यः ॥ १ ॥

सुशर्मा द्वादश ॥ २६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपा-
ठके त्रयोविंश चतुर्विंश पञ्चविंश षड्विंशानुवाकाः॥

कल्पः "वाममद्य सवितरित्यन्तर्यामपात्रेण सावित्रमाग्रय-
णाद्गृहीत्वा न सादयति" इति। पाठस्तु "वाममद्य सवितर्वाममु
श्वो दिवे दिवे वाममस्मभ्यं सावीः। वामस्य हि क्षयस्य देव भू-

रेरया धिया वामभाजः स्याम। उपयामगृहीतोऽसि देवाय त्वा सवित्रे" इति। हे सवितः अद्यास्मभ्यं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः। श्वोऽपि वामं सावीः। तत ऊर्ध्वदिने वामं सावीः। हे देव वामस्य वननीयस्य भूरेर्विस्तीर्णस्य चयस्य स्वर्गनिवासस्य इच्छया अनया श्रद्धायुक्तया बुध्या वामभाजो वननीयकर्मानुष्ठानवन्तः स्याम। स्पष्टमन्यत्। अत्रैव विकल्पितो द्वितीयो मन्त्र एवमाम्नायते "अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयं। हिरण्यजिह्वः सुविताय नव्यसे रक्षामाकिर्नो अघशꣳस ईशत। उपयामगृहीतोऽसि देवाय त्वा सवित्रे" इति। हे सवितस्त्वं अदब्धेभिरहिंसितैः पायुभिः पालकैः शिवेभिर्मङ्गलैः अनुग्रहविशेषैः नोऽस्माकं गयं गृहं परिपाहि सर्वतो रक्ष। हिरण्यजिह्वः हिता रमणीया च जिह्वा यस्य सः नोऽस्माकं हितं प्रियं च वदतीत्यर्थः। तादृशस्त्वं सुविताय सुष्टुगमनाय स्वर्गप्राप्तये नव्यसे नूतनाय तदिदं कर्म रक्ष। नोऽस्माकं अघशंसः पापापवादनिन्दको भवान् माकिरीशत शक्तो मा भूत्। तृतीयो मन्त्रो विकल्पित एवमाम्नायते" हिरण्यपाणिमूतये सवितारमुपह्वये। स चेता देवता पदं। उपयामगृहीतोऽसि देवाय त्वा सवित्रे" इति। अस्मभ्यं दातुं हिरण्यं पाणौ यस्य स हिरण्यपाणिः तादृशं सवितारं उपगम्य ह्वये आह्वयामि। किमर्थं। ऊतये रक्षणाय। सविता देवता रूपःपदमस्यद्योग्यं स्थानं चेता ज्ञाता। कल्पः "एतेनैव सशेषेण वैश्वदेवपूतभृतो गृह्णात्युपयामगृहीतोऽसि

सुशर्म्माऽसीति ग्रहणसादनौ" इति। पाठस्तु "सुशर्मासि सुप्रतिष्ठानो बृहदुचे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः" इति। हे वैश्वदेव ग्रहशोभनं शर्म सुखं यस्य तव स त्वं सुशर्मासि। सुष्ठुप्रतिष्ठानं पात्रे स्थितिर्यस्यासौ सुप्रतिष्ठानोऽसि उचे शस्त्रे शस्यमानाय तुभ्यं बृहन्नमोऽस्तु। स्पष्टमन्यत्। सावित्रग्रहं विधत्ते "अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय" (सं०६का०।५प्र०।७अ०) इति। आग्रयणग्रहस्य कर्मनिष्पत्तिद्वारेण प्रजापालकत्वात् प्रजापतित्वात् आग्रयणाद्ग्रहणं प्रजोत्पत्तये भवति। सादनादिकं पूर्व्ववन्निषेधति "न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानुवषट्करोति यदनु वषट् कुर्याद्रुद्रं प्रजा अन्ववसृजेत्" (सं०६का०।५प्र०।७अ०) इति। विहितं सावित्रग्रहं प्रशंसति "एष वै गायत्रो देवानां यत् सवितैष गायत्रियै लोके गृह्यते यदाग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनं योनेर्निर्गृह्णाति" (सं०६का०।५प्र०।७अ०) इति। तत् सवितुर्वरेण्यमित्याम्नातत्वाद्देवानां मध्ये सविता गायत्रीसम्बद्धः। आग्रयणस्य गायत्र्याः स्थाने प्रातःसवने गृह्यते। अनेन सम्बन्धेनाग्रयणः सावित्रस्य स्वकीयो योनिः। सावित्रस्य तृतीयसवनसम्बन्धं विधत्ते" विश्वेदेवास्तृतीयꣳ सवनं नोदयच्छन् ते सवितारं प्रातःसवनभागꣳ सन्तं तृतीयसवनमभिपर्यणयन् ततो वै ते तृतीयꣳ सवनमुदयच्छन् यत्तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै" (सं०६का०।५प्र०।७अ०) इति। विश्व-

देवास्तु स्वकीयं तृतीयसवनं सोदयच्छन् उद्वोढुं नाशक्नुवन्। प्रातःसवने भागः सवितुर्युक्तः तस्य गायत्रत्वात्। तादृशमपि सहकारित्वेन समानीय तृतीयसवनमुदवहन्। अतोऽत्र सावित्रो युक्तः। वैश्वदेवग्रहं विधत्ते "सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत् सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्रजनयति" (सं० ६ का०।५ प्र०।७ अ०) इति। यद्यपि पूर्वमन्तर्यामपात्रं तथापि इदानीं सवितृपात्रं सम्पन्नं। कलशात् द्रोणकलशात्। प्रजानां विश्वैर्देवैः पाल्यत्वेन वैश्वदेवत्वं। सर्वदेवसाधारणसोमाधारत्वात् कलशस्य वैश्वदेवत्वं। सावित्रशेषे सोमे वैश्वदेवं विधत्ते "सोमे सोममभिगृह्णाति रेत एव तद्दधाति" (सं० ६ का०।५ प्र०।७ अ०) इति। अत एव मन्त्रे सुप्रतिष्ठामित्येतदुपपन्नमित्याह "सुशर्मासि सुप्रतिष्ठान इत्याह सोमे हि सोममभिगृह्णाति प्रतिष्ठित्यै" (सं० ६ का०।५ प्र०।७ अ०) इति। मन्त्रपदानां कञ्चिद्विशेषं दर्शयति "एतस्मिन्वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्मासि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति" (सं० ६ का०।५ प्र०।७ अ०) इति। अपि वैतस्मिन्नेव वैश्वदेवग्रहे मन्त्रपदैर्मनुष्यादीनां सूचितत्वात् सर्वार्थमिदं ग्रहणं। तत्र सुशर्माशब्देन समीचीनसुखार्थिनो मनुष्याः सूचिताः। बृहच्छब्देनाधिकतममहिमोपेता देवाः। नमः-

शब्देन नमस्कारप्रियाः पितरः। मादनमन्त्रे विश्वेभ्य इत्येतत् सर्व्वार्थत्वादुक्तमित्याह "एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः" (सं० ६ का०।५ प्र०।७ अ०) इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके त्रयोविंशचतुर्विंशपञ्चविंशषड्विंशान्ताश्चतुराऽनुवाकाः ॥ * ॥

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥ १ ॥

बृहस्पतिः पञ्चदश ॥ २७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके सप्तविंशोऽनुवाकः ॥ ० ॥

कल्पः "उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इत्युपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहीत्वा न सादयत्यग्ना३इ पत्नीवा३ इति वषट्कृते जुहोति नानुवषट्करोत्यपि वोपांशु वषट्कुर्यात्" इति। पाठस्तु "बृहस्पतिसुतस्य इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इति। हे इन्दो सोम तव सम्बन्धिनं ग्रहं गृह्णामि। कीदृशं। पात्नीवद्देवताकं। कीदृशस्य तव। इन्द्रियावतः वीर्यवतः। बृहस्पतिर्यजमानः, बृहतो यज्ञस्य परिपालनात् तेन सुतस्याभिषुतस्य।

हे पत्नीवन्नग्ने त्वष्ट्रा देवेन सजूः सह सोमं पिब स्वाहा हुतमिदमस्तु। पात्नीवतग्रहस्य पात्रं विधत्ते "प्राणो वा एष यदुपाꣳशुर्यदुपाꣳशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानुप्रयन्ति प्राणमनूद्यन्ति" (सं०६का०।५प्र०।८अ०) इति। उपाꣳशोः प्राणत्वं पूर्वमुक्तं। वाचस्पतये पवस्वेत्यनेन गृहीतः प्रथमो ग्रहः। बृहस्पतिसुतस्येति गृह्यमाणश्चोत्तमो ग्रहो यद्यपि दधिग्रहः पूर्व्वभावी तथापि नासौ सोमग्रहः अदाभ्याꣳशू सोमग्रहावपि न तौ नित्यौ, तस्मान्नित्येषु सोमग्रहेषूपाꣳशुरेव प्रथमः। हारियोजनस्य पश्चाद्भावित्वेऽप्यग्निष्टोम*साम्नि समाप्ते सति यज्ञशेषत्वेनानुष्ठानं। तस्मादग्निष्टोमापेक्षया†पात्नीवतस्योत्तमत्वं। तयोः प्रथमोत्तमयोरुपाꣳशुपात्रेण ग्रहणं कुर्यात्। तथा सति प्राणमेवानुसृत्य प्रयन्ति प्रारभन्ते उद्यन्ति समापयन्ति। पात्नीवतग्रहं विधत्ते "प्रजापतिर्वा एष यदाग्रयणः प्राण उपाꣳशुः पत्नीः प्रजाः प्रजनयन्ति यदुपाꣳशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति प्रजानां प्रजननाय तस्मात् प्राणं प्रजा अनुप्रजायन्ते" (सं०६का०।५प्र०।८अ०) इति। पत्नीरिति प्रथमा। प्राणमनु प्राणयुक्ताः प्रजाः उत्पद्यन्ते। विहितं ग्रहं प्रशंसति "देवा वा इत इतः पत्नीः सुवर्गं लोकमजिगाꣳसन्ते सुवर्गं लोकं न प्राजानन् त एतं पात्नीवतमपश्यन् तमगृह्णत ततो वै ते सुवर्गं लोकं प्राजानन् यत् पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै"(सं०६का०।

---

* अग्निष्टोम इति तै० पा०।

† अग्निष्टोमापेक्षया इति तै० पा०।

५प्र०।८अ०) इति। पत्नीरित इतः। पात्नीवतग्रहमपेक्ष्य अन्य-
स्मादुहादित्येतत् ग्रहो गृह्यते। एतद्ग्रहे घृतमेलनं विधत्ते
"स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं वज्रं कृत्वाऽघ्नन् तं
निरिन्द्रियं भूतमगृह्णन् तस्मात् स्त्रियो निरिन्द्रिया अदाया-
दीरपि पापात् पुᳪस उपस्तितरं वदन्ति यद्घृतेन पात्नीवतᳪ
श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णाति" (सं०६का०।५प्र०।
८अ०) इति। नातिष्ठत स्त्रीदेवताकत्वमसहमानः स्वात्मानं
न प्रकाशितवान्। अघ्नन् अताडयन् निरिन्द्रियं भूतं निर्वीर्य्यं
जातं यस्मात् स्त्रीदेवताभ्यो गृह्यमाणः सोमो निःसामर्थ्यः त-
स्माल्लोके स्त्रियः सामर्थ्यरहिता अपत्येषु दायभाजो न भवन्ति।
पापात् पतितादपि पुंसोऽपि उपस्तितरं चीणतरं स्त्रीस्वरूपं
वदन्ति। आम्नातस्य बृहस्पतिसुतस्येति मन्त्रस्य शेषं पूरयित्वा
व्याचष्टे "उपयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमां
प्रजा अनुप्रजायन्ते" (सं०६का०।५प्र०।८अ०) इति। उपेताः
प्रजाः *यमयति उत्पादनधारणादिना व्यवस्थापयति इत्यु-
पयामो भूभागविशेषः। बृहस्पतिशब्दस्यैव प्रयोगेऽभिप्राय-
माह "बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानां बृहस्प-
तिर्ब्रह्मणैवास्मै प्रजाः प्रजनयति" (सं०६का०।५प्र०।८अ०)
इति। इन्दुशब्दो द्रवत्वसाम्येन रेत उपलक्षयतीत्याह "इन्दो
इत्याह रेतो वा इन्दू रेत एव तद्दधाति" (सं०६का०।५प्र०।
८अ०) इति। इन्द्रियशब्देन तत्कार्यभूताः प्रजा उपलक्ष्यन्त

* यच्छति इति का० पा०।

इत्याह "इन्द्रियावत इत्याह प्रजा वा इन्द्रियं प्रजा एवास्मै प्रजनयति" (सं०६का०।५प्र०।८अ०) इति। अग्निशब्दपत्नीवच्छब्दयोरभिप्रायं दर्शयति "अग्ना३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय" (सं०६का०।५प्र०।८अ०) इति। त्वष्टृशब्दप्रयोजनमाह "सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति" (सं०६का०।५प्र०।८अ०) इति। पात्नीवतग्रहस्य होममन्त्रे त्वष्टुः परामर्शो न युक्त इति शङ्कां वारयति "देवा वै त्वष्टारमजिघाꣳसन् सपत्नीः प्रापद्यत तं न प्रतिप्रायच्छन् तस्मादपि बध्यं प्रपन्नं न प्रतिप्रयच्छन्ति तस्मात् पात्नीवते त्वष्ट्रेऽपि गृह्यते" (सं०६का०।५प्र०।८अ०) इति। यस्मात् पत्नीः शरणं गतः तस्मात् त्वष्टा पत्नीरनुभागी भवति। सादनस्य प्रसक्तौ तद्वारयति "न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते" (सं०६का०।५प्र०।८अ०) इति। अनुवषट्कारे तु उपांशुत्वगुणं विधत्ते "नानु वषट्करोति यदनु वषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानु वषट्कुर्यादशान्तमग्नीत्सोमं भक्षयेदुपाꣳश्वनु वषट्करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीत्सोमं भक्षयति" (सं०६का०।५प्र०।८अ०) इति। अन्ववसृजेत् अनुप्राप्य सृष्टिं वारयेत् अशान्तमनिष्टकरं। अग्नीन्नेष्ट्रध्वर्यूणां प्रैषमन्त्रा उत्पादयतीति "अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियां" (सं०६का०।५प्र०।८अ०) इति। हे आग्नीध्र नेष्टुः समीपमागत्योपविश। हे नेष्टः पत्नीमुदानय

पत्नीमुत्थाप्येह आनय अनेन प्रैषद्वयेन रेतः प्रजोत्पादनसामर्थ्यं स्थापितं भवति। नेष्टृकारयितृकं उद्गातृकर्तृकं पत्नीविषयकं दर्शनं विधत्ते "उद्गात्रा सङ्ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननाय" (सं० ६ का०।५ प्र०।८ अ०) इति। पत्नीकर्तृकं स्वगुह्ये पन्नेजनीमध्यगतस्य जलस्य प्रवर्त्तनं विधत्ते "अप उपप्रवर्त्तयति रेत एव तत् सिञ्चति" (सं० ६ का०।५ प्र०।८ अ०) इति। प्रवर्त्तनाय तज्जलप्रक्षेपस्य स्थानं विधत्ते "ऊरुणोपप्रवर्तयत्यूरुणा हि रेतः सिच्यते" (सं० ६ का०।५ प्र०।८ अ०) इति। ऊरुप्रदेशे स्रावितं जलं गुह्यपर्यन्तं प्रवर्त्तते। लोकेऽपि ऊरुसहितेन प्रजननेन रेतः सिच्यते। ऊरुप्रदेशे वस्त्रापनयनं विधत्ते "नग्नं कृत्योरुमुपप्रवर्त्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनीभवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्रजायन्ते" (सं० ६ का०।५ प्र०।८ अ०) इति।

अथ मीमांसा। तृतीयाध्यायस्य द्वितीयपादे चिन्तितं।

"द्विदेवशेष आदित्यस्थाल्यामाग्रयणाभिधा।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति॥
तद्भक्षणे द्विदेवाः किं साद्धं पात्नीवतेन ते।
उपलक्ष्या न वा पूर्व्वन्यायेनास्तूपलक्षणं॥
अन्य आग्रयणात् पात्नीवतो नेतस्य विद्यते।
आकाङ्क्षा पूर्व्वदेवेषु पत्नीवानेव लक्ष्यते"॥ इति।

ऐन्द्रवायवादयो द्विदेवत्याः। तेषां शेष आदित्यस्थालीमागच्छति। पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति।

तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते। तस्य पात्नीवतस्य भक्षणे इन्द्रवाय्वादय उपलक्षणीयाः। पूर्व्वाधिकरणे यथा मित्रावरुणादिभिस्सहेन्द्र उपलक्षितस्तद्वदिति प्राप्ते ब्रूमः। "यदुपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति" इत्याग्रयणपात्रस्यापादनत्वश्रवणात् ततो निःसृतस्य सोमरसस्य तत्सम्बन्धोऽपैते सति पश्चात् पत्नीवद्देवतायै ग्रहणं भवति। तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्व्वदेवेष्वाकाङ्क्षा नास्ति। पूर्व्वाधिकरणोक्तस्तु पुनरभ्युन्नीतः सोम ऐन्द्रशेषेण संसृष्टः। तस्य संसृष्टस्य भक्षणे मैत्रावरुणादीनामिव इन्द्रस्यापि सम्बन्धो नापैतीति वैषम्यं। तस्मात् पात्नीवतभक्षणे इन्द्रवाय्वादयो नोपलक्षणीयाः। तत्रैवान्यच्चिन्तितं।

"सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा।
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लक्ष्यते॥
सहत्वमात्रं त्वष्टुस्यान्नपातृत्वमशब्दनात्।
चोदनायामभावाच्च न देवोऽतो न लक्ष्यते"॥ इति।

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाप्युपलक्षणीयः। कुतः। त्वष्टुरपि तद्देवत्वात्। तच्च होममन्त्रादवगतं "अग्नाइ३ पत्नीवा३ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इत्यस्मिन् मन्त्रे पात्नीवतमग्निं प्लुतान्तेन पदेन सम्बोध्य त्वष्ट्रा देवेन सह पिबेत्यभिधानात् पातृत्वेन पत्नीवत इव त्वष्टुस्तद्देवत्वं। ततः पत्नीवत्त्वष्टृपीतस्येत्युपलक्षणमिति प्राप्ते ब्रूमः। पानकाले सहावस्थानमात्रं त्वष्टुः सजूरित्यनेन पदेन प्रतीयते न तु पातृत्वं,

असम्बोधितस्य त्वष्टुः पिबेत्यनेन शब्देन सामानाधिकरण्याभावात्। न च पात्नसहभावमात्रेण पातृत्वं, "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यत्र पुत्राणां वोढृत्वादर्शनात्। अास्तां मन्त्रो विधिबलात् त्वष्टुर्दैवत्वमिति चेत्। न। पात्नीवतमाग्रयणाद् गृह्णाति इत्यत्र त्वष्टुरप्रतीतेः। तस्माददेवतात्वात् त्वष्टा नोपलक्षणीयः*। तत्रैवान्यच्चिन्तितं।

"पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयत्यमी।
लक्ष्या न वा याज्ययोक्तिर्दैवत्वादुपलक्षणं॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना।
अतोऽग्निरेव देवत्वान्नान्येषामुपलक्षणं"॥ इति।

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं सम्बोध्य पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान् मादयेत्यभिधीयते पत्नीवन्स्त्रिशतं त्रिंशश्च देवान् अनुष्वधमावहमादयस्वेति मन्त्रे अनुष्वधं अनुप्रधानं। अत्र हूयमानेन सोमरसेन मादनीयत्वा त्रयस्त्रिंशतां तद्देवत्वं अतस्तेऽपि तद्ग्रहणे लक्षणीया इति चेत्। न। यजमानेन मादनीयस्याग्निरेव तद्देवत्वात् त्रयस्त्रिंशद्देवास्तु वह्निनाम्ना सिद्धा इति न तेषामत्र देवत्वं। तस्मान्नोपलक्षणं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुः संहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तविंशोऽनुवाकः॥ *॥

---

* अष्टमपङ्क्तौ तत्रैवान्यच्चिन्तितमित्यादि एकोनविंशतिपङ्क्त्यन्तं या मीमांसा लिखिता सा काशीस्थपुस्तके नास्ति विचार्यमाणे सति ग्रन्थः समाचीनतया संलग्न इति कृत्वा पूर्वोक्ताधिका मीमांसा संस्थापिता इति॥

हरिरसि हारियोजनो हर्य्योः स्थाता वज्रस्य भर्त्ता पृश्नेः प्रेता तस्य ते देव सोमेऽष्टयजुषः स्तुतस्तोमस्य श-स्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि हरीस्थहर्य्योर्धानाः सह सोमा इन्द्राय स्वाहा॥ १ ॥

हरिः पञ्चविंशतिः ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ ० ॥

कल्पः "परिधिषु प्रहृतेषून्नेता हारियोजनं गृह्णात्युपयामगृहीतोऽसि हरिरसीति द्रोणकलशेन सर्व्वमाग्रयणं गृहीत्वा न सादयति बह्वीभिर्धानाभिः श्रीत्वा हरीस्थहर्य्योर्धाना इति वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं" इति। पाठस्तु "हरिरसि हारियोजनो हर्य्योः स्थाता वज्रस्य भर्त्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि हरीस्थहर्य्योर्धानाः सह सोमा इन्द्राय स्वाहा" इति। हे सोम त्वं हरिरसि हरितवर्णोऽसि। हरितमश्वं रथे युनक्तीति हरियोजन इन्द्रः तस्य सम्बन्धी हारियोजनः इन्द्रदेवताक इत्यर्थः। हर्य्योरश्वयोः स्थाता हरिभ्यां अश्वाभ्यां युक्ते रथे तिष्ठतीत्यर्थः। यद्यपीन्द्र एव रथे तिष्ठति तथापि तदीयत्वात् सोमोऽपि तिष्ठतीत्युपचर्य्यते। इन्द्रेण पेयत्वादिन्द्राभेदेन वज्रस्य पोषकः। पृश्निरन्नं तस्य प्रेता यागसाधनद्वारेण

प्रेरयिता। हे सोमदेव तस्य ते तादृशस्य तव सम्बन्धिनं ग्रहं गृह्णामि। कीदृशं। हरिवन्तं इन्द्रदेवताकं। कीदृशस्य तस्य। इष्टयजुषः इष्टं यज्ञसाधनत्वेन प्रयुक्तं ग्रहणसादनादिमन्त्ररूपं यजुर्यस्य सोऽयमिष्टयजुः। स्तुताः त्रिवृत्पञ्चदशसप्तदशैकविंश-नामकाः स्तोमा यस्यासो स्तुतस्तोमः। शस्तानि उक्थप्रउगा-ज्यनिष्केवल्यमरुत्वतीयवैश्वदेवाग्निमारुतनामकानि शस्त्राणि य-स्यासो शस्तोक्थः। भृष्टास्तण्डुला धानाः। हे धानाः यूयं ह-र्योरिन्द्ररथवाहकाश्वयोः सम्बन्धित्वेन हरीर्हरिशब्दार्थेन रूढा स्थ। सोमेन मिश्रितत्वात् सहसोमाः स्थ। तादृशमिदं हविरि-न्द्राय स्वाहा हुतमस्तु। हारियोजनग्रहविधिमर्थवादेनोन्न-यति "इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदैाब्जत् स द्रोणक-लशोऽभवत् तस्मात् सोमः समस्रवत् स हारियोजनोऽभवत्" (सं०६का०।५प्र०।८अ०) इति। उदैाब्जत् उत्तानमभवत्। यस्माद्वृत्रशिरसो निष्पन्नात् द्रोणकलशात् स्रुतः सोमरसो हारियोजनोऽभवत् तस्मात् द्रोणकलशेन हारियोजनं गृह्णी-यात्। धानामेलनं विधत्ते "तं व्यचिकित्सज्जुहवानी३ मा-हैाषा३मिति सोऽमन्यत यद्धोष्याम्यामꣳ होष्यामि यन्न हो-ष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत होतुꣳ सोऽग्निर-ब्रवीन्न मय्यामꣳ होष्यसीति तं धानाभिरश्रीणात् तꣳ शृतं भूतमजुहोद्यद्धानाभिर्हारियोजनꣳ श्रीणाति शृतत्वाय शृतमे-वैनं भूतं जुहोति" (सं०६का०।५प्र०।८अ०) इति। तं हारि-योजनग्रहं प्रति आमसपक्वं यज्ञवेशसं यज्ञविघातकं अध्रियत।

स इन्द्रस्तं ग्रहं होतुं निश्चयमकरोत् न होष्यसि मा हौषीः शृतं भूतं पक्वं जातं। धानानां बाहुल्यं विधत्ते "बह्वीभिः श्रीणात्येतावतीरेवास्यामुष्मिन् लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिः श्रीणीयात्" (सं०६का०।५प्र०।८अ०) इति। सङ्ख्यया यावत्यो धानास्तावत्यो यजमानस्य स्वर्गे कामधेनवो भवन्ति। किञ्च हारियोजनीर्धाना इन्द्रस्य कामधेनवः। पृश्नय अल्पतनवः। सवनीयस्य पशोः परिधिषु प्रहृतेषु हारियोजनकाल इत्येतद्विधत्ते "छन्दःकामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीन् जुहुयादन्तराधानाभ्यां घासं प्रयच्छेत् प्रहृत्य परिधीन् जुहोति निराधानाभ्यामेव घासं प्रयच्छति" (सं०६का०।५प्र०।८अ०) इति। छन्दःकामवेदौ इन्द्रस्याश्वौ, तावप्यत्र सोमं पिबतः, अत एव हर्य्योर्धाना इत्युक्तं। सवनीयपश्वङ्गभूता ये परिधयो ऽग्निं परित आवृत्य तिष्ठन्ति ते तयोरश्वयोराधानं। आधीयते मुखे प्रक्षिप्यतेऽश्वं नियन्तुमित्याधानं खलीनं। मुखस्यान्तस्थितमाधानं ययोरश्वयोस्ताभ्यामन्तराधानाभ्यां परिधिप्रहरणादूर्द्ध्वं होमे निराधानत्वात् सुखेन घासोऽत्तुं शक्यते। नात्राध्वर्य्योर्होमः किन्तून्नेतुरित्यमुमर्थं विधत्ते "उन्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्य्युः स्वगाकृतो यदध्वर्य्युर्जुहुयाद्यथा विमुक्तं पुनर्युनक्ति तादृगेव तत्" (सं०६का०।५प्र०।८अ०) इति। एतस्मिन् काले अध्वर्य्युर्यस्मात् स्वगाकृतः स्वाधीनगतिः कृतः

प्रधानग्रहाणां समाप्तत्वेन पारतन्त्र्याभावात् तस्मादयं गतसारकृप इव। तथा सत्यध्वर्य्योर्हामे मुक्तस्य बलीवर्दस्य श्रान्तस्य पुनः शकटे योग इव भवति। गृहीतस्य हारियोजनस्य होमात् पूर्व्वं शिरसि धारणं विधत्ते "शीर्षन्नधिनिधाय जुहोति शीर्षतो हि स समभवत्" (सं० ६का०।५प्र०।८अ०) इति। अत्र सूत्रं "बर्हीभिर्धानाभिः श्रीत्वा शीर्षन्नधिनिधायोपनिष्क्रम्य" इति। होमकालेऽप्याश्रावणदेशादीषत्पुरतो चलनं कृत्वा होतव्यमिति विधत्ते "विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृध्यै" (सं० ६का०।५प्र०।८अ०) इति। भक्षणकाले हारियोजनधानानां मानसं चर्वणं विधत्ते "पशवो वै हारियोजनीर्यत् सम्भिन्द्यादल्पा एनं पशवो भुञ्जन्त उपतिष्ठेरन् यन्न सम्भिन्द्याद्बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन् मनसा स बाधत उभयं करोति बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते"(सं० ६ का०। ५प्र०।८अ०) इति। पशुप्राप्तिहेतुत्वात् धानाः पशवः सम्भिन्द्याद्दन्तैः खण्डयेत्। तथा सति कतिचिदेव पशव एनं यजमानं चीरदानादिभिः पालयन्तः प्राप्नुयुः, असम्भेदे बहवः प्राप्नुवन्तोऽपि चीरादिभिर्न पालयन्ति। मानसचर्वणे तु सम्भेदनमसम्भेदनञ्चेत्युभयस्य कृतत्वात् पशूनां नाल्पत्वं नापि चीरादिराहित्यञ्च। उन्नेतृहस्तगतं हुतशेषं सर्व्वं भक्षयितुमुन्नेतुरनुज्ञामपेक्षेरन्निति विधत्ते "उन्नेतर्य्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तमेवावरुन्धते" (सं०६का०।५प्र०।८अ०) इति। सर्वभक्षितावशेषाणां द्रोणकलशगतसोमानां निनयनं

विधत्ते "उत्तरवेद्यां निवपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून् प्रतिष्ठापयन्ति"(सं०६का०।५प्र०।८अ०) इति। ग्रहहोमे परिसमाप्ते सति ग्रहान् प्रशंसति "ग्रहान् वा अनुप्रजाः पशवः प्रजायन्ते" (सं०६का०।५प्र०।१०अ०) इति। अत एव विभज्य स्पष्टयति "उपांश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गावः" (सं०६का०।५प्र०।१०अ०) इति। आदित्यग्रहस्य गवाञ्च सादृश्यप्रदर्शनेन ग्रहमनु गवां जन्मोपपादयति "आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठा" (सं० ६का०।५प्र०।१०अ०) इति। कदाचनस्तरीरसीत्यादिका ऋचो भूयिष्ठाः। उपांशुग्रहमनुजातानां ग्रहेण सह त्रित्वसाम्यं दर्शयति "यत् त्रिरुपांशुꣳ हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयति" (सं०६का०।५प्र०।१०अ०) इति। द्वौ वा त्रीन् वा न तु त्रिभ्योऽधिकमपत्यं सा सहजनयति। यस्मादन्तर्यामग्रहे सङ्कोचकसङ्ख्याविशेषो न श्रुतः तस्मात् तमनु जायमानानामवीनां भूयिष्ठत्वं युगपद्युक्त*मित्याह "अथावयो भूयसीः" (सं०६का०।५प्र०।१०अ०) इति। अथ कथञ्चिदाग्रयणात् सोमः क्षीयेत तदा द्रोणकलशात् तद्ग्रहणं विधत्ते "पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत् कलशाद् गृह्णीयाद्यथा पिता पुत्रं क्षित उपधावति तादृगेव तत्"(सं० ६का०।५प्र०।१०अ०) इति। प्रथमोत्पन्नत्वादाग्रयणः पिता

* युगपद्वृत्तं का० पा०।

पश्चाद्भावितया कलशः पुत्रः।चितः पिता चीणवृत्तिः जीवनार्थं उपधावति उपसर्पति पुत्रं। कलशे सोमचये वैपरीत्यं विधत्ते "यत्कलश उपदस्येदाग्रयणाद् गृह्णीयाद्यथा पुत्रः पितरं चित उपधावति तादृगेव तत्" (सं०६का०।५प्र०१०अ०) इति। कलशन्यायं ग्रहेऽपि दर्शयति "आत्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद् गृह्णीयादात्मन एवाधियज्ञं निष्करोति" (सं०६का०।५प्र०।१०अ०) इति। यज्ञमध्यवर्त्तित्वादाग्रयणो यज्ञस्यात्मा। दृष्टान्तत्वेन कलशस्य पुनरुपादानं नष्टं यज्ञमनेन ग्रहणेनात्मन उपरि पुनः सन्दधाति। अथ स्थाल्या होमसाधनत्वाभावेन तान्निन्दन्निव होमसाधनं दारुपात्रं प्रशंसति "अविज्ञातो वा एष गृह्यते यदाग्रयणःस्थाल्या गृह्णाति वायव्येन जुहोति तस्माद्गर्भेणाविज्ञातेन ब्रह्महा" (सं०६का०।५प्र०।१०अ०) इति। आ वायो भूषेत्यादिग्रहणमन्त्रेषु यथा देवता स्वनामविशेषेण विज्ञायते न तथा ये देवा दिव्येकादश स्थेत्यत्र नामविशेषश्रुतिः। तस्मादविज्ञात आग्रयणः स्थाल्या मृण्मय्या गृह्णात्येव, न तु जुहोति, वायव्येन तु दारुपात्रेण जुहोति। यस्माद् ये देवा इति मन्त्रोक्तान् अविज्ञातनामकान् त्रयस्त्रिंशतो देवानुद्दिश्य स्थाल्यां गृहीतः सोमो ग्रहणमात्रेण तद्देवता तृप्तावपि होमाभावात् परित्यक्त इव। तस्माल्लोकेऽप्यविज्ञातेन गर्भेण ब्रह्महा भवति। प्रोषिते भर्त्तरि जारजन्यो गर्भो भर्त्तारं प्रत्यविज्ञातस्तेन गर्भेणोत्पन्नं ब्रह्म जहाति परित्यजतीति ब्रह्महा। अविज्ञातयोर्गर्भाग्रयणयोः

परित्यागस्तुल्यः। तस्य स्थालीगतं सोमं पुनर्दारुमयेनान्तर्यामपात्रेण सावित्र्यर्थं गृहीत्वा जुहोति। ततो दारुपात्रं प्रशस्तं। प्रकारान्तरेण दारुपात्राणि प्रशंसति "अवभृथमवयन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात् स्त्रियं जातां परास्यन्त्युत्पुमाꣳसꣳ हरन्ति" (सं०६का०।५प्र०।१०अ०) इति। यदा अवभृथं गच्छन्ति तदानीमाग्रयणोक्थ्यध्रुवादित्यस्थालीस्ततो वेद्यामेव परास्यन्ति परित्यजन्ति वायव्यानि तु दारुपात्राण्युद्धरन्ति अवभृददेशे नयन्ति। तस्मात् स्थालीवल्लोकेऽपि स्त्रियं दुहितरं विवाहेन वरकुले परित्यजन्ति पुमाꣳसन्तु वायव्यवदुद्धरन्ति सम्यक् पोषयन्ति। पुरोरुचग्रहणं सादनञ्च क्रमेण प्रशंसति "यत् पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राह तादृगेव तद्यत् सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तत्" (सं०६का०।५प्र०।१०अ०) इति। उपयामगृहीतोऽसीत्येतस्मात् पूर्वं पठ्यमानत्वादा वायो भूषेत्यादिका पुरोरुक्। वस्यसे वसुमत्तमाय राजामात्यादिकाय यथा लोके धनिकायोपानयमाहृत्य एतदेव ममेत्युक्ता पुरतो निधाय गच्छन्ति तथा पुरोरुगादित्रयं द्रष्टव्यं। यजुःसामनी निन्दन्निव पुरोरुचं प्रशंसति "यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद् यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै" (सं०६का०।५प्र०।१०अ०) इति। यज्ञसम्बन्धि यदङ्गं यजुःसामभ्यां क्रियते

तच्छिथिलमिव। वेदेषु सर्व्वत्र विश्रामाय तदेतदृचाभ्युक्तमित्यृच एवोदाहरणात्। उपयामगृहीतोऽस्यन्तर्यच्छ्मघवन्नित्यादिमन्त्रैर्गृह्यमाणाः पुरस्तादुपयामाः। आ वायो भूषेत्यादिभिस्तूपरिष्टादुपयामाः। तत्र यजुषो दार्ढ्यार्थमुपयामपूर्व्वत्वं। ऋचस्तु स्वयमेव दृढत्वान्न तत्पूर्व्वत्वं। तदुभयं यज्ञस्य धृत्यै भवति। सोमपात्राणि प्रशंसितुं द्वेधा विभजति "प्रान्यानि पात्राणि युज्यन्ते नान्यान्" (सं०६का०।५प्र०।११अ०) इति। कानिचित्पात्राणि प्रकर्षेण युज्यन्तेऽनुष्ठीयन्ते पुनरावर्त्त्यन्त इत्यर्थः। यथा उपांश्वन्तर्य्यामपात्रयोः प्रातःसवने प्रयुक्तयोः पुनस्तृतीयसवनेऽपि प्रयोगः "यदुपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति। अन्तर्य्यामपात्रेण सावित्रमाग्रयणाद् गृह्णाति" इत्याम्नातत्वात्। अन्यानि तु नावर्त्त्यन्ते किन्तु सकृदेवानुष्ठीयन्ते। तद्यथा। द्विदेवत्यदधिग्रहादीनि तेषु सकृदनुष्ठितेषु स्वर्गजयः*। आवृत्तेस्त्वेतल्लोकजय इति प्रशंसति "यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभिजयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभिजयति पुनः पुनरिव ह्ययं लोकः" (सं०६का०।५प्र०।११अ०) इति। पराचीनान्यनिवृत्तानि तानि स्वर्गः पराङिवानावृत्त इव स्वर्गे स्थितस्यापि पुनर्जन्मान्तरेऽपि स्वर्गः प्राप्तुं उद्योगासम्भवात्। मनुष्यलोके स्थितस्य तु पुनरेतदर्थमुद्यमोऽस्तीति तस्य पौनःपुन्यं। प्रकारान्तरेण प्रशंसति "प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि

* तेषां सकृदनुष्ठानात् का० पा०।

प्रयुज्यन्ते तान्यन्वोषधयः पराभवन्ति यानि पुनः प्रयुज्यन्ते तान्यन्वोषधयः पुनराभवन्ति" (सं०६का०।५प्र०।११अ०) इति। फलपाके विनाशः पराभवः। संवत्सरान्ते तदुत्पत्तिः पुनराभवनं। प्रकारान्तरेण प्रशंसति "प्रान्यानि पात्राणि प्रयुज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमपयन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति" (सं०६का०।५प्र०।११अ०) इति। आरण्या व्याघ्रादयो ऽरण्यमेवोपयन्ति न कदाचिदपि ग्रामं। ग्राम्यास्तु गवादयस्तृणमत्तुमरण्ये गत्वा पुनर्ग्रामं प्रत्यागच्छन्त्येव। शस्त्रं प्रशंसति "यो वै ग्रहाणां निदानं वेद निदानवान् भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपाꣳशु शꣳसति तदुपाꣳश्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान् भवति" (सं०६का०।५प्र०।११अ०) इति। आज्यमित्युक्थं। आज्यप्रउगादिनामकं शस्त्रं प्रशंसाद्वारा ग्रहानुष्ठानप्रयोजकत्वाद् ग्रहाणां निदानं मूलकारणं। तदेतद्यो वेद स निदानवान् चिरजीविभिर्मातापितृस्वामिभिः संयुक्तो भवति। शस्त्रेष्वपि यदुपाꣳशु शस्यते तद्द्वयोर्ग्रहयोर्निदानं। यदुच्चैस्तदितरेषां सर्वेषां। इत्येवं विशेषं जानतोऽपि तदेव फलं। स्थालीवायव्यरूपं द्वन्द्वं प्रशंसति "यो वै ग्रहाणां मिथुनं वेद प्रप्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनं य एवं वेद प्रप्रजया पशुभिर्मिथुनैर्जायते" (सं०६का०।५प्र०।११अ०) इति। आग्रय-

णोक्थ्यादिग्रहाः स्त्रीरूपाभिर्मृण्मयस्थालीभिर्गृह्यन्ते, उपांश्वन्तर्यामादिग्रहास्तु पुरुषरूपैर्दारुमयैर्वायव्यैः। वेदने तु मनुष्यमिथुनैः पशुमिथुनैश्च प्रजायते युक्तो भवति। य एवं वेदेति पुनरभिधानमुपसंहारार्थं। अथ सवनीयपुरोडाशान् विधत्ते "इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ् व्यार्च्छत् स आत्मन्नारमणं नाविन्दत् स एताननुसवनं पुरोडाशानपश्यत् तान्निरवपत् तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयादात्मन्नेवारमणं कुरुते नैनꣳ सोमोऽतिपवते" (सं० ६का०।५प्र०।११अ०) इति। इन्द्रेण विश्वरूपाभिधेयत्वष्टुः पुत्रे हते सति कुपितस्त्वष्टा विनेन्द्रं सोमयागं कर्तुं प्रवृत्तः तदानीमिन्द्रोऽभीषहा बलादेवाऽपिबत्। स इन्द्रः सहसा पीतस्य सोमस्य उदरमध्य इतस्ततो विधावनाद् व्यार्छत् विविधामार्तिं प्राप्नोत्। तेनार्त्तः स इन्द्रः स्वात्मनि आरमणं सुखं नालभत। ततः त्रिष्वपि सवनेषु सवनीयपुरोडाशैः सुखं प्राप्तवान्। तस्मात् पुरोडाशान् निरुप्य तच्छेषभक्षणेन सुखं भवति। सोमश्चैनं नातिपवते नेतस्ततः सञ्चारेण बाधते। तेषु सवनीयपुरोडाशेषु पञ्चद्रव्यविधिमर्थवादेनान्नयति "ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वं" (सं० ६का०।५प्र०।११अ०) इति। पञ्चाक्षरा पङ्क्तिरित्याम्नातत्वात् पञ्चसङ्ख्यायोगेन पाङ्क्तत्वं वक्तव्यं। ऋचो यजुषो वा नास्ति काचिन्नियता पञ्चसङ्ख्या। न च मा भूत्

पाङ्क्तत्वमिति वाच्यं, पाङ्क्तो यज्ञ इति सर्वत्रोद्घोषणात्। अतः किं पाङ्क्तत्वमिति प्रश्नः। धानादिद्रव्येषु नियतया पञ्चसङ्ख्यया पाङ्क्तत्वमित्युत्तरं। भृष्टा यवाः धानाः। आज्यसंयुक्ताः सक्तवः करम्भः। व्रीहिजन्या लाजाः परिवापाः। पिष्टविकारः पुरोडाशः। क्षीरविकारः पयस्या।

अथ मीमांसा। तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

"किं स्याच्चमसिनामेव हारियोजनभक्षणं।
सर्व्वेषां वाग्रिमस्तेषां पूर्व्ववाक्येन सन्निधेः॥
लिप्सन्ते सर्व्व एवेति हारियोजनवाक्यतः।
ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणं"॥ इति।

"हरिरसि हारियोजनः" इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः। होतृब्रह्मादयश्चमसिनः। यस्तु चतुर्णां होतॄणां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति नासौ चमसी। तत्र चमसिनामेव हारियोजने भक्षणं। कुतः। यथा चमसमन्यांश्चमसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्व्व एव लिप्सन्त इत्यत्र पूर्व्ववाक्ये चमसिनां सन्निहितत्वेनोत्तरवाक्ये सर्व्वशब्देन तेषामेवाभिधातव्यत्वात्। अतो नास्ति तत्र ग्रावस्तुतो भक्ष इति प्राप्ते ब्रूमः। अथ शब्देन एवकारेण च चमसिमात्रत्वशङ्कामपोद्य वाक्येन विहितस्य सर्व्वभक्षणस्य सन्निधिमात्रेण सङ्कोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः। तस्माच्चमसित्वं न भक्षणे कारणं।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके अष्टाविंशोऽनुवाकः॥ * ॥

अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनां। उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ॥ १ ॥

अग्ने चयोविंशतिः ॥ २९ ॥

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः। सोममिन्द्र चमू सुतं। उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ १ ॥

उत्तिष्ठन्नेकविंशतिः ॥ ३० ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। विश्वमाभासि रोचनं। उपयामगृहीतोऽसि सूर्य्याय त्वा भ्राजस्वत एष ते योनिः सूर्य्याय त्वा भ्राजस्वते ॥ १ ॥

तरणिर्विंशतिः ॥ ३१ ॥

आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः। भवा नः सप्रथस्तमः ॥ १ ॥

आनवं ॥ ३२ ॥

ईयुष्टेये पूर्व्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्त्यासः। अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् ॥ १ ॥

ईयुरेकान्नविंशतिः ॥ ३३ ॥

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा साद-
यामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा साद-
यामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा
सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा
सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा
सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा
सादयामि ॥ १ ॥

ज्योतिष्मतीः पञ्चविंशतिः ॥ ३४ ॥

प्रयासाय स्वाहा यासाय स्वाहा वियासाय स्वाहा
संयासाय स्वाहोद्यासाय स्वाहा वयासाय स्वाहा शुचे
स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा
ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ॥ १ ॥

प्रयासाय चतुर्विंशतिः ॥ ३५ ॥

चित्तं सन्तानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिं
स्थूलहृदयेनाग्निं हृदयेन रुद्रं लोहितेन शर्व्वं मत-
स्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनं शिङ्गीनिको-
श्याभ्यां ॥ १ ॥

चित्तमष्टादश ॥ ३६ ॥

आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी। अर्वा-

चीन॑ सुते मनो ग्रावा कृणोतु वग्नुना। उपयामगृ-
हीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय
त्वा षोडशिने ॥ १ ॥

आतिष्ठ॑ षड्विं॑शतिः ॥ ३७ ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्ट शवसमृषीणाञ्च स्तु-
तीरुपयज्ञञ्च मानुषाणां। उपयामगृहीतोऽसीन्द्राय
त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥
॥ १ ॥

इन्द्रं त्रयोविं॑शतिः ॥ ३८ ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवागहि। आ-
त्वापृणक्त्विन्द्रिय॑ रजः सूर्य्यं न रश्मिभिः। उपयाम-
गृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय
त्वा षोडशिने ॥ १ ॥

असाविः सप्तविं॑शतिः ॥ ३९ ॥

सर्व्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आधित। स्यो-
नास्मै सुषदा भव यच्छास्मै शर्म्म सप्रथाः। उपयाम-
गृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय
त्वा षोडशिने ॥ १ ॥

सर्व्वस्य षड्विं॑शतिः ॥ ४० ॥

महाँ॑ इन्द्रो॒ वज्र॑बाहुः षोड॒शी शर्म॑ यच्छतु। स्व॒स्ति नो॑ म॒घवा॑ करोतु॒ हन्तु॑ पा॒प्मानं॒ यो॑ऽस्मान् द्वेष्टि॑। उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा षोड॒शिन॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षोड॒शिने॑॥ १॥

म॒हान् प॒ङ्क्तिं॑शतिः॥ ४१॥

स॒जोषा॑ इन्द्र॒ सग॑णो म॒रुद्भिः॒ सोमं॑ पिब वृत्रहन् छूरवि॒द्वान्। ज॒हि शत्रूँ॒ रप॒ मृधो॑ नु॒दस्वाथाऽभ॑यं कृणुहि वि॒श्वतो॑ नः। उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा षोड॒शिन॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षोड॒शिने॑॥ १॥

स॒जोषा॑स्त्रिं॒शत्॥ ४२॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके एकोनत्रिंशत्रिंशैकत्रिंश द्वात्रिंशत्रयस्त्रिंश चतुस्त्रिंश पञ्चत्रिंश षड्त्रिंश सप्तत्रिंशाष्टत्रिंशैकोनचत्वारिंशैकचत्वारिंश द्विचत्वारिंशान्ताः क्रमेण चतुर्दशानुवाकाः॥ २९॥ ३०॥ ३१॥ ३२॥ ३३॥ ३४॥ ३५॥ ३६॥ ३७॥ ३८॥ ३९॥ ४०॥ ४१॥ ४२॥

कल्पः "चोनग्निष्टोमे अतिग्रहान् गृह्णाति, आग्नेयमैन्द्रँ सौर्यमिति, अग्न आयूँष्युत्तिष्ठंस्तरणिरिति ग्रहणसादनौ" इति। प्रथममन्त्रपाठस्तु "अग्न आयूँषि पवस आसुवोर्जमि-

यस्व नः। आरे बाधस्व दुच्छुनां। उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते" इति। हे अग्ने त्वं भक्तानामायूंषि पवसे शोधयसि वर्द्धयसीत्यर्थः। अस्माकं इष-मन्नं ऊर्जं बलं आसुव प्रयच्छ। दुच्छुनां वैरिसेनां आरे दूरं यथा स्यात् तथा बाधस्व। स्पष्टमन्यत्॥ *॥ इत्येकोनत्रिंशोऽनु-वाकः॥२९॥*॥ द्वितीयमन्त्रपाठस्तु "उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः। सोममिन्द्र चमू सुतं। उपयामगृहीतो ऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते" इति। हे इन्द्र सुतं सोमं पीत्वा ओजसा बलेन सहोत्तिष्ठन् चमू भक्षणक-रणभूते शिप्रे हनू अवेपयः चालय। तच्चालनलिङ्गेन तुष्टमा-त्मानमस्माकं दर्शयेत्यर्थः। स्पष्टमन्यत्॥ *॥ इति त्रिंशोऽनुवाकः ॥ ३०॥*॥ ॥ तृतीयमन्त्रपाठस्तु पाठकसम्प्रदायानुसारेण तरणिरित्याद्येकत्रिंशानुवाकमारभ्य मन्त्रषट्कं षट्त्रिंशदनुवाका-न्तं संहितोपनिषत्सु प्रथमप्रपाठकत्वेन स्वीकृतचातुर्होत्रचित्त्या-ख्यारण्यकतृतीयप्रपाठके समाम्नातत्वान्नात्र व्याख्येयं॥ *॥ *तत्र तृतीयाख्यप्रथममन्त्रो यथा "तरणिर्विश्वदर्शतो ज्योतिष्कृ-दसि सूर्य। विश्वमाभासि रोचनं। उपयामगृहीतोऽसि सू-र्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते" इति।

---

* यद्यपि माधवाचार्य्यैः तरणिर्विश्वदर्शत इत्यादिमन्त्रषट्कं संहि-तोपनिषत्सु प्रथमप्रपाठकत्वेन स्वीकृतचातुर्होत्रचित्त्याख्यारण्यकतृतीय-प्रपाठके समाम्नातत्वादत्र न व्याख्यातं तथाप्यत्र संहिताक्रममनुसृत्य तत्तद्व्याख्यां दृष्ट्वा केवलं षण्मन्त्राणामर्थो लिख्यते।

॥ * ॥ हे सूर्य त्वं तरणिः अन्धकारोत्तरणहेतुः। विश्वदर्शतः विश्वैः सर्व्वैः प्राणिभिर्दर्शनीयः। ज्योतिष्कृत् असि सर्व्वस्मिन् लोके प्रकाशकृदसि। विश्वं सर्व्वं जगत् रोचनं रोचमानं दीप्यमानं यथा भवति तथा आभासि सर्व्वतः प्रकाशयसि। हे अतिग्राह्य-रूपग्रह भ्राजस्वते दीप्तियुक्ताय यथोक्तमहिमोपेताय सूर्याय त्वा त्वां गृह्णामि। त्वं तदर्थं उपयामगृहीतः उपयामेन पृथिवी-कार्येण पात्रेण गृहीतोऽसि। एष हविर्धानमण्डपस्थः खरप्रदेशः ते तव योनिः स्थानं अतो भ्राजस्वते दीप्तिमते सूर्याय त्वा त्वां तत्र प्रदेशे सादयामि। ईदृशोऽयमतिग्राह्यो यस्मै सूर्याय गृह्यते किमु वक्तव्यं तस्य माहात्म्यं॥ ॥ इत्येकत्रिंशोऽनुवाकः॥ ३१॥

॥ ॥ चतुर्थाख्यद्वितीयमन्त्रपाठस्तु "आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः। भवा नः सप्रथस्तमः" इति। हे मदिन्तम अतिशयेन हर्षयुक्त सोम विश्वाभिरूतिभिः सर्व्वप्रकारैरस्मदीयरक्षणैः आप्यायस्व सर्व्वतो वर्द्धस्व। नः अस्मान् प्रति सप्रथस्तमः। अतिशयेन प्रथायुक्तो भव॥ ॥ इति द्वात्रिंशोऽनुवाकः॥ ३२॥

॥ पञ्चमाख्यतृतीयमन्त्रपाठस्तु "ईयुष्टे ये पूर्व्वतराम-पश्यन् व्युच्छन्तीमुषसं मर्त्त्यासः। अस्माभिरू नु प्रतिचक्ष्याभू-दोते यन्ति ये अपरीषु पश्यान्" इति। ये मर्त्त्यासः मनुष्याः व्युच्छन्तीं प्रभावं कुर्व्वन्तीं उषसं उषःकालदेवतां पूर्व्वतरां इतरेभ्योऽत्यन्तं पूर्व्वां अपश्यन् पश्यन्ति ते मनुष्या ईयुः तां देवतां प्राप्नुवन्ति। अस्माभिरू नु अस्माभिरनु प्रतिचक्ष्याऽभूत् प्रत्यक्षदर्शनीयाभूत्। ये अन्येष्वपरीषु अपरराचिषु राचीणा-

मवस्थानेषु पश्यन्ति। श्रो तेयन्ति तेऽपि तां देवतां सर्व्वथा प्राप्नुवन्ति॥ ॥ इति त्रयस्त्रिंशोऽनुवाकः॥३३॥ ॥ अथ पोषणे द्वादशे विनियुक्तानि यजूंष्याह। षष्ठाख्यस्य तुर्थो मन्त्रपाठस्तु "ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि" इति। प्रेतं दग्धुं या समित् प्रक्षिप्यते तां सम्बोध्योच्यते। अत्र तु ग्रहपोषणे इष्टकोपधाने वा सम्बोधनं। पोषणं आसादनमित्यर्थः। हे ग्रह त्वां हविर्धानमण्डपे खरप्रदेशे ज्योतिष्मतीत्यादिभिर्विशेषणैः सादयामि। तत्तत्सोमाहुतिनिष्ठाया ज्वालाया अवस्थानविशेषा उच्यन्ते। अत्यल्पप्रकाशोपेता ज्योतिष्मती। ईषदधिकप्रकाशोपेता ज्योतिष्कृत्। ततोऽप्यधिकप्रकाशोपेता ज्योतिर्वित्। एवं भास्वत्यादिषु योजनीयं। मल्मलेति दह्यमानकाष्ठादिवस्तुध्वनेरनुकरणं। लिङ्गानुसारेणायं मन्त्र इष्टकोपधानेऽपि विनियोक्तव्यः॥ ॥ इति चतुस्त्रिंशोऽनुवाकः॥३४॥ ॥ अथाहुतिमन्त्रा उच्यन्ते। अत्र सप्तमाख्यपञ्चममन्त्रपाठस्तु "प्रयामाय स्वाहाऽयामाय स्वाहा वियामाय स्वाहा संयामाय स्वाहोद्यामाय स्वाहाऽवयामाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्व्वस्मै स्वाहा" इति। विध्युक्तकर्म्मानुष्ठातुर्यजमानस्य मरणोत्तरं यमलोके बाधका देवाः प्रयामा-

दिशब्दवाच्याः। तन्निर्वचनानि तु यथायोगमुन्नेयानि। तस्मै तस्मै देवतायै गृहीतमिदमाज्यादि हविः स्वाहा हुतमस्तु। मन्त्रलिङ्गेन देवताविशेषः स्पष्टः॥ ॥ इति पञ्चत्रिंशोऽनुवाकः॥३५॥ ॥ अथ हविषो होमार्थो मन्त्रानुवाक उच्यते। अष्टमाख्यषष्ठमन्त्रपाठस्तु "चित्तꣳ सन्तानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तः पार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्यां" इति। अत्र द्वितीयान्तादिशब्दा देवताविशेषवाचिनः। तृतीयान्ताः सन्तानादिशब्दाः पशवो मांसविशेषवाचिनः। सन्तानाख्येन मांसविशेषेण चित्ताख्यं देवताविशेषं परितोषयामि इति वाक्यशेषः। एवं सर्वत्र योजनीयं। स्पष्टमन्यत्॥ ॥ इति षट्त्रिंशोऽनुवाकः॥ ३६॥ ॥* कल्पः "आग्रयणग्रहं गृहीत्वाऽथ षोडशिनं गृह्णाति आतिष्ठ वृत्रहन् रथमित्यनुद्रुत्य उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्यासादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इति" इति। नवममन्त्रपाठस्तु "आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। हे वृत्रहन् इन्द्र तव हरी अश्वौ ब्रह्मणा मन्त्रेण रथे युक्तौ योजितौ अतो रथमातिष्ठ आरोह।

---

* इति संहितोपनिषत्सु प्रथमप्रपाठकत्वेन खीकृतचातुर्होत्रचित्याख्यारण्यकतृतीयप्रपाठके व्याख्यातपाठकसम्प्रदायानुसारेणात्र पठितनरखिरित्यादिषण्मन्त्रार्थस्ततः समानीयात्र लिखितः॥

अयं ग्रावा वग्नुना वचनेन अभिषवध्वनिना त्वन्मनः सुते अभिषुते सोमे अर्वाचीनमभिमुखं करोतु। षोडशसङ्ख्यापूरकं स्तोत्रं शस्त्रञ्च यस्येन्द्रस्यास्ति असौ षोडशी। स्पष्टमन्यत्॥ इति सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥ ॥ अस्मिन्नेव ग्रहे अष्टत्रिंशदनुवाकमारभ्य द्विचत्वारिंशदनुवाकान्तं पञ्चमन्त्रा विकल्पयन्ते। तत्र प्रथमः "इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणाञ्च स्तुतीरुपयज्ञञ्च मानुषाणां। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। ऋषीणां मन्त्राणां स्तुतीश्च मानुषाणां यज्ञञ्चोपेत्य अप्रतिधृष्टशवसं केनाप्यतिरस्कृतबलं इन्द्रमेव हरी रथेन वहतः॥ इत्यष्टत्रिंशोऽनुवाकः ॥ ३८ ॥ अथ द्वितीयः "असावि सोम इन्द्र ते शविष्ठ धृष्णवागहि। आ त्वा पृणक्त्विन्द्रियं रजः सूर्यं न रश्मिभिः। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। हे शविष्ठ अतिशयेन बलवन्निन्द्र ते त्वदर्थं सोमः असावि सुतः। हे धृष्णो धार्ष्ट्ययुक्त आगहि आगच्छ। इन्द्रियं शक्तिस्त्वामापृणक्तु आपूरयतु। किमिव। रश्मिभिः स्वीकृतं रजः उदकं सूर्यं न सूर्यमिव। एतच्चारण्यके समाम्नातं "आपः सूर्ये समाहिताः। अभ्राण्यपः प्रपद्यन्ते" इति॥ इत्येकोनचत्वारिंशोऽनुवाकः॥३९ ॥ ॥ अथ तृतीयः "सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आधित। स्योनास्मै सुषदा भव यच्छास्मै शर्म सप्रथाः। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। सर्वस्य भूतजातस्य प्रतिशीवरी आभिमुख्यशायिनी भूमिः त्वां इन्द्र उपस्थे

उपरितनस्थाने आधित आदधातु। हे भूमे अस्मै इन्द्राय स्योना सुखप्रदा सुषदा शोभननिवासस्थाना च भव। अस्मै यजमानाय सप्रथाः अतिविस्तृता सती शर्म्म सुखं प्रयच्छ॥ इति चत्वारिंशोऽनुवाकः॥४०॥ ॥ अथ चतुर्थः। महाꣳ इन्द्रो वज्र-बाहुः षोडशी शर्म्म यच्छतु। स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। स्पष्टोऽर्थः॥ इत्येक-चत्वारिंशोऽनुवाकः॥४१॥ अथ पञ्चमः "सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहन् शूर विद्वान्। जहि शत्रूꣳ रपमृ-धोऽनुदस्वाथाऽभयं कृणुहि विश्वतो नः। उपयामगृहीतोऽसी-न्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति। हे वृत्रहन् शूर इन्द्र सजोषाः प्रीतिसहितः मरुद्भि-र्युक्ततया सगणस्त्वं यजमानभक्तिं विद्वान् ज्ञात्वा सोमं पिब। अस्माकं मारणायतान् शत्रून् मारय इतरान् मृधो वैरिणो अपनुदस्व। अनन्तरमस्माकं सर्व्वतो भयराहित्यं कुरु। अथ विनियोगसङ्ग्रहः।

"ऐन्द्रवायव आवायो इन्द्र तस्य पुनर्ग्रहः।
मैत्रावरुणके ऽयं वामाश्विने द्वौ विकल्पितौ॥
शुक्रे मन्थिनि चैकैकः प्रागिवाग्रयणे द्वयं।
एकैक उकथ्यध्रुवयोस्तुर्दश तु मन्त्रकाः॥
ऋतुग्रहेषूपयामः सर्व्वेष्वादौ प्रयुज्यते।
ऐन्द्राग्नो वैश्वदेवस्य त्रयो मारुतग्रहाः॥

वैकल्पिकौ द्वौ माहेन्द्रे कदाऽऽदित्यग्रहस्तथा।
कदा दधिग्रहस्तत्र यश्चः सोमं पुनः क्षिपेत्॥
विव ग्राव्णा लाडयेद्वा काम्यदभ्रः प्रतिश्रयः।
त्रयो विकल्प्याः सावित्रे वैश्वदेवे परो ह्यसौ॥
पात्नीवतग्रहस्यास्य होमोऽग्ना इति मन्त्रतः।
हारियोजननामस्तु हरी स्थेति कृतिर्भवेत्॥
अग्नेऽतिग्राह्य आग्नेय उत्तिष्ठ ग्राह्य ऐन्द्रकः।
षड्विकल्प्याः षोडशिनि ग्रहकाण्डं समाप्यते"॥ इति।

इति द्विचत्वारिंशोऽनुवाकः॥ * ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके एकोनत्रिंशानुवाकमारभ्य द्विचत्वारिंशदनुवाकान्ताश्चतुर्दशानुवाकाः॥ २९ ॥ ३०॥ ३१ ॥ ३२ ॥३३॥ ३४॥३५॥ ३६ ॥ ३७॥ ३८॥३९ ॥ ४०॥ ४१ ॥४२॥ * ॥

ॐ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यं। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य्य आत्मा जगतस्तस्थुषश्च। अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम। दिवं गच्छ सुवः पत रूपेण॥ १ ॥

वो रूपमभ्यैमि वयसा वयः। तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधिनाके। एतत्ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नयर्त्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीर्ब्राह्मणमद्यर्ध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं वि सुवः पश्य व्यन्तरिक्षं यतः स्वसदस्यैरस्मद्दाचा देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतं॥ ॥ २ ॥

रूपेण सदस्यैरष्टादश च ॥ ४३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके त्रिचत्वारिंशोऽनुवाकः ॥ ० ॥

द्विचत्वारिंशेऽनुवाके ग्रहाः समापिताः। त्रिचत्वारिंशे दक्षिणा वर्ण्यते। कल्पः "प्रचरण्यां दाक्षिणानि जुहोति हिरण्यं प्रबध्य घृतेऽवधायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति" इति। तत्र प्रथमा "उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यं" इति। केतवो रश्मयः। त्यं जातवेदसं तमग्निसदृशं सूर्यं देवं उद्वहन्ति ऊर्ध्वदेश एव प्रापयन्ति। किमर्थं। विश्वाय कृत्स्नस्य जगतः सूर्यं दृशे द्रष्टुं। अथ द्वितीया "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आ प्रा

द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च" इति। चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनां अनीकं सैन्यसदृशं मण्डलं उदगात् उदयं गच्छति। कीदृशं। मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्य इन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयं तन्मण्डलस्थः सूर्यः जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा सन् लोकत्रयं आप्राः पूरितवान्। कल्पः "अग्ने नयेत्याग्नीध्रीये जुहोति" इति। पाठस्तु "अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम" इति। हे अग्ने राये पारलौकिकधनप्राप्त्यर्थमस्मान् शोभनेन मार्गेण नय। हे देव त्वं विश्वानि वयुनानि सर्व्वान् मार्गान् विद्वान् जानासि। जुहुराणं कुटिलं एनः पापं अस्मद्युयोधि वियोजय। ते तुभ्यं भूयिष्ठां बहुतरां नम उक्तिं नमस्कारोक्तिं विधेम कुर्यां बहुतरां नमस्कारोक्त्या परिचरेमेत्यर्थः। दाक्षायणहोमं विधत्ते "सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि" (सं०६का०।६प्र०।१अ०) इति। दक्षिणां दित्सुना होतव्यानि दाक्षिणानि। होमाधिकरणं विधत्ते "द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाक्रमते" (सं०६का०।६प्र०।१अ०) इति। द्वाभ्यां वक्ष्यमाणाभ्यां। आग्नीध्रहोमादूर्ध्वं। सदः प्रवेशं विधत्ते "सदोऽभ्येति सुवर्गमेवैनं लोकं गमयति" (सं०६का०।६प्र०। १अ०) इति। मन्त्रान् विनियुङ्क्ते "सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकꣳ समारोहयति नयवत्यर्चाग्नीध्रे जुहोति

सुवर्गस्य लोकस्याभिनीत्यै" (सं०६का०।६प्र०।१अ०) इति। उद् त्यं चित्रमित्येते सौर्य्यौ। अग्ने नय सुपथेति नयवती। कल्पः "दिवं गच्छ सुवः पतेति हिरण्यꣳ हुत्वोद्गृह्णाति" इति। हे हिरण्य त्वमाकाशं प्रति गच्छ ततः स्वर्गं प्राप्नुहि। अनेन यजमानस्य स्वर्गप्राप्तिरित्याह "दिवं गच्छ सुवः पतेति हिरण्यꣳ हुत्वोद्गृह्णाति सुवर्गमेवैनं लोकं गमयति" (सं०६का०।६प्र०। १अ०) इति। यद्धिरण्यं प्रबध्य घृतेऽवहितं तद्धिरण्यं घृतहोमादूर्ध्वं हस्तेनोद्धरेत्। कल्पः "रूपेण वो रूपमभ्येमीति दक्षिणा अभ्येति" इति। पाठस्तु "रूपेण वो रूपमभ्येमि वयसा वयः" इति। हे दक्षिणाः अनेनोद्धृतहिरण्यरूपेण सह वेदेर्दक्षिणभागेऽवस्थितानां युष्माकं रूपमाभिमुख्येन प्राप्नोमि। कीदृशेन हिरण्यरूपेण। वयसा कमनीयेन। कीदृशं युष्मद्रूपं। वयः कमनीयं। रूपेणेत्ययं शब्दो हिरण्यपर इत्येतद्दर्शयति "रूपेण वो रूपमभ्येमीत्याह रूपेण ह्यासाꣳ रूपमभ्येति यद्धिरण्येन" (सं०६का०।६प्र०।१अ०) इति। हिरण्येन यद्रूपमभ्येति तद्रूपेण वो रूपमिति मन्त्रेणोच्यत इत्यर्थः। कल्पः "तुथो वो विश्ववेदा विभजत्विति ता यजमानश्चतुर्धा कृष्णाजिने व्युद्धृत्य चतुर्थमध्वर्युभ्यो विभजति यावदध्वर्यवे ददाति। तस्यार्धं प्रतिप्रस्थात्रे। तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे एतेनेतरेषां दानमुक्तं" इति। पाठस्तु "तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाके" इति। हे दक्षिणाः वृद्धये स्वर्गे अधिरूढस्तुथनामको देवः सर्व्वेतो युष्मान् यथोचितं विभजतु। एतमेवार्थं स्पष्टयति

"तुथो वो विश्ववेदा विभजत्वित्याह तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजति ते एवैना विभजति" (मं०६का०। ६प्र०।१अ०) इति। कल्पः "एतत् ते अग्ने राध इति दक्षिणा निनयति" इति। निनयनं मन्त्रेणेति शेषः। पाठस्तु। "एतत् ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्र दक्षिणा यज्ञस्य पथा सुविता नयन्तीः" इति। हे अग्ने दक्षिणा द्रव्याणि ते राधः तव समृद्धिकारणं सोमच्युतं सोमयागे प्राप्तं एतद्दक्षिणा द्रव्यं एति आगच्छति तद्द्रव्यं मित्रस्य पथा शान्तस्य तव मार्गेण नय। हे चन्द्रदक्षिणाः सुवर्णादिद्रव्यरूपाः ऋतस्य सत्यस्य पथा मार्गेण प्रेत प्रकर्षेण गच्छत। सत्यफलकेन देवेन यथायथं विभक्ता गच्छतेत्यर्थः। कीदृशाश्चन्द्रदक्षिणाः। सुविता शोभनगमनयुक्तेन यज्ञस्य पथा यज्ञपुरुषस्य मार्गेण सदोगार्हपत्ययोर्मध्यवर्त्तिना नयन्तीर्दक्षिणदेशादुत्तरदेशे नीयमानाः। अत्र सूत्रं "हिरण्यपाणिरग्रेण गार्हपत्यं नयति जघनेन सदोऽन्तरा आग्नीध्रञ्च सदश्च ता उदीचीः" इति। दक्षिणाद्रव्यस्य सोमच्युतत्वं प्रशस्तमित्याह "एतत्ते अग्ने राध एति सोमच्युतमित्याह सोमच्युतꣳ ह्यस्य राध एति" (मं०६का०।६प्र०।१अ०) इति। मित्रशब्दप्रयोजनमाह "तन्मित्रस्य पथा नयेत्याह शान्त्यै" (मं०६का०। ६प्र०।१अ०) इति। तुथो रुद्रोऽग्निरिति श्रुतत्वाद्रुद्रस्य पथा चेदशान्तिः स्यात् अतो मित्रस्येत्युच्यते। ऋतशब्दो नात्र यज्ञवाची किन्तु सत्यवाचीत्याह "ऋतस्य पथा प्रेतचन्द्रदक्षिणा

इत्याह सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन विभजति" (सं० ६का०।६प्र०।१अ०) इति। सत्येनैव विभजतीति कृत्वा मुख्यस्य अर्धिनः तृतीयिनः पादिनश्च ऋत्विजां यथोचितं विभजतात्यर्थः। दक्षिणानां सदोगार्हपत्ययोर्मध्यवर्त्तिना यज्ञमार्गेण गमनं प्रसिद्धमित्याह "यज्ञस्य पथा सुविता नयन्तीरित्याह यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणा" (सं०६का०।६प्र०।१अ०) इति। कल्पः "ब्राह्मणमद्य राध्यासमित्यात्रेयाय प्रथमाय हिरण्यं ददाति द्वितीयाय तृतीयाय वा तदभावे य आर्षेयः सन्निहितः तस्मै दद्यात्" इति। त्रिविधा आत्रेयाः प्रवरे प्रथिताः अतः प्रथमायेत्यादिविशेषणं। पाठस्तु "ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं" इति। अद्यास्मिन् यज्ञदिने ब्राह्मणं अत्रिगोत्रोत्पन्नं राध्यासं हिरण्येन साधयानि तोषयामीत्यर्थः। कीदृशं ऋषिं। वेदार्थज्ञं। आर्षेयं वेदार्थविदः पुत्रं। पितृमन्तं पित्रा सम्यगनुशिष्टं। पैतृमत्यं पितृमत्याः सम्यगनुशिष्टायाः पतिव्रतायाः पुत्रं। शोभनो धातुः सर्व्वधातुभ्य उत्तमं हिरण्यं दक्षिणा यस्यासौ सुधातुदक्षिणः तादृशं। ब्राह्मणादिशब्दैर्वेदशास्त्रपारङ्गतो विवक्षित इति दर्शयति "ब्राह्मणमद्य राध्यासमृषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवांस्तस्मादेवमाह" (सं०६का०।६प्र०।१अ०) इति। कल्प "सद एत्य वि सुवः पश्येत्यनुवीक्षते" इति। एतदेवाभिप्रेत्य सदोऽभ्येतीति पूर्व्वं विहितं। पाठस्तु "वि सुवः पश्य व्यन्तरिक्षं यतः स्व सदस्यैः" इति। हे यजमान स्वर्गं विपश्य अन्तरिक्षञ्च

विपश्य सदस्यवस्थितैर्विप्रैः सह यतस्व अनुतिष्ठ। सुवः पश्ये-त्यस्याभिप्रायं दर्शयति। "वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति" (सं०६का०।६प्र०।१अ०) इति। सदस्यैरित्यनया सहार्थतृतीयया मित्रता विवक्षितेत्याह। "यतस्व सदस्यैरित्याह मित्रत्वाय" (सं०६का०।६प्र०।१अ०) इति। कल्पः "अस्मद्राता देवत्रा गच्छतेति नीत्वा अनुमन्त्य" इति। पाठस्तु "अस्मद्राता देवत्रा गच्छत मधुमतीः प्रदा-तारमाविशताऽनवहायाऽस्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतं" इति। हे दक्षिणाः अस्माभिर्दत्ताः सत्यो देवेषु ऋत्विक्षु गच्छत। हे गावो मधुरक्षीरोपेताः सत्यः पर-लोके प्रदातारं यजमानं रूपान्तरेण आविशत। अस्मान् अन-वहाय अपरित्यज्य देवयानेन पथेत सुकृतां मार्गेण गच्छत गत्वा च पुण्यकृतां स्थाने सीदत तत् स्थानं नो अस्मदर्थं सꣳस्कृतं सम्य-गुपभोगयोग्यतया निष्पादितं। प्रदातारमाविशतेत्यस्यार्थमाह "अस्मद्राता देवत्रा गच्छत मधुमतीः प्रदातारमाविशतेत्याह वयमिह प्रदातारस्थोऽस्मानमुत्र मधुमतीराविशतेति वा वै तदाह" (सं०६का०।६प्र०।१अ०) इति। प्रथमतो दातव्यं वि-धत्ते "हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरेव पुरस्ता-द्धत्ते सुवर्गस्य लोकस्यानुख्यात्यै" (सं०६का०।६प्र०।१अ०) इति। तस्य प्रतिग्रहीतृसम्बन्धं विधत्ते "अग्नीधे ददात्यग्निमु-खानेवर्तून् प्रीणाति" (सं०६का०।६प्र०।१अ०) इति। अग्नि-मुखान् अग्निसहितान् आधानकालीनवसन्ताद्यृतून्। अत्र सूत्रं

"हिरण्यं पूर्णपात्रमुपबर्हणꣳ सार्वसूत्रमित्यग्नीधे ददाति" इति ऋत्विगन्तरे दानं विधत्ते "ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभि समर्धयति" (सं० ६का०।६प्र०।१अ०) इति। प्रसूत्यै अनुज्ञानाय होतुः बहुमन्त्रपाठेन यज्ञात्मत्वं। एवं ऋत्विगन्तरे दानमुन्नेयं

अत्र विनियोगसङ्ग्रहः ।

"उदुत्रिभिर्दक्षिणानां होमो द्विवमतो घृतात्।
हिरण्यमुद्गृह्य रूपे दक्षिणा अभिगच्छति ॥
तुथो वो विश्ववेदेति भिन्द्याच्चर्म्मणि दक्षिणा।
एतत्त्वा निनयेद्ब्रह्मा होमाऽऽत्रेयाय यच्छति ॥
वि सुवः सद आलोक्य ह्यसद्द्वात्राऽनुमन्त्रणं।
त्रिचत्वारिंशानुवाके दशमन्त्रा उदीरिताः" ॥ इति ।

अथ मीमांसा। दशमाध्यायस्य द्वितीयपादे चिन्तितं।

"ऋत्विग्दानमदृष्टार्थमानत्यैवाऽग्रिमश्रुतेः ।
वैरूप्यान्नियमान्नैवं दृष्टत्वाद्दानतिः श्रुतिः ॥
भृतौ च नियमादेतददृष्टं स्याद्विरूपता ।
वचनात् तेन सत्रेषु स्वामित्वान्न भृतिः क्वचित् ॥

ऋत्विग्भ्यो दक्षिणां ददातीति प्रकृतौ श्रूयते । तत्किमदृष्टार्थमानत्यर्थं वेति संशयः। भृत्या परिक्रीय वशीकार आनतिः। अदृष्टार्थं तत् स्यात् । अन्नहिरण्यादीनामदृष्टार्थे त्यागे दानशब्दस्य प्रसिद्धत्वात्। यद्येतद्दानं भृतिः स्यात् तदानीम-

ल्पाधिककर्म्मरूपेण द्रव्यं देयं वैरूप्यं तत्र दृश्यते। स्वल्पे कर्म्मणि त्रैधातवीये सहस्रं देयं। अधिके कर्म्मणि ऋतपेये स्वल्पं सोमचमसमात्रं दीयते। तथा द्वादशशतादिपरिमाणनियमो मन्त्रनियमश्च भृतौ नोपपद्यते कर्म्मकरानुमत्या न्यूनाधिकभावसम्भवात् तत्तकरजकादिभृतौ मन्त्रादर्शनाच्च। तस्माददृष्टार्थमित्यग्रिमः पक्षः प्राप्नोति। मैवं। आनतेर्दृष्टप्रयोजनत्वात्। दानश्रुतिस्तु दृष्टार्थभृतावप्यस्ति भृतिर्देयेति प्रयोगात्। परिमाणमन्त्रनियमाददृष्टमस्तु दृष्टस्याभावात्। वैरूप्यन्तु वचनबलादभ्युपगम्यते। दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्यादप्यवगम्यते। दीक्षितमदीक्षिता दक्षिणा परिक्रीता ऋत्विजो याजयेयुरिति। तस्मादृत्विग्दानमानत्यर्थं। एवञ्च सति सत्रे ऋत्विजां सर्व्वेषां यजमानत्वात् भृतिरूपा दक्षिणा न क्वापि देयेत्येतद्विचारफलं द्रष्टव्यं। तत्रैव तृतीयपादे चिन्तितं।

"दक्षिणा द्वादशशतं तस्येत्येतद्गवादिषु।
सर्व्वेषु केषुचिद्वाद्ये प्रत्येकं मिलितेषु वा॥
सङ्ख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽपि वा।
वाक्यभेदान्न तत् किन्तु मिलितेषु समुच्चयात्॥
प्रस्थाद्यौचित्यतो धान्ये सर्व्वेषां न समुच्चयः।
असर्व्वेष्विति पक्षेऽपि पशवो वैकमेव वा॥
सङ्ख्यौचित्येन पशवो नैतत् तस्येत्यनन्वयात्।
एकत्वेऽप्यत्र यत्किञ्चिन्माषा वा गाव एव वा॥
यत्किञ्चिन्नियमाभावान्माषाः सन्निहितत्वतः।

माषा निराकृता गावः प्राथम्याच्चोपकारतः ॥
तस्येति वाक्याद्गोद्रव्यं न युक्तः प्रकृतः क्रतुः ।
सङ्ख्यान्तरश्चेद्विकृतौ स्याद्गवां बाध्यतामियं'' ॥ इति ।

ज्योतिष्टोमेऽपि देयद्रव्याण्यनुक्रम्य सङ्ख्याविशिष्टा दक्षिणा विधीयते। गौश्चाश्चाश्वतराश्च गर्दभाश्चाजाश्चाजावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति। द्वादशाधिकं शतं द्वादशशतं। तत्र संशयः। सेयं सङ्ख्या किं गवादिसर्व्वद्रव्यविषया किं वा कतिपयविषया। सर्व्वपक्षेऽपि प्रतिद्रव्यमियं सङ्ख्या उत मिलितानां। तत्र गवादिद्रव्याणि प्रधानानि। सङ्ख्या तु तद्गतो गुणः। प्रतिप्रधानं गुणावृत्तिर्न्याय्या। तस्माद्गवादिद्रव्येषु सर्व्वेषु प्रत्येकमियं सङ्ख्येति प्रथमपक्षगते प्रथमसङ्ख्याविकल्पे प्राप्ते ब्रूमः। नैतद्युक्तं वाक्यभेदप्रसङ्गात्। अतो मिलितानामियं सङ्ख्येति द्वितीयः साङ्ख्यो विकल्पोऽभ्युपगन्तव्यः। तथा समुच्चयवाचिनश्च शब्दा अनुगृह्यन्ते। एतदप्ययुक्तं अनौचित्यात्। न व्रीहियवादिधान्येषु द्वादशाधिकशतान्तर्गता द्वित्रादिसङ्ख्योचिता। परिक्रीतस्यर्त्विजो द्वित्रैर्व्रीहिवीजैः प्रयोजनाभावात् प्रस्थाधिकखार्य्यादिसङ्ख्या तत्रोचिता। न चेयमत्र श्रुता। तस्मान्मिलितानां सर्व्वेषां समुच्चय इत्ययं पक्षो न युक्तः। कतिपयद्रव्यविषयासङ्ख्येत्यस्मिन्नपि पक्षे, किं गवाद्याः षड्विधाः पशवः, किंवा दशसु गवादिद्रव्येष्वेकं द्रव्यं। तत्र पशुषु श्रूयमाणायाः सङ्ख्याया उचितत्वात् पशव इति प्राप्ते ब्रूमः। नैतद्युक्तं। तस्य द्वादशशतं दक्षिणेत्यत्र तस्ये-

त्यनेनैकवचनान्तेन षष्णां गवादिपशूनामन्वेतुमयोग्यत्वात्। एकत्वपक्षेऽपि यत्किञ्चिदेकं किंवा माषद्रव्यं उत गोद्रव्यं तत्र नियामकाभावात् यत्किञ्चिदिति प्राप्तं। तन्न। सन्निधेर्नियामकत्वात्। माषाश्च तस्य द्वादशशतं दक्षिणेति माषाः सन्निहिताः। तच्चास्तु माषद्रव्यमिति चेत्। न। प्रस्थादिपरिमाणसङ्ख्यौचित्येन निराकृतत्वात्। तस्माद् गोद्रव्यमिति पक्षः परिशिष्यते। प्रथमश्रुतत्वोपकारौ तत्र नियामकौ। अस्ति हि महानुपकारः। ऋत्विजः परिगृहीतुर्गव्यैराज्यक्षीरादिभिः अग्निहोत्रदर्शपूर्णमासादिसिद्धेः। ननु तस्य प्रकृतस्य क्रतोर्द्वादशशतं दक्षिणेत्यन्वयात् गोद्रव्यं न प्रतीयत इति चेत्। यद् गोद्रव्यं तस्य द्वादशशतमिति वाक्येन तत्प्रतीतेः। वाक्यं हि प्रकरणाद् बलीयः। तस्मात् गवां द्वादशशतमिति सिद्धान्तः। विकृतिषु यत्र गोदक्षिणायाः सङ्ख्यान्तरं श्रुतं तत्रास्याः सङ्ख्यायाः बाधो विचारफलञ्च। तत्रैवान्यच्चिन्तितं।

"गोदानेऽभिहिते स्वेच्छा नियतिर्वा ऽन्तिमेऽपि किं।
अविभागो विभागो वा नियमानुक्तितोऽग्रिमः॥
अविभागो बहुत्वोक्तेर्बहुत्वं न विवक्षितं।
विभागः स्यात् परस्वत्वसिद्धेर्लिङ्गञ्च दृश्यते"॥ इति।

पूर्वोक्त एव गवां दाने संशयः। ऋत्विग्भ्यो देयानामुक्तसङ्ख्यानां गवां विभागाविभागयोर्यजमानेच्छैव प्रयोजिका उतास्त्यन्यतरा नियतिः। यद्यपि नियतिस्तदाप्यविभागो विभागो वा। तत्र नियमस्यानुक्तत्वात् इच्छेति तावत् प्राप्तं। ऋ-

त्विग्भ्यो दक्षिणां ददातीति बहुवचनश्रवणेन समूहस्य प्रतिग्रहीतृत्वादविभाग इति पक्षान्तरं। ग्रहैकत्ववदुद्देश्य गतत्वाद्बहुवचनं न विवक्षितमित्येकैकः प्रतिग्रहीता। तथा सति विभागोऽवश्यं भवति। समूहाय दत्ते सति एकस्य स्वामित्वाभावात् परस्वत्वापादनलक्षणो दानशब्दार्थो न सिध्यति। "तुथो वो विश्ववेदा विभजतु" इति मन्त्रे विभागलिङ्गं दृश्यते। तस्माद्विभागनियमो राद्धान्तः। तत्रैवान्यच्चिन्तितं।

"सविभागः समानो वा विशेषाश्रवणात् समः।
वैषम्यं स्याद्यथायासं मैवं तत् स्यात् समाख्यया"॥ इति।

पूर्वोक्तः सविभागः समः स्यात्। कुतः। वैषम्यहेतोर्विशेषस्याश्रवणात् साम्यहेतुस्तु लौकिको न्याय्यः। लोके हि पितृधने पुत्राणां समविभागो दृष्टः। तस्मात् सम इत्येकः पक्षः। कर्मकरेषु प्रयासानुरूपेण भृतितारतम्यं दृष्टं। तद्वदत्रापीति द्वितीयः पक्षः। द्वादशाहे दीक्षायामेवं समाख्यायते "अर्द्धिनो दीक्षयन्ति" इति। अर्द्धं येषामृत्विजां ते अर्द्धिनः। एवं पादिनो योजनीयाः। तद्विशेषो याज्ञिकमुखादवगन्तव्यः। ततः श्रौतसमाख्यानुरूपेण केषाञ्चिदर्द्धं केषाञ्चित्पाद इत्यादि विषमो विभाग इति राद्धान्तः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके त्रिचत्वारिंशोऽनुवाकः॥ * ॥

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपति-

नो अग्निः। त्वष्टा विष्णुः प्रजया संररराणो यजमानाय द्रविणं दधातु। समिन्द्र णो मनसा नेषि गोभिः सं सूरिभिर्मघवन्त्सं स्वस्त्या। सम्ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानां। सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन। त्वष्टा नो अत्र वरिवः कृणोतु ॥ १ ॥

अनुमार्ष्टु तनुवो यद्विलिष्टं। यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह। ऋधगयाडृधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान्। स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि। यानावह उशतो देव देवान्तान् ॥ २ ॥

प्रेरय स्वे अग्ने सधस्थे। वहमाना भरमाणा हवींषि वसुं घर्मं दिवमातिष्ठतानु। यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीरः स्वाहा देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा वाते धाः ॥ ३ ॥

कृणोतु तानष्टा चत्वारिंशच्च ॥ ४४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके चतुश्चत्वारिंशोऽनुवाकः ॥ ० ॥

त्रिचत्वारिंशे अनुवाके दक्षिणा निरूपिता। चतुश्चत्वारिंशे समिष्टयजुर्होमो निरूप्यते। कल्पः "जुह्वां नवगृहीतं गृहीत्वा। धाता रातिरित्यन्तर्वेद्यूर्द्ध्वस्तिष्ठन्त्सन्ततꣳ समशो नव समिष्टयजूꣳषि जुहोति" इति। तत्र षड़ृचः त्रीणि यजूꣳषि जुहोति। षट्सु प्रथमा तावदेवं पठिता "धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः। त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु" इति। धाता सविता प्रजापतिरग्निस्त्वष्टा विष्णुश्चेत्येते षड्देवा नो अस्माकमिदं हविर्जुषन्तां। कीदृशो धाता। रातिर्दानशीलः। कीदृशः प्रजापतिः। निधिपतिः निधीनां महापद्मशङ्खखर्वपद्मादिनामकानां नवानां निधीनां पालयिता। सोऽयं देवगणो यजमानसम्बन्धिन्या प्रजया सꣳरराणः सम्यक् रममाणः। तथा यजमानार्थं द्रविणं दधातु पोषयतु॥ अथ द्वितीया "समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या। सम्ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमत्या यज्ञियानां" इति। हे इन्द्र त्वं अनुग्रहयुक्तेन मनसा नो अस्मान् गोभिः सन्नेषि संयोजय। सूरिभिर्विद्वद्भिर्होतृप्रमुखैः संयोजय। हे मघवन् स्वस्त्या क्षेमेण संयोजय। ब्रह्मणा वेदेनार्थज्ञानसहितेन देवकृतं देवार्थं कर्म यदस्ति तेन संयोजय। यज्ञसम्बन्धिनां देवानां सुमत्या अ-

नुग्रहबुध्या संयोजय ॥ अथ तृतीया "सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन। त्वष्टा नो अत्र वरिवः कृणोत्वनुमार्ष्टु तनुवो यद्विलिष्टं" इति। वयं देवताऽनुग्रहबलाद्वर्चसा बलेन तद्धेतुना च पयसा क्षीरादिना समगन्महि सङ्गतास्मः। तनूभिः शरीरैः शोभनैः सङ्गताः। शिवेन शुद्धात्मना मनसा सङ्गताः। त्वष्टा देवो नो अस्माकं अत्रास्मिन् कर्म्मणि वरिवो वरणीयं धनं कृणोतु करोतु। किञ्च तनुवः शरीराणि अनुमार्ष्टु शोधयतु। यद्विलिष्टं पापं तदप्यनुमार्ष्टु शोधयतु ॥ अथ चतुर्थी "यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह। ऋधगयाडृधगुता शमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान्" इति। हे अग्ने यद्यस्मात् कारणात् अद्यास्मिन् दिने इह देवयजनदेशे अस्मिन् यज्ञे प्रयति प्रवर्त्तमाने सति त्वां होतारं होमनिष्पादकं अवृणीमहि तस्मात् कारणात् ऋधक् समृद्धं यथा भवति तथा अयाट् अयाक्षीः। उत अपि च त्वं ऋधक् समृद्धं प्रजानन् अशमिष्ठाः अस्मद्विघ्नशान्तिं अकार्षीः अतस्त्वं विद्वान् अस्मद्भक्तिं जानन् इमं यज्ञं उपयाहि प्राप्नुहि ॥ अथ पञ्चमी "सुगा वो देवाः सदनमकर्म्म य आजग्म सवनेदं जुषाणाः। जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि" इति। हे देवाः ये यूयं जुषाणाः प्रीयमाणा इदं सवना इमानि सवनानि आजग्म आगताः तेषां वः सदनं स्थानं सुगा स्वाधीनं अकर्म्म वयमकार्ष्म। विश्वे ते सर्व्वे यूयं जक्षिवाꣳसः सवनीयपुरोडाशान् भक्षितवन्तः पपिवाꣳसः सोमं पीतवन्तश्च

हे वसवो निवासहेतवो यूयं विश्वेऽस्मे अस्मासु वसूनि धनानि धत्त स्थापयत॥ अथ षष्ठी "यानावह उशतो देव देवान् तान् प्रेरय स्वे अग्ने सधस्थे। वहमाना भरमाणा हवीꣳषि वसुं घर्मं दिवमातिष्ठ तानु" इति। हे अग्ने देव उशतो हवींषि कामयमानान् यान् देवान् वहः आवहः वर्णव्यत्ययात् आह्वः, आहूतवानसि, तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय। हे देवाः हवींषि वहमाना रथादिभिर्नयन्तः भरमाणाः पोषयन्तः वसुं जगन्निवासहेतुं घर्मं आदित्यं आतिष्ठत आगच्छत। अनु अनन्तरं दिवं स्वर्गमागच्छत ॥*॥ अथ त्रयाणां यजुषां मध्ये प्रथमं यजुराह "यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा" इति। हे यज्ञ त्वं स्वप्रतिष्ठार्थं यज्ञनामकं विष्णुं गच्छ। फलप्रदानार्थं यज्ञपतिं यजमानं गच्छ। स्वनिष्पत्त्यर्थं स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ। स्वाहा हुतमस्तु॥ अथ द्वितीयं "एष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीरः स्वाहा" इति। हे यज्ञपते यज्ञस्वामिन् एषोऽनुष्ठीयमानस्ते यज्ञः सूक्तवाकैः स्तोत्रैः सहितः। शोभना वीराः कर्मकुशला ऋत्विजो यस्यासौ सुवीरः। तत इदमाज्यं त्वयि स्वाहा हुतमस्तु ॥ अथ तृतीयं "देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः" इति। हे गातुविदो मार्गज्ञा देवाः गातुं वित्त्वा भवदागममार्गं ज्ञात्वा यज्ञे समाप्ते सति गातुमित पुनस्तमेव मार्गं गच्छत। हे मनसस्पते देव परमेश्वर

नो अस्माकमिमं यज्ञं देवेषु हविर्भुक्षु स्वाहा प्रथमं स्थापय। ततो वाचि मन्त्ररूपायां वाग्देवतायां स्थापय। ततो वाते क्रियाप्रवर्त्तके देवे धाः स्थापय। यथोक्तमन्त्रसाध्यं होमं विधत्ते "समिष्टयजूंषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति" (सं०६का०।६प्र०।२अ०) इति। सम्यग्यजनं समिष्टं युज्यन्ते प्रयुज्यन्त इति यजूंषि। धाता रातिरित्यादयो मन्त्रा यजूंषि समिष्टार्थानि यजूंष्युच्चार्याज्यं जुहुयात्। तच्च यज्ञस्य सम्यगनुष्ठितौ सम्पद्यते क्रूरादिदोषाणां होमेन समाहितत्वात्। क्रूरं पशुहिंसादिविशिष्टं विहितस्य दक्षिणादिद्रव्यस्याल्पीभावः। अत्ययानत्ययौ कालकृतौ। तथा हि पाशुकानां प्रयाजानां चोदकवशेन हविरासादनादूर्द्ध्वमनुष्ठानं प्राप्तं तत् तु तिष्ठन्तं पशुं प्रयजतीति वचनेन पशुविशसनात् प्रागेव अपकृष्टं। तदनादृत्य चोदकवशेनैवानुष्ठानमशास्त्रीयः कालात्ययः। तथा हतीयसवनोपक्रमे सवनीयपशोरङ्गप्रचारानन्तरमेव अनूयाजास्चोदकवशेन प्राप्ताः। ते त्वाग्निमारुतादूर्द्ध्वमनूयाजैश्चरन्तीति वचनेन हतीयसवनस्य समाप्तिकाल उत्कृष्टः। तदनादृत्योपक्रम एवानुष्ठानमशास्त्रीयः कालात्ययः। अपबर्हिषः प्रयाजान् यजतीति वचनेनावभृथेष्टौ बर्हिर्नामकश्चतुर्थः प्रयाजो निषिद्धः। तन्निषेधमतिक्रम्य तस्यानुष्ठानमतिकरणं। विहितस्य कस्यचिदङ्गस्य विस्मृतिरकरणं। अपिशब्दः क्रूरादीनां समुच्चयार्थः। तत् क्रूरादिकं तैरेव

होमैः समादधाति। आज्ञतिसङ्ख्यां विधत्ते "नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः सम्मितो यावानेव यज्ञस्तं प्रीणाति" (सं० ६का०।६प्र०।२अ०) इति। प्राणास्तदाधारच्छिद्राणि। नवसु मन्त्रेषु ऋग्यजुषोः अवान्तरसङ्ख्यां विधत्ते "षड्-ग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति चीणि यजू॰षि त्रय इमे लोका इमानेव लोकान् प्रीणाति" (सं०६का०।६प्र०।२अ०) इति। यज्ञस्य यजमानप्राप्तिः स्वकारणप्राप्तिश्च मन्त्रपाठादेव सम्पद्यत इत्याह "यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गमयति स्वां योनिं गच्छेत्याह स्वामेवैनं योनिं गमयति" (सं०६का०।६प्र०।२अ०) इति। सुवीरशब्देन वीर्यप्राप्तिः सूच्यत इत्याह "एष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीर इत्याह यजमान एव वीर्यं दधाति" (सं० ६का०।६प्र०।२अ०) इति। देवा गातुविद इत्येतन्मन्त्रप्रशंसार्थमाख्यायिकामाह "वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति सहोवाच यज्ञपताविति सत्याद्वै सृञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद् यजमानस्यापराभावायेति" (सं० ६का०।६प्र०।२अ०) इति। वसिष्ठगोत्रोत्पन्नः सत्यहवस्य पुत्रो देवभागनामानं मुनिं पप्रच्छ। यदा सृञ्जयाख्यदेशस्थान् बहुविधसोमयागानुष्ठायिनो याजितवानसि। तदा किं यज्ञ॰ स्थाहेत्येवं यज्ञलिङ्गके देवा गातुविद इत्येतस्मिन्मन्त्रे यज्ञं समिष्टयजुर्होमं समापितवानसि उत

यज्ञपतिं गच्छेत्येवं यज्ञपतिलिङ्गके यज्ञ यज्ञं गच्छेत्येतस्मिन्मन्त्रे इति। तत्र द्वितीयपक्षे सति यस्मात् सत्याद्यज्ञात् पराभवन् तस्मात् प्रथमपक्ष एव उपादेय इत्युत्तरं। अत्र विनियोगसङ्ग्रहः।

"धातानुवाके सर्व्वस्मिन् समिष्टाख्या यजूंषि हि।
ऋचः षडाद्याः शेषाणि यजूंष्येतैर्जुहोति हि"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुश्चत्वारिंशोऽनुवाकः॥ ४४ ॥ * ॥

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवे करुतापवक्ता हृदयाविधश्चित्। शतन्ते राजन् भिषजः सहस्रमुर्व्वी गम्भीरा सुमतिष्टे अस्तु। बाधस्व द्वेषो निर्ऋतिं पराचैः कृतश्चिदेनः प्रमुमुग्ध्यस्मत्। अभिष्ठितो वरुणस्य पाशो ऽग्नेरनीकमप आविवेश। अपान्नपात् प्रतिरक्षन्नसुर्य्यं दमे दमे॥ १ ॥

समिधं यक्ष्यग्ने। प्रति ते जिह्वा घृतमुच्चरण्येत्समुद्रे ते हृदयमप्स्वन्तः। सन्त्वाविशन्त्वोषधीरुतापो यज्ञस्य त्वा यज्ञपते हविर्भिः। सूक्तवाके नमोवाके विधेमावभृथनिचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृत-

मेनोऽयाऽव मर्त्त्यमर्त्त्यकृतमुरोरा नो देव रिषस्पाहि सुमित्रा न आप ओषधयः ॥ २ ॥

सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो देवीराप एष वो गर्भस्तम्वः सुप्रीतः सुभृतम-कर्म्म देवेषु नः सुकृतो ब्रूतात् प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्यपो अन्वचारिषः रसेन सम-सृक्ष्महि। पयस्वाः अग्न आगमं तं मा सः सृज वर्च-सा ॥ ३ ॥

दमे दमे ओषधय आपट् च ॥ ४५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपा-ठके पञ्चचत्वारिंशोऽनुवाकः ॥ ० ॥

चतुश्चत्वारिंशे ऽनुवाके समिष्टयजुर्होमो ऽभिहितः। पञ्चच-त्वारिंशे ऽनुवाके अवभृतो वर्ण्यते। कल्पः "उरुः हि राजा वरुण-श्चकारेति वेद्या अभिप्रयान्तो वदन्ति चात्वालाद्वा" इति। पा-ठस्तु "उरुः हि राजा वरुणश्चकार सूर्य्याय पन्यामन्वेतवा उ। अपदे पादा प्रतिधातवे ऽकरुताऽपवक्ता हृदयाविधश्चित्" इति। उशब्दोऽवधारणे। वरुण एव राजा सूर्याय सूर्यस्यान्वेतवे अनुक्रमेण गन्तुं अपदे निरालम्बे अन्तरिक्षे उरुं पन्थां वि-

स्तीर्णं मार्गं यस्माच्चकार तस्मात् अस्माकमपि पादा प्रतिधातवे पादं प्रक्षेप्तुं मार्गमकः करोतु। उत अपि च यः शत्रुरपवक्ता निन्दकः यस्य हृदयाविधो हृदयोपलक्षितं शरीरं ताडयति, चिच्छब्दः समुच्चये, सोऽपि प्रतिबन्धमकृत्वा मार्गं करोत्वित्यर्थः। कल्पः "शतं ते राजन् भिषजः सहस्रमित्यपो दृष्ट्वा जपति" इति। पाठस्तु "शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु। बाधस्व द्वेषो निर्ऋतिं पराचैः कृतञ्चिदेनः प्रमुमुग्ध्यस्मात्" इति। हे राजन् वरुण तव शतसहस्रसङ्ख्याकाः भिषजोऽस्मदुपद्रवनिवारकाः सन्ति। अस्मासु तव सुमतिरनुग्रहबुद्धिरस्तु। कीदृशी। उर्व्वी विपुला सार्व्वकालिकी। गभीरा आदरयुक्तेत्यर्थः। द्वेषो द्वेषिणो बाधस्व। निर्ऋतिं यज्ञविघातिनीं पराचैः तिरस्कुरु इत्यर्थः। अस्माभिः कृतमपि पापं अस्मत्तः प्रमोचय। कल्पः "अभिष्ठितो वरुणस्य पाश इत्युदकान्तमधितिष्ठन्ते" इति। जलमध्यवर्त्तिसूक्ष्मतन्वाकारो बन्धनहेतुर्जीवविशेषो वरुणपाशः सोऽयमभिष्ठितः पादाक्रमणेन तिरस्कृतः। कल्पः "अग्नेरनीकमप आविवेशेति स्रुच्यमाघारयति" इति। पाठस्तु "अग्नेरनीकमप आविवेश। अपान्नपात् प्रतिरक्षन्नसुर्यं दमे दमे समिधं यक्ष्यग्ने। प्रतिते जिह्वा घृतमुच्चरण्येत्" इति। अग्नेरनीकं मुखमप्सु प्रविष्टं। हे अपान्नपात् एतन्नामकाग्ने दमे दमे तत्तत् गृहे असुर्यं असुरैः कृतं यज्ञविघ्नं प्रतिरक्षन् प्रतिनिवर्त्य यज्ञं पालयन् समिधं समिन्धनसाधनं घृतं यक्षि सङ्गतं कुरु। ते तव जिह्वा घृतं प्रति

उच्चरणेत उद्युक्ता भवतु। उरुꣳ हीत्यादिमन्त्रान् व्याचख्युः प्राचीनमनुष्ठानं विधत्ते "अवभृथयजूꣳषि जुहोति यदेवाऽर्वाचीनमेकहायनादेनः करोति तदेव तैरवयजते" (सं०६का०।६प्र०।३अ०) इति। अवभृथाख्यं कर्म्म कर्त्तुं उदकसमीपे जिगमिषुः आयुर्दा इत्यादिभिस्त्रिभिर्मन्त्रैर्जुहुयात्। तथा च सूत्रं "आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यन् जुहुयादवभृथनिचङ्कुणेति च, नमो रुद्राय वास्तोष्पतये, आयने विद्रवणे। उद्याने यत्परायणे। आवर्त्तने विवर्त्तने। यो गोपायति तꣳ हुवे" इति। इतः पूर्व्वमेकस्मिन् संवत्सरे कृतं पापं तदेतैर्होमैरवयजते विनाशयति। अवभृथमुद्दिश्य उदकसमीपे गमनं विधत्ते "अपो ऽवभृथमवैत्यप्सु वै वरुणस्य पाशः साक्षादेव वरुणमवयजते" (सं०६का०।६प्र०।३अ०) इति। अपां प्राप्त्या तदभिमानिनं वरुणं साक्षादव्यवधानेनैव अवयजते पूजयति। गमनकाले प्रस्तोतुः सामगानं विधत्ते "वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति साम्ना प्रस्तोतान्ववैति साम वै रक्षोहा रक्षसामपहत्यै" (सं०६का०।६प्र०।३अ०) इति। गीयमानेन साम्ना सह गच्छेयुरिति शेषः। साम्नोऽन्तेऽवस्थितस्य निधननामकस्य भागस्य त्रिरावृत्तिं त्रित्वसङ्ख्याञ्च विधत्ते "त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षाꣳस्यपहन्ति" (सं०६का०।६प्र०।३अ०) इति। ऋत्विग्यजमानानां सर्व्वेषां निधनोच्चारणं विधत्ते "पुरुषः पुरुषो निधनमुपैति पुरुषः पुरुषो हि रक्षस्वी रक्षसामपहत्यै" (सं०६का०।६प्र०।

३अ०) इति। रक्षसो सर्वेषां प्रत्येकं बाधकं रक्षोऽस्तीत्यर्थः। अत्र सूत्रं "सर्वे सहपत्नीका स्त्रिः साम्ना निधनमुपयन्ति, अर्द्धाध्वे द्वितीयं, प्राप्य तृतीयं" इति। मन्त्रोक्तो मार्गविस्तारः पादप्रतिष्ठार्थ इत्याह "उरुꣳ हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै" (सं०६का०।६प्र०।३अ०) इति। भिषक्शब्देन यजमानस्य पापोपद्रवपरिहारः सूच्यत इत्याह "शतं ते राजन् भिषजः सहस्रमित्याह भेषजमेवास्मै करोति" (सं०६का०।६प्र०।३अ०) इति। मन्त्रेणैव वरुणपाशः परिच्छिद्यत इत्याह "अभिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभितिष्ठति" (सं०६का०।६प्र०।३अ०) इति। अप्सु बर्हिः प्रक्षिप्य तस्योपरि जुहुयादिति विधत्ते "बर्हिरभिजुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोति" (सं०६का०।६प्र०।३अ०) इति। "अग्निवान् वै दर्भस्तम्बः" इति श्रुतेरग्नियुक्तत्वं। अत्र सूत्रं "तृणं प्रहृत्य स्रौवमाघारयति यदि वाऽपरो तृणꣳ स्यात् तस्मिन् जुहुयात" इति। चोदकप्राप्तेषु पञ्चसु प्रयाजेषु बर्हिर्नामकं चतुर्थप्रयाजं निषेधति "अप बर्हिषः प्रयाजान् यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान् मुञ्चति" (सं०६का०।६प्र०।३अ०) इति। यद्यप्यत्राज्यभागौ चोदकादेव प्राप्तौ तथापि मन्त्रविशेषमभिप्रेत्य पुनर्विधत्ते "आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति" (सं०६का०।६प्र०।३अ०) इति। आज्यभागयोः यज्ञचक्षुष्ट्वमन्यत्र श्रुतं "चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ" इति। प्रकृतौ अग्निर्वृत्राणीत्यादिके पुरोऽनुवाक्ये

इह तु "अप्स्वग्ने सधिष्टवे" इत्यादिके। तथा च सूत्रं "अपाम-न्नावाज्यभागौ यजति अप्स्वग्न इत्येषा अप्सु मे सोमो अब्रवीत्" इति। प्रधानदेवतां विधत्ते "वरुणं यजति वरुणपाशादेवैनं मुञ्चति" (सं०६का०।६प्र०।३अ०) इति। स्विष्टकृद्देवतां वि-धत्ते "अग्नीवरुणौ यजति साक्षादेवैनं वरुणपाशान् मुञ्चति" (सं०६का०।६प्र०।३अ०) इति। साक्षाच्छीघ्रमेवेत्यर्थः। चोदक-प्राप्तेषु त्रिष्वनूयाजेषु बर्हिर्नामकं प्रथमानूयाजं निषेधति "अप बर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपा-शान् मुञ्चति" (सं०६का०।६प्र०।३अ०) इति। प्रयाजानूयाजान् प्रशंसति "चतुरः प्रयाजान् यजति द्वावनूयाजौ षट्सम्पद्यन्ते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति" (सं०६का०।६प्र०।३अ०) इति। बोधायनः "अथाप्सु स्रुचं प्रतिष्ठापयति, समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति, सन्त्वाविशन्त्वोषधीरु-ताप इत्यप्स्ववापो जुहोति, यज्ञस्य त्वा यज्ञपते हविर्भिः, सूक्तवाके नमोवाके विधेम" इति। आपस्तम्बस्त्वेकमन्त्रतामाह "ऋजीषस्य स्रुचं पूरयित्वाप्सूपमारयति, समुद्रे ते हृदयमप्स्व-न्तरिति, ततो यो विन्दुरुत्प्लवते तमुपस्पृशेत्" इति। हे जुहु ते हृदयं विलं समुद्रसमास्वप्सु अन्तर्मध्ये प्रतितिष्ठतु। ऋजीषरूपा ओषधयस्त्वां सम्यक् प्रविशन्तु। अपि च अपो वि-शन्तु। अथ वा वरुणं सम्बोध्य व्याख्येयं "इदं द्यावापृथिवी भद्रमभूत्" इत्यादिको मन्त्रः सूक्तवाकः। "नमो वाचे या चोदिता" इत्यादिको मन्त्रो नमोवाकः। हे यज्ञपते यजमान

त्वदीयैर्हविर्भिः देवताः सन्तर्प्य त्वां सूक्तवाकनमोवाकद्वयेनोक्त-फले विधेम स्थापयाम। बोधायनः "अथैतमवभृथं संप्रकिरन्ति यत्किञ्च सोमलिप्तं भवति, अवभृथनिचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनो ऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि" इति। आपस्तम्बस्तु "आयुर्दा अग्ने, नमो रुद्राय वास्तोष्पतये" इति मन्त्राभ्यां सहैतं मन्त्रं होमे विनियुक्तवान् तच्च पूर्व्वमुदाहृतं। हे अवभृथकर्म्माभिमानिन् वरुण निचङ्कुण राक्षसभर्त्सनार्थं नितरां ध्वनिं कारितवानसि। निचेरुरसि अस्मद्रक्षार्थं निगूढत्वनचरणशीलोऽसि। हे निचङ्कुण अस्माभिः देवेषु कृतं एनोऽपराधं तैर्देवैः सह त्वं अवयाट् विनाशय। मर्त्येषु ऋत्विक्षु कृतं एनोऽपराधं तैर्मर्त्यैः सह अवयाट् विनाशय। हे देव उरोरधिकात् रिषः देवमर्त्यकृतहिंसनात् नोऽस्मान् आसमन्तात् पाहि। पाठक्रममनादृत्य एतन्मन्त्रमादौ व्याचष्टे "अवभृथनिचङ्कुणेत्याह यथोदितमेव वरुणमवयजते" (सं० ६का०।६प्र०।३अ०) इति। निचेरुनिचङ्कुणादिशब्दोदितं वरुणमवयजते उपचरति। धातूनामनेकार्थत्वाद्यथोचितं व्याख्येयं। वरुणसम्बोधनमाश्रित्य व्याचष्टे "समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणः" (सं० ६का०।६प्र०।३अ०) इति। संशब्देन यजमानस्याद्भिरोषधीभिश्च सङ्गतिः सूच्यत इत्याह "सं त्वा विशन्त्वोषधीरुताप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति" (सं०६का०।६प्र०।३अ०) इति। बोधायनः "अथाञ्जलिनाप उपसङ्गृह्य, सुमित्रा न आप ओषधयः सन्त्विति तां

दिशं निरुच्चति, यस्यां दिश्यस्य द्वेष्यो भवति, दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति" इति। आपस्तम्बस्य एक एव मन्त्रः "सुमित्रा न आप ओषधयः सन्त्वित्यपः प्रगाह्य" इति। स्पष्टो मन्त्रार्थः। कल्पः "देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य" इति। पाठस्तु "देवीराप एष वो गर्भस्तम्बः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात्" इति। हे आपो देव्यः एष वरुणो युष्माकं गर्भवदन्तस्थितः अतो वो युष्माकं परितोषाय तं वरुणं हविषा सुप्रीतं सुभृतं सुष्टुपुष्टञ्चाकर्म वयं कृतवन्तः। स वरुणो नो अस्मान् सुकृतः सम्यगनुष्ठातॄन् ब्रवीतु। स्पष्टार्थत्वात् सुमित्रान इति मन्त्रमुपेक्ष्य देवीराप इत्यस्य स्पष्टार्थतामाह "देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत्" (सं०६का०।६प्र०।३अ०) इति। ऋजीषस्य अप्सु प्रहारेण उद्गतानां विन्दूनां भक्षणाभक्षणयोर्दोषसद्भावात् तत्परिहाराय उपस्पर्शनं विधत्ते "पशवो वै सोमो यद्विन्दूनां भक्षयेत् पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद् यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान् भवति नैनं वरुणो गृह्णाति" (सं०६का०।६प्र०।३अ०) इति। सोमस्य पशुप्राप्तिसाधनत्वात् पशुत्वं भिद्यत इति। विन्दवो जलकणाः। वरुणग्रहणं नाम महोदराख्यरोगोत्पत्तिः। कल्पः "अथापामन्तं प्रतियौति, प्रतियुतो वरुणस्य पाशः, प्रत्यस्तो वरुणस्य पाश इति" इति। बन्धनहेतुर्वरुणस्य पाशः प्रतियुतः पृथक् कृतः। प्रत्यस्तो विनाशितः। मन्त्रस्यार्थस्तथैव फलवतीत्याह "प्रतियुतो वरु-

णस्य पाश इत्याह वरुणपाशादेव निर्मुच्यते" (मं०६का०।६प्र०।३अ०) इति। जलान्निर्गत्य पुनस्तज्जलमदृष्ट्वैव देवयजनदेशे गन्तव्यमिति विधत्ते "अप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै" (मं०६का०।६प्र०।३अ०) इति । अन्तर्हितिरदर्शनं । कल्पः "एधोऽस्येधिषीमहीत्याहवनीये समिध आधायापोऽन्वचारिषमित्युपतिष्ठन्ते" इति। पाठस्तु "एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तम्मा सꣳसृज वर्चसा"इति। हे समित् त्वं एधोऽभिवृद्धिहेतुरसि अतो वयमेधिषीमहि अभिवृद्धिं प्राप्ताः। अयमाद्यो मन्त्रः। समित् समिन्धनसाधनमसीति द्वितीयः। तेजः कान्तिसाधनमसि। कान्तिं मयि धेहीहि तृतीयः। एतैस्त्रिसः समिध आदध्यात्। अपो अनु जलमनुप्राप्य अचारिषं अवभृथकर्म अनुष्ठितवानस्मि। रसेन फलेन समसृक्ष्महि सङ्गतोऽस्मि। हे अग्ने पयस्वान् क्षीरादिसमृद्धियुक्त आगमं आगतोऽस्मि तं मा वर्चसा बलेन संयोजय। समिदाधानेन वह्निः पूज्य इत्याह "एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त उपायन्ति" (मं०६का०।६प्र०।३अ०) इति। नमस्यन्तः पूजयन्तः। मयि धेहीत्यस्याभिप्रायमाह "तेजोऽसि तेजो मयि धेहीत्याह तेज एवात्मन्धत्ते" (मं०६का०।६प्र०।३अ०) इति। अवशिष्टः स्पष्टत्वादुपेक्षितः। अत्र विनियोगसङ्ग्रहः।

"उरुं वदन्ति गच्छन्तः सर्वेऽप्यवभृथं प्रति ।
शतं दृष्ट्वा जलं जप्यमभ्याक्रामति तज्जलं ॥

अग्ने स्रुचाऽऽघारयतः समृजीषं जले क्षिपेत्।
अवेति गमने होमः सुमित्रा अवगाहनं॥
देवीरित्यभिमन्त्र्याथ प्रत्युद्गच्छति तज्जलात्।
एधः समित्तेज एतैर्होम आहवनीयके॥
अपो अग्नेरुपस्थानमिति मन्त्रास्त्रयोदश"॥ इति।

यद्यप्येतावता सौमिकमन्त्रकाण्डं तद्व्याख्यानरूपं ब्राह्मणञ्च समाप्तं॥०॥ तथापि सन्ति ब्राह्मणशेषा अष्टावनुवाकाः। ते त्वत्रैव निश्चियन्ते। तेष्वनुवाकेषु क्रमेण एते अर्थाः प्रतिपाद्यन्ते। यूपैकादशिनी॥१॥ पश्वेकादशिनी॥२॥ पात्नीवतपशुः॥३॥ सौम्यचर्वादिः॥४॥ अतिग्राह्यो ग्रहः॥५॥ अदाभ्यग्रहः॥६॥ अंशुग्रहः॥७॥ षोडशीग्रहश्चेति॥८॥ तत्र समनन्तरानुवाकप्रतिपाद्या यूपैकादशिनी एकयूपेन सह विकल्पिता। तथा चान्यत्र श्रूयते एकयूपो वैकादशिनो वा अन्येषां यज्ञानां यूपा भवन्ति "एकविंशिन्यश्वमेधस्य। सुवर्गस्य लोकस्याभिजित्यै" इति। अग्निष्टोमे यः सवनीयः पशुस्तेन सह उपरितनानुवाके वक्ष्यमाणा एकादशिनः पशवो विकल्पिताः। तथा च सूत्रं "क्रतुपशव एकादशिनश्च विकल्प्यन्ते" इति। तत्रैकादशिनः पश्वर्थाय यूपैकादशिनी तां विधत्ते "स्फ्येन वेदिमुद्धन्ति रथाक्षेण विमिमीते यूपं मिनोति त्रिवृतमेव वज्रं सम्भृत्य भ्रातृव्याय प्रहरति स्तृत्यै" (सं०६का०६प्र०४अ०) इति। भूमेरुपरितनममेध्यमपहन्तुं वेदिस्थानमुद्धन्यात्। तस्मिन् स्थाने वेदिरेकयूपपक्षे पदैर्विमातव्या। तथा च पूर्वमुदाहृतं। त्रिंशत्प-

दानि पश्चान्तिरश्चीत्यादिः। एकादशिनी पक्षे तु अवकाशस्य पर्य्याप्तये रथाक्षेण वेदिर्मातव्या। तथा च सूत्रं "यत् प्राग्वेदिमम्मानात् तत् कृत्वा दश रथाक्षामेकादशोपराꣳ रज्जुं मीत्वा" इति। उपरशब्देन प्रादेशपरिमिता यूपावटदेशा विवक्षिताः। द्वयोर्द्वयोरवटदेशयोर्मध्यदेशो रथाक्षेण परिमितः तादृश्या वेदेः दक्षिणांसमारभ्य उत्तरांसपर्यन्तेषु पङ्क्तिरूपेणावस्थितेष्वेकादशस्ववटेषु यूपान् उच्छ्रयेत्। यूपमिति जातावेकवचनं। स्फ्यरथाक्षयूपास्त्रयो वज्रस्य भागाः। तथा च आम्नातं "इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभजत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं" इति। तेषां त्रयाणामत्र मेलनात् वज्रस्तिवृत् सम्पद्यते। स्तृत्यै हिंसायै। यूपावटस्यार्द्धं वेद्यां अर्द्धं बहिरित्येवं तद्देशं विधत्ते "यदन्तर्वेदि मिनुयाद्देवलोकमभिजयेद् यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य सन्धौ मिनोत्युभयोर्लोकयोरभिजित्यै" (सं०६का०। ६प्र०।४अ०) इति। अन्तःसमीपदेशः वेदिस्थान्तस्य वेद्यन्तं तत्सन्धावुच्छ्रयेत्। उच्छ्रये काम्यान् कांश्चिद्विशेषान् विधत्ते "उपरसम्मितां मिनुयात् पितृलोककामस्य रशनसम्मितां मनुष्यलोककामस्य चषालसम्मितामिन्द्रियकामस्य सर्व्वान्त्समान् प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान् पशुकामस्य" (सं०६का०। ६प्र०।४अ०) इति। तक्षणरहितानि यूपमूलानि उपराणि। तैरेकादशिनी सम्मिता सदृशी एकस्योपरस्य यावानायामस्तावानेवेतरेषां दशानामित्यर्थः। रशनादेशस्योल्लयेन समाना रशनसम्मिता। चषालविस्तारेण समा चषालसम्मिता। अत एव

सूत्रकारेणोक्तं "आयामत उपराणि समानि स्युस्तिर्यङ्को मध्यानि रशनास्व प्रथिमस्वषालानि" इति। सर्व्वानुपररशनादेशचषालविस्तारान्। एकादशसु षष्ठो मध्यमः तत्पार्श्ववर्त्तिनौ द्वौ तेषां त्रयाणामेवोपरादिसाम्यनियमो नेतरेषां। तथा च सति पशुप्राप्तिः। तामेव पशुप्राप्तिं दर्शयति "एतान्वा अनु पशव उपतिष्ठन्ते पशुमानेव भवति" (सं०६का०।६प्र०।४अ०) इति। एतान् त्रीन् समान् अनु यजमानं पशवः प्राप्नुवन्ति। त्रिभ्योऽतिरिक्तेष्वष्टसु अन्योन्यस्पर्शं विधत्ते "व्यतिषजेदितरान् प्रजयैवैनं पशुभिर्व्यतिषजति" (सं०६का०।६प्र०।४अ०) इति। यूपैकादशिन्याः कामनाभेदेन दक्षिणदेशप्रवणत्वं निन्दित्वा उत्तरदेशप्रवणत्वं विधत्ते "यं कामयेत प्रमायुकः स्यादिति गर्त्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्त्तमिद्यस्यैवं मिनोति ताजक्प्रमीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याऽथ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै" (सं०६का०।६प्र०।४अ०) इति। गर्त्तशब्देन दक्षिणदेशनिम्नत्वं श्मशानं विवक्षितं। गर्तवन् मीयन्ते यूपा अस्यामेकादशिन्यामिति गर्तमित् तादृशीमुच्छ्रयेत्। अग्निष्ठनामको यो मध्यमो यूपः तस्मात् उत्तरार्द्धे स्थितं यूपपञ्चकं वर्षिष्ठं अत्युन्नतं। दक्षिणार्द्धे स्थितं पञ्चकं ह्रसीयाꣳसं ह्रस्वं। ईदृशी एकादशिनी गर्तमित् तस्यामुच्छ्रितायां तदानीमेव म्रियेत। स्वर्गार्थमुक्तवैपरीत्यं कुर्यात्। आक्रम्यते आरुह्यते स्वर्गो अनेन सेतुनेत्याक्रमणः। लौकिकदृष्टान्तेनैकस्मिन्नग्निष्ठे

रशनाद्वयवेष्टनमग्निष्ठद्वये एकरशनावेष्टननिषेधद्वारा पुरुषस्य विवाहद्वयविधिः स्त्रिया विवाहद्वयनिषेधश्च विदधदेकस्मिन्यूपे रशनाद्वयं विधत्ते "यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाꣳरशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते" (सं०६का०।६प्र०।४अ०) इति। स्पष्टोऽर्थः। अग्निष्ठो यूपः। तथा च सूत्रं "अग्निष्ठं द्वाभ्याꣳ रशनाभ्यां परिवीयेति"। रशनायाः स्त्रीत्वादेकस्मिन् यूपे रशनाद्वयस्यान्तयोर्मेलनं प्रवेष्टनञ्च कामनाभेदेन विधत्ते "यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत् स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयेत् पुमानेवास्य जायते" (सं०६का०।६प्र०।४अ०) इति। अन्तयोः समीपे उपान्ते। अन्तेन सहितमान्तं रशनाद्वयभागं। एकादशभ्योऽतिरिक्तं उपशयाख्यं यूपं विधत्ते "असुरा वै देवान् दक्षिणत उपानयन् तान् देवा उपशयेनैवा पानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशयेद् भ्रातृव्यापनुत्त्यै" (सं०५का०।६प्र०।४अ०) इति। पुरा कदाचित् असुरा देवान् स्ववशान् कृत्वा अग्निष्ठायूपात् दक्षिणभागे समानयन् तानसुरान् देवा उपशयेन एकादशिनीसमीपे शयानेन यूपेनापानुदन्त। समीपशयनादुपशयनाम सम्पन्नं। उपशये उपशेते शयानत्वेन पातयेदित्यर्थः। अत्र सूत्रं "उपशयं द्वाभ्याꣳ रशनाभ्यां परिवीयाग्रेण दक्षिणं यूपं प्राञ्चं निदधाति" इति। द्वेष्यं पशुत्वेन निर्दिशेदिति विधत्ते "सर्व्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यज-

मानः पशुर्यन्ननिर्दिशेदार्त्तिमार्च्छेद् यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्याद्यमेव द्वेष्टि तस्मै पशुं निर्दिशति" (सं०६का०। ६प्र०।४अ०) इति। अग्निष्ठादय एकादशयूपाः वक्ष्यमाणैराग्नेयादिपशुभिरुपेताः उपशयेतु पश्वन्तराभावात् यजमानस्य आर्तिप्राप्तिः द्वेष्यं निर्दिश्य तद्वारयेत्। द्वेष्याभावे मूषकं निर्दिशेदिति विधत्ते "यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान् पशून् हिनस्ति नारण्यान्"(सं० ६ का०।६प्र०।४अ०) इति। विहितामेकादशिनीं प्रशंसति "प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत् तया वै सोऽन्नाद्यमवारुन्धत यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे य एकादशः स्तन एवास्यै सदुह एवैनां तेनेति" (सं०६का०।६प्र०।४अ०) इति। दशयूपानां विराड्रूपत्वेन धेनुत्वादेकादशो यूपः स्तनो भवति। पात्नीवताख्यं त्रयोदशं यूपं विधत्ते "वज्रो वा एषा सम्मीयते यदेकादशिनी सेश्वरा पुरस्तात् प्रत्यञ्चं यज्ञꣳ सम्मर्दितोर्यत्पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय" इति (सं० ६का०।६प्र०।४अ०) इति। सैकादशिनी वज्ररूपा सती पुरस्तादवस्थाय प्रत्यगवस्थितं यज्ञं मर्दितुमीश्वरा भवति। मर्दितस्य पुनः समाधानं प्रत्युत्तब्धिः। सयो बन्धः षिञ्बन्धन इत्यस्माद्धातोरुत्पन्नत्वात्। सयत्वाय दृढत्वायेत्यर्थः। यूपैकादशिनी निरूपिता ॥ * ॥

अथ पश्वेकादशिनीं विधत्ते

"प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामे-

काद्शिनीमपश्यत् तया वै स आयुरिन्द्रियं वीर्य्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्य्यं यजमान आत्मन्धत्ते" (सं०६का०।६प्र०।५अ०) इति। प्रजापतिः प्रजाः सृष्ट्वा वीर्य्यादिक्षयात् रिक्तोऽहमिति धीः। तथा यज्ञप्रयासेनापि। पश्वैकादशिन्या तत्समाधानं। ते च पशुविशेषा देवतासहिता अश्वमेधप्रकरणे समाम्नाताः "आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः पेत्वः" इति। कृष्णग्रीवत्वादिभिर्विशेषिताः सर्वेऽप्यजाः। मेषी त्वेकैवान्यजातिः। विशेषणानि च तस्मिन्नेव प्रकरणे व्याख्यास्यन्ते। तानेतानत्र पशून् विशेषेणाविकारेण प्रशंसन् विशेषविधिमुन्नयति "प्रैवाग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्रजनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्रजनयतीन्द्रियमेवैन्द्रेणावरुन्धे विशंमारुतेनौजोबलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः" (सं०६का०।६प्र०।५अ०) इति। प्रवापयति बीजं स्वतः सम्पादयति। आग्नेयस्य पुंसः सारस्वत्या स्त्रिया सह मिथुनीकरणं। सौम्येन योषिति रेतो धारणं। पौष्णेन प्रजोत्पत्तिः। बार्हस्पत्येन ब्रह्मण उत्पत्तिसाधनत्वं। वैश्वदेवेन प्रजानां तद्देव-

तानुग्रहः। ऐन्द्रेणेन्द्रियपाटवं। मारुतेन जनपदप्राप्तिः। ऐन्द्राग्नेन देहपुष्टिर्बलञ्च। सावित्रेणानुष्ठाने प्रेरणं। वारुणेनोपद्रवराहित्यं। अत्र षष्ठसप्ताष्टमानां पशूनां वैश्वदेवैन्द्रमारुतानामितरपशुवत्पाठत एव क्रमो यद्यपि प्राप्तः तथापि तं क्रममनूद्य प्रशंसति "मध्यत ऐन्द्रमालभते मध्यत एवेन्द्रियं यजमाने दधाति पुरस्तादैन्द्रस्य वैश्वदेवमालभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात् पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमालभते विड्वै मरुतो विशमेवास्मा अनुबध्नाति" (सं० ६का०।६प्र०।५अ०) इति। वैश्वदेवमारुतयोर्मध्यमैन्द्रस्य स्थानं। तेन मध्यमे एव वयसि बलाधिक्यं यजमाने स्थापयति। विश्वे देवा अन्नाभिमानिनः। वैश्वदेवस्य पुरस्तादनुष्ठितत्वात् तत्सम्बद्धमन्नमत्तुं पुरस्तादेव स्थापयति। तच्चान्नं पुरस्तान्मुखेनाद्यते। मारुतस्यैन्द्रमनुवर्त्तमानत्वात् मरुद्रूपाः ग्रामनिवासिनः प्रजा अस्य यजमानस्य अनुकूलाः करोति। कामनाविशेषेण क्रमव्यत्या संविधत्ते "यदि कामयेत योऽवगतः सोऽपरुध्यतां यो ऽपरुद्धः सोऽवगच्छत्वित्यैन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रं य एवावगतः सोऽपरुध्यते योऽपरुद्धः सोऽवगच्छति" (सं० ६का०।६प्र०।५अ०) इति। अवगतः प्राप्तैश्वर्य्यः। अपरुध्यतां ऐश्वर्य्याद् भ्रश्यतां अयमेकः कामः। एतद्विपर्य्ययो ऽन्यः कामः तस्मिन्नुभयविधेऽपि कामे सप्तमैकादशस्थानयोरैन्द्रावारुणयोः स्थानव्यत्ययं कुर्यात्। प्रजानां व्याकुलीभावं चेत् कामयेत तदानीमेकादशानां पशूनां क्रमसाङ्कर्य्यं विधत्ते

"यदि कामयेत प्रजामुह्येयुरिति पशून् व्यतिषजेत् प्रजा एव मोहयति" (सं०६का०।६प्र०।५अ०) इति। उदक्प्रवणत्वेन स्थापिताया एकादशयूपपङ्क्तेर्दक्षिणयूपे वारुणस्य आलम्भनं विधत्ते "यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णी-याद्दक्षिणत उदञ्च मालभतेऽपवाहतोऽपां प्रजानामवरुणग्रा-हाय" (सं०६का०।६प्र०।५अ०) इति। अपामभिवाहः तत्प्र-वाहस्थानभूतो निम्नो देशः। तत्रावस्थित उत्तरयूपे वारुणा-लम्भेन प्रजानां वरुणग्रहणरूपो रोगः स्यात् दक्षिणयूपे पशो-रुदङ्मुखत्वेनालम्भे रोगो न भवति। दक्षिणयूपस्योन्नतदेशव-र्त्तित्वेन अपामपवाहतः प्रवाहस्थानाभावादित्यर्थः। अथ सूत्रं "आग्नेयं कृष्णग्रीवमग्निष्ठ उपाकरोत्युत्तरे सारस्वतीं मेषीं दक्षिणे सौम्यं बभ्रुं एवं व्यत्यासं दक्षिणापवर्गान् पशूनुपाकरोति वारु-णमन्ततो दक्षिणत उदञ्चं" इति। पश्वेकादशिनी निरूपिता। ॥ * ॥ ॥ अथ पात्नीवतपशुं विधत्ते

"इन्द्रः पत्नियामनुमयाजयत् तां पर्यग्निकृतामुदसृजत् तया मनुरार्ध्नोद्यत् पर्य्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्र्द्धि-मार्ध्नोत्तामेव यजमान ऋध्नोति" (सं०६का०।६प्र०।६अ०) इति। अत्र पत्नीशब्देन पात्नीवतसंज्ञके यूपे उपाकृतः त्वष्टृदेवताकः पशुर्लक्ष्यते शाखान्तरे तथा विधानात्। पश्वेकादशिनी गत-पत्नीसंयाजानन्तरभावित्वादस्य यूपस्य पात्नीवतत्वं। अत्र सूत्रं "जाघनीभिश्च पत्नीः संयाजयन्ति अनूबन्ध्या वपायाꣳ हुताया-मग्रेण शालामुखीयं पात्नीवतं मिनोति यथाधोनाभिमनवस्तीर्णे

चषालं तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं पशुमुपाकृत्य पर्य्यग्निकृतमुत् सृज्याज्येन शेषं समापयेद्यावन्तिपशोरवदानानि स्युस्तावत् कृत्वाज्यस्यावद्यति पशुधर्म्माज्यं भवति शालामुखीये प्रचरन्तीति विज्ञायते" इति। तस्मादिन्द्रः पात्नीवतरूपे नियुक्तेन पशुना मनुमयाजयदिति व्याख्येयं। पर्य्यग्निकृते पशावुत्सृष्टे सति कर्मशेषस्याऽऽज्येन समाप्तिं विधत्ते "यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः पराभवति यज्ञं पराभवन्तं यजमानोऽनु पराभवति यदाज्येन पात्नीवतं संस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति" (सं०६का०।६प्र०।६अ०) इति। अप्रतिष्ठितात् असंस्थापनात् असमाप्तात्। अत्र पशोः कालं विधत्ते "इष्टं वपया भवत्यनिष्टं वशयाऽथ पात्नीवतेन प्रचरति तीर्थ एव प्रचरत्यथो एतर्ह्येवास्य यामः" (सं०६का०।६प्र०।६अ०) इति। वशावन्ध्या सा चाऽनूबन्ध्येत्यनेन नाम्नोच्यते। तदीयवपाहोमादूर्ध्वं हृदयाद्यङ्गहोमात् प्रागेतस्य पात्नीवतपशोः कालः। स च तीर्थमुचितं स्थानं। किञ्च तस्मिन्नेव काले अनूबन्ध्याख्यस्य पशोः यामः उपरमः समाप्तिर्भवति तस्य चान्तिमपशुत्वात् तत्समाप्तेः प्रागेव पात्नीवतप्रचारो युक्तः। देवतां विधत्ते "त्वाष्ट्रो भवति त्वष्टा वै रेतसः सिक्तस्य रूपाणि विकरोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि विकरोति" (सं०६का०।६प्र०।६अ०) इति। विकरोति विविधानि करोतीत्यर्थः। पात्नीवतपशोः त्वाष्ट्रत्वे सति तमेव यजमानं त्वष्टा वृषाणं रेतः सिञ्चन् यजमानस्य पत्नीष्वपि संयोजयति। स चास्मै यजमानार्थं

रूपाणि विकरोति विविधानि करोतीति ॥ इति पाश्वीव-तपश्नुर्निरूपितः। अथ सौम्यचरुं विधत्ते "घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति यत् सौम्यो भवति यथा मृतायाऽनु-स्तरणीं घ्नन्ति तादृगेव तत्" (सं०६का०।६प्र०।७अ०) इति। सोमस्याभिषवो बधस्थानीयः। अतोऽनुस्तरणीस्थानीयः सौम्यचरुः कर्त्तव्यः। मृतं दीक्षितमनुस्तीर्य्यते हन्यत इत्यनुस्तरणी काचिद्गौः। दीक्षितशवस्यावयवेषु हृदयहस्तादिषु गोशवस्य हृदयाद्यवयवान् संस्थाप्य तं दीक्षितं दहेत्। तदर्थं काचिद्गौर्हन्यते। चरोर्होमस्थानं विधत्ते "यदुत्तरार्धे वा मध्ये वा जुहुयाद् देवताभ्यः समदं दध्यात् दक्षिणार्धे जुहो-त्येषा वै पितॄणां दिक् स्वायामेव दिशि पितॄन् निरवदयते" (सं०६का०।६प्र०।७अ०) इति। वह्नेरुत्तरार्द्धमध्यदेशयोर्दे-वाहुतिस्थानत्वात् तत्र पित्र्यहोमे देवतादिभिः सह पितॄणां समदं कलहं कुर्य्यात्। अतः निरवदयते। देवदेशात् निष्कृष्य पितॄन् यजते। चरुशेषस्य दानं विधत्ते "उद्गातृभ्यो हरन्ति सामदेवत्यो वै सोम्यो यदेव साम्नश्छम्बट् कुर्व्वन्ति तस्यैव सशा-न्तिः" (सं०६का०।६प्र०।७अ०) इति। सामैव सौम्यचरोर-भिमानिदेवता। तथा सति सामवेदसम्बन्धि यदङ्गं उद्गातार इत्थं छम्बट्कुर्व्वन्ति नष्टं कुर्व्वन्ति तस्य दोषस्य चरुः प्रती-कारः। तस्मिन्नाज्यपूर्णे चरौ उद्गातृभिः स्वदेहच्छाया द्रष्टव्येति विधत्ते "अवेक्षन्ते पवित्रं वै सौम्य आत्मानमेव पव-यन्ते" (सं०६का०।६प्र०।७अ०) इति। सौम्यचरोः शुद्धिहे-

तुत्वात् तदवेक्षणेन उद्गातारः स्वदेहं शोधयन्ति। अत्र सूत्रं "आज्येन चरुमभिपूर्योद्गातृभ्यो हरन्ति तमुद्गातारो ऽवेक्षन्ते" इति। आज्यस्यापर्याप्तौ पुनरप्यन्यत्पूरणं विधत्ते "य आत्मानं न परिपश्येदितासुः स्यादभिदधिं कृत्वा ऽवेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते" (सं०६का०।६प्र०।७अ०) इति। इतासुः गतप्राणः स्यात्। अभितो दीयते प्रक्षिप्यते आज्यमस्मिंश्चराविव्यभिददिः। काम्ये अवेक्षणे मन्त्रविशेषं विधत्ते "यो गतमनाः स्यात् सोऽवेक्षेत यन्मे मनः परागतं यद्वामे अपरागतं राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवात्मन् दाधार न गतमना भवति" (सं०६का०।६प्र०।७अ०) इति। गतमनाः अव्यवस्थितचित्तः। उद्गातॄणां मध्ये यो गतमनाः यन्मे मन इत्यादिमन्त्रेणावेक्षेत। मदीयं मनः यदि मत्तो निष्क्रान्तं यदि वा निष्क्रमणोन्मुखं तदिदानीं निष्क्रान्तस्य सोमस्य राज्ञः प्रसादात् वयं तन्मनो अस्मास्वेव धारयामः। मन्त्रसामर्थ्याच्चित्तसमाधानं भवति। अग्नाविष्णू महिधामेत्यनयर्चा घृतयागं विधत्ते "अप वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्व्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्च दाधारेति" (सं०६का०।६प्र०।७अ०) इति। ईजानात् इष्टवतो यजमानादनीजानं पुरुषमभिलक्ष्य यज्ञोऽपक्रामति तत् समाधानाय आग्नावैष्णवमन्त्रयागः। तत्र नीचध्वनिं विधत्ते "उपांशु यजति मिथुनत्वाय" (सं०६का०।६प्र०।७अ०) इति।

सौम्यचरुगतेनोच्चध्वनिना सहोपांशुध्वनेर्मिथुनत्वं। अनूबन्ध्यां विधत्ते "ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टं नार्त्तिमार्च्छति यजमानः" (सं०६का०।६प्र०।७अ०) इति। यज्ञस्य यदङ्गं सम्यगिष्टं तस्याधिपतिर्मित्रः। स्वयमनाराधितः तदङ्गं दुरिष्टेन मिश्रयति। दुरिष्टस्याङ्गस्याधिपतिर्वरुणस्त्वनाराधितस्तद्दुरिष्टं सम्पाद्य स्विष्टेन मिश्रयति। तथा सत्युभाभ्यां स्विष्टस्य विनाशितत्वात् यज्ञः क्वाऽवतिष्ठेत यज्ञाभावे यजमानोऽपि कुत्र फलोपेतो भवेत्। वशालम्भेन तुष्टो मित्रः स्विष्टं पालयति। वरुणो दुरिष्टं नाशयति। ततो यज्ञस्य सुस्थितत्वान्निष्फलत्वरूपामार्त्तिं यजमानो न प्राप्नोति। अत्र सूत्रं "मैत्रावरुणीं गां वशामनूबन्ध्यामालभेत" इति। तामनूबन्ध्यां प्रशंसति "यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्रभिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै" (सं०६का०।६प्र०।७अ०) इति। सर्व्वसस्योपेता भूमिरुर्व्वरा तस्यां कृष्टायां कर्षणमनु तत्र मत्यं शस्याधानसाधनं गोमयादिद्रव्यं मत्यं, सदभिमतं फलमर्हतीति मत्यं, तद्वदृक्सामाभ्यां कर्षणेन वधसाम्यतामापदितस्य यज्ञस्य वशालम्भेन मत्यप्रक्षेपवत् फलजननशक्तिर्भवति, तेन च अशक्तिलक्षणस्य दोषस्य शान्तिर्भवति। पुनरपि वशां प्रशंसति "यातयामानि वा एतस्य छन्दाꣳसि य ईजा-

नश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशामालभते छन्दाᳪस्येव पुनराप्रीणात्ययातयामत्वायाथो छन्दःस्वेव रसं दधाति” (सं०६का०।६प्र०।७अ०) इति। ईजानो यज्ञं कृतवान् एतस्य छन्दांसि गतसाराणि भवन्ति। वशा तु छन्दसां सारः। वषट्कारदेवताया गायत्रीदेवतायाः शिरसि छिन्ने पतितेन रसेनोत्पन्नत्वात्। एतच्च काम्यपशुकाण्डे समाम्नातं। अतो वशालम्भेन छन्दसां गतसारत्वाभावात् प्रीतिर्भवति। प्रत्युत छन्दःसु विशेषरसः स्थाप्यते। इति सौम्यचरुघृतयागानूबन्ध्या निरूपिताः। अथाऽतिग्राह्यान् विधत्ते “देवा वा इन्द्रियं वीर्य्यां३ व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन् तदतिग्राह्याणामतिग्राह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन्धत्ते” (सं०६का०।६प्र०।८अ०) इति। इन्द्रवायू मित्रावरुणादिदेवैः इन्द्रियगतसामर्थ्यहेतौ सोमरसे विभक्ते सति अतिरिक्ताद्रसादेते गृह्यन्ते। तद्ग्रहणेन सामर्थ्यं यजमाने स्थाप्यते। विहितानामतिग्राह्याणां अग्न्यादिदेवतासम्बन्धं विधत्ते “तेज आग्नेयेनेन्द्रियमैन्द्रेण ब्रह्मवर्चसᳪ सौर्येण” (सं०६का०।६प्र०। ८अ०) इति। यजमान आत्मन्धत्त इत्यनुवर्त्तते। तेजः कान्तिः। इन्द्रियं बलं। ब्रह्मवर्चसं श्रुताध्ययनसम्पत्तिः। प्रातःसवने आग्रयणासादनादूर्ध्वं एते त्रयो ग्रहीतव्याः। अत्र सूत्रं “एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा त्रीनग्निष्टोमे अतिग्राह्यान् गृह्णाति आग्नेयमैन्द्रं सौर्य्यमित्यग्न

आयूꣳष्युत्तिष्ठꣳस्तरणिरिति ग्रहणसादनौ” इति। व्यतिरेक-मुखेन पृष्ठ्यः षडहेतानतिग्राह्यान् विधत्ते “उपस्तम्भनं वा एतद् यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत् पृष्ठेन गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि सꣳगृह्णीयुः” (सं० ६का०।६प्र०।८अ०) इति। यज्ञरूपस्य रथस्य अतिग्राह्या उत्तम्भनकाष्ठस्थानीयाः। षट्सु दिनेषु क्रमेण रथन्तर१ बृहत्२ वैरूप३ वैराज४ शाक्वर५ रैवत६ साम नामकैः साध्यानि पृष्ठ्यस्तोत्राणि चक्रस्थानीयानि। ततः पृष्ठ्यः षडहे अतिग्राह्यरूपोत्तम्भनाभावे तानि पृष्ठानि तं यज्ञरथं पुरः पातयित्वा संगृह्णीयुः विनाशयेयुः तस्मात् तान् गृह्णीयादित्यर्थः। उक्थ्ये चोदकप्राप्तान् अतिग्राह्यान् प्रतिषेधति “यदुक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञमतिग्राह्याः सꣳगृह्णीयुः” (सं०६का०।६प्र०।८अ०) इति। उत्तम्भनमन्तरेणैव पुरत उन्नतसदृश उक्थ्यः। तस्मिन् गृहीता अतिग्राह्याः पुरस्तादत्योन्नत्यमापाद्य यज्ञरथं प्रत्यञ्चं पातयित्वा विनाशयेयुः। तस्मात् तान्न गृह्णीयादित्यर्थः। पृष्ठ्यः षडहेणुक्थ्यसद्भावादेतं प्रतिषेधं वारयितुं पूर्व्ववाक्येनैते विहिताः। तद्वत् विश्वजिद्यागस्यापि उक्थ्यसंस्थस्य शाखान्तरे सद्भावात् तत्रापि निषेधं वारयितुं विधत्ते “विश्वजिति सर्व्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्य्यत्वाय” (सं०६का०।६प्र०।८अ०) इति। रथन्तरादीनि षडपि पृष्ठ्यस्तोत्राणि यस्मिन् सन्ति स सर्व्वपृष्ठः। अग्निष्टोमे तान् विधत्ते “प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स प्रियास्तनूरपन्यधत्त तदतिग्राह्या अभवन् वितनु-

स्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय" (सं०६का०।६प्र०।८अ०) इति। व्यादिशत् विभजज्य दत्तवान्। तदा स प्रजापतिः यज्ञ-सम्बन्धिनीः प्रियास्तनूः अपन्यधत्त अपनीय क्वचिद्गोपितवान्। तास्तनवोऽतिग्राह्याः। तस्मात् अग्निष्टोमस्य सतनुत्वाय तान् गृह्णीयात्। अत्रातिग्राह्याणां पृष्ठ्यः षडहादिविकृतिसम्बन्ध-प्रतीतेः प्रकृतावग्निष्टोमेऽपि विधीयन्ते। व्यावृत्तिकामस्य तान् विधत्ते "देवता वै सर्व्वाः सदृशीरासन् तानव्यावृतमगच्छन् ते देवा एत एतान् ग्रहानपश्यन् तानगृह्णताग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन् यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति" (सं०६का०।प्र६०।८अ०) इति। सर्व्वे देवाः सदृशीः तुल्यैश्वर्य्याः आसन् व्यावृतं ऐश्वर्य्याधिक्यलक्षणं। इतरेभ्यो व्यावृत्तं भ्रातृ-व्यात् ऐश्वर्याधिक्यमेतैरतिग्राह्यैः प्राप्नोति। तान् अतिग्राह्यान् प्रशंसति "इमे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्या-हुराग्नेयेनास्मिन् लोके ज्योतिर्धत्त एन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिन् लोके ज्योतिर्द्धत्ते ज्योतिष्मन्तो स्मा इमे लोका भवन्ति समावद्वीर्यानेनान् कुरुते" सं०६का०। ६प्र०।८अ०) इति। इमे पृथिव्यन्तरिक्षद्युलोकाः ते चाग्न्यादि-देवतानुग्रहेण ज्योतिष्मन्तस्तुल्यसामर्थ्याः। अन्तरिक्षस्य वायुर्दे-वता न त्विन्द्र इति चेत्। न। इन्द्रवाय्वोः सहावस्थानादैन्द्र-वायवग्रहे तद्दर्शनात्। प्रकारान्तरेण तान् प्रशंसति "एतान्

वै ग्रहान् बम्नाविश्ववयसावविन्दां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते प्रास्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति" (सं०६का०।६प्र०।८अ०) इति। बम्नाश्च विश्ववयाश्च देवाः तयोरतिग्राह्यमहिमाभिज्ञत्वात् तदर्थमुक्तमाधमास्येमे लोकाः प्राभुः प्रभाव सम्पन्नाः। इत्यतिग्राह्यग्रहा निरूपिताः। अथादाभ्यग्रहं विधत्ते "देवा वै यद्यज्ञे कुर्व्वत तदसुरा अकुर्व्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापन् ततो देवा अभवन् परासुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना परास्य भ्रातृव्यो भवति" (सं०६का०।६प्र०।८अ०) इति। असुराः मात्सर्य्येण देवैरनुष्ठितं यज्ञाङ्गं स्वयमप्यनुष्ठितवन्तः। तदाऽसुरवञ्चनेन देवाः गायत्रीत्रिष्टुब्जगतीभिर्निष्पाद्यानि त्रीणि सवनानि अदाभ्यग्रहे समापितवन्तः। तत्र हि "वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसा" इत्यादिभिस्त्रिभिर्मन्त्रैः त्रयः सोमांशवः पृथक् कर्त्तव्याः। अत्र सूत्रं "उपनद्धस्य राजस्त्रीन् अꣳशून् प्रवृहन्ति, वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रति मन्त्रं तैरेनं चतुराप्नोति" इति। तदिदं छन्दसां सवनानाञ्च समापनं। तेन देवानां विभूतिः असुराणां पराभवश्चाभूत्। तद्वदन्यस्याप्यदाभ्यग्रहेण भवति। निर्वचनेन प्रशंसति "यद्वै देवा असुरानदाभ्येनादभ्नुवन् तददाभ्यस्याऽदाभ्यत्वं" (सं०६का०।६प्र०।९अ०) इति। अदभ्नुवन् हिंसितवन्तः। असुरदम्भनहेतुरयं ग्रहः। स्वयमन्येन

केनचिदपि दम्भितुमशक्यत्वाददाभ्यः। एतद्वेदनं प्रशंसति "य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोति" (सं० ६का०।६प्र०।६अ०) इति। अदाभ्यस्य कालं विधत्ते "एषा वै प्रजापतेरतिमोचिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यतिमुक्त्यै" (सं०६का०।६प्र०।६अ०) इति। अतिशयेन पाप्मनो मोचो अतिमोचः सोऽस्यास्तीत्यतिमोचिणी प्रजापतेस्तादृग्रूपोऽयमदाभ्यः तस्मात् उपनद्धस्य वस्त्रेण बद्धस्य सोमस्य बन्धनात् अतिमुक्त्यर्थं गृह्णीयात्। शकटादवरोपितो वस्त्रबद्धसोम अधिषवणफलकयोरुपर्यवतिष्ठते। तस्य च सोमस्य बन्धमुपांशुग्रहकाले विस्रस्य इन्द्राय त्वा वृत्रघ्न इत्यादिभिर्मन्त्रैः सोमं मिमीते। तस्माद्विस्रंसनात् प्रागेव अदाभ्यो ग्रहीतव्य इत्यर्थः। एतद्वेदनं प्रशंसति "अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद" (सं०६का०।६प्र०।६अ०) इति। पापरूपं वैरिणमुत्क्रम्य तत्कृतोपद्रवान्मुच्यते। अदाभ्यस्य सोमव्यतिरिक्तं द्रव्यं विधत्ते "घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किन्तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोकमेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति" (सं०६का०।६प्र०।६अ०) इति। अभिषवेण सोमस्य हतत्वात् यज्ञे हते यजमानो हतप्रायो भवति। तादृग्वधमन्तरेण स्वर्गप्राप्तौ उपायान् ब्रह्मवादिनो विचार्य्य अदाभ्यं निश्चितवन्तः। स च जीवनोपेतो ग्रहः। तस्मात् अनभिषुतस्य

अभिषवरूपवधरहितस्य द्रव्यस्य रसं तत्र गृह्णीयात्। अत्र सूत्रं "अंशुमदाभ्यं वा प्रथमं गृह्णाति शुक्रन्ते शुक्रेण गृह्णामीति दध्नः पयसो निग्राभ्याणां वा" इति। अदाभ्यग्रहस्याधवनहेतूनां सोमांशूनां त्रयाणां सवनत्रयगतेषु महाभिषवेषु मेलनं विधत्ते "वि वा एतद्यज्ञं छिन्दन्ति यददाभ्ये सꣳस्थापयन्त्यꣳशूनपिसृजति यज्ञस्य सन्तत्यै" (सं०६का०।६प्र०।८अ०) इति। असुरवञ्चनाय वसवस्त्वेत्यादिभिर्मन्त्रैरंशुत्रयं पृथक्करणरूपं सवनत्रयमापन्नं देवैः कृतं। तद्वदन्येनापि कृते सति उपांश्वन्तर्यामादीनामनुष्ठानाद्यज्ञो विच्छिद्यते, तत्परिहाराय पृथक्कृतानंशून् अभिषवेषु मेलयेत्। अत्र सूत्रं "आधवनानꣳशून् प्रज्ञातान् निधाय, उशिक्त्वं देव सोम गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपिसृजति। इत्यदाभ्य ग्रहो निरूपितः। अथांशुग्रहं विधत्ते "देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत् तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषोꣳशुर्गृह्यत ऋध्नोत्येव" (सं०६का०।६प्र०।१०अ०) इति। प्रबाहुक् तुल्यस्वभावान्। प्रजापतिस्तु समृध्यर्थं विलक्षणमंशुग्रहं गृहीत्वा समृद्धो ऽभवत्। इतरग्रहवैलक्षण्यं क्रमेण दर्शयन् अभिषवस्यावृत्त्यभावं विधत्ते "सकृदभिषुतस्य गृह्णाति स कृद्धि स तेनार्ध्नोत्" (सं०६का०।६प्र०।१०अ०) इति। अष्टौ कृत्वोऽग्रे ऽभिषुणोतीत्यादिना ग्रहान्तरे अभिषवावृत्तिः श्रुता न त्वत्र तथा कुर्य्यात् किन्तु सकृदेव। यस्मात् स प्रजापतिः सकृदेवा-

भिषुत्य तेन ग्रहेण समृद्धिं गतः। ग्रहणमन्त्रस्योच्चारणं निवारयितुं मानसमनुसन्धानं विधत्ते "मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्यै" (सं०६का०।६प्र०।१०अ०) इति। सङ्कल्पमात्रेण जगत्सर्जनात् प्रजापतेर्मनः सादृश्यं। ग्रहणपात्रं विधत्ते "औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवावरुन्धे" (सं०६का०।६प्र०।१०अ०) इति। पात्रस्याकारं विधत्ते "चतुस्रक्ति भवति दिक्ष्वेव प्रतितिष्ठति" (सं०६का०।६प्र०।१०अ०) इति। चतुष्कोणमित्यर्थः। वामदेवेन दृष्टस्य कयानश्चित्र आभुवदित्यस्यामृचि उत्पन्नस्य साम्नो ग्रहणमन्त्रतामाह "यो वा अꣳशोरायतनं वेदाऽऽयतनवान् भवति वामदेव्यमिति साम तद्वा अस्याऽऽयतनं मनसा गायमानो गृह्णात्याऽऽयतनवानेव भवति" (सं०६का०।६प्र०।१०अ०) इति। गृहवानित्यर्थः। अनुच्छ्वासं ग्रहणकाले विधत्ते "यदध्वर्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येताऽनवानं गृह्णाति सैवास्यर्द्धिः" (सं०६का०।६प्र०।१०अ०) इति। अंशुनार्धयेत् समृद्धं न कुर्य्यात्। तदानीमध्वर्युयजमानयोः समृद्धिर्न स्यात्। अनुच्छ्वासगृहीतिरेवांशोः समृद्धिः। अत्र सूत्रं "अꣳशुं गृह्णन्नेकग्रावायाप्तं राजानमुपरि न्युप्य सकृदभिषुत्य वामदेव्यं मनसा गायमानोऽनवानं गृह्णाति" इति। कथञ्चिदुच्छ्वासश्चेत् तद्दोषनिवारणाय विधीयते "हिरण्यमभिव्यनित्यमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभिधिनोति" (सं०६का०।६प्र०।१०अ०) इति। हिरण्यस्याभिमुख्येन श्वासं कुर्यात्। तथा सति

आयुस्वरूपेणैव प्राणवायुना हिरण्यरूपममृतं अभिप्रीणयति। हिरण्यस्येयत्तां विधत्ते "शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति" (सं०६का०।६प्र०।१०अ०) इति। शतनिष्कपरिमितं शतमानपरिमितं वा हिरण्यं भवति। दशानां ज्ञानकर्मेन्द्रियाणां एकैकस्य दशनाडीषु सञ्चाराच्छतेन्द्रियत्वं। अत्र सूत्रं "*यदि व्यवाने दानः प्राण एतु परावत इति शतमानꣳ हिरण्यमभिव्यतीयातामध्वर्युर्यजमानस्य*" इति। अंशुग्रहादाभ्यग्रहयोः पौर्वापर्यं विकल्पितं अतएव सूत्रकारेणोक्तं "अꣳशुमदाभ्यं वा प्रथमं गृह्णाति" इति। इत्यंशुग्रहो निरूपितः। अथ षोडशीग्रहं विधत्ते "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स यज्ञानाꣳ षोडशधेन्द्रियं वीर्यमात्मानमभिसमक्खिदत् तत् षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तोत्रꣳ षोडशꣳ शस्त्रं तेन षोडशी तत् षोडशिनः षोडशित्वं यत् षोडशी गृह्यत इन्द्रियमेव तद्वीर्यं यजमान आत्मन् धत्ते" (सं०६का०।६प्र०।१०अ०) इति। देवेभ्यो यज्ञान्विभज्य दत्त्वा स्वार्थस्य कस्याप्यभावात् रिक्तोऽहमितिमन्यमानः स्वात्मानमभिलक्ष्य सर्व्वयज्ञसम्बन्धिनं इन्द्रियसामर्थ्यप्रदमंशं षोडशभेदभिन्नं समक्खिदत्। समुपादाय आत्तो ऽभवत्। तच्च सामर्थ्यं षोडशीनामकः क्रतुरभवत् स च साम-

* यदि व्यवाने दानः अस्मिन् सूत्रे अशुद्धवशात् अर्थबोधो न जातः काशीस्थपुस्तकद्वये वैलिङ्गदेशीयपुस्तके च एकरीत्या इदं सूत्रं वर्तत इति कृत्वा उपर्यधस्ताच्च सूत्रस्योभयपार्श्वे चिह्नद्वयं कृत्वा शोधनमकृत्वैव संस्थापितमिदं सूत्रं॥

यागव्यतिरिक्तो यज्ञः कश्चिन्नूतनोन। प्रकारान्तरेण प्रशंसति "देवेभ्यो वै सुवर्गो लोको न प्राभवत् तएतꣳ षोडशिनमपश्यन् तमगृह्णत ततो वै तेभ्यः सुवर्गो लोकः प्राभवद्यत् षोडशी गृह्यते सुवर्गस्य लोकस्याभिजित्यै" (सं०६का०।६प्र०।११अ०) इति। न प्राभवत् न स्वाधीनः। पुनः प्रकारान्तरेण प्रशंसति "इन्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत् तस्मा एतꣳ षोडशिनं प्रायच्छत् तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैद्यस्यैवं विदुषः षोडशी गृह्यतेऽग्रमेव समानानां पर्येति" (सं०६का०। ६प्र०।११अ०) इति। अनुजेभ्यो निकृष्टेभ्योऽवरोऽत्यन्तनिकृष्टः आनुजेतिदीर्घश्छान्दसः। अग्रं श्रैष्ठ्यं। कालं विधत्ते "प्रातःसवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातः सवनꣳ स्वादेवैनं योनेर्निर्गृह्णाति" (सं०६का०।६प्र०।११अ०) इति। वज्रवदनिष्टनिवारकत्वादुभयोर्वज्रत्वं। तस्मादेव साम्यात् प्रातःसवनं वज्रस्य स्वयोनिः। पक्षान्तरमाह "सवने सवनेऽभिगृह्णाति सवनात् सवनादेवैनं प्रजनयति" (सं०६का०।६प्र०।११अ०) अत्र सूत्रं "षोडशिनो ग्रहणं प्रातःसवन उत्तमो धाराग्रहाणाꣳ सवने सवने वा" इति। नित्यत्वेन विहितस्यैव काम्यत्वमपि विधत्ते "तृतीयसवने पशुकामस्य गृह्णीयात् वज्रो वै षोडशी पशवस्तृतीयसवनं वज्रेणैवास्मै तृतीयसवनात् पशूनवरुन्धे" (सं० ६का०।६प्र०।११अ०) इति। यथा खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्वीतेति श्रुतिवचनद्वयात् एकस्यैव नित्यत्वं काम्यत्वञ्च तद्वत्। उक्थ्यक्रतावपि शाखान्तरानुसा-

रेण प्रसक्तं प्रतिषेधति "नोक्थ्ये गृह्णीयात् प्रजा वै पशव उक्थानि यदुक्थ्ये गृह्णीयात् प्रजां पशूनस्य निर्दहेदिति" (सं० ६का०।६प्र०।११अ०) इति । उक्थ्यक्रतुगतानां शस्त्राणां प्रजापशुरूपत्वाद् वज्ररूपेण षोडशिना दाहः स्यात् । शाखान्तरे विधानात् इह निषेधाच्च । विकल्पः सूत्रे दर्शितः "नोक्थ्ये गृह्णीयात् गृह्णीयाद्वा" इति । षोडशिक्रताविवातिरात्रक्रतावपि काम्यग्रहं विधत्ते "अतिरात्रे पशुकामस्य गृह्णीयात् वज्रो वै षोडशी वज्रेणैवास्मै पशूनवरुध्य रात्रियोपरिष्टाच्छमयति" (सं० ६का०।६प्र०।११अ०) इति । वज्रषोडशिना पशूनामवरोधेऽपि नास्ति बाधः । षोडशिशस्त्रस्योपरिष्टादनुष्ठेयेन रात्रिशब्दोपलक्षितेन शस्त्रसमूहेन तद्बाधोपशमनात् पशुकामस्येति विशेषणात् अन्यस्यातिरात्रे षोडशिग्रहो नास्ति । अधिकारिविशेषेण ग्रहं विधत्ते "अप्यग्निष्टोमे राजन्यस्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो यजते" (सं०६का०।६प्र०।११अ०) इति । द्वादशभिः स्तोत्रैः शस्त्रैश्चोपेतोऽग्निष्टोमो वर्णत्रयस्य साधारणः राजन्यस्तु विप्रवैश्याभ्यां व्यावृत्तिमुत्कर्षं कामयते तदर्थं ग्रहमेतं गृह्णीयात् । अस्मिन् षोडशिग्रहस्तोत्रस्य एकविंशति नामकं स्तोमं विधत्ते "साह्न एवास्मै वज्रं गृह्णाति स एनं वज्रो भूत्वा इन्धे निर्वा दहत्येकविंशꣳ स्तोत्रं भवति प्रतिष्ठित्यै" (सं०६का०।६प्र०।११अ०) इति । अह्ना सह वर्त्तत इति साह्नः । एकदिवसनिष्पाद्यः सोमयागः साह्नः तस्मिन् साह्ने यजमानार्थं अध्वर्युः षोडशिरूपं वज्रं गृह्णाति । स च

वज्रो वैरिविनाशाय प्रयुक्त एनं यजमानमैश्वर्य्यार्थं प्रकाशयति। अथ वा प्रयोगे कौशलाभावात् अस्मिन्नेव यजमाने परितो निःशेषेणैनमेव दहति। अतः पाक्षिकदाहनिवृत्त्या यजमानस्य प्रतिष्ठार्थं एकविंशस्तोत्रं सम्पादयेत्। प्रगीतमन्त्रसाध्यस्तुतिः स्तोत्रं। तच्च गानं तृचे कर्त्तव्यं। एकं साम तृचे क्रियते स्तोत्रीयमिति विधानात् षोडशिस्तोत्रस्य "असावि सोम इन्द्र ते" इत्यृक् प्रथमा। "इन्द्रमिद्धरी वहत" इति द्वितीया। "आतिष्ठ वृत्रहन्" इति तृतीया। सोऽयं तृचः त्रिभिः पर्य्यायैरावृत्तिविशेषो गीयमान एकविंशत्यृगात्मकं भवति। प्रथमे पर्य्याये प्रथमद्वितीययोर्ऋचोस्त्रिस्त्रिर्गानं। तृतीयस्याः सकृद्गानं। द्वितीयपर्य्याये प्रथमायाः सकृद्गानं। तृतीयपर्य्याये मध्यमायाः सकृद्गानं। तथा च छन्दोगब्राह्मणे आम्नायते "सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया। सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः। सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः। सप्तसप्तिमेकविंशस्य विष्टुतिः" इति। सप्तभ्यः सप्तभिर्ऋग्भिः हिङ्करोति गायेत् यथोक्तावृत्तिविशिष्टा इयमेकविंशनामकस्य स्तोमस्य सम्बन्धिनी विशिष्टा स्तुतिः। तस्याश्च सप्तसप्तिमिति नामधेयमित्यर्थः। षोडशिशस्त्रं विधत्ते "हरिवच्छस्यत इन्द्रस्य प्रियं धामो पाप्नोति" (सं०६का०।६प्र०।११अ०) इति। हरिशब्दोऽस्मिन्नस्तीति हरिवच्छस्त्रं। इन्द्रमिद्धरी वहत इत्याद्यृचु हरिशब्दो बहुलमुपलभ्यते। तेन शस्त्रेणेन्द्रस्य परितोषात् तदीयो लोकः प्राप्यते। तच्च

शस्त्रं द्विविधं । विहृतमविहृतञ्च । नानाछन्दसामृचां सम्मेलनेन निष्पादितं विहृतं । तथाऽवस्थितमविहृतं । तत्र ग्रहणप्रकारं विधत्ते "कनीयाꣳसि वै देवेषु छन्दाꣳस्यासन् ज्यायाꣳस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्यायश्छन्दोऽभिव्यशꣳसन् ततो वै ते ऽसुराणां लोकमवृञ्जत यत्कनीयसा छन्दसा ज्यायश्छन्दोऽभिविशꣳसति भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते" (सं०६का०। ६प्र०।११अ०) इति । मन्त्यस्मिन् शस्त्रे बहूनि छन्दांसि तान्याश्वलायनेनोदाहृतानि "आ त्वा वहन्तु हरयः" इति तिस्रो गायत्र्यः । "उपोषु शृणुहि गिरः", "सुमन्दृशन्त्वा वयं मघवन्" इत्येका द्वे च पङ्क्ती। "यदिन्द्र पृतनाज्ये,यन्त्वे अस्तु हर्यत" इति उष्णिक्बार्हतौ तृचावित्यादिना। तत्र चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरोष्णिक्। अनयोरल्पाक्षरत्वेन कनीयस्त्वाद्देवछन्दस्त्वं। अष्टाक्षरपादैः पञ्चभिश्चत्वारिंशदक्षरा पङ्क्तिः।षट्त्रिंशदक्षरा बृहती । अनयोरधिकाक्षरत्वेन भूयस्त्वात् असुरछन्दस्त्वं। एवं छन्दोऽन्तरेष्वप्यूह्यं । तत्र देवा गायत्रीछन्दसा पङ्क्तिच्छन्दोऽभितो विहृत्य शस्त्रमपठन् विहार आश्वलायनेन सूत्रे दर्शितः "तदेतं शंसन् विहरेत् पादान् व्यवधायार्धर्चशः शंसेत् पूर्व्वासां पूर्व्वाणि पदानि गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रहिणुयादुष्णिहा बृहतीः" इत्यादिना अस्यायमर्थः । अविहृतं यच्छस्त्रं तदेव विहृतं कुर्य्यात् । तद्यथा । गायत्र्याः प्रथमं पादं पङ्क्तेः प्रथमपादेन संयोज्य एकमर्धर्चं सम्पादयेत् । एवं द्वितीयतृतीयपादसंयोगेन पुनरर्धर्चद्वयं स-

न्याद्यं। पङ्क्तेरवशिष्टं पादद्वयमेकोऽर्धर्चः। तस्यान्ते प्रणवं कुर्य्यात्। तैरेतैश्चतुर्भिरर्धर्चैर्द्वावनुष्टुभौ सम्पद्येते। एवं गायत्र्यः पङ्क्तिभिः संयोज्या अनया विशंसति विहरेदिति। तेन विहृतेन शस्त्रेन भ्रातृव्यस्थानं विनाशयति। शाखान्तरमभिप्रेत्य विहरणं दर्शयति "षडक्षराण्यतिरेचयन्ति षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्व्वाण्यवकल्पयन्ति चतुष्पद एव पशूनवरुन्धे द्वे उत्तरे द्विपद एवावरुन्धे" (सं०६का०।६प्र०।११अ०) इति। काचिदृगष्टा-विंशदक्षरा। अन्या लष्टत्रिंशदक्षरा। अपरा त्रिंशदक्षरा। तत्र प्रथमायाः प्राची षडक्षरा। मध्यमायामृचि षडक्षराणि। अन्या-नुष्टुभोऽतिरिच्यन्ते। तस्या ऋच आदौ चत्वारि पूर्व्वस्यामृचि संयोज्यानि। अन्तिमं द्वयमुत्तरस्यामृचि संयोज्यं। विहरणे फलितं दर्शयति "अनुष्टुभमभिसम्पादयन्ति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमा" (सं०६का०।६प्र०।११अ०) इति। अत्राश्वलायनः "अनुष्टुप् प्रकारं शंसेदूर्ध्वं स्तोत्रियानु-रूपाभ्यामतो विहृतः" इति। स्तोत्रोपाकरणस्य कालं विधत्ते "समयाविषिते सूर्य्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन् वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्रहरति" (सं० ६का०।६प्र०।११अ०) इति। समयाविषितो अर्धास्तमितः। एतस्मिन्नेवार्धास्तमयकाले पूर्व्वं इन्द्रो भूलोके वृत्रं जघान। षोडशिनो योग्यामपेक्ष्यां दक्षिणां विधत्ते "अरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै" (सं०६का०।६प्र०।११अ०) इति। अरुणमिश्रः पिशङ्गवर्णोऽश्व इत्यर्थः। तदेवं सौमिक मन्त्र-

काण्डस्य तद्ब्राह्मण भूतसंहितायाः षष्ठकाण्डस्य षष्ठप्रपाठकस्य चतुर्थानुवाकमारभ्य ब्राह्मणशेषाणामेकादशानुवाकान्तानामर्था विवृताः ॥ * ॥

अथ मीमांसा।

चतुर्थाध्यायस्य द्वितीयपादे चिन्तितं।

"पात्रस्यावभृथे सोमलिप्तस्य नयनं तु किं।
साधनं प्रतिपत्तिर्वा यन्ति तेनेत्यतः श्रुतेः॥
प्राप्ता साधनता मैवं पुरोडाशहविष्ट्वतः।
पात्रस्य तदसम्बन्धात् प्रक्षेपः प्रतिपत्तये" ॥ इति।

ज्योतिष्टोमे श्रूयते "वरुणहृतं वा एतद् यज्ञस्य यदृजीषं यद्ग्रावाणो यदौदुम्बर्य्यधिषवणफलके तस्माद् यत्किञ्चित्सोमलिप्तं द्रव्यं तेनावभृथं यन्ति" इति। निष्पीडितस्य सोमस्य नीरसोभागः स ऋजीषः। तदेतदृजीषग्रावादिकं सोमाभिषवादौ सोमभागेन लिप्यते तस्य लिप्तस्य द्रव्यस्य अवभृथसाधनत्वमभ्युपेयं। कुतः। तेनावभृथमवयन्तीति तृतीयाश्रुत्या अवभृथसाधनत्वावगमात्। तस्मात् सोमलिप्तं द्रव्यं अवभृथे हविष्ट्वेनानीयते इति चेत्। मैवं। वारुणेनैककपालेनावभृथमवयन्तीत्यनेन उत्पत्तिवाक्यशिष्टपुरोडाशहविषा अवरुद्धे ऽवभृथे सोमलिप्तपात्रस्य हविष्ट्वेन सम्बन्धासम्भवात्। तथा सत्यवभृथशब्देन तदीयं देशं लक्षयित्वा तस्मिन् देशे सोमलिप्तपात्रस्य नयनमत्र विधीयते। तच्च नयनं प्रतिपत्तये भवति। पात्रस्य पूर्व्वमुपयुक्तत्वात्। तस्मादेतत् प्रतिपत्तिकर्म्म। दशमाध्यायस्य सप्तमपादे चिन्तितं।

"किं स्यादवभृथे बर्हिर्वर्ज्यं सर्व्वमुताचरेत्।
यावदुक्तं प्रयाजानूयाजबर्हिर्निषेधतः॥
आद्योऽप्सुमन्तावाज्यभागौक्त्या परिसङ्ख्यया।
अन्त्येनात्र गुणप्राप्तेरपूर्व्वत्वेन वाऽन्तिमः"॥ इति।

ज्योतिष्टोमावभृथे चतुर्थप्रयाजप्रथमानूयाजरूपौ बर्हिर्यागौ वर्जयित्वा शिष्टं चोदकप्राप्तं सर्व्वमनुष्ठेयं। कुतः। "अपबर्हिषः प्रयाजान् यजति" "अपबर्हिषावनूयाजौ यजति" इति बर्हिर्यागद्वयमात्रवर्जनावगमात् इति प्राप्ते ब्रूमः। अप्सु मन्तावाज्यभागौ यजतीति परिसङ्ख्यानादुक्तमेवानुष्ठेयं। अथोच्येत। चोदकप्राप्तावाज्यभागावनूद्य अप्सु मच्छब्दोपेतमन्त्रद्वयरूपस्य गुणस्यात्र विधानान्नपरिसङ्ख्येति चेत्। मैवं। लिङ्गक्रमाभ्यामेव मन्त्रयोः क्रमप्राप्तत्वात्। अतः परिसङ्ख्यया गृहमेधीयवदुपसद्वापूर्व्वकर्मत्वेन वा यावदुक्तमनुष्ठेयं। एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"किमप्स्ववभृथे मुख्यमात्रं साङ्गमुताग्रिमः।
मुख्यत्वेनान्वयान्मैवं प्रयोगेण तदन्वयात्"॥ इति।

इदं श्रूयते "अप्स्ववभृथेन चरन्ति" इति। तत्र वारुण एककपालोऽवभृथशब्दवाच्यत्वात् मुख्यकर्मत्वेन मुख्येनापामन्वयः श्रूयते। अतो द्रव्यदेवतावदपां मुख्यमात्राङ्गत्वात् प्रधानस्यैवाप्स्वनुष्ठानं। आघाराज्यभागादीन्याहवनीये अनुष्ठेयानीति प्राप्ते ब्रूमः। स्यादप्येवं। यद्यप्स्ववभृथ इत्येतावदेव श्रूयेत इह त्वप्सु चरन्तीति श्रवणादवभृथप्रयोगेणापामन्वयात् साङ्गप्रधानकर्माप्सु

कर्त्तव्यं। तद्विचारद्वयं अवभृथयजूंषि जुहोतीत्यस्मिन्ननुवाके द्रष्टव्यं। पञ्चमाध्यायस्य द्वितीयपादे चिन्तितं।

"यूपाञ्जनादिरेकैकः सङ्गो वाऽनुसमीयते।
एकैकः पूर्ववन्नैवं वचनात्काण्डतेरिता"॥ इति।

ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य घृतेनाञ्जनं उच्छ्रयणं अवटस्य पर्यूहणं यूपमूलस्य परिदृंहणं मध्ये रशनया यूपस्य परिव्ययणं इत्येते पदार्था आम्नाताः। ते चैकयूपपक्षेपि तथैव कर्त्तव्याः। एकयूपस्य विकल्पः श्रूयते "एकयूपो वैकादशिनी वा अन्येषां यज्ञानां यूपा भवन्ति, एकविंशत्यश्वमेधस्य" इति। तत्र बहुषु यूपेष्वञ्जनादिरेकैकः पदार्थः प्राजापत्यपशूपाकरणादिवदनुसमेतव्य इति प्राप्ते ब्रूमः। अञ्जनादिपरिव्ययणान्तं यजमानो यूपं नावसृजेदिति वचनेन यजमानस्य यूपत्यागनिषेधोऽञ्जनादिकाण्डस्यानुसमये सत्युपपद्यते। तस्मान्नात्र पदार्थस्यानुसमयः। सप्तमाध्यायस्य तृतीयपादे चिन्तितं।

"संस्कारस्यादुपशये न वा यूपोक्तितोऽग्रिमः।
न स्यात् प्रयोजनाभावात् तूष्णीं छेदेन यूपता"॥ इति।

यूपैकादशिन्यां श्रूयते "उपशयो यूपो भवति" इति। एकादशानां समूह ऐकादशिनी। तत्र दक्षिणतोऽवस्थापित एकादशो यूप उपशयः। तथा च श्रूयते तस्मिन्नुपशये परिव्ययणादिको यूपसंस्कारोऽस्ति। संस्कारनिमित्तकस्यैकस्य यूपशब्दस्य तत्र प्रयुक्तत्वादिति चेत्। मैवं। संस्कारप्रयोजनस्यात्राभावात्। पशुं नियोक्तुं यूपः संस्क्रियते। तच्च नियोजनमितरेषु दशसु

यूपेष्वस्ति। न त्वेकादशिन्युपशये। तथा च तैत्तिरीयब्राह्मणं "सर्व्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुः" इति। परिव्ययणादिसंस्काराभावेऽपि अमन्त्रकच्छेदनादयः केचि-द्धर्माः तत्र वाचनिका विद्यन्ते। तावता अल्पेन सादृश्येन गौणी तत्र यूपोक्तिः। तस्मान्न यूपशब्दो धर्मानतिदिशति। एतद्विचा-रद्वयं स्फ्येन वेदिमुद्धन्तीत्येतस्मिन्ननुवाके द्रष्टव्यं। अष्टमाध्या-यस्य प्रथमपादे चिन्तितं।

"स्यादेकादशिनी दैक्ष्याग्नीषोमीयाद्वा यथाऽस्तु पूर्व्ववत्।
रशनाद्वयसौत्यत्वविशेषालिङ्गतोऽन्तिम"॥ इति।

एकादशिनाः पशव एवमाम्नायन्ते "आग्नेयः कृष्णग्रीवः१ सा-रस्वती मेषी२ बभ्रुः सौम्यः३ पौष्णः श्यामः४ शितिपृष्ठो वार्हस्पत्यः५ शिल्पो वैश्वदेवः६ ऐन्द्रोऽरुणः७ मारुतः कल्माषः८ ऐन्द्राग्नः संहितो९ ऽधोरामः सावित्रो१० वारुणः पेत्वः११" इति। यद्यप्यश्वमेधप्र-करणे एते पठिताः तथापि ज्योतिष्टोमप्रकरणेऽप्येते विधीयन्ते। "प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन" इत्यादिना। तेष्वेकादशिनेषु दैक्ष्यादग्नीषोमीयाद्विध्यन्तातिदेशः स्यात्। कुतः। अग्नीषोमी-यस्य पशुप्रकृतित्वेन पूर्व्वाधिकरणे निर्णीतत्वादिति चेत्। मैवं। सौत्यगतविशेषलिङ्गदर्शनात्। सुत्याकाले भवः सौत्यः सवनीयः पशुः। तत्र चोदकप्राप्ता रशनैका वाचनिकी द्वितीया। एतच्च तृतीये निर्णीतं। तदेतद्रशनाद्वयमग्नीषोमीयपशौ असम्भवात् सवनीयस्य विशेषलिङ्गमेकं सुत्याकालीनत्वं द्वितीये च द्वे लिङ्गे

एकादशिनीषु दृश्येते। तत्रेदमाम्नायते "द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यां एकैकं यूपं परिव्ययति" इति। सुत्याकालीनत्वं च तेष्वस्ति। अतः सौत्यधर्मातिदेशः। नवमाध्यायस्य तृतीयपादे चिन्तितं।

"कृष्णग्रीवादिकेनोह ऊहोवास्य न पूर्ववत्।
देव त्वं न गणस्यात ऊहो बहुभिधित्सया" ॥ इति।

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः "ऐन्द्राग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन" इत्यादिना। ते च स्वनामभिरन्यत्राम्नाताः "आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः" इत्यादिना। तत्रास्त्येकवचनान्तस्य मेधपतिशब्दस्य आदित्येष्विव नोह इति चेत्। मैवं। वैषम्यात् आदित्यगणस्य तत्र देवत्वं। इह त्वेकैकस्य पृथग्देवत्वं। अतो बहून् देवानभिधातुं बहुवचनान्तत्वमूहनीयं। एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"एकादशिनकं तन्त्रं वमाहोमे ऽथ भिन्नता।
तन्त्रं शक्यन्त्वतो भेदः प्रधानार्थचभेदतः" ॥ इति।

एकादशिनेष्वाग्नेयसारस्वतसौम्यादिपशुषु वमाहोमस्य सह कर्तुं शक्यत्वात् तन्त्रमिति प्राप्ते ब्रूमः। देवताभेदेन प्रधानभेदात् तत्तद्याज्यार्धर्चान्तकालानां भिन्नत्वेनानुष्ठानयौगपद्यासम्भवाद् भेदः। अत्रैवान्यच्चिन्तितं।

"यूपैकादशिनो यूपाहुति भेदोऽथ तन्त्रता।
सामीप्यभेदाद्भेदोऽन्यः सामीप्यं दृष्टिगं यतः"॥ इति।

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात् सामीप्यानाञ्च भेदादिति प्राप्ते ब्रूमः। न तावदत्यन्तसामीप्यं सम्भवति यूपदाह प्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावता देशस्य समीपत्वमभ्युपेतव्यं। तथा सति देशैक्यासम्भवादाहुतेस्तन्त्रता। तत्रैव चतुर्थपादे चिन्तितं।

"किमैकादशिनीष्वस्य कुम्भ्यादेर्भिन्नता न वा।

असन्देहाय भेदोऽस्तु लिङ्गादेवास्य सिध्यति"॥ इति।

भिन्नदेवताकेष्वेकादशिनीषु पशुषु एककुम्भीपाके सति किमङ्गं कां देवतां प्रत्युपाकृतस्य पशोः सम्बन्धि इति सन्देहे सति प्रदानं सङ्कीर्येत। तस्मात् कुम्भ्यादेरावाप इति चेत्। मैवं। चिह्नकरणमात्रेण सन्देहापगमसिद्धौ लाघवात् तस्मादत्र तन्त्रता। तत्रैवान्यच्चिन्तितं।

"तत् तन्त्रं होयमुत नो चिह्नं नास्ति वसास्वतः।

होमं नो प्रतिपत्तित्वात् साङ्कर्येणाप्यदोषतः" ॥ इति।

एकादशिनीषु कुम्भ्यादेर्यत् तन्त्रं निर्णीतं तत्परित्याज्यं अङ्गानामिव वसानां चिह्नाकरणासम्भवेन साङ्कर्यप्रसङ्गादिति चेत्। मैवं। वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्यं प्रत्यपि प्रयोजकत्वाभावेन तद्द्रव्यअर्पणार्थं कुम्भीभेदाप्रयोजकत्वस्य दूरापेतत्वात्। न चात्र द्रव्यसाङ्कर्यं दोषाय भवति। व्यवस्थापकप्रमाणाभावात्। ननु तत्तद्देवताविषयकयाज्यार्द्धर्चान्तेषु भिन्ना होमाः पूर्व्वं निर्णीताः। वाढं। तथैव अर्धर्चान्ते तद्धूयतां।

किमायातं द्रव्यसाङ्कर्य्ये। तस्मात् कुम्भ्यादेस्तत्त्वं न त्याज्यं। इद षष्ठं "प्रजापतिः प्रजा असृजत" इत्यस्मिन्ननुवाके द्रष्टव्यं। द्वितीयाध्यायस्य तृतीयपादे चिन्तितं।

"पर्य्यग्निकृतं पात्नीवतमुत्सृज्यत इत्यसौ।
यागो गुणो वा यागः स्यादव्ययाव्यवधानतः॥
प्रत्यभिज्ञानमालभ्यमनूद्योत्सर्गशब्दतः।
गुणं पर्य्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये॥
न दृष्टा परिसङ्ख्यात्र चोदनात् प्राग्विधौ सति।
पर्य्यग्निकरणान्ताङ्गरीतिः कृतोपकारतः"॥ इति।

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्येदमाम्नातं "पर्य्यग्निकृतं पात्नीवतमुत्सृजति" इति। तत्र पर्य्यग्निकृतशब्देन संस्कृतस्य पशुद्रव्यस्य पात्नीवतशब्देन पात्नीवन्नामकदेवतासम्बन्धस्य च प्रतीयमानत्वादयं यागविधिः। एवं सति पर्य्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते। सिद्धान्ते तु पर्य्यग्निकृतमुत्सृजतीत्यन्वयं वाञ्छति। तदा व्यवहितान्वयो दुर्वारः। तस्माद्वायव्यपशुवत् यागविधिरिति प्राप्ते ब्रूमः। अनारभ्याधीतत्वान्नास्ति वायव्ये प्रकृतप्रत्यभिज्ञा। इह त्वालभ्यत्वेन प्रकृतः पशुः पात्नीवच्छब्देन प्रत्यभिज्ञायते। तमनूद्य पर्य्यग्निकृतशब्दान्वितेनोत्सृजतीत्याख्यातेन पर्य्यग्निकरणाख्यो गुणो विधीयते। न च प्रकृतिगतस्य पर्य्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वादनर्थकोऽयं विधिरिति वाच्यं। उपरितनाङ्गाननुवृत्तिर्विधिप्रयोजनात्। न चैवं सति परिसङ्ख्या स्यात्। सा च दोष-

त्रयदुष्टा। स्वार्थत्यागो ऽन्यार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दोषाः। पर्यग्निकरणवाक्ये स्वार्थो विधिस्त्यज्येत। अन्यार्थो निषेधः स्वीक्रियेत। चोदकप्राप्तान्युपरितनाङ्गानि बाध्येरन्। मैवं। पर्यग्निकरणोत्तरभाविन्यङ्गानि नानुष्ठेयानीत्यस्याः परिसङ्ख्याया अनङ्गीकारात्। कथन्तर्हि तन्निवृत्तिः। आर्थिकीति ब्रूमः। चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्त्तते। प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्पातिदेशात्प्रबलत्वात्। तथा सति उपदिष्टैरेवाङ्गैः निराकाङ्क्षायां विकृतौ चोदकस्याप्रवृत्त्यैवोपरितनान्यङ्गानि न प्राप्यन्ते। न चानेन न्यायेन पर्यग्निकरणात् प्राचीनानामप्यप्राप्तिरिति वाच्यं। विधीयमानस्य पर्यग्निकरणस्य नूतनत्वे सति उपकारकल्पनापत्त्या प्रकृतौ यत् क्लृप्तोपकारं पर्यग्निकरणं तदवस्थापन्नस्यैवात्रविधेयत्वात्। प्रकृतौ च प्राचीनाङ्गानन्तरभावित्वेन एवोपकारः क्लृप्त इति। अत्रापि तादृशस्यैव विधानात् पर्यग्निकरणान्ताङ्गरीतिः सिध्यति। एवञ्च सति उत्सृजतीत्याख्यातेन यथोक्तपर्यग्निकरणविधौ अर्थसिद्धिरुपरितनाङ्गोत्सर्गो धातुनाऽनूद्यते। तदेवमत्र गुणविधिः। नवमाध्यायस्य चतुर्थपादे चिन्तितं।

"आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत्।
कर्माण्यदा ऽग्निमस्त्यागः शेषसंस्थापनोक्तिभिः॥
अङ्गीरीत्या समाप्तत्वाद्देवतात्यनुवर्त्तनात्।
साम्याच्छेषासंस्थितिस्तु याग आलम्भनादिति"॥ इति।

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्य "पर्यग्निकृतं पा-

त्नीवतमुत्सृजति" इति श्रुतं। तत्र पुनः श्रूयते "आज्येन शेषꣳसꣳ स्थापयेत्" इति। तदिदमाज्यं पशुद्रव्यस्य प्रतिनिधिर्भवेत्। कुतः। उत्सर्गशेषं संस्थापनशब्दैस्तदवगमात्। पर्यग्निकरणादूर्ध्वं पशुद्रव्यस्य त्यागमभिधाय आज्येनेति द्रव्यान्तरं पशुस्थानीयं साधनभूतमुपदिश्य चोदकप्राप्तमुत्तरकालीनमङ्गजातं तेन द्रव्येण समापनीयमिति विधीयते इति प्राप्ते ब्रूमः। पूर्व्वाधिकरणन्यायेनाङ्गरीत्या पात्नीवतपशुः समाप्तः। यदि पात्नीवतमालभेतेति विहितस्य कर्मणः समाप्तिर्न स्यात् केवलं पशुद्रव्यत्यागः क्रियेत तदा विहितो द्रव्यदेवतासम्बन्धरूपो यागो नानुष्ठितः स्यात्। ततो देवतामुद्दिश्य त्यागोऽवश्यं कर्त्तव्यः। तथा सति पशुसाधनके यागे मुख्येन पशुनैव साधिते कुतः प्रतिनिधिः। देवतोद्देशत्यागस्य चोत्पत्तिवाक्येनैव भिद्धत्वात् पर्यग्निकरणोत्सर्गवाक्येनाङ्गरीतिर्विधापनीयः शेषो न कोऽप्यस्ति। तस्मादाज्यवाक्येन कर्मान्तरं विधीयते देवता तु पात्नीवतशब्दस्यानुवृत्त्या लभ्यते कर्मान्तरस्यापि शेषत्वमुपचर्य्यते पश्वाज्यद्रव्यकयोः पूर्व्वोत्तरकर्मणोः पात्नीवदाख्याया देवताया एकत्वेनाव्यवहितानुष्ठानेन चोपक्रमोपसंहारसदृशत्वात् संस्थितिक्रियया चालम्भननिर्वापादिवद्यागो विलक्ष्यते। लिङ्प्रत्ययस्यापूर्व्वभावनामभिधत्ते। तस्मादाज्यद्रव्यकं पात्नीवद्देवताकं शेषवत् पशुयागसमनन्तरोत्तरभाविकर्मान्तरमत्र विधीयते एतदुभयं "इन्द्रः पत्नियामनुमयाजयत्" इत्यनुवाके द्रष्टव्यं। द्वादशाध्यायस्य द्वितीयपादे चिन्तितं।

"अस्त्या ऊतिश्चरौ सौम्ये नास्ति वा पशुपाकतः।
विकृतित्वादस्ति मैवमनिवृत्तेः पुरोस्थिते"॥ इति।

तृतीयसवने ये सौम्यचर्वादयस्तेषु हविष्कृदाह्वानं पुनः कर्तव्यं। पश्वर्थमाहूतायास्तस्याः पशुपाके निष्पन्ने सति निवृत्तत्वादिति चेत्। मैवं। प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्या उत्थानं वाक्येन विहितं पशावपि ततः पूर्वं निवृत्त्यभावात्। तस्मात् तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानं। एतच्च "घ्नन्ति वा एतत् सोमं" इत्यनुवाके द्रष्टव्यं। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

"उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथवा।
स्तोत्रकालाय नोत्कर्षः पूर्ववत् षोडशिग्रहे॥
ग्रहं पराञ्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वभासनात्।
न स्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यतां"॥ इति।

ज्योतिष्टोमे षोडशिग्रहं प्रकृत्य श्रूयते "तं पराञ्चमुक्थ्येभ्यो निगृह्णाति" इति। तृतीयसवने सूर्यास्तमयात् प्रागेव उक्थ्यग्रहास्तयो गृह्यन्ते। तेभ्यः परस्तादयं षोडशी विहितः। यदि कदाचिद्दैवादुक्थ्यग्रहा अस्तमयादूर्ध्वमुत्कृष्येरन् तदा तदूर्ध्वं विहितस्यापि षोडशिग्रहस्य नास्त्युत्कर्षः। कुतः। पूर्वन्यायेन कालस्यानुसरणीयत्वात्। कालोऽप्येवमाम्नातः "समयाविषिते सूर्य्ये षोडशिनः स्तोत्रमुपाकरोति" इति। समयो ऽस्तमयः तं प्राप्ते सूर्य्ये स्तोत्रप्रारम्भकालः। सोऽयमुत्कर्षे सति बाध्यते। तन्नायुक्तं। पूर्वत्राग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिमध्ये ऽनुष्ठाना-

ङ्गीकारादिति प्राप्ते ब्रूमः । पराञ्चमितिशब्देनोक्थेभ्य उत्तर-कालः षोडशिग्रहाङ्गत्वेन विधीयते। ततो मुख्यस्य ग्रहस्य कालमबाधितुं उपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्र-ग्रह उत्कृष्टव्यः । दशमाध्यायस्य पञ्चमपादे चिन्तितं ।

"विकृतौ प्रकृतौ वा स्यात् षोडश्युत्कर्षतोऽग्रिमः ।
अविरुद्धेन वाक्येनानुत्क्रष्टात् प्रकृतावसौ" ॥ इति ।

ज्योतिष्टोमप्रकरणे श्रूयते "य एवं विद्वान् षोडशिनं गृ-ह्णाति" इति । सोऽयं षोडशिग्रहो विकृतौ निविशते। कुतः । प्रबलेन वाक्येन तस्य ग्रहस्य प्रकरणादुत्कृष्यमाणत्वात्। उत्तरेऽहनि द्विरात्रस्य गृह्यते मध्यमेऽहनि त्रिरात्रस्येति हि वाक्यं। द्विरात्रादीनाञ्च विकृतित्वं प्रसिद्धं । अतः प्रकरणं बाधित्वा विकृतौ निवेश इति प्राप्ते ब्रूमः "अप्यग्निष्टोमे राजन्यस्य गृह्णी-यात्" इत्यन्यद्वाक्यमस्ति। तेन प्रकृतिभूतेऽग्निष्टोमे निविशते । न चात्र प्रकरणबाधः । अग्निष्टोमस्य ज्योतिष्टोमावान्तरसंस्था-रूपत्वेन ततोऽनन्यत्वात् । न चैवं सति चोदकेनैव द्विरात्रादिषु प्राप्तत्वात् पुनर्विधिवाक्यं व्यर्थमिति शङ्कनीयं। अहर्विशेषसम्ब-न्धाय राजन्यादिनिमित्तनैरपेक्ष्याय वा तदुपपत्तेः। तस्मात् प्रकृतौ निवेशः । तत्रैवान्यच्चिन्तितं ।

"उक्थ्याग्रयणतः सस्यात् केवलाग्रयणादुत ।
आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः" ॥ इति ।

स पूर्व्वोक्तः षोडशी वचनद्वयबलेन उक्थ्यपात्रादाग्रयण-पात्राच्च ग्रहीतव्यः "उक्थ्याद्विगृह्णाति षोडशिनं" इत्येकं वाक्यं ।

"आग्रयणाद्गृह्णाति षोडशिनं" इति द्वितीयं वाक्यं। अत्रोच्यते आग्रयणपात्रादेव ग्रहीतव्यः। कुतः। उक्थ्यवाक्यस्योत्तरकालविधिपरत्वात् "तं पराञ्चमुक्थानि गृह्णाति" इत्यूर्ध्वकालवाचिनः पराक्शब्दप्रयोगात्। ततो नोभयस्माद्ग्रहणं। तत्रैवान्यच्चिन्तितं।

"सवनेषु तृतीये वा सत्रयोक्त्या भवेत्त्रिषु।
द्वे निन्दित्वा तृतीयस्य विधिस्तत्रैव गृह्यते"॥ इति।

स पूर्वोक्तः षोडशी ग्रहस्त्रिषु सवनेषु भवेत्। कुतः। सवनत्रयस्योक्तत्वात् षोडशिनं प्रकृत्याम्नायते। प्रातःसवने ग्राह्यो माध्यन्दिनसवने ग्राह्यस्तृतीयसवने ग्राह्य इति। नैतद्युक्तं। सवनद्वयस्यार्थवादत्वेन तृतीयसवनस्योक्तत्वात्। अत एव वाक्यशेषे सवनद्वयं निन्दित्वा तृतीयसवनं विधीयते। यत् प्रातःसवन इत्यादिना सवनद्वये वज्रपातदोषोऽभिहितः तृतीयसवने ग्राह्यो न सर्वेषु सवनेषु गृह्णातीति प्रशंसापूर्व्वकं विहितं। तस्मात् तृतीयसवन एव षोडशीग्रहः। पुनरप्यन्यत् तत्रैव चिन्तितं।

"अग्निष्टोमोक्थ्यसम्बन्धी षोडश्यस्तुतशस्त्रकः।
तद्युक्तो वाऽग्रिमः प्राप्तस्तत्र संस्थामबाधितुं॥
स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः।
इष्यते ह्यन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः"॥ इति।

षोडशिनं प्रकृत्याम्नायते "अप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः" इति। सोऽयमग्निष्टोमोक्थ्यसंस्थयोर्विहितः षोडशिग्रहः स्तुतशस्त्रवर्जितो भवितुमर्हति। अन्यथा तदीयाभ्यां

स्तुतशस्त्राभ्यां क्रतुसमाप्तौ षोडशिसंस्थात्वं प्रसज्येत। अग्निष्टोमसंस्थात्वमुक्थ्यसंस्थात्वञ्च बाध्येत। तत्सम्बन्धिसमाप्त्यभावादिति प्राप्ते ब्रूमः "एकविꣳशꣳ स्तोत्रं भवति प्रतिष्ठित्यै" "हरिवच्छस्यते" इति। षोडशिनि प्रत्यक्षविधिना स्तुतशस्त्रे विहिते। किञ्च "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति"। ग्रहग्रहणचमसोन्नयनयोस्तत्र निमित्तत्वं श्रुतं। न हि सति निमित्ते नैमित्तिकं त्यक्तुं शक्यं। तस्मात् पूर्व्व संस्थात्वहानिमन्यसंस्थात्वञ्चाभ्युपेत्य स्तुतशस्त्रयुतत्वं द्रष्टव्यं॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चचत्वारिंशोऽनुवाकः॥ *॥

ॐ॥ यस्त्वा हृदा कीरिणा मन्यमानो मर्त्त्यं मर्त्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां। यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं। अश्विनꣳ सपुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति। त्वे सु पुत्र शवसो वृत्रन् कामकातयः। न त्वामिन्द्रातिरिच्यते। उक्थ उक्थे सोम इन्द्रं ममाद नीथे नीथे मघवानं॥ १॥

सुतासः। यदीꣳ सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते। अग्ने रसेन तेजसा जातवेदो

विरोचसे। रक्षोहा ऽमीवचातनः। अपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसा। वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः। स्याम ते सुमतावपि। त्वामग्ने वसुपतिं वसूनामभिप्रमन्दे ॥ २ ॥

अध्वरेषु राजन्। त्वया वाजं वाजयन्तो जयेमाभिष्याम पृत्सुतीर्मर्त्यानां। त्वामग्ने वाजसातमं विप्रा वर्द्धन्ति सुष्टुतं। सनो रास्व सुवीर्य्यं। अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रून् जयतु जर्हृषाणो यं वाजं जयतु वाजसातौ। अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड्जुह्वास्यः। त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसे। उदग्ने शुचयस्तव वि ज्योतिषा ॥ ३ ॥

मघवानं मन्दे ह्यग्ने चतुर्दश ॥

आददे वाचस्पतय उपयामगृहीतोऽस्यावायो अयं वां यावां प्रातर्युजा अयं वेनस्तं प्रत्नथा ये देवास्त्रिꣳशदुपयामगृहीतोऽसि मूर्द्धानं मधुश्चेन्द्राग्नी ओमासो मरुत्वन्तमिन्द्र मरुत्वो मरुत्वान्महान्महान् कदा वा-

ममदब्धेभिर्हिरण्यपाणिः सुशर्म्मा बृहस्पतिर्हरिरस्य-ग्ने उत्तिष्ठं तरणिराप्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय चित्तमातिष्ठेन्द्रमसावि सर्वस्य महान्त्सजोषा उदत्यं धातारुः हि यस्त्वा षट्चत्वारिंशत्॥ ० ॥

वाचः प्राणाय त्वा। उपयामगृहीतोऽस्यपानाय त्वा। आवायो वायवे सजोषाभ्यां त्वा। अयमृतायुभ्यां त्वा। यावामश्विभ्यां माध्वीभ्यां त्वा। प्रातर्युजावश्विभ्यां त्वा। अयं वेनः शण्डाय त्वैष ते योनिर्वीरतां पाहि। तं मर्काय त्वैष ते योनिः प्रजाः पाहि। ये देवास्त्रिंशदाग्रयणोऽसि विश्वेभ्यस्त्वा देवेभ्यः। उपयामगृहीतोऽसीन्द्राय। मूर्धानमग्नये त्वा वैश्वानराय। मधुश्च संसर्पः।इन्द्राग्नीन्द्राग्निभ्यां त्वा। ओमासो विश्वेभ्यस्त्वा देवेभ्यः। मरुत्वन्तं वीणीन्द्राय मरुत्वते। महान् द्वे महेन्द्राय त्वा। कदा च नादित्येभ्यस्त्वा। कदा च नस्तरीर्विवस्व आदित्यः। इन्द्रः शुचिरपः। वामं चीन् देवाय त्वा सवित्रे। सुशर्म्मा विश्वेभ्यस्त्वा देवेभ्यः। अग्न आयूंष्यग्नये त्वा तेजस्वते। उत्तिष्ठन्निन्द्राय त्वौजस्वते। तरणिः सूर्य्याय त्वा भ्राजस्वते। आतिष्ठाद्याः षडिन्द्राय त्वा षोडशिने। उरुमायुष्टे यद्देवा

मुमुग्धि। अग्ना विष्णू मुमुक्तं। परा वै पङ्क्त्यः। देवा वै ये देवाः पङ्क्त्यौ। परा वै स वाचं। भूमिर्व्यतिष्यन् प्रजापतिर्व्युक्षुध्यन्। भूमिरादित्यो वै। अग्निहोत्रमादित्यो वै। भूमिर्लोकः सलोकः सुलोकः। यस्त्वा सुष्टुतं। त्वमग्ने सुष्टुतिं। यस्त्वा विरोचसे। त्वमग्ने विचर्षणे॥

आददे ये देवा महानुत्तिष्ठन्त्सर्वस्य सन्तु दुर्मित्राश्चतुः पञ्चाशत्॥ ॥ आददे विज्योतिषा॥ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थप्रपाठके षट्चत्वारिंशोऽनुवाकः॥ ० ॥

चतुर्थप्रपाठकः सम्पूर्णः।

पञ्चचत्वारिंशेऽनुवाके सोमयागः समापितः। अथास्य प्रपाठकस्य षट्चत्वारिंशाख्यान्तिमेऽनुवाके काम्येष्टियाज्या उच्यन्ते। इष्टिकाण्डे द्विहविष्का काचिदिष्टिरेवमाम्नायते "अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति" (सं०२का०।२प्र०।४अ०) इति। वृद्धां पुत्रपौत्ररूपेणाभिवृद्धियुक्तां। तत्राग्नये पुरोऽनुवाक्यामाह "यस्त्वा हृदा कीरिणा मन्यमानो मर्त्यं मर्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां" इति। हे जातवेदः योऽहं मर्त्यः सन् कीरिणा गुणकीर्त्तनशीलेन हृदा मनसा त्वां अमर्त्यं मरणरहितं मन्यमान आह्वयामि तादृशेष्वस्मासु

पुत्रपौत्रादिरूपं प्रजाभिर्निष्पादितं यशः कीर्त्तिं निधेहि। हे अग्ने त्वत्प्रसादात् अमृतत्वं देवत्वं अश्यां प्राप्नुयां। अथ याज्यामाह "यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं। अश्विनꣳ सपुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति" इति। शोभनं कर्म करोतीति सुकृत् जातं जगत् वेत्तीति जातवेदाः। हे जातवेदोऽग्ने त्वं सुकृते यस्मै यजमानाय स्योनं सुखकरं उत्कृष्टं लोकं स्थानं कृणवः करोषि स यजमानो रयिं धनं स्वस्ति नशते सम्यक् प्राप्नोति। कीदृशं रयिं धनं। अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं अश्वैः पुत्रैः शूरभटैर्गोभिश्च संयुक्तं। ऐन्द्रस्य पुरोऽनुवाक्यामाह "त्वे सु पुत्र शवसो वृत्रन् कामकातयः। न त्वामिन्द्राऽतिरिच्यते" इति। त्वे त्वयि शवसो बलस्य सुवृत्रन् सुष्ठु वृत्रहन् सर्व्वे ते कामाः भोगाः काम्यन्ते याभिः स्तुतिभिस्ताः कामकातयः। इन्द्रस्यातिप्रबलत्वात् शवसः पुत्रेत्युपचर्यते। हे शवसः पुत्रेन्द्र अस्मदीयस्तुतयः त्वयि सुष्ठु वर्त्तन्ते काचिदपि स्तुतिस्त्वां नातिरिच्यते। सर्व्वस्य स्तुतिवाक्यस्य त्वयि विद्यमानत्वात्। अथ याज्यामाह "उक्थ उक्थे सोम इन्द्रं ममाद नीथे नीथे मघवानꣳ सुतासः। यदीꣳ सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते" इति। उक्थ उक्थे सोमयागवर्त्तिनि तत्तच्छस्त्रे स सोमः इन्द्रं ममाद हर्षयामास। नीयते आहूयते इन्द्रो अत्रेति नीथो यागप्रदेशः। समानदक्षाः स्वतुल्येषु यजमानेषु कुशलाः। सुतासः पुत्रस्थानीया यजमानाः। पितृस्थानीयं मघवानं। नीथे नीथे तत्तद्याग-

प्रदेशे। अवसे रक्षार्थं। हवन्ते आह्वयन्ति। यदीं सबाधः यस्मादीदृश आहुतो मघवा विरोधिषु असुरेषु बाधकारी तस्मादाह्वयन्ते। पुत्राः पितरं न पितरमिव। यथा बालाः अन्यैस्ताड्यमानाः स्वरक्षार्थं पितरमाह्वयन्ति तद्वत्। इष्ट्यन्तरं विधत्ते "अग्नये रसवते ऽजक्षीरे चरुं निर्व्वपेद्यः कामयेत रसवान्त्स्यामित्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोपधावति स एवैनꣳ रसवन्तं करोति रसवानेव भवत्यजक्षीरे भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमवरुन्धे" (सं० २ का०।२प्र०।४अ०) इति। रसवान् क्षीरदध्यादिरसोपेतः। अजा आग्नेयी। अजाया अग्निवत् प्रजापतिमुखादुत्पन्नत्वादाग्नेयत्वं। साक्षादव्यवधानेन शीघ्रमित्यर्थः। अत्र पुरोऽनुवाक्यामाह "अग्ने रसेन तेजसा जातवेदो विरोचसे। रक्षोहा ऽमीवचातनः" इति। हे जातवेदो ऽग्ने रसेनास्मान् योजय। तेजसा विरोचसे विशेषेण प्रकाशसे। कीदृशस्त्वं। यागदेशे रक्षसां हन्ता। शरीरे अमीवस्य अन्तररोगस्य चातनः विनाशकः। याज्यामाह "अपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तस्मा सꣳसृज वर्चसा" इति। सोमावस्थ्ये उरुꣳ हि राजा वरुणश्चेत्यस्मिन्ननुवाके व्याख्यातोऽयं मन्त्रः। इष्ट्यन्तरं विधत्ते "अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद् यः कामयेत वसुमान्त्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोपधावति स एवैनं वसुमन्तं करोति वसुमानेव भवति" (सं० २का०।२प्र०।४अ०) इति। अत्र पुरोऽनुवाक्यामाह "वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः। स्याम ते सुमता-

वपि" इति। हे अग्ने हिकं यस्मात् कारणात् त्वं वसुर्लोकानां वासिता वसुपतिः धनपतिः प्रजायुक्तश्चासि तस्माद्वयमपि ते तव सुमतौ अनुग्रहबुद्धौ स्याम अवस्थिता भवेमः। याज्यामाह "त्वामग्ने वसुपतिं वसूनामभिप्रमन्दे अध्वरेषु राजन्। त्वया वाजं वाजयन्तो जयेमाभिष्याम पृत्सुतीर्मर्त्यानां" इति। हे राजन् दीप्तिमन्नग्ने अध्वरेषु यज्ञेषु त्वां अभिप्रमन्दे सर्व्वतः प्रकर्षेण तोषयामि। कीदृशं त्वां। वसूनां वसुपतिं धनानां मध्ये यानि श्रेष्ठानि धनानि तेषामधिपतिमित्यर्थः। वाजयन्तो अन्नमिच्छन्तो वयं त्वत्प्रसादेन वाजमन्नं जयेम। विरोधिनां मर्त्यानां मनुष्याणां पृत्सुतीर्युद्धानि अभिष्याम अभिभवितुं शक्ता भवेम। इष्ट्यन्तरं विधत्ते "अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत् सङ्ग्रामे संयत्ते वाजं वा एष सिसीर्षति यः सङ्ग्रामं जिगीषत्यग्निः खलु वै देवानां वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोपधावति वाजꣳ हन्ति वृत्रं जयति तꣳ सङ्ग्राममथो अग्निरिव न प्रतिधृषे भवति" (सं०२का०।२प्र०। ४अ०) इति। वाजमन्नं सरति प्राप्नोतीति वाजसृत्। लोके युद्धं जेतुमिच्छुः जयादूर्ध्वं वैरिसम्बन्धमन्नं कृत्स्नं सिसीर्षति प्राप्तुमिच्छति अतो वाजसृत् इति विशेषणं युक्तं। वाजं धावति प्राप्नोति तदर्थं वृत्रं शत्रुं हन्ति युद्धञ्च जयति किञ्चायमग्निरिव अन्येन प्रतिधृषे तिरस्कर्तुं शक्तो न भवति। तत्र पुरोऽनुवाक्यामाह "त्वामग्ने वाजसातमं विप्रा वर्द्धन्ति सुष्टुतं। स नो रास्व सुवीर्यं" इति। हे अग्ने त्वां विप्रा यजमाना वर्द्धयन्ति अभि-

वृद्धिं प्रापयन्ति। कीदृशं त्वां। वाजसातमं अतिशयेनान्नप्रदं। सुष्टुतं स्तोत्रैर्हि सुष्ठुस्तुतं स तादृशस्त्वं नो अस्माकं सुवीर्यं सुष्ठु सामर्थ्यं रास्व देहि। याज्यामाह "अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रून् जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातौ" इति। अयमग्निः अस्माकं वरिवः परिचारकं भृत्यवर्गं सम्पादयतु। मृधो वैरिणो विदारयन् नोऽस्माकं पुरतो गच्छतु। जर्हृषाणः प्रहरन् शत्रून् जयतु। वाजसातौ अन्नदाननिमित्तं परकीयमन्नं जयतु। इष्यन्तरं विधत्ते "अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद् यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागो ऽन्यस्तौ सम्भवन्तौ यजमानमभिसम्भवतः स ईश्वर आर्त्तिमार्त्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नार्त्तिमार्च्छति यजमानः" (सं०२का०।२प्र०।४अ०) इति। गार्हपत्यादाहवनीये ऽग्निं प्रक्षिप्य तत्राग्निहोत्रं हूयते। तथा सति यस्य यजमानस्य सम्बन्धिनः पुरुषा विस्मृत्य उद्धृत आहवनीयाग्नौ पुनरप्यन्यमग्निमुपर्य्युद्धरेयुः स यजमानोऽग्नियुक्ताग्नये निर्वपेत् तत्र विशेष्यरूपोऽग्निर्निर्दिष्टभागः। विशेषणरूपस्त्वनिर्दिष्टभागः तावुभौ परस्परं संसृज्यमानौ यजमानं भक्षयितुमभिलक्ष्य सम्भवतः। ततः स यजमान आर्त्तिमार्त्तोरीश्वरः विनाशं प्राप्तुं समर्थो भवति। तावग्नी अनयेष्ट्या शाम्यतः। तत्र पुरोऽनुवाक्यामाह "अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः" इति। पश्चात् प्रक्षिप्तेनाग्निना पूर्व्वा-

वस्थितोऽग्निः सम्यग्दीप्यते। सोऽग्निर्विशेषणैः कविरित्यादिभिर्विशिष्टः स्पष्टोऽर्थः। याज्यामाह "त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसे" इति। हे पूर्व्वावस्थिताग्ने पश्चात् प्रक्षिप्तेनाग्निना त्वं समिध्यसे। तादृशस्त्वं ब्राह्मणजात्यभिमानी सन्मार्गवर्त्ती प्रियश्च इतरोऽपि तादृश एव। इष्ट्यन्तरं विधत्ते "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद् यस्याग्निरुद्धृतो ऽहुतेऽग्निहोत्र उद्वायेत्" (सं०२का०।२प्र०।४अ०) इति। यस्य यजमानस्याग्निहोत्रार्थमुद्धृतोऽग्निर्होमात् पूर्व्वमेवोपशाम्यति स एतामिष्टिं निर्वपेत्। अत्र शाखान्तरानुसारिणां मतं पूर्व्वपक्षत्वेनोपन्यस्यति "अपर आदीप्यानुद्धृत्य इत्याहुः" (सं०२का०।२प्र०।४अ०) इति। अपरोऽग्निर्गार्हपत्ये प्रदीप्य पूर्व्वोद्धरणमनु पुनरुद्धरणीय इति तन्मतं तदिदं दूषयति "तत् तथा न कार्य्यं यद्भागधेयमभिपूर्व्व उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति" (सं०२का०।२प्र०।४अ०) इति। अग्निहोत्रहविर्लक्षणं यद्भागधेयमभिलक्ष्य पूर्व्वो वह्निरुद्धृतः तमेव भागमभिलक्ष्य अपरो वह्निः किमुद्ध्रियेत। तदेतदनुचितं। इतिशब्दो हेतौ। तस्मात् तत् तथा न कार्य्यं। सिद्धान्तं विधत्ते "तान्यत्रावक्षाणानि सन्निधाय मन्थेत्" (सं०२का०।२प्र०।४अ०) इति। यान्युल्मुकानि शान्तानि तान्यत्राधस्तादवस्थाप्य पूर्व्वारणीभ्यां अग्निमन्थनं कुर्य्यात्। मन्थने मन्त्रमुत्पादयति "इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्र्या त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्" (सं०२का०।

२प्र०।४अ०) अग्निः पूर्वमितो दग्धकाष्ठादुत्पन्नः इदानीमपि स जातवेदाः गायत्र्यादिभिश्छन्दोभिरनुगृहीतः स्वाद्योनेर्दग्धकाष्ठादभिजायतां। जातश्च तं तं देवं प्रजानन् देवेभ्यो हव्यं वहतु। मन्त्रस्य तात्पर्यं व्याचष्टे "छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयति" (सं०२का०।२प्र०।४अ०) इति। नन्वस्मिन् सिद्धान्तेऽपि पूर्वपक्षवदपरोऽग्निः प्रसज्येतेत्याशङ्क्याह "एष वाव सोऽग्निरित्याहुः (सं०२का०।२प्र०।४अ०) इति। स्वकारणादुत्पन्नत्वादेष एव पूर्वोऽग्निः। न तु भेदोऽस्तीति सिद्धान्तिन आहुः। तर्हि किमर्थेयमिष्टिरित्याशङ्क्याह "ज्योतिस्त्वा अस्य परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य ज्योतिः परापतितं तदेवावरुन्धे" (सं०२का०।२प्र०।४अ०)इति। अस्य पूर्वस्याग्नेर्ज्योतिरेव विनष्टं न त्वग्निर्विनष्टः। तच्च ज्वालारूपं ज्योतिरिष्ट्या सम्पाद्यते। अत्र याज्यापुरोऽनुवाक्ययोः प्रतीकं दर्शयति "उदग्ने शुचयस्तव विज्योतिषा" इति। उदग्ने शुचयस्तव शुक्रेति मन्त्रस्त्वमग्ने रुद्र इत्यनुवाके (सं०१का०। ३प्र०।१४अ०) व्याख्यातः। विज्योतिषा बृहतेत्ययं मन्त्रः कृणुष्वपाज इत्यस्मिन्ननुवाके (सं०१का०।२प्र०।१४अ०) व्याख्यातः। अत्र विनियोगसङ्ग्रहः।

"यस्त्वा याज्या पुत्रवत्यामिष्टौ पुत्रस्य यागके।
अग्नेऽभ्य स्मवद्यागे वसुर्वसुमतीष्यते॥
त्वामग्ने वाजसृद्यागे ह्यग्निनाग्निवतीष्यते।
उदवि ज्योतिषे ज्योतिष्मत्ये तत्र चतुर्दश"॥ इति।

अथ मीमांसा। नवमाध्यायस्य चतुर्थपादे चिन्तितं।

"ज्योतिष्मती भवेन्नो वा दर्शाद्युद्धृतलोपने।

निमित्तसत्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात्"॥ इति।

अग्निहोत्रप्रक्रियायामिदमाम्नायते "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद् यस्याग्निरुद्धृतो ऽहुतेऽग्निहोत्र उद्वायेत्" (मं०१का०।१प्र०।४अ०)इति। प्रतिदिनमग्निर्होतुं गार्हपत्यादुद्धृत्य आहवनीयेऽग्निः प्रक्षिप्यते। सोऽयमुद्धृतोऽग्निः कदाचिदहुते अग्निहोत्रे यदि शाम्येत् तदानीमियमिष्टिः प्रायश्चित्तमित्यर्थः। तत्र दर्शपूर्णमासार्थमुद्धृतस्याप्यग्नेः शान्तौ नेयं ज्योतिष्मतीष्टिर्भवेत्। कुतः। अग्न्युद्वासकस्य निमित्तस्य सद्भावात् इति चेत्। मैवं। अग्निहोत्रार्थोद्धृतस्यैवाग्नेरुद्वानं तन्निमित्तमिति प्रकरणादवगम्यते अनया चेष्ट्या अग्निहोत्रार्थैवाग्निः पुनरुत्पाद्यते। तथा सत्यग्निहोत्रस्येयमिष्टिः सामवायिकमङ्गं भवति। अतोऽग्निहोत्रार्थोद्धृतोद्वातस्य निमित्तस्याभावान्नैमित्तिकीष्टिर्न प्रवर्त्तते। तत्रैवान्यच्चिन्तितं।

"धार्योद्वाते सास्ति नो वा सर्वार्थत्वे न विद्यते।

गतश्रीत्वनिमित्तं तत् सर्वार्थत्वं न विद्यते"॥

"धार्यो गतश्रिय आहवनीय इति"गतश्रीशब्दार्थस्सैवं श्रूयते "त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः" इति। श्रौतो गौतमो भारद्वाज इति कल्पसूत्रकारः। गतश्रीभिर्धार्यमाणस्याहवनीयस्य सर्वकर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्तीति तदुद्वाते सा ज्योतिष्मतीष्टिर्विद्यत इति चेत्। मैवं। न ह्यन्यस्य धारणे

अग्निहोत्रं निमित्तं। किन्तु गतश्रीत्वं। सर्वकर्म समुदायस्य चोदनया कयाचिदप्यचोदितात् सवार्थत्वं शङ्कितुमप्यशक्यं। गतश्रीत्वं निमित्तीकृत्य धृतोग्निः प्रसंगात् सर्वकर्मरूपं कुर्वन्नग्निहोत्रेऽप्युपकरोति इति चेत्। उपकरोतु नाम। नैतावता प्रायश्चित्तस्य निमित्तत्वं लभ्यते। अग्निहोत्रार्थमुद्धृतस्योद्वातत्वं निमित्तं। न चात्र तदस्ति। किन्त्वन्यस्य यस्य कस्यचित् कर्मणोऽर्थं समुद्धृतस्य गतश्रीत्वनिमित्तं धारणं क्रियते। तस्मात् निमित्ताभावान् नास्ति सा दृष्टिः॥ * ॥

इति कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके षट्चत्वारिंशोऽनुवाकः॥ * ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ * ॥

इति श्रीमद्विद्यायोगीन्द्रश्रीविद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहीपालस्याज्ञापरिपालकेन माधवाचार्य्येण विरचिते वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकभाष्यं सम्पूर्णं॥ * ॥

ॐ तत्सत्

श्रीगणेशाय नमः ।



# अथ तैत्तिरीयसंहिताभाष्ये

## प्रथमकाण्डे पञ्चमप्रपाठकः ।

देवासुराः संयत्ता आसन् ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सन्न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेनापाक्रामत्तद्देवा विजित्यावरुरुत्समाना अन्वायन्तदस्य सहसादित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवशीयत तत् ॥ १ ॥

रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयꣳ सोऽग्निरब्रवीद्भाग्यसान्यथ व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत् खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति तं पूषाधत्त तेन ॥ २ ॥

पूषाऽऽधत्त तेन पूषार्ध्नोत्तस्मात्पौष्णाः पशव उच्यन्ते तं त्वष्टाऽऽधत्त तेन त्वष्टार्ध्नोत्तस्मात्त्वाष्ट्राः पशव उच्यन्ते तं मनुराधत्त तेन मनुरार्ध्नोत्तस्मान्मानव्यः प्रजा उच्यन्ते तं धाताऽऽधत्त तेन धातार्ध्नोत्संवत्सरो वै धाता तस्मात्संवत्सरं प्रजाः पशवोऽनु प्रजायन्ते य एवं पुनराधेयस्यर्द्धिं वेद ॥ ३ ॥

ऋध्नोत्येव योऽस्यैवं बन्धुतां वेद बन्धुमान् भवति भागधेयं वा अग्निराहित इच्छमानः प्रजां पशून् यजमानस्योपदोद्रावोद्वास्य पुनरादधीत भागधेयेनैवैनꣳ समर्धयत्यथो शान्तिरेवास्यैषा पुनर्वस्वोरादधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू स्वायामेवैनं देवतायामाधाय ब्रह्मवर्चसी भवति दर्भैरादधात्ययातयामत्वाय दर्भैरादधात्यद्भ्य एवैनमोषधीभ्योऽवरुध्याधत्ते पञ्चकपालः पुरोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुध्याधत्ते ॥ ४ ॥

अशीयत तत्तेन वेद दर्भैः पञ्चविꣳशतिश्च ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥
अध्वर्य्योः प्रकृतौ मन्त्राः प्रपाठकचतुष्टये।
वर्णिता पुनराधेयं पञ्चमाद्ये प्रवक्ष्यते ॥ २ ॥
आधानादूर्द्ध्वमेवैषा वक्तव्या पुनराहितिः।
तथाप्यध्ययनस्यायं क्रम एष हि तत्त्वतः ॥ ३ ॥
सरस्वती स्वपुत्राय तद्बुद्धिस्थे क्रमे वरं।
ददौ तेन क्रमेणैव पठन्त्यन्येऽपि पाठकाः ॥ ४ ॥
एकादशानुवाकाः स्युः पञ्चमेऽस्मिन् प्रपाठके।
तत्रादौ पुनराधेयमनुवाकचतुष्टये ॥ ५ ॥
ततः षष्ठेऽग्न्युपस्थानं काम्या याज्यास्तथान्तिमे।
विधीयतेऽनुवाकेऽस्मिन्नादिमे पुनराहितिः ॥ ६ ॥

उद्वास्य पुनरादधीतेति विधास्यति। तत्र पुनराधेयस्याग्निं देवतां विधातुं अग्निविषयमुपाख्यानमुदाहरन् प्रसङ्गाद्रजतस्य यज्ञे दक्षिणात्वं निषेधति ॥ "देवासुराः संयत्ता आसन् ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सन्न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन्तदस्य सहसादित्सन्त सोऽरोदी-द्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तद्रजतꣳ हिरण्य-मभवत् तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयं"

इति। संयत्ताः युद्धयुक्ताः विजयं प्राप्नुवन्तो देवाः। तथा तेभ्योऽपहृतं मणिमुक्तादिकं श्रेष्ठं वसु रक्षणायाग्नौ निक्षिप्तवन्तः। कथञ्चिदसुराणां विजये सत्येतद्धनं अस्माकमापद्युपयुज्यत इति देवानामाशयः। अश्रवशीयत भूमावपतत् तद्रजतं हिरण्यमभवत् रजतरूपं धनमभवत्। अत्र हिरण्यशब्दस्य धनसामान्यवाचित्वात् रजतं हिरण्यमदक्षिण्यमित्यविरुद्धं। तस्याश्रुजन्यत्वेन दक्षिणां प्रत्ययोग्यत्वात्तद्दाने संवत्सरादर्वागेव गृहे किञ्चित् रोदननिमित्तं भवति। तस्माद्बर्हिषि यज्ञे तन्न दद्यात्॥ अग्निदेवतां पुनराधेये विदधाति॥ "सोऽग्निरब्रवीद्भागय्यसान्यथ व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत् खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति" इति॥ आदौ असाधारणेन भागेन युक्तो भवानि, पश्चादिदं वसु युष्मभ्यं दास्यामीत्यग्निनोक्ता देवाः तवैव पुनराधेयमिति भागं ददुः। तेन तुष्टोऽग्निरिदमब्रवीत्। यो मद्देवत्यं हविः कृत्वा अग्निं पुनरादध्यात् स खलु समृद्धिमानिति। तस्मात् समृद्ध्यर्थं पुनराधेयं हविरग्निदैवतं कुर्यादित्यर्थः॥ तामेव समृद्धिमुदाहरणेन स्पष्टयति॥ "तं पूषाधत्त तेन पूषार्ध्नोत् तस्मात्पौष्णाः पशव उच्यन्ते। तं त्वष्टाधत्त तेन त्वष्टार्ध्नोत् तस्मात्त्वाष्ट्राः पशव उच्यन्ते। तं मनुराधत्त तेन मनुरार्ध्नोत् तस्मान्मानव्यः प्रजा उच्यन्ते। तं धाताधत्त तेन धातार्ध्नोत् संवत्सरो वै धाता तस्मात् संवत्सरं प्रजाः पशवोऽनु प्रजायन्ते" इति। पूषत्वष्टृमनुसंवत्सराभिमानिधातृभिः पश्वादिसमृद्धि-

लभ्या ॥ समृद्धिवेदनं प्रशंसति ॥ "य एवं पुनराधेयस्यर्द्धिं वेद र्ध्नोत्येव" इति ॥ पूषादिरूपस्याग्निबन्धुममूहस्य वेदनं प्रशंसति ॥ "योऽस्यैवं बन्धुतां वेद बन्धुमान् भवति" इति॥ पुनराधेयं विधत्ते ॥ "भागधेयं वा अग्निराहित इच्छमानः प्रजां पशून् यजमानस्योपदोद्रावोद्वास्य पुनरादधीत भागधेयेनैवैनꣳ समर्धयत्यथो शान्तिरेवास्यैषा" इति । प्रथमाधानेन आहितोऽग्निः असाधारणभागवाञ्छया अधिकोपद्रवं चकार तच्छान्तिरनेन भवति । तस्मादुद्वासनेष्ट्या पूर्वाग्निमुद्वास्य पुनरप्यग्निमादध्यात् । उद्वासनेष्टिञ्च सूत्रकारो दर्शयति ॥ आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन् इति । पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति इति ॥ कालं विधत्ते ॥ "पुनर्वस्वोरादधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू स्वायामेवैनं देवतायामाधाय ब्रह्मवर्चसी भवति" इति । पुनरुपावर्त्तते वामं वसु अनयोरिति पुनर्वसू, अतो नक्षत्रात्मिका देवता स्वकीया । पुनराधानस्य प्रथमाधानविकृतित्वात् इध्मकाष्ठैराधानप्राप्तौ अपोद्य दर्भान् विधत्ते ॥ "दर्भैरादधात्ययातयामत्वाय" इति । अत्रापीध्मकाष्ठैराधाने गतसारता स्यात् । अतएव सूत्रकार आह ॥ आयतनेषु पुराणान् दर्भान्त्सꣳस्तीर्य्य भूमिभिर्भवति सर्पराज्ञीभिर्गार्हपत्यमादधाति इति ॥ दर्भविधिमनूद्य प्रशंसति ॥ "दर्भैरादधात्यद्भ्य एवैनमोषधीभ्योऽवरुध्याधत्ते" इति । इन्द्रो वृत्रम-

इन्नित्यादौ (सं०६का०।५प्र०।८अं०) दार्शिकब्राह्मणे च दर्भाणामपकार्यत्वाभिधानादब्रूपत्वमोषधिरूपत्वञ्च विस्पष्टं। अस्मिन् पुनराहितेऽग्नौ कर्त्तव्याया इष्टेः अग्निर्देवता पूर्वं विहिता॥ अथ द्रव्यं विधत्ते॥ "पञ्चकपालः पुरोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुध्याधत्ते" इति। बह्वृच-ब्राह्मणे द्वादशमासाः पञ्चर्तवो। हेमन्तशिशिरयोः समासेने-त्याम्नानात् ऋतूनां पञ्चसङ्ख्या॥

इति माधवीये वेदार्थप्रकाशे यजुःसंहिताभाष्ये प्रथमका-ण्डस्य पञ्चमप्रपाठके प्रथमोऽनुवाकः॥ * ॥

---

परा वा एष यज्ञं पशून्वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनवरुन्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुरान्नमक्षन् पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरं निरवदायाग्निं पुनरा॥ १॥

धत्ते शताक्षरा भवन्ति शतायुः पुरुषः शते-न्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति यद्वा अग्निरा-

हितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदा-ग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः सं वा एतस्य गृहे वाक् सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय ॥ २ ॥

विभक्तिं करोति ब्रह्मैव तदकरुपाꣳशु यजति यथा वामं वसु विविदानो गूहति तादृगेव तदग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तद्विभक्तिमुक्त्वा प्रयाजेन वषट्-करोत्यायतनादेव नैति यजमानो वै पुरोडाशः पशवं एते आहुती यदभितः पुरोडाशमेते आहुती ॥ ३ ॥

जुहोति यजमानमेवोभयतः पशुभिः परिगृह्णाति कृतयजुः सम्भृतसम्भार इत्याहुर्न सम्भृत्याः सम्भारा न यजुः कर्तव्यमित्यथो खलु सम्भृत्या एव सम्भाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्र यत्रैवास्य न्यक्तं ततः ॥ ४ ॥

एवैनमवरुन्धे वीरहा वा एष देवानां योऽग्निमुद्वा-

सयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशक-पालमनुनिर्वपेद्यश्चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नार्त्तिमार्च्छति यजमानः ॥ ५ ॥

आपराभावाय पुरोडाशमेते आहुती ततः षड्‌विंशश्च* ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ ॥

द्वितीयानुवाके याज्याद्यङ्गजातं विधित्सुः पूर्वोक्तं द्रव्यविधिमनूद्य प्रशंसति॥ "परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति। पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनवरुन्धे" इति। परा वपति विनाशयति। धानादिहविर्भिर्यज्ञः पाङ्क्तः। पङ्क्तिच्छन्दसः पशुहेतुत्वात् पशवोऽपि पाङ्क्ताः॥ याज्यानुवाक्ये विधत्ते॥ "वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुरान्नमक्षन् पङ्क्त्यो याज्यानुवाक्या भवन्ति। पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरं निरवदायाग्निं पुनराधत्ते" इति। देवानां मध्ये वीरोऽग्निः। तद्वधकारिणो यजमानस्यान्नं ऋतायवः सत्यमिच्छन्तो ब्राह्मणाः पुरा नैवाक्षन् नैव भुक्तवन्तः। अश, भोजन इत्यस्य रूपं। अग्ने तमद्याश्वं नेत्यादयस्तस्रोऽत्तरपङ्क्तयः। तासु प्रधानहविषो द्वे। स्विष्टकृतो द्वे। तास्व अग्नि-

* षड्‌विंशश्च इति पुस्तकद्वये। षड्विंशतिश्चेति तु पुस्तकद्वये।

काण्डे अग्निर्मूर्धेत्यनुवाके इष्टकोपधानार्थत्वेनाम्नाताः । इह तु वाचनिकस्तद्विधिः । शाखान्तरे तु याज्याप्रस्तावे समाम्नाताः । पुरुषस्य हस्तद्वयपादद्वयशिरोभिः पाङ्क्तत्वं । देवानेव देवानामेव मध्ये वीरं अग्निं निरवदाय उद्वासनलक्षणादधभयान्निष्कृष्य ॥ चतसृषु ऋक्षु विद्यमानामक्षरसङ्ख्यां प्रशंसति ॥ "शताक्षरा भवन्ति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति" इति । अग्ने तमद्येत्येषा प्रथमा चतुर्विंशत्यक्षरा । अधाह्यग्ने क्रतोः । आभिष्टे अद्येत्युभयोरेकैका पञ्चविंशत्यक्षरा । एभिर्नो अर्कैरित्येषा षड्विंशत्यक्षरा । अण्डाभिमानिनो ब्रह्मणः स्वप्रमाणेन शतसंवत्सरायुष्ट्वात्तत्सन्ततिपतितस्यापि सामान्येन शतायुष्ट्वं धर्माधर्माभ्यां तूत्कर्षापकर्षौ भवतः । शतनाडीषु सञ्चाराद्दशेन्द्रियेषु शतसङ्ख्या ॥ प्रधानकर्मण इव प्रयाजाज्यभागाद्यङ्गानामप्याग्नेयत्वं विधत्ते ॥ "यदा अग्निरा हितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः" इति । यजमानस्य समृद्ध्यभावादग्नेः समृद्ध्यभावोऽनुमेयः ॥ समिधो अग्नाग्न* आज्यस्य वियन्त्वित्यादिषु चतुर्षु प्रयाजमन्त्रेषु सम्बुद्ध्यन्तादग्निशब्दात् पूर्वं सम्बुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्तानामग्निशब्दानां क्रमेण प्रयोगं विधत्ते ॥ "सं वा एतस्य गृहे वाक् सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय" इति । अग्नि

* अग्न इत्येव पाठः तै०, वा० ।

मुद्वासयितुरेतस्य वाक् गृहेऽवस्थितानां वाग्भिः संसृज्यते तत्-समा भवति। तां वाचमनु यजमानोऽपि इतरवैलक्षण्यरूप-स्योत्कर्षस्याभावात् पराभूतो भवति। एताभिस्तु विभक्तिभिः पुनराधेयस्याग्न्याधेयाद्वैलक्षण्ये सति यजमानस्य विलक्षणत्वेन वाग्विषृता सत्यां पराभवः शाम्यति॥ विभक्तयः सूत्रे दर्शिताः॥ "अग्नाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न* इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददाति" इति॥ तथा चैवं मन्त्रपाठः सम्पद्यते॥ "समिधो अग्नाग्न† आज्यस्य वियन्तु। तनूनपादग्नावग्न आज्यस्य वेतु। इडो अग्निनाग्न आज्यस्य वियन्तु। बर्हिरग्निमग्न आज्यस्य वेतु" इति॥ यथोक्तविभक्तिविधिमनूद्य प्रशंसति॥ "विभक्तिं करोति ब्रह्मैव तदकः" इति। तत्पुनराधेयं ब्रह्मैव अग्न्याधेयात्परिवृढमेव करोति॥ अत्र मन्त्राणां नीचध्वनिं विधत्ते॥ "उपाꣳशु यजति यथा वामं वसु विविदानो गूहति तादृगेव तत्" इति। यथा लोके श्रेष्ठं वसु लब्धवान् पुरुषो गोपायति तद्वत्॥ स्विष्टकृत्युच्चध्वनिं विधत्ते॥ "अग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तत्" इति। निराह निःशेषध्वनिं कुर्यात्। यथा लोके श्रेष्ठं वसु लब्धवान् द्रव्यपतिः प्रसिद्धिं गन्तुमिच्छति तद्वत्॥ पूर्वविहितानां विभक्तीनां प्रयाजमन्त्रसम्बन्धं विधत्ते॥ "विभक्तिमुक्त्वा प्रयाजेन वषट्करो-

* अग्नेऽग्नावग्निनाग्निम् इति तै०।

† अग्नेऽग्न इति तै०। अग्नाग्न इति वा०।

त्वायतनादेव नैति" इति। विभक्तिवचनप्रकारो दर्शितः। तदुक्तिसहितेन प्रयाजमन्त्रेण वषट्कारपूर्वं यजेत। तथा सति पूर्वोक्तवाक्संसर्गकृतपराभवरहितः आयतनात् स्वगृहान्नैति न निर्गच्छति किन्तु स्वगृहे प्रतितिष्ठति। पुनरूर्जा निवर्तस्व॥ सह रय्या निवर्तस्व इत्येताभ्यां मन्त्राभ्यां आग्नेयपुरोडाशस्या-धस्तादुपरिष्टाच्चाहुतिद्वयं विधत्ते॥ "यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती जुहोति यजमानमेवोभयतः पशुभिः परिगृह्णाति" इति॥ अत्र चोद-कप्राप्तान्सम्भारानाधानमन्त्रांश्च वाजसनेयादिशाखान्तरम-नुसृत्य पूर्वपक्षरूपेण निराचष्टे॥ "कृतयजुः सम्भृतसम्भार इत्याहुर्न सम्भृत्याः सम्भारा न यजुः कर्तव्यं" इति। यजुःशब्देन सर्पराज्ञीप्रभृतय आधानमन्त्रा विवक्षिताः। सम्भारशब्देन सिकतोषादिसप्तसृद्विशेषाश्च विवक्षिताः। प्रथमाधाने यजु-षामुच्चारितत्वात् सम्भाराणां सम्पादितत्वाच्च अस्यापि कर्म-विशेषस्याधानादत्यन्तभेदाभावेन यजुःसम्भारयोः सिद्धत्वात्त-दुभयं पुनर्न कर्तव्यमिति पूर्वपक्षः॥ प्रथमाधाने वाजसनेयि-मतं सूत्रकार उदाजहार॥ "सप्त पार्थिवान्सम्भाराना-हरत्येवं वानस्पत्यान् पञ्च पञ्च वा भूयसो वा पार्थिवान्स-म्भारान्सम्भरदिति वाजसनेयकं" इति॥ सिद्धान्तमाह॥ "अथो खलु सम्भृत्या एव सम्भाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै" इति। अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः॥ अत्र सूत्र-कारः पक्षद्वयमुदाजहार॥ "कृताकृताः सम्भारा यजूंषि

च भवन्त्यपि वा पञ्च पार्थिवान्त्सम्भारानाहरत्येवं वान-स्पत्यान्" इति ॥ दक्षिणां विधत्ते ॥ "पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै" इति। आदौ रथो भग्नः सन् पुनर्दृढीकृतः पुन-र्निष्कृतः एतादृशो रथो दक्षिणा। दक्षिणेति सर्वत्र योज-नीयं। छिन्नं सत् सूचीतन्तुभ्यां स्यूतं पुनरुत्स्यूतं। दौर्बल्येन भारं वोढुमशक्ततया परित्यक्तः सन् केनचित्पोषणेन पुनः शक्तीकृतः स पुनरुत्सृष्टः॥ तूष्णीमेव होतव्यमिति प्रथमाधानस्यामन्त्रत्वेन यदग्निहोत्रं विहितं तदत्र चोदकप्राप्तं तदपोद्य समन्त्रकं विधत्ते॥ "सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जु-होति यत्र यत्रैवास्य न्यक्तं तत एवैनमवरुन्धे" इति। मन्त्रस्तू-परिष्टाद्व्याख्यास्यते। अत्र पुनराधेयदेवस्याग्नेर्यद्यदङ्गं यस्मिन् यस्मिन् प्रदेशे न्यक्तं निमग्नं विस्मृतं तत एव प्रदेशात्साङ्गमेन-मग्निं सम्पादयति॥ अनु निर्वाप्यं हविर्विधत्ते॥ "वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुण-मेकादशकपालमनुनिर्वपद्यञ्चैव हन्ति यश्चास्यर्णयात्तौ भाग-धेयेन प्रीणाति नार्त्तिमार्च्छति यजमान" इति। ऋणनमिव यातयति पीडयतीति ऋणयात्। तौ वध्याग्निपीडयितृवरुणौ तोषयति * ॥

अथ मीमांसा। दशमाध्यायस्य तृतीयपादे चिन्तितं।

---

* तौ वाऽग्निवरुणौ तोषयति इति तै०।

"एकादिना समुच्चेयं पुनर्निष्कृत इत्यथ।
बाधकं वा समुच्चेयमुभयोरित्युदीरणात्॥
आधानदक्षिणोपेतमुभयोरित्यनूद्यते।
ददातीत्यविधायित्वात्कार्यैक्याद्बाधकं भवेत्"॥

आधाने विकल्पिता गोद्रव्यदक्षिणा द्रव्यान्तरदक्षिणाश्च बहवः श्रूयन्ते॥"एका देया षड्देया द्वादश देयाः" इति। पुनराधाने तु पुनर्निष्कृतो रथो दक्षिणेत्यादि श्रुतं। अग्नः सन् पुनः समाहितः पुनर्निष्कृतः। सेयं पुनर्निष्कृतादिदक्षिणा किमतिदिष्टया एकादिदक्षिणया समुच्चीयते उत तां बाधते इति संशयः। उभयोर्दक्षिणा ददात्यग्न्याधेयिकोः पौनराधेयिकौश्चेत्युक्तत्वात्समुच्चय इति पूर्वपक्षः। ददातीति वर्तमाननिर्देशस्य विधित्वाभावात् आधानकाले पूर्वदत्तं पुनराधानकाले च दीयमानं मिलित्वाभयोरित्यनूद्यते। दक्षिणात्वरूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकमिति॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ * ॥

ॐ॥भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे। आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरञ्च प्रयन्त्सुवः। त्रिꣳशद्धाम विराजति वाक् पतङ्गाय शिश्रिये। प्र-

त्यस्य वह द्युभिः। अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन्महिषः सुवः। यत्त्वा॥१॥

क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्यमग्ने तत्तव पुनस्त्वोद्दीपयामसि। यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्। मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तां। सप्त ते अग्ने समिधः सप्त जिह्वा सप्त॥२॥

ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन। पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा। पुनर्नः पाहि विश्वतः। सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि। लोकः सलोकः सुलोकस्ते न आदित्या आज्यं जुषाणा वियन्तु। केतः सकेतः सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु। विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु॥३॥

त्वा जिह्वाः सप्त सुकेतस्तेन त्रयोदश च॥३॥

इति तत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ * ॥

प्रथमद्वितीययोः पुनराधेयस्य प्रधानविधिस्तदङ्गानि च निरूपितानि। तृतीये त्वाधानमन्त्रा आम्नायन्ते॥ कल्पः॥ "भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति। यत्त्वा क्रुद्धः परो वपेति दक्षिणाग्निं। यत्ते मन्युपरोप्तस्येतीतरान्" इति। आहवनीयसभ्यावसथ्यानित्यर्थः। त एते षण्मन्त्राः॥ तत्र प्रथम एवं पठ्यते॥ "भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे" इति। हे गार्हपत्यप्रदेश त्वं लोकत्रयात्मकोऽसि। तत्र भूम्ना बाहुल्येन भूमिरसि। वरिणा वरिम्णा श्रेष्ठत्वेन द्यौरसि। महित्वा महत्त्वेन अन्तरिक्षमसि। हे अदिते भूमे तत्प्रदेशरूपे देवि उपस्थे तवोत्सङ्गे अन्नादं अन्नभोक्तारं गार्हपत्याग्निं अन्नाद्याय यजमानस्यादनयोग्यान्नसिद्ध्यर्थं आदधे स्थापयामीत्यर्थः॥ अथ द्वितीयः॥ "आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरञ्च प्रयन्त्सुवः" इति। अयं गार्हपत्य आदित्यरूपेण गौः गमनशीलः पृश्निः श्वेतवर्णः जगदाक्रमीत्। आक्रमणप्रकार एव स्पष्टीक्रियते। पुनर्मातरं पृथिवीं असनत् आसीदत् प्राप्नोदित्यर्थः। सुवः स्वर्गरूपं पितरञ्च प्रयन् प्रकर्षेण गच्छन् अवस्थितः। द्यौः पिता पृथिवी मातेति श्रुत्यन्तरात् तयोर्मातापितृत्वं॥ अथ तृतीयः॥ "त्रिꣳशद्धाम विराजति वाक् पतङ्गाय शिश्रिये। प्रत्यस्य वह द्युभिः" इति। आदित्यरूपस्य गार्हपत्यस्य सम्बन्धि त्रिꣳशत्सङ्ख्याकं धाम मुहूर्तरूपं तेजो विशेषेण राजते। अह्नः पञ्चदश मुहूर्ताः रात्रेः पञ्चदश। किञ्च वैदिकस्तुतिरूपा वाक्

पतङ्गाय पचिवदाकाशसञ्चारिणमादित्यं शिश्रिये आश्रितवती ॥ तथा चान्यत्राम्नायते ॥ ऋग्भिः पूर्वाह्ने दिवि देव ईयते इत्यादि। हे तादृशगार्हपत्य त्वां प्रति यदस्माभिरुद्वासनरूपं प्रतिकूलत्वमाचरितं तत्सर्वं अस्य प्रतिक्षिप मनसि मा कृथाः। द्युभिर्ज्वालारूपाभिः देवेषु अस्मदीयं हविर्वह प्रापय ॥ अथ चतुर्थः ॥ "अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन्महिषः सुवः" इति। अस्यादित्यस्य रोचना दीप्तिः प्राणात् उच्छ्वासमदृशादुदयात् अपानती निश्वासतुल्यमस्तमयं गच्छन्ती द्यावापृथिव्योरन्तश्चरति। महति मण्डले निषीदतीति महिषः आदित्यः यजमानेभ्यः सुवः स्वर्गलोकं व्यख्यत् प्रकाशितवान्। आदित्यरूपेण स्तूयमान हे गार्हपत्य त्वामादधामीत्यभिप्रायः ॥ अथ पञ्चमः ॥ "यत्त्वा क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि" इति। हे दक्षिणाग्ने क्रुद्धः कोपपराधीनोऽहं तेन मन्युना त्वां परोवप। उवप इति लिडुत्तमपुरुषः। परोप्तवान् उद्वासितवानस्मीति यत् यच्चावर्त्या समृद्ध्यभावलक्षणेन दारिद्र्येणोद्वासितवानस्मि। हे अग्ने तव प्रसादात्तत्सुकल्पं सुष्ठु कृतमस्तु। पुनरपि त्वां वयमुद्दीपयामः ॥ अथ षष्ठः ॥ "यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्" इति। हे आहवनीय मदीयकोपेन उद्वासितस्य तव यत्तेजः पृथिवीमनुप्रविश्य ध्वस्तं तत्तेज आदित्यादयः समाभरन्तु ॥ कल्पः ॥ "मनो ज्योतिर्जुषतामिति बृहस्पति-

वत्यर्चोपतिष्ठते" इति । पाठस्तु "मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तां" इति । उद्वासनापराधपरिहाराय मनो माननीयमग्नेर्ज्योतिर्हूयमाणमाज्यं जुषतां सेवतां । विच्छिन्नं इमं यज्ञं सन्दधातु । बृहस्पतिरस्माकमिमं यज्ञं तनुतां विस्तीर्णं करोतु । विश्वे देवाः सर्वेऽपि देवाः इहास्मिन् कर्म्मणि मादयन्तां तृप्तियुक्ता भवन्तु । कल्पः "सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति" इति । पाठस्तु "सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन" इति । हे अग्ने ते तव समिधः सप्तसङ्ख्याकाः । अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः । अत एव सूत्रकारो यथोक्तान्त्सप्तसम्भारानतुक्रम्य* इति वानस्पत्यानित्युपसञ्जहार । ज्वालारूपा जिह्वास्तु सप्त । तथा चाथर्वणिका आमनन्ति "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" (मुण्ड० उप०।मु०१।२।४।) इति । ऋषयो मन्त्रास्ते च समित्सम्पादनार्थाः सप्तसङ्ख्याकाः । अश्वो रूपं कृत्वा यदश्वत्थेति ष्ठ इत्यादयः समाम्नाताः । प्रियाणि धाम स्थानानि सप्त । गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्यप्राजिहिताग्नीध्रीयाख्यानि सोमयागे वह्नि-

* यथोक्तान् सम्भारान् समन्त्रकाननुक्रम्येति वा पाठः ।

धारकाणि सप्तसङ्ख्याकानि स्थानानि। सप्त होत्राः होतृप्रमुखा वषट्कर्त्तारः। होता प्रशस्ता ब्राह्मणाच्छंसी पोता नेष्टा आग्नीध्रोऽच्छावाकश्चेति सप्तसङ्ख्याकाः। त्वां यजमानाः सप्तधा यजन्ति। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी अतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्तप्रकाराः। तादृशस्त्वं सप्तयोनीराहवनीयादिस्थानानि घृतेन सर्वतः पूरय। कल्पः "पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति पुनरूर्जेति वा पुरस्तात्प्रयाजानूयाजानाꣳ सह रय्येत्युपरिष्टादनूयाजानां" इति। प्रथममन्त्रपाठस्तु "पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा। पुनर्नः पाहि विश्वतः" इति। हे अग्ने त्वं मयोद्वासितोऽपि ऊर्जा क्षीरादिरसेन सह पुनर्निवर्तस्व अत्रागच्छ, इषा अन्नेन आयुषा च सह पुनरागच्छ। अत्रास्मान् पुनः पुनः क्षतात् विश्वतः सर्वस्मादपराधात्पाहि। द्वितीयमन्त्रपाठस्तु "सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि" इति। हे अग्ने रय्या धनेन सह निवर्तस्व। प्सा भक्षण इति धातुः। विश्वेन प्सायते भक्ष्यते पीयत इति विश्वप्स्नी। तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानां उपरि पिन्वस्व सिञ्च। कल्पः "यस्तृतीयमादधीत स एतान् होमान् जुहुयात् लेकः सलेकः सुलेकः" इति। मन्त्रत्रयपाठस्तु "लेकः सलेकः सुलेकस्तेन आदित्या आज्यं जुषाणा वियन्तु। केतः सकेतः सुकेतस्तेन आदित्या आज्यं जुषाणा वियन्तु। विवस्वाꣳ अदितिर्देवजूति-

स्तेन आदित्या आज्यं जुषाणा वियन्तु'' इति। लोकः सलोकः सुलोकः, केतः सकेतः सुकेतः, विवस्वान् अदितिर्देवमूतिस्येति नवसङ्ख्याका लोकादिनामका ये आदित्यास्ते सर्वे जुषाणाः प्रीयमाणाः अस्माकमाज्यं वियन्तु पिबन्तु।

अत्र विनियोगसङ्ग्रहः।

चतुर्भिर्भूमिरित्याद्यैरादध्यात्पश्चिमानलं।
दक्षिणाग्निन्तु यत्त्वेति यदित्याहवनीयकं॥
मनस्तूपस्थितिः सप्त जुहुयादग्निहोत्रकं।
पुनर्द्वाभ्यां पुरोडाशमभितो जुहुयादथ॥
तृतीयमादधानस्य लोकाद्या होममन्त्रकाः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ ० ॥

---

ओं॥ भूमिर्भूम्ना द्यौर्वरिणेत्याहाशिषैवैनमाधत्ते सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति पुनर्नवमेवैनमजरं कृत्वाधत्तेऽथो पूतमेव पृथिवीमन्नाद्यं नोपानमत्सैतं॥ १॥

मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुध्या अथो

अस्यामेवैनं प्रतिष्ठितमाधत्ते यत्त्वा क्रुद्धः परो वपेत्याहापह्नुत एवास्मै तत्पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनं यत्ते मन्युपरोप्तस्येत्याह देवताभिरेव॥ २॥

एनꣳ सम्भरति वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिर्वत्यर्चोपतिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह सन्तत्यै विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञं देवेभ्योऽनुदिशति सप्त ते अग्ने समिधः सप्त जिह्वाः॥ ३॥

इत्याह सप्त सप्त वै सप्तधाग्नेः प्रियास्तनुवस्ता एवावरुन्धे पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परिगृह्णात्यादित्या वा अस्माल्लोकादमुं लोकमायन्तेऽमुष्मिन् लोके व्यतृष्यन्त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान् होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गं लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमाञ्जुहुयाद्यामेवादित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति॥ ४॥

सतं देवताभिरेव जिह्वा एतान् पञ्चविꣳशतिश्च॥४॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ॥

चतुर्थानुवाके पूर्वोक्तमन्त्रा व्याख्यायन्ते। अन्नाद्यायेत्यस्य मन्त्रपदस्याभिप्रायमाह "भूमिर्भूम्ना द्यौर्वरिणेत्याहाशिषैवैनमाधत्ते" इति। आशिषा अन्नाद्यं प्राप्तुमिच्छया चतसृभिर्ऋग्भिराधानं विधत्ते "सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति पुनर्नवमेवैनमजरं कृत्वाधत्तेऽथो पूतमेव" इति। जीर्यन्तो जरां प्राप्नुवन्तोऽमन्यन्त को जरायाः प्रतीकार इति विचारितवन्तः। तदा कसर्णीरनामकः काद्रवेयः कद्रूपुत्रो भूमिरित्यादिकं मन्त्रसङ्घमपश्यत्। तन्मन्त्रसामर्थ्यात् ते सर्पा जीर्णाः शरीरत्वचोऽपहत्य कोमलास्त्वचः प्राप्नुवन्। सर्पाणां राज्ञी भूमिः। इयं वै सर्पतो राज्ञीत्यन्यत्राम्नानात्। तस्या ऋचः भूमिर्भूम्नेत्याद्याः ताभिराहितो वह्निः जरां परित्यज्य नूतनः पूतश्च भवति। तमेव विधिमनूद्य प्रशंसति "पृथिवीमन्नाद्यं नोपानमत्सैतं मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुध्या अथो अस्यामेवैनं प्रतिष्ठितमाधत्ते" इति। अन्नाद्यायेत्युक्तत्वात् प्राप्तिः। उपस्थे ते देवीत्युक्तत्वाद्भूमौ प्रतिष्ठितत्वं। यदाह परोवप तत्युकस्पमित्युक्तेः बालस्येव अग्नेः सान्त्वनाय अपलाप इत्याह "यत्त्वा क्रुद्धः परो-

वपेत्याहापह्नुत एवास्मै तत्” इति। उद्दीपयामसीत्यस्याभिप्रायमाह “पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनं” इति। आदित्या विश्वे इत्यादेरभिप्रायमाह “यत्ते मन्युपरोप्तस्येत्याह देवताभिरेवैनꣳ सम्भरति” इति। उपस्थानं विधत्ते “वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोपतिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति” इति। बृहस्पतिशब्दोऽस्यामस्तीति बृहस्पतिवती। तं शब्दं प्रशस्य सन्दधात्विति शब्दस्याभिप्रायमाह “विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह सन्तत्यै” इति। सम्बोधनस्योपयोगमाह “विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञं देवेभ्योऽनुदिशति” इति। यज्ञं सन्ततं कृत्वा देवेभ्यस्तत्कथनाय सम्बोधनं। समिधादिषु सप्तसङ्ख्याया उपयोगमाह “सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह सप्त सप्त वै सप्तधाग्नेः प्रियास्तनुवस्ता एवावरुन्धे” इति। समिधादयः सर्वे पदार्थाः प्रत्येकं सप्त सप्त च निर्दिश्यन्ते। यस्मात्सप्तधावस्थिताः पदार्थाः अग्नेः प्रियास्तनुवः तस्मात्तदवरोधाय सप्तसङ्ख्याः। द्वितीयानुवाके विहितयोराहुत्योर्मन्त्रौ विनियुङ्क्ते “पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परिगृह्णाति” इति। तृतीयाधाने होमान् विधत्ते “आदित्या वा अस्माँल्लोकादमुं लोकमायन् तेऽमुष्मिन् लोके व्यतृष्यन् त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान् होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गं लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान्

होमान् जुहुयाद् यामेवादित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति'' इति। आदित्या आधानपुनराधाने अनुष्ठाय स्वर्गं गत्वा तत्र व्यहृष्यन् विशेषेण हर्षं प्राप्ताः, समृद्धिर्न प्राप्नोति मत्वा भूमावागत्य लेकादिमन्त्रान् हुत्वा अतिशयेन समृद्धिं गताः। ततः पुनराधेयादूर्द्ध्वं अग्निमाधाय लेकादिभिर्जुहुयात्॥ * ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥ ० ॥

---

ॐ॥ उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते। अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिं। अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयं। अपाꣳ रेताꣳसि जिन्वति। अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे। उभा वामिन्द्राग्नी आहुवध्यै॥ १ ॥

उभा राधसः सह मादयध्यै। उभा दाताराविषाꣳ रयीणामुभा वाजस्य सातये हुवे वां। अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्धया रयिं। अग्न आयूꣳषि पवस

आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनां। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं। दधत्पोषꣳ रयिं॥२॥

मयि। अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान् वक्षि यक्षि च। स नः पावक दीदिवोऽग्ने देवाꣳ इहावह। उप यज्ञꣳ हविश्च नः। अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुचीरोचत आहुतः। उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतीꣳष्यर्चयः। आयुर्दा अग्नेऽस्यायुर्मे ॥ ३ ॥

देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आपृण चित्रावसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यं। अग्ने सपत्नदम्भनं वर्षिष्ठे अधिनाके। सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना। त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज॥ ४ ॥

आहुवध्यै पोषꣳ रयिं मे वर्चसा सप्तदश च॥ ५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

चतुर्भिरनुवाकैः पुनराधानं समापितं। अथ पञ्चम मारभ्य दशमस्य पूर्वार्धपर्यन्तैरनुवाकैः अग्न्युपस्थानमुच्यते कल्पः "अग्न्युपस्थानं व्याख्यास्यामः, उपतिष्ठत इति चोद्यमाः आहवनीयमेवोपतिष्ठेतेति वचनादन्यामुत्तरामाहुतिमुपोत्थाः कवातिर्य्यङ्ङिवोपतिष्ठेतोपप्रयन्तो अध्वरमिति षड्भिः" इति तत्र प्रथमा "उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आ अस्मे च शृण्वते" इति। अध्वरं यज्ञमुपप्रयन्तः प्राप्नुवन्तो वय मग्नये अग्निसन्तोषार्थमुपस्थानमन्त्रं वोचेम वक्तारो भूयास्म कीदृशायाग्नये, दूरादप्यस्मदीयं वचः शृण्वते। अथ द्वितीय "अस्य प्रत्नामनुद्युतꣳ शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसा मृषिं" इति। अस्याग्नेः प्रत्नां *पुरातनीमनुद्युतमनुकूलदीि †गोस्थानीयामह्रयो लज्जामकुर्वन्त ऋत्विजः पयः चीरादि स्थानीयं सहस्रसां बहुधनप्रदमृषिं अतीन्द्रियज्ञानप्रदं‡ शुभ्र ज्योतिर्दुदुह्रे दुहन्ति। अथ तृतीया "अग्निर्मूर्धा दिवः ककु त्पतिः पृथिव्या अयं। अपाꣳ रेताꣳसि जिन्वति" इति अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्ध शिरस्थानीयः। पृथिव्याः पतिः दाहपाकादिकारित्वेन पाल कोऽप्ययं। किञ्च। अपां रेतांसि उदककार्याणि स्थावर जङ्गमशरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति। अथ

---

* पुरातनीं द्युतिमनुकूलदीप्तिं इति ते०।
† गोस्थानीयामनु अह्नय इति ते०।
‡ ऋषिकर्मप्रवर्त्तकं इति का०।

चतुर्थी "अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभुवं विशे विशे" इति। अयमग्निरिह कर्मणि प्रथमः प्रधानभूतः धातृभिर्धारणाय प्रयतमानैरस्माभिर्धायि धार्यते। कीदृशोऽग्निर्होता देवानामाह्वाता। यजिष्ठो मनुष्येभ्योऽतिशयेन यष्टा। अध्वरेषु यागेषु ईड्यः स्तुत्यः। किञ्च। अप्नवानसञ्ज्ञका भृगुसञ्ज्ञकाश्च मुनयो वनेषु स्वाश्रमेषु विशे विशे तत्तत्प्रजाभ्युदयार्थं यमग्निं चित्रं बहुयागाधारत्वेन विचित्रं विभुवं व्याप्तं विरुरुचुः विशेषेण दीपितवन्तः। अथ पञ्चमी "उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वां" इति। इयञ्च प्रथमप्रपाठके व्याख्याता। हे इन्द्राग्नी युवामुभावपि आभिमुख्येन होतुमिच्छामि। पुनरपि युवामुभौ सह राधसो अन्नेन मादयितुमिच्छामि। यस्माद् युवामुभौ अन्नानां धनानाञ्च दातारौ तस्मादन्नधनलाभाय युवामाह्वयामि। अथ षष्ठी "अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्धया रयिं" इति। हे अग्ने अयमाहवनीयप्रदेशः ते योनिः तव स्थानं, स च योनिः ऋत्वियः ऋतुसम्बन्धः, सर्वस्मिन्नप्यृतावनेन होमनिष्पत्तेः। यत आहवनीयप्रदेशात् जात उद्भूतः त्वं अरोचथाः दीप्यसे तं प्रदेशं जानन् मम स्थानमिति अवगच्छन् आरोह। अथानन्तरं नो अस्माकं रयिं धनं वर्धय। कल्पः

"अग्न आयूंषि पवस इति षड्भिः संवत्सरे संवत्सरे सदा वेति। उपतिष्ठत इति शेषः। एतास्त्वमग्ने रुद्र इत्यत्र (सं०१का०। ३प्र०।१४अ०) व्याख्याताः। तत्र प्रथमा "अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनां" इति। हे अग्ने त्वं अस्मदायूंषि पवसे शोधयसे निर्दोषाणि करोषि। अस्माकं बलं अन्नमानय। वैरिसेनां दूरे बाधस्व। अथ द्वितीया "अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं। दधत्पोषं रयिं मयि" इति। हे अग्ने स्वपाः शोभनकर्मा त्वमस्मासु ब्रह्मवर्चसं समीचीनसामर्थ्यञ्च पवस्व शोधय। किं कुर्वन् पुष्टिं धनञ्च मयि धारयन्। अथ तृतीया "अग्ने पावक रोचिषा मन्द्रया देवजिह्वया। आ देवान् वक्षि यक्षि च" इति। हे पावकाग्ने देव रोचमानया मादयित्र्या जिह्वया देवान् आवह यक्षि च। अथ चतुर्थी "स नः पावक दीदिवोऽग्ने देवां इहावह। उप यज्ञं हविश्च नः" इति। हे शोधकाग्ने दीदिवो दीप्यमानः स त्वं देवान् इह आनय। अस्मदीयं यज्ञं हविश्च उपगच्छ। अथ पञ्चमी "अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुचीरोचत आहुतः" इति। अयमग्निः अतिशुद्धव्रतयुक्तः विप्राभिमानित्वादपि शुचिः। विद्वदभिमानित्वादपि शुचिः। अस्माभिः सर्वत्राहुतः शुद्धो दीप्यते। अथ षष्ठी "उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतींष्यर्चयः" इति। हे अग्ने तव शुचयः शुद्धाः शुक्रा रश्मयो भ्राजन्तो दीप्यमानाः उद्गच्छन्ति अर्च-

यितारस्तव ज्योतींषि प्राप्नुवन्तीति शेषः। कल्पः "आयुर्दा अग्न इति सिद्धमा चित्रावसो स्वस्ति इति चित्रावसुना* सायमुपतिष्ठते" इति। पाठस्तु "आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आपृण" इति। आपूरयेत्यर्थः। चतुर्ष्वेतेषु यजुःसु स्पष्टमन्यत्। अथ यजुरन्तरं "चित्रावसो स्वस्ति ते पारमशीय" इति। हे चित्रावसो रात्रे तव पारं समाप्तिं स्वस्ति क्षेमेण प्राप्नुवानि। कल्पः "†अर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा इत्युपस्थाय" इति। अर्वागित्यादि शाखान्तरमन्त्रः। अत्रत्यमन्त्रपाठस्तु "इन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यं। अग्ने सपत्नदम्भनं वर्षिष्ठे अधिनाके" इति। हे अग्ने त्वां समिद्भिरिन्धाना वयं शतसङ्ख्याकान् हेमन्तोपलक्षितसंवत्सरान् द्युमन्तो दीप्तिमन्तः समिधीमहि लोके सम्यक् प्रख्याता भूयास्म। कीदृशं त्वां वयस्कृतं अन्नस्य कर्तारं। यशस्कृतं कीर्तिप्रदं। अदाभ्यं केनाप्यतिरस्कार्यं। वर्षिष्ठे अधिनाके अतिप्रौढस्वर्गविषये सपत्नदम्भनं विरोधिनाशनं। कीदृशा वयं वयस्वन्तो अन्नवन्तः। यशस्वन्तः कीर्तिमन्तः। सुवीरासः शोभनपुत्रादियुक्ताः। कल्पः "चतस्रः समिध एकैकस्मिन्नाधाय सं

---

* चित्रावसो स्वस्ति चित्रावसो वसूनामिति इति तै०।

† चिरर्वाग्वसुना इति तै०।

त्वमग्ने सूर्यस्य वर्चसागथा इत्यनुवाकशेषेणोपस्थाय" इति। पाठस्तु "सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाᳪं स्तुतेन सं प्रियेण धाम्ना। त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज" इति। हे अग्ने त्वं सूर्यस्य वर्चसा तेजसा सम-गथाः सङ्गतोऽसि। ऋषीणां स्तोत्रेण सङ्गतोऽसि। प्रियेण स्थानेनाहवनीयदेशलक्षणेन सङ्गतोऽसि। हे अग्ने त्वं सूर्य-समानतेजा असि। मां आयुरादिभिः संयोजय।

अत्र विनियोगसङ्ग्रहः।

"पूर्वस्याग्नेरुपस्थानमुपप्रेत्यनुवाकतः"। इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहितायां प्रथम-काण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ * ॥

---

ॐ। सम्पश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे। अम्भस्थाम्भो वो भक्षीय महस्थ महो वो भक्षीय सहस्थ सहो वो भक्षीयोर्जस्थोर्जं वो भक्षीय रेवतीरमध्वमस्मिन् लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो मापगात बह्वीर्मे भूयास्त॥ १॥

सᳪंहितासि विश्वरूपीरा मोर्जाविशा गौपत्येना रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः

श्रयन्तां। उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं। नमो भरन्त एमसि। राजन्तमध्वराणां गोपामृतस्य दीदिविं। वर्धमानꣳ स्वे दमे॥ स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये। अग्ने॥२॥

त्वं नो अन्तमः। उत त्राता शिवो भव वरूथ्यः। तं त्वा शोचिष्ठ दीदिवः। सुम्नाय नूनमीमहे सखिभ्यः। वसुरग्निर्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिं दाः। ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडा स्थ मधुकृतः स्योना माविशतेरा मदः। सहस्रपोषं वः पुष्यासं॥३॥

मयि वो रायः श्रयन्तां। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजं। कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते। परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि। धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः। अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमाशासे तन्तवे

ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीं ॥ ४ ॥

भूयास्त स्वस्तयेऽग्ने पुष्यासं धषद्वर्णमेकान्नचित्वारिंशच्च* ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

पञ्चमेऽनुवाके अग्न्युपस्थानमुक्तं। तथापि षष्ठेऽनुवाके पुनरपि गार्हपत्यस्याहवनीयस्य चोपस्थानं सपरिकरमभिधीयते। कल्पः "सम्पश्यामि प्रजा अहमिति गृहान् प्रेचते" इति। पाठस्तु "सम्पश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे" इति। अहं मनुष्यः प्रजा इडप्रजसश्च सम्यक् पश्यामि। इडा धेनुस्तस्याः प्रजा अपत्यानि इडप्रजसः। मनुष्यरूपाश्च सर्वाः प्रजा अस्माकं गृहे तिष्ठन्तु। कल्पः "अम्भस्थाम्भो वो भचीयेति गोष्ठमुपतिष्ठते' इति। पाठस्तु "अम्भस्थाम्भो वो भचीय महस्थ महो वो भचीय महस्थ सहो वो भचीयोर्जस्थोर्जं वो भचीय" इति। अम्भः पीतोदकसारं। महः पूज्यं सर्वैरादरणीयं। सहो बलकरं। ऊर्जं स्वादुतमरसरूपं यत् चीरादि। तत्कारणत्वेन हे पशवः तद्रूपा स्थ। अतो युष्मदीयं चीरादिकं अस्माकं भक्ष्यमस्तु। कल्पः "रेवती रमध्वमित्यन्तराग्नी तिष्ठन् जपति" इति। पाठस्तु

* एकान्नविंशतिश्च इति पुस्तकद्वये।

"रेवती रमध्वमस्मिन् लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो मापगात बह्वीर्मे भूयास्त" इति। हे रेवतीः पशवः अस्मिन् लोके गोष्ठे व्रजविशेषे क्षये गृहविशेषे योनौ स्थानविशेषे रमध्वं क्रीडध्वं, इहैव योनौ स्त सर्वदा तिष्ठत, इतः स्थानान्मापगात मापगच्छत, मे मदर्थमपत्यपरम्परया बह्वो भूयास्त। कल्पः "सꣳहितासि विश्वरूपीति वत्समभिमृशति" इति। पाठस्तु "सꣳहितासि विश्वरूपीरा मोर्जा विशा गौपत्येना रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्तां" इति। हे वत्स त्वं मात्रा संहितोऽसि संयुक्तोऽसि। विश्वरूपीः आदरेण स्तनं पातुं वामतो दक्षिणतश्च पुनः पुनर्धावन् बहुरूपवदवभाससे। तादृशस्त्वं ऊर्जा क्षीरादिरसनिमित्तेन मा आविश मत्समीपं आगच्छ। गौपत्येन मदीयं बहुपशुस्वामित्वं निमित्तीकृत्य मामाविश। रायस्पोषेण धनपुष्टिनिमित्तेनापि मामाविश। सहस्रसङ्ख्या पुष्टिर्यथा भवति तथा युष्मान् पुष्यासं। मयि युष्मदीयक्षीरादिधनान्याश्रयन्तां। कल्पः "उप त्वाग्ने दिवे दिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठते। अग्ने त्वं नो अन्तम इति चतसृभिर्द्विपदाभिः। स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादित्येषा चतुर्थी भवति" इति। तत्र प्रथमा गायत्री "उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं। नमो भरन्त एमसि" इति। (ऋग्वेदसं०१मं०। १सू०) हे अग्ने प्रतिदिनं त्वां उप एमसि उप गच्छामः। दोषावस्तः सायं प्रातश्च धिया नमो भरन्तः नमस्कारं सम्पादयन्तः।

अथ द्वितीया "राजन्तमध्वराणां गोपामृतस्य दीदिविं। वर्ध-मानꣳ स्वे दमे" इति। कीदृशन्त्वां। अध्वराणां राजन्तं यज्ञराजं। गोपां गवां पालकं। ऋतस्य दीदिविं सत्येन द्योतमानं। स्वे दमे स्वकीयेऽग्निहोत्रगृहे हविर्भिर्वर्धमानं। अथ तृतीया "स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये" इति। हे अग्ने त्वं नोऽस्मदर्थं स तादृशस्त्वं सूपायनो भव सुखेन प्राप्तुं शक्यो भव। यथा पुत्रार्थं पिता सुप्राप्यः तद्वदस्माकं स्वस्तये क्षेमाय सचस्व समवेतो भव। अथ प्रथमा द्विपदा "अग्ने त्वं नो अन्तमः। उत त्राता शिवो भव वरूथ्यः" इति (ऋग्० ५ मं०।२४ सू०)। अन्तमोऽन्तिकतमो भव उत अपि च त्राता शिवश्च सन् वरूथ्यो वरूथे गृहे नित्यं सन्निहितो भव। अथ द्वितीया "तं त्वा शोचिष्ठ दीदिवः। सुम्नाय नूनमीमहे सखिभ्यः" इति। शुद्धतम दीप्यमान सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय तं पूर्वोक्तगुणं त्वां ईमहे प्राप्नुमः। अथ तृतीया "वसुरग्निर्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिं दाः" इति। वसुर्वसुमानयमग्निः। वसु रुद्रादिदेवैरादरेण श्रूयते इति वसुश्रवाः। हे तादृशाग्ने अच्छास्मदभिमुखो नक्षि प्राप्नुहि। द्युमत्तमः अतिशयेन दीप्यमानो रयिं दाः धनं देहि। चतुर्थी तु शाखान्तरगता। कल्पः "ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान् प्रेक्षते पशूंस्त्वा" इति। पाठस्तु "ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतडा स्थ मधुकृतः स्योना माविशतेरा मदः। सहस्रपोषं वः पुष्यासं

मयि वा रायः श्रयन्तां" इति। हे गृहगताः पशवः चौरादिरसनिमित्तेन धनपुष्टिनिमित्तेन युष्मानहं पश्यामि। यूयमपि तथा मां पश्यत। हे इडा गावः यूयं मधुकृतो मधुरघृतकारिण्यः स्थ। स्योनाः सुखकराः, इराः अन्नवत्यो, मदो मादयित्र्यो मामाविशत। शतसहस्रसङ्ख्याकपुष्टिर्यथा भवति तथा युष्मान् पुष्यासं। युष्माकं धनानि चौरादीनि मयि श्रयन्तां। कल्पः "तत्सवितुर्वरेण्यं" "सोमानꣳ स्वरणं" "मित्रस्य चर्षणीधृतः" "प्र स मित्र" "कदाचन स्तरीरसि" "कदाचन प्रयुच्छसि" "परि त्वाग्ने पुरं वयं" इत्युपस्थायेत्याहवनीयमिति लभ्यते। तत्र प्रथमैवमाम्नाता "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्" इति (ऋग्०३मं०।६२सू०)। यः सविता अस्माकं बुद्धिं प्रेरयति तस्य सवितुर्देवस्य वरणीयं तद्भर्गः तेजः ध्यायेमहि। अथ द्वितीया "सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजं" इति (ऋग्०१मं०।१८सू०)। ब्रह्मणः परिवृढस्य कर्म्मणः पते स्वामिन् अग्ने यस्त्वं औशिजं उशिजऋषेः पुत्रं कक्षीवन्तं ऋषिं कर्म्मप्रवर्त्तकं कृतवानसीत्यध्याहारः। तादृशस्त्वं सोमानं सोमयागानां स्वरणं उपदेष्टारं कृणुहि कुरु। "मित्रस्य" "प्र स मित्र" इति द्वयमत्र नाम्नातं (ऋग्० ३मं०।५९सू०)। अथ पञ्चमी "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते" इति (यजुर्०८अ०।२।)। हे इन्द्र परमैश्वर्ययुक्ताग्ने कदाचन कदाचिदपि स्तरीः हिंसको नासि किन्तु

दाशुषे हविर्दत्तवते यजमानार्थं उपोपेन्नु अत्यन्तं समीप एव मस्त्रसि समवेतोऽसि। हे मघवन्निन्द्र मदृशाग्ने भूय इन्नु पुनरपि देवस्य ते तव दानं पृच्यते फलदानमस्माभिः संयुज्यते। "कदाचन प्रयुच्छसि" इत्येषात्र नाम्नाता (यजुर्० ८अ०।३।)। अथ सप्तमी "परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि। धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः" इति (ऋग्० १० मं०।८७सू०)। सहसि भवः सहस्यः। हे सहस्य बलवन्नग्ने वयं त्वां प्रतिदिनं परिधीमहि परितो धारयामः। कीदृशं त्वां। पुरं अभिमतानां पूरकं। विप्रं ब्राह्मणजात्यभिमानिनं। धृषद्वर्णं वैरिणं धृषन् अभिभवन् वर्ण आकारो यस्य तादृशं। भङ्गुरावतो भञ्जनशीलव्यापारोपेतस्य रक्षसो भेत्तारं। कल्पः "अग्न आयूꣳषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य अमुष्मा इति जातस्य" इति। आग्निपावमान्यौ नात्राम्नाते। मन्त्रान्तरपाठस्तु "अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीं" इति। हे गृहपालकाग्ने गृहपतिना त्वया सुगृहीतोऽहं शोभनगृहपतिर्भूयासं। तथा गृहपतिना मया पूजितस्त्वं गृहस्वामी भूयाः। कियन्तं कालं। शतं हिमाः। हिमशब्दोपलक्षितहेमन्तर्तुसहितान् शत संवत्सरान्। अहं तन्तव उत्पत्स्यमानपुत्रसन्तानाय ज्योतिष्मतीं ब्रह्मवर्चसयुक्तां

तामाशिषं आयुराद्यैश्वर्यवृद्धिरूपां आशासे एवममुष्मै जाताय देवदत्तादिनाम्ने।

अत्र विनियोगसङ्ग्रहः।

सं प्रेक्षते गृहानभ्यस्य गोष्ठमुपतिष्ठते।
रेवान्तराग्नी जपति संहिता वत्सकं स्पृशेत्॥
उप त्वा पश्चिमं वह्निं षण्मन्त्रैरुपतिष्ठते।
ऊर्जा प्रेक्ष्य गृहांस्तस्य चतुर्भिः पूर्वपावकं॥
उपस्थायाग्न इत्यस्मात्पश्चिमं चोपतिष्ठते।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ * ॥

---

अयज्ञो वा एष योऽसामोपप्रयन्तो अध्वरमित्याह स्तोममेवास्मै युनक्त्युपेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैत्यस्य प्रत्नामनुद्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहत्यग्निर्मूर्धा दिवः ककुदित्याह मूर्धानं॥१॥ एवैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रतितिष्ठत्ययमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोत्युभा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवावरुन्धेऽयं ते योनिर्ऋत्विय इत्याह

पशवो वै रयिः पशूनेवावरुन्धे षड्भिरुपतिष्ठते षड् वै ॥ २ ॥

ऋतव ऋतुष्वेव प्रतितिष्ठति षड्भिरुत्तराभिरुपतिष्ठते द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रतितिष्ठति यथा वै पुरुषोऽश्वो गौर्जीयत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुपतिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येवोपतिष्ठते योग एवास्यैष उपतिष्ठते ॥ ३ ॥

दम एवास्यैष उपतिष्ठते याञ्ञैवास्यैषोपतिष्ठते यथा पापीयांछ्रेयस आहृत्य* नमस्यति तादृगेव तदायुर्दा अग्नेऽस्यायुर्मे देहीत्याहायुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह ॥ ४ ॥

तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवावरुन्ध इन्धानास्त्वा शतं ॥ ५ ॥

* पापीयांछ्रेयसाहृत्य इति पाठान्तरः।

हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवे- न्द्रिये प्रतितिष्ठत्येषा वै सूर्म्मी कर्णकावत्येतया ह स्म वै देवा असुराणाᳪं शततर्हाᳪंस्तृᳪंहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृ- व्याय प्रहरति स्तृत्या अच्छम्बट्कारᳪं सं त्वमग्ने सू- र्यस्य वर्चसागथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाशिषमेवैता- माशास्ते ॥ ६ ॥

मूर्धानᳪं षड्वा एष उपतिष्ठते पाहीत्याह शतमहᳪं षोडश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपा- ठके सप्तमोऽनुवाकः ॥ * ॥

सप्तमानुवाके पञ्चमानुवाकोक्ता मन्त्रा व्याख्यायन्ते। उप प्रेत्यादिमन्त्रसङ्घोपस्थानेन ज्योतिष्टोमे त्रिवृत्पञ्चदशादिस्तोम वदग्निहोत्रेऽपि स्तोमयोग उपचर्यत इत्याह "अयज्ञो वा एष योऽसामोपप्रयन्तो अध्वरमित्याह स्तोममेवास्मै युनक्ति" इति। यः सामरहितः स यज्ञ एव न भवति। ऋग्भेदा- दावृत्तिभेदाच्च निष्पन्नः साममङ्घः स्तोमः। तच्चास्मिन्न- ग्निहोत्रे मन्त्रसङ्घेन सम्पादयति। उपशब्दसूचितं दर्शयति

"उपेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैति" इति। प्रजाः पशवश्च भूलोकमुपगच्छन्ति। तस्माद्यजमानोऽप्युपशब्दसामर्थ्यात् प्रजां पशूंश्चोपेत्य तद्युक्तं भूलोकमुपैति। प्रत्नशब्दसूचितमाह "अस्य प्रत्नामनुद्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहति" इति। स्वर्गलोकस्य चिरन्तनत्वेन प्रत्नशब्दसूचितत्वात्तेन शब्देन स्वर्गारोहो भवति। मूर्धशब्दपृथिवीशब्दाभ्यां सूचितं दर्शयति "अग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमेवैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रतितिष्ठति" इति। मूर्धानं श्रेष्ठं एनं यजमानं करोतीत्यर्थः। प्रथमशब्दसूचितं दर्शयति "अयमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोति" इति। इन्द्रस्य बलाभिमानित्वादग्नेश्च तेजोऽभिमानित्वाच्छब्दद्वयेनोभयप्राप्तिः सूच्यत इत्याह "उभा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवावरुन्धे" इति। रयिशब्दं व्याचष्टे "अयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवावरुन्धे" इति। उपस्थानं विधत्ते "षड्भिरुपतिष्ठते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति षड्भिरुत्तराभिरुपतिष्ठते द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रतितिष्ठति" इति। उपप्रयन्त इत्यादिकं पूर्वषट्कं। अग्न आयूꣳषीत्यादिकमुत्तरषट्कं। पूर्वषट्केन यथा प्रतिदिनमुपस्थानं तद्वदुत्तरेणापि प्राप्तौ कालविशेषं विधत्ते। "यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य पर-

त्सादाग्निपावमानीभिरुपतिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येव" इति। पुरुषादीनां चिरकाले देहो यथा जीर्यति तथाऽग्नेः संवत्सरे प्राप्तां जरां निवार्य्य नूतनशरीरं शोधयितुं संवत्सरादूर्ध्वमुपस्थानं। अग्निदेवतायाः पवमानदेवतायाश्च सम्बन्धिन्य ऋच आग्निपावमान्यः। यद्यप्यग्निरेव शोधकत्वात्पवमानः तथापि शोधकत्वोपाधेरन्यत्वमभिप्रेत्य निर्देशभेदः। विहितमुपस्थानं चतुर्वारमनूद्य प्रशंसति "उपतिष्ठते योग एवास्यैष उपतिष्ठते दम एवास्यैष उपतिष्ठते याञ्ञैवास्यैषोपतिष्ठते। यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तत्" इति। उपतिष्ठत इति यत् एष एव अस्याग्नेर्योगो यजमानेन सहानुग्राह्यानुग्राहकरूपः सम्बन्धः। तथा दमो दाहादिलक्षणोपद्रवनिवारणं। तथा धनादियाञ्ञा। यथा लोके कश्चिद्दरिद्रो धनिकाय किञ्चिदुपायनमानीय नमस्कारं करोति तादृगिदमुपस्थानं। अयमिह प्रथमो धायि धातृभिरिति योग उक्तः। आरे बाधस्व दुच्छुनामिति अनिष्टनिवारणं। अथा नो वर्धया रयिमिति याञ्ञा। मन्त्रं वोचेमाग्नय इति उपायनं। त्रयाणां यजुषामर्थप्रसिद्धिं दर्शयति "आयुर्दा अग्नेऽस्यायुर्मे देहीत्याहायुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह तनूपा ह्येष" इति। तनुशब्देन प्रजाः पशवश्चोपलक्षिता इत्यभिप्रेत्य व्याचष्टे "अग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाह"

इति। चित्रावसुपदस्यार्थं वाक्यतात्पर्यञ्च दर्शयति "चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवावरुन्धे" इति। नक्षत्रादिरूपं चित्रमभिव्यक्ततया वसत्यस्यामिति रात्रिश्चित्रावसुः अव्युष्टिः *प्रभाताभावः। हेमन्तौ रात्रेर्दीर्घत्वेन प्रभातं न भविष्यत्येवेति कदाचित् ब्राह्मणा भीताः अतः पारमशीयेति प्रार्थनया प्रभातं लभते। शतमङ्ख्यां प्रशंसति "इन्धानास्त्वा शतꣳ हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। अस्य मन्त्रस्योपस्थाने समिदाधाने च विनियोगद्वयं सूत्रकार उदाजहार "इन्धानास्त्वा शतꣳ हिमा इत्युपस्थायेन्धानास्त्वा शतꣳ हिमा अग्नेः समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि †परस्त्वा मा पाहि यमस्य समिदसि मृत्योर्मा पाहीति चतस्रः समिध एकैकस्मिन्नाधाय" इति। तत्रोपस्थानाङ्गत्वप्रस्तावेन मन्त्रो व्याख्यातः। अथ तस्यैव समिदाधानाङ्गत्वं विधत्ते "एषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अच्छम्बट्कारं" इति। ज्वलन्ती लोहमयी स्थूणा सूर्मी सा च कर्णकावती छिद्रवती अतएव ज्वलन्तीत्यर्थः। ‡तत्समानेयस्रुक्,

* प्रभातान्त इति का०। प्रभातभाव इति तै०।

† परस्या म एधि इति का०।

‡ तत्र वर्त्तमानेयस्रुक् इति तै०।

एकेन प्रहारेण शतमङ्क्षाकान्मारयन्तः शूराः शततर्हाः, असुराणां मध्ये तादृशान् एतयर्चा देवा हिंसन्ति अनया समिदाधानेन शतघ्नीमेनामृचं वज्रं कृत्वा वैरिणं हन्तुं प्रहरति। अच्छम्बट्कारं स्वस्य विनाशो यथा न भवति तथेत्यर्थः। सं त्वमग्न इत्यर्धेनाग्नेर्गुणकथनं स्वस्यापि तत्प्रार्थनायेत्याह "सं त्वमग्ने सूर्यस्य वर्चसागथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावैतदाह" इति। द्वितीयार्धे सं मामायुषेति प्रार्थनमिति दर्शयति "त्वमग्ने सूर्यवर्चा असीत्याहाशिषमेवैतामाशास्ते" इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

सम्पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवावरुन्धेऽम्भस्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महस्थ महो वो भक्षीयेत्याह महो ह्येताः सहस्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जस्थोर्जं वो भक्षीयेति ॥ १ ॥

आहोर्जो ह्येता रेवतीरमध्वमित्याह पशवो वै रेवतीः पशूनेवात्मन् रमयत इहैव स्तेतो मापगातेत्याह ध्रुवा एवैना अनपगाः कुरुत इष्टकचिद्वा

अन्योऽग्निः पशुचिदन्यः सꣳहितासि विश्वरूपीरिति वत्समभिमृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते प्र ॥ २ ॥

वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुपतिष्ठते गार्हपत्यमुपतिष्ठतेऽस्मिन्नेव लोके प्रतितिष्ठत्यथो गार्हपत्यायैव निह्नुते गायत्रीभिरुपतिष्ठते तेजो वै गायत्री तेज एवात्मन्धत्तेऽथो यदेतं तृचमन्वाह सन्तत्यै गार्हपत्यं वा अनु द्विपादो वीराः प्रजायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुपतिष्ठते ॥ ३ ॥

आस्य वीरो जायत ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाशिषमेवैतामाशास्ते तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवावरुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्धे कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति ॥ ४ ॥

य एवं विद्वानग्निमुपतिष्ठते परि त्वाग्ने पुरं वयमित्याह परिधिमेवैतं परिदधात्यस्कन्दायाग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य

ब्रह्मवर्चसी पुत्रो जायते तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति ॥ ५ ॥

ऊर्जं वो भक्षीयेति प्र गार्हपत्यमुपतिष्ठते वसति ज्योतिष्मतीमेकान्नचिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

अथाष्टमेऽनुवाके षष्ठानुवाकोक्ता मन्त्रा व्याख्यायन्ते। तत्र इडप्रजस इत्यनेन पदेन गवाश्वादयो विवक्षिता इत्यभिप्रेत्याह "सम्पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवावरुन्धे" इति। अम्भो महः सह ऊर्जशब्दैर्गवामुपलक्षणं युक्तमित्याह "अम्भस्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महस्थ महो वो भक्षीयेत्याह महो ह्येताः सहस्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जस्थोर्जं वो भक्षीयेत्याहोर्जो ह्येताः" इति। रेवतीशब्देन विवक्षितं क्षीरादिधनमासामस्तीति व्युत्पत्तिमभिप्रेत्य व्याचष्टे "रेवतीरमध्वमित्याह पशवो वै रेवतीः पशूनेवात्मन् रमयते" इति। आत्मन् स्वकीयगृहे इत्यर्थः। स्तेत्यनेन ध्रुवजीवनं मापगातेत्यनेन योगविभागाभावः प्रत्यर्थ्यत इत्याह "इहैव स्तेतो मापगातेत्याह ध्रुवा एवैना अनपगाः कुरुते" इति। वत्सस्पर्शं विधत्ते "इष्टकचिद्वा अन्यो-

ऽग्निः पशुचिदन्यः सꣳहितासि विश्वरूपीरिति वत्समभिमृश-
त्युपैवैनं धत्ते पशुचितमेनं कुरुते" इति। इष्टकामुपधाय
यथा कश्चिदग्निश्चीयते तथा पशुमुपधायान्योऽग्निश्चीयत इत्यु-
प्रेच्यते। तथा सति वत्सस्पर्शेन पशुमुपधायाग्निश्चितो भवति।
गार्हपत्योपस्थानं विधत्ते "प्र वा एषोऽस्माल्लोकाच्च्यवते य
आहवनीयमुपतिष्ठते गार्हपत्यमुपतिष्ठतेऽस्मिन्नेव लोके प्रति-
तिष्ठत्यथो गार्हपत्यायैव निह्नुते" इति। सुवर्गो लोक आ-
हवनीय इति श्रुत्यन्तरात्। तदुपस्थानादेतल्लोकप्रच्युतिः। सा
च गार्हपत्योपस्थानेन समाधीयते किञ्चाहवनीय एव तात्प-
र्य्योपेतगार्हपत्यमुपतिष्ठमानः स्वप्रतिष्ठासिद्ध्यर्थं केवलं तमप-
लपति। उप त्वाग्न इत्याद्यास्तिस्र ऋचो विधत्ते "गायत्रीभि-
रुपतिष्ठते तेजो वै गायत्री तेज एवात्मन्धत्तेऽथो यदेतं तृच-
मन्वाह सन्तत्यै" इति। प्रजापतिमुखादग्निना सहोत्पन्नत्वा-
द्गायत्र्यास्तेजस्त्वं। तृचानुवचनमविच्छेदार्थं। अग्ने त्वं न इत्या-
द्यास्तिस्रो द्विपदा विधत्ते "गार्हपत्यं वा अनु द्विपादो वीराः
प्रजायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुपतिष्ठत आस्य
वीरो जायते" इति। पश्यतेति लोडाशीरर्थत्वं दर्शयति
"ऊर्जा वः पश्याम्यूर्जा मा पश्यत इत्याहाशिषमेवैतामाशास्ते"
इति। सवितृसोमब्रह्मशब्दानामभिप्रायमाह "तत्सवितुर्वरे-
ण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाव-
रुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्धे" इति।
सरीर्नासीति निषेधस्याभिप्रायमाह "कदाचन स्तरीरसीत्याह

न स्वरीॅं रात्रिं वसति य एवं विद्वानग्निमुपतिष्ठते” इति। अन्धकारयुक्ता रात्रिश्चोरवृश्चिकादिबाधयुक्ततया स्वरीरित्युच्यते। विद्वान् उपस्थाता तादृशीं रात्रिं नाधिवसति। किन्तु सुखकरीमित्यर्थः। परिधीमहीति लिङ्गान्मन्त्र एवाग्नेरस्कन्दनार्थः परिधिरित्याह “परि त्वाग्ने पुरं वयमित्याह परिधिमेवैतं परिदधात्यस्कन्दाय” इति। मन्त्रस्य स्पष्टार्थतां दर्शयति “अग्ने गृहपत इत्याह यथायजुरेवैतत्” इति। हिमशब्दो हेमन्तवाचीत्याह “शतॅं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह” इति। तन्तवे अमुष्मा इत्यत्र नामग्रहणं विधत्ते “पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति” इति। एनं पुत्रं। अनुत्पन्नपुत्रविषयस्तन्तुशब्दः उत्पन्नपुत्रविषयोऽदःशब्द इति व्यवस्थां दर्शयति “तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति” इति।

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

“ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनं।
समुच्चयो वात शक्र एकोऽग्निः केवलोऽथवा॥
विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः।
श्रुतिः *शक्त्यनुसारेति शक्र एकोऽग्निलिङ्गतः॥

---

* सत्त्वानुवादेति इति तै०।

शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकं ।
नैराकाङ्क्ष्यात्मके बाधे श्रुत्याशा केवले स्थितिः” इति ॥

ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति श्रूयते । कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुष इत्यसौ ऋगैन्द्री । तत्रेन्द्रस्य प्रकाशना । भो इन्द्र त्वं कदाचिदपि घातको न भवसि । किन्त्वाहुतिं दत्तवते यजमानाय प्रीयस इत्यर्थः । तच्चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रस्य इन्द्रविषयकक्रियासाधनत्वं गम्यते । यद्यसौ मन्त्र इन्द्रप्रधानकक्रियायाः साधनं न भवेत् तदानीमनेन मन्त्रेण इन्द्रप्रकाशनं व्यर्थं स्यात् । तस्मादेतन्मन्त्रकरणकक्रियां प्रति इन्द्रः प्रधानमित्येतादृशबुद्ध्युत्पादनं लिङ्गविनियोगः । का सा क्रियेति विशेषजिज्ञासायां ऐन्द्र्योपतिष्ठत इत्यनेन अविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते । तथा सति ऐन्द्रमन्त्रेणेन्द्रमुपतिष्ठत इत्ययमर्थः पर्यवस्यति । तथा गार्हपत्यमित्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते । तच्च गुणभूतां यत्किञ्चित्करणक्रियामन्तरेण न सम्भवति । ततस्तादृशीं काञ्चित् क्रियां प्रति गार्हपत्यः प्रधानमित्येतादृशबुद्ध्युत्पादनं श्रुतिविनियोगः । ऐन्द्र्योपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति । तथा सत्यैन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति । तदेवं श्रुतिलिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषात् व्रीहियवव‌द्विकल्प इत्येकः पूर्वपक्षः । इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषात् उपस्थानस्य च गुणत्वात्

प्रतिप्रधानं गुणावृत्तिरिति न्यायेन उपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चय इति द्वितीयः पूर्वपक्षः। श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। अन्यथा वह्निना सिञ्चेद्वारिणा दहेदित्यपि विनियुज्येत। ततः उपजीव्यत्वेन लिङ्गस्य प्रबलत्वात् इन्द्र एव मन्त्रेण उपस्थेय इति तृतीयः पूर्वपक्षः। ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गौणवृत्त्या शक्तिरस्तीति निवेशन इत्यस्मिन्नुदाहरणे पूर्वमेव प्रदर्शितं। तथा सति सामर्थ्याभावकृतप्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते। लिङ्गन्तु विलम्बते। मन्त्रपदान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति। तत ऊर्द्धं मन्त्रस्य सामर्थ्यं निरूप्यते। पश्चात्सामर्थ्यवशात् साधनत्ववाचिनी प्राधान्यवाचिनी च श्रुतिः कल्प्यते। सा च श्रुतिर्मन्त्रेण इन्द्रमुपतिष्ठत इति विनियुङ्क्ते। तथा सति प्रत्यक्षश्रुत्या स्वाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते। न च प्रत्यक्षश्रुतिविनियोगवेलायां अलब्धात्मकत्वेन अप्राप्तलिङ्गं कथं बाध्यत इति शङ्कनीयं। भविष्यत्प्राप्तिप्रतिबन्धस्यैवात्र बाधत्वात्। श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाङ्क्षानुदयाद्विनियोजकं लिङ्गं कथं प्राप्स्यति। तस्माद्गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः॥ * ॥

अग्निहोत्रं जुहोति यदेव किञ्च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति प्रजनने प्रजननꣳ हि वा अग्निरथौषधीरन्तर्गता दहति तास्ततो भूयसी प्रजायन्ते यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति तद्रेतः सिक्तं न त्वष्ट्राविकृतं प्रजायते यावच्छो वै रेतसः सिक्तस्य ॥ १ ॥

त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुपतिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि विकरोति स प्रैव जायते श्वश्वो भूयान् भवति य एवं विद्वानग्निमुपतिष्ठतेऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह ॥ २ ॥

रात्रिं प्राविशन् ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳस्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून्वित्त्वा कामाꣳ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान् भवति ॥ ३ ॥

आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं

गत्वा पुनरिमं लोकमभ्यध्यायत्स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳस्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनꣳ स्तुतः सुवर्गं लोकमगमयद्यः ॥ ४ ॥

एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्यभि वा एषोऽग्नी आरोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुपतिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो रात्रिर्यत् ॥ ५ ॥

नक्तमुपतिष्ठते ज्योतिषैव तमस्तरत्युपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै* योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वै ॥ ६ ॥

आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन्

---

* मनुष्याय। इत्। नु। वै। इति पदपाठः।

ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभिरुपतिष्ठते स्वमेव त-
दन्विच्छति न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत
इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः
पराङ् विष्वङ् प्रजया पशुभिरेति कवातिर्यङ्ङिवोप-
तिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति ॥
॥ ७ ॥

सिक्तस्य सह भवति यो यत् खलु वै पशुभिस्त्रयो-
दश च ॥ ९ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपा-
ठके नवमोऽनुवाकः ॥ ＊ ॥

नवमेऽनुवाके पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता प्रदर्श्यते । तत्र तावदग्निहोत्रं विधत्ते "अग्निहोत्रं जुहोति यदेव किञ्च यजमानस्य स्वं तस्यैव तत्" इति । वाक्यान्तरविहितेन पयोदधियवाग्वादिद्रव्येणाग्निहोत्रनामकं होमं कुर्यात् । यजमानस्य क्षीरप्रभृतिकं यत् स्वमग्नौ हुतं न तद्विनश्यति । किन्तु तस्यैव यजमानस्य तत् स्वं भूत्वावतिष्ठते । तदवस्थानं दृष्टान्तेनोपपादयति "रेतः सिञ्चति प्रजनने प्रजननꣳ हि वा अग्निः" इति । यथा प्रजोत्पादके योनौ सिक्तं रेतोऽवतिष्ठते तथा अग्नेः प्रजननरूपत्वात् तस्मिन् हुतमवतिष्ठते । ननु वह्निसमीपे

प्राप्तानां द्रव्याणां दाहः प्रत्यक्षेणोपलभ्यत इत्याशङ्क्याह "अथौषधीरन्तगता दहति तास्ततो भूयसी प्रजायन्ते" इति। यद्यपि घर्मकाले दावाग्निः स्वसमीपं प्राप्ता ओषधीर्दहति तथापि दग्धा ओषधयः वृष्टिकाले भूयस्यः प्रजायन्ते। तस्मात् प्रजननोऽग्निः। कालद्वयं विधत्ते "यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति तत्" इति। प्रातःकालीनहोमेनोत्पादनं। विहितस्याग्निहोत्रस्याङ्गमुपस्थानं विधत्ते "रेतः सिक्तं न त्वष्टाविकृतं प्रजायते यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुपतिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि विकरोति" इति। लोके योनौ सिक्तं रेतो विश्वकर्म्मणा यदि न विक्रियेत तदा नैव प्रजोत्पत्तिरस्ति। स च त्वष्टा यावन्ति रूपाण्युद्दिश्य रेतो विविधं करोति तावन्त्युत्पद्यन्ते। अत्रापि यजमानो देवैरनुगृहीतस्त्वष्टा ततो विविधरूपकरणाय बह्वीभिरुपतिष्ठते। अयमुपस्थानकर्म्मविधिः। तदनुवादेन षड्भिरुपतिष्ठत इत्यादिमन्त्रविधिः। उपस्थानं प्रशंसति "स प्रैव जायते श्वःश्वो भूयान् भवति य एवं विद्वानग्निमुपतिष्ठते" इति। उपस्थाता प्रजामुत्पाद्य प्रतिदिनमुत्तरोत्तरं धनादिभिर्वर्धते। प्रकारान्तरेण प्रशंसति "अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन् ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी वै रात्रिराग्नेयाः पशव इममेवाग्निꣳस्तवाम स नः

स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत् ते देवाः पशून्वित्त्वा कामाꣳ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान् भवति" इति। वित्तं पूर्वलब्धं पशुरूपं धनं वेद्यमितःपरं लब्धुं योग्यं तदुभयं देवद्रव्यं अपहृत्य तेन सह असुरा रात्रिं प्राविशन् अन्धकारे क्वापि गताः। ततः पशुहीना वयमिति खिद्यन्ते देवाः। ते रात्रौ उपायमपश्यन् रात्रावग्नेः प्रकाशाधिक्यदर्शनाद्रात्रिराग्नेयी अग्नेः पशुस्वामित्वात्पशवोऽप्याग्नेयाः। स्तुतः सोऽग्निरेभ्यो देवार्थं रात्रेरध्याहृत्य अहरभिलक्ष्य तान् पशून्निरार्जत् निरगमयत् कामान् भोगान्। पुनः प्रकारान्तरेण प्रशंसति "आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत्स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनꣳ स्तुतः सुवर्गं लोकमगमयद्य एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेति" इति। पुनः प्रकारान्तरेण प्रशंसति "अभि वा एषोऽग्नी आरोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति" इति। एनावाहवनीयगार्हपत्यौ य उपतिष्ठत एषोऽग्नी उभावभ्यारोहति स्ववशौ करोति। यथा कश्चित् पूर्वमधमः सन्नेवं कामयते अहं विद्यादिना श्रेष्ठ उत्तमं पदमभ्यारूढो भविष्यामीति तथाऽयं यजमान उपस्थानेन स्वस्योत्तमं पदं करो-

ति। तस्मादुपस्थानं प्रशस्तमित्यर्थः। अत्र केचित्प्रातरग्निर्नोपस्थेय इत्याहुः। अन्ये तु न कदाचिदप्युपस्थेय इति। सिद्धान्तस्तु सर्वदाप्युपस्थेय इति। तत्र प्रथमं पूर्वपक्षं दर्शयति "नक्तमुपतिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो रात्रिर्यन्नक्तमुपतिष्ठते ज्योतिषैव तमस्तरति" इति। रात्रौ व्रतान्यनुष्ठेयानि कर्म्माणि संसृज्यन्ते सङ्कीर्णानि भवन्ति। अन्धकारे केन कथमनुष्ठितमिति न ज्ञायते। यथाशास्त्रमनुष्ठितो व्रतविशेषः श्रेयान् तद्विपरीतः पापीयान् उभौ सहैव तिष्ठतः। तत्राग्नावुपस्थिते सत्यग्निना ज्योतिषा रात्रिप्रयुक्तं तमोदोषं तरति। तस्मान्नक्तमुपस्थेयः। अहनि तु तमोदोषाभावान्नोपस्थेय इत्येकः पूर्वपक्षः। द्वितीयं पूर्वपक्षं विचारपुरःसरं दर्शयति "उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेय" इति। प्लुतिर्विचारार्था। लोके मनुष्यायैव तावत् राज्ञे यः कोऽपि दरिद्रो यत्किञ्चित् जम्बीरफलादिकमुपायनमाहृत्य ततः प्रतिदिनमेनं राजानं प्रति बहुक्षेत्रधनादिकं यदि याचति तदा स याचकः तं राजानं पीडयत्येव तथा सति को नाम महाप्रभावान् देवान् प्रतिदिनं याचितुमर्हति। याञ्चारूपं चेदमुपस्थानं। आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादिमन्त्रेषु (सं० १का०।५प्र०।५अ०) तत्प्रतीतेः। तस्मादग्निः कदाचिदपि नोप-

स्थेय इति द्वितीयः पूर्वपक्षः। सिद्धान्तं दर्शयति "अथो खल्वाहु-राशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेरा-शीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" इति। अथोशब्दः पूर्वपक्ष-व्यावृत्त्यर्थः। आशिषे वै स्वापेक्षितं सर्वमाशासितुमेव कं प्रजा-पतिसदृशं सर्वदेवात्मकमग्निं प्रति यजमानो यजत इत्यभिज्ञा आहुः। लोकेऽपि राज्ञश्चित्तवृत्तिमविज्ञाय अकाण्डे देही-त्युक्ते सत्युपरोधो भवति। यदा तु प्रशंसया विनोदेन वा परितोषमुत्पाद्य याचते तदानीमुत्साहयुक्तो याचितादप्यत्य-न्तमधिकमेव ददाति। तद्वदाहिताग्नेर्मन्त्रैरुपस्थानमेव याञ्चा। सा च बहुविधप्रशंसापूर्वकत्वात् नोपरोधाय भवति किन्त्व-त्यन्तपरितोषायैव। तस्मात्सायं प्रातश्च अग्निरुपस्थेय एव। छन्दोभिरुपस्थानं प्रशंसति "प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन् तान् छन्दोभिरन्वविन्दद्यच्छन्दोभिरुप-तिष्ठते स्वमेव तदन्विच्छति" इति। अहोरात्रदेवताभ्यामन्त-र्धापिताः पशवः छन्दोयुक्तमन्त्रैरन्विष्टाः सन्तो लब्धाः। तस्मात् छन्दोभिरुपस्थानं विनष्टस्यान्वेषणाय भवति। उपस्थानस्य प्रतिदिनकर्तव्यतामनूद्यति "न तत्र जाम्यस्तीत्याहुर्योऽहरहरु-पतिष्ठत इति" इति। उपस्थातुरभीष्टप्रार्थनामद्भावादुपस्थेय-स्तुतिसद्भावाच्च तत्रोपस्थाने कस्यापि जाम्यालस्यं नास्तीति। उपस्थानवेलायामीषत्तिरश्चीनमुखत्वं विधत्ते "यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ् प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठेत नैनं प्रत्योषति न विष्वङ्

प्रजया पशुभिरेति" इति। प्रत्यङ् सम्मुखः। तथा सति अग्नि-रेनं यजमानं प्रत्योषति प्रातिकूल्येन दहति। पराङ्मुखः तथा सति यजमानः प्रजया पशुभिश्च विष्वङ्ङेति वियुक्तो भवति। कवातिर्यङ्ङिव ईषत्तिरश्चीन इव इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ * ॥

---

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे। तत्त्वं बिभृहि पुनरा मदैतोस्तवाहं नाम बिभराण्यग्ने। मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः। आयुषे त्वं जीवसे वयं यथायथं विपरिदधावहै पुनस्ते। नमोऽग्नयेऽप्रति-विद्धाय नमोऽनाधृष्टाय नमः सम्राजे। अषाढः ॥ १ ॥

अग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्वः। त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः। सं मामायुषा सं गौपत्येन सुहिते मा धाः। अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः। अस्मा अस्तु सुवीर्यं। मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं

यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः सन्दधामि हविषा घृतेन। पयस्वतीरोषधयः॥ २ ॥

पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज। अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां। अग्निꣳ होतारमिह तꣳ हुवे देवान् यज्ञियानिह यान् हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य। कस्त्वा युनक्ति स त्वा युनक्तु। यानि घर्मे कपालान्युपचिन्वन्ति॥ ३ ॥

वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतां। अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः। इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसञ्चरन्ति। त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु॥ ४ ॥

अषाढ ओषधय उपचिन्वन्ति पञ्चचत्वारिꣳशच्च॥

॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः॥ * ॥

दशमानुवाकस्य पूर्वभागे प्रवत्स्यतो यजमानस्य अग्न्युपस्थानमन्त्राः। उत्तरभागे केचिद्दर्शपूर्णमासाङ्गमन्त्राश्चाभिधीयन्ते। कल्पः "प्रवत्स्यन्नेष्यन्वाहवनीयमन्तमाधेहि। ज्वलत उपतिष्ठत इत्युपक्रम्योक्तं। पशून्मे शंस्य पाहि तान् मे गोपायास्माकं पुनरागमादित्याहवनीयं मम नाम प्रथमं जातवेद इति च" इति। तत्र पशूनित्यादिमन्त्राः शाखान्तरगताः। मन्त्रान्तरपाठस्तु "मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे। तत्त्वं बिभृहि पुनरा मदैतोस्तवाहं नाम बिभराण्यग्ने" इति। ब्राह्मणस्य नामद्वयं विद्यते देवदत्तयज्ञदत्तादिकमेकं। उपाध्यायदीक्षितादिकमपरं। अतएव श्रूयते "तस्माद्विनामा ब्राह्मणोऽर्धुक" इति। तत्राध्यापनादेरूर्ध्वं प्रवृत्तत्वादुपाध्यायादिकं चरमं। अग्रे जन्मकाले मातापितृभ्यां कृतं देवदत्तादिकं प्रथमं। हे जातवेदः मम यत्प्रथमं नाम तत्त्वं धारय कियन्तं कालं, पुनरा मदैतोः आ मदीयपुनरागमनात् अहमपि तव नाम धारयाणि। त्वमत्र वैकल्यं हरन् मदीयं कार्यं कुरु। त्वन्नामधारिणो मम गन्तव्यदेशे वैकल्यमेव न सम्भवतीत्यर्थः। कल्पः "अभ्येत्याहवनीयमन्तमाधेहीति। ज्वलत उपतिष्ठते इत्युपक्रम्योक्तं। मम नाम तव च जातवेद इति चतसृभिराहवनीयं" इति। तत्र प्रथमा "मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः। आयुषे त्वं जीवसे वयं यथायथं विपरिदधावहै पुनस्ते" इति। हे जातवेदः मम देवदत्तादि नाम तव च वह्न्यादि नामेत्येवं ये

नामनी विपरिवृत्य अन्योन्यं वाससी विपर्ययेण वसानाविवेदानोमावां चरावः। इत ऊर्द्धं ते नामनी त्वं चाहं च पुनरपि यथायथं त्वदीयं वज्ञादि नाम तवैव, मदीयं च देवदत्तादि नाम ममैव यथा भवति तथा विपरिवृत्य परिदधावहै। एवं सति आयुरभिवृद्धिधनादिसम्पत्त्या प्रशस्तजीवनं भवति। अथ द्वितीया "नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे। अषाढ अग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्वः" इति। अप्रतिविद्धाय केनचिदताडिताय, अनाधृष्टाय केनाप्यतिरस्कृताय, सम्राजे संहतदीप्तये। अषाढः शत्रूणां सोढुमशक्यः, बृहद्वयाः अपरिमितान्नः, विश्वजित् सर्वस्य जेता, सहन्त्यः स्वयं सहिष्णुः, श्रेष्ठो गन्धर्वः सङ्गीतादिकलाविद्यास्वतिकुशलः। अथ तृतीया "त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः। सं मामायुषा सं गौपत्येन सुहिते मा धाः" इति। त्वमेव पिता पालको येषां देवानां ते त्वत्पितारः। त्वां प्राप्ता आहुतयो येषां देवानां ते त्वामाहुतयः। त्वयि हुताः सत्यो देवांस्तर्पयन्तीत्यर्थः। त्वमेव विशेषेण वाचः प्रख्यापयिता येषां ते त्वद्विवाचनाः। हे अग्ने मां दीर्घायुषा सं धाः संयोजय। गौपत्येन गवां स्वामित्वेन संयोजय। सुहिते सुष्ठु हिते पुरुषार्थे मा धाः मां स्थापय। अथ चतुर्थी "अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः। अस्मा अस्तु सुवीर्यं" इति। प्रशस्तानां मध्ये अतिशयेन प्रशस्यः श्रेष्ठः। पुनरपि तादृशानां श्रेष्ठानां मध्ये अतिशयेन श्रेष्ठः श्रेष्ठतमः। भगवच्छब्दः पौराणिकैर्व्याख्यातः,

"ऐश्वर्यस्य समग्रस्य *वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥ इति।
उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिं।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

अतिशयेन भगवान् भगवत्तमः। सहस्रसङ्ख्याकस्य धनस्य ये सनितारो दातारस्तेभ्योऽप्यतिशयेन दाता सहस्रसातमः। तादृशस्याग्नेः प्रसादादस्मै यजमानाय मह्यं शोभनं वीर्यं सामर्थ्यमस्तु। कल्पः "नवमीं चेद्रति प्रवसेन्मित्रो जनान् यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्" इति। निर्गमतिथिमारभ्य नवमीं तिथिमतिक्रम्य प्रवासे सत्येतदवगन्तव्यं। तत्र मित्रो जनानिति मन्त्रोऽन्यत्राम्नातः। मन्त्रान्तरपाठस्तु "मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु।। या इष्टा उषसो निम्रुचस्ताः सन्दधामि हविषा घृतेन" इति। पूर्वार्धस्तु भूमिर्भूम्नेत्यनुवाके (सं०१का०।५प्र०।३अ०) व्याख्यातः। या उषसः प्रातःकालोपलक्षिता आहुतयः याश्च निम्रुचोऽस्तमयकालोपलक्षिता आहुतयः इष्टा इतरैर्यजमानैरनुष्ठिताः मया त्वन्तरिताः ताः सर्वा आहुतीः अनेन घृतेन हविषा सन्दधामि अविच्छिन्नाः करोमि। अग्न्युपस्थानमन्त्रादिविषयः पूर्वभागो गतः। अथ दार्शिकयाजमानमन्त्रादिविषय उत्तरार्धभाग उच्यते। कल्पः "पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति

* धर्मस्य इति ग्रा०।

वा" इति। पाठस्तु "पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज" इति। सारवाची पयः-शब्दः। ओषधयः पयस्वत्यः। वीरुधां लतानां सम्बन्धि यत्पयो निर्गतं क्षीरं तदपि पयस्वत् सारवत्। अपां मध्ये यत्सारं यच्च पयसो गवादेः क्षीरस्य पयः सारं तेन सारेण सर्वेण हे इन्द्र मां संसृज संयोजय। कल्पः "दक्षिणेनाहवनीयमव-स्थाय व्रतमुपैष्यन्त्समुद्रं मनसा ध्यायति अग्ने व्रतपते व्रतं चरिष्यामि इति ब्राह्मण" इति। मन्त्रशेषस्तु "तच्छकेयं तन्मे राध्यतां" इति। तद्व्रतमनुष्ठातुं शक्तो भूयासं। मदीयं तद्व्रतं समृद्धं भवतु। कल्पः "अग्निꣳ होतारमिह तꣳ हुवे इति हविर्निरुप्यमाणमभिमन्त्रयते हविर्निर्वपणं वा पात्र-मभिमृशत्यभिमन्त्रयते" इति। मन्त्रशेषस्तु "देवान् यज्ञिया-निह यान् हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य" इति। इह कर्मणि देवानामाह्वातारं तमग्निमहमाह्वयामि। इह कर्मणि यान् देवानुद्दिश्य जुहुम-स्तानपि यज्ञियान् देवान् आह्वयामि। आहूताश्च ते देवाः सौमनस्यं प्राप्ता आगच्छन्तु। आगत्य च मे अस्य हविषः मदीयमिदं हविः वियन्तु भक्षयन्तु। कल्पः "अथ यज्ञं युनक्ति कस्त्वा युनक्ति स त्वा युनक्ति" इति। सर्वं विहारमनुवीक्षते इति। हे यज्ञ कः प्रजापतिः सर्वत्र त्वां युनक्ति योग्यं करोति तस्मादत्रापि स एव त्वां युनक्तु। कल्पः "उभौ कपालविमोचनं जपतः" इति। उभावध्वर्य्युयजमानौ। मन्त्रपाठस्तु "यानि

घर्मं कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतां” इति। अयं मन्त्रोऽप्यध्वर्युकाण्डे आम्नातत्वात् प्रथमप्रपाठके (सं०१का०।१प्र०।७अ०). व्याख्यातः। वेधसो ब्रह्मसमानाः पूष्णः पोषका ऋत्विजो यानि कपालानि वह्नौ उपस्थापयन्ति तानि सर्वाण्यपि व्रते समाप्ते सति इन्द्रवायू विमुञ्चतां। अथ प्रायश्चित्तं। कल्पः “यदि कपालं भिद्येत गायत्र्या त्वा शताक्षरया सन्दधामीति तत्सन्धाय उपरि गार्हपत्ये धार्यमाणमभिजुहुयात् मनो ज्योतिर्जुषतां इति। अथैनमपोऽभ्यवहरेत् अभिन्नो घर्मो जीरदानुः” इति। मन्त्रशेषस्तु “यत आत्तस्तदगन् पुनः। इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसञ्चरन्ति” इति। घर्मो दीप्तः सन्तप्तोऽयं कपालविशेषः स्वयं भिन्नत्वेन प्रतीयमानोऽपि मन्त्रसामर्थ्यादभिन्न एव भिन्नत्वदोषं नावहति। यस्मादयं जीरदानुः। जीरं जीवनं पुरोडाशद्वारेण यज्ञस्य ददातीति जीरदानुः। यो ह्यन्यं जीवयति स कथं स्वयं भिन्नो भवेत्। अभिन्नत्वे तदाकारः कुतो न भातीत्याशङ्क्योत्तरमुच्यते। यतो यस्मान्मृद्रूपात्कारणादात्त उत्पन्नः पुनस्तत्कारणं अगन् प्राप्नोत्। अतः कारणरूपस्तदाकार एव प्रतीयते। न तु कार्याकारः। तदप्रतीतत्वादपि इध्मादयः स्वस्वाकारेण प्रतीयमाना यज्ञपुरुषस्यायुरनुसृत्य सञ्चरन्ति। कल्पः “अथान्यत्सꣳस्कृत्य कपालेष्वपि सृजेत् त्रयस्त्रिꣳशत्तन्तवः” इति। मन्त्रशेषस्तु “ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्धामि

स्वाहा घर्मो देवाꣳ अप्येतु" इति। चतुर्थकाण्डे प्रजापतिर्मनसान्धोऽच्छेत इत्यनुवाकेन इष्टकोपधानार्था यज्ञतनुनामकास्त्रयस्त्रिꣳशन्मन्त्रा आम्नाताः। तन्मन्त्रप्रतिपाद्या यज्ञतनव इह तन्तुस्थानीयाः। यथा तन्तुभिः पटो निष्पाद्यते तथा तास्तनवो यज्ञं विस्तारयन्ति। ते च तन्तवो यज्ञनिष्पादकाः। ये ऋत्विगादयः स्वधया हविषा इमं यज्ञं ददन्ते अनुतिष्ठन्ति तेषां प्रजापत्यादीनां यज्ञाभिमानिदेवानां ऋत्विगादियज्ञाङ्गानाञ्च मध्ये यत्स्वरूपं विच्छिन्नं तदेतत्प्रतिसन्दधामि ततः स्वाहा सुष्ठु प्रतिसंहितो घर्मो दीप्तो यज्ञाङ्गविशेषो देवानप्येतु प्राप्नोतु। अत्र विनियोगसङ्ग्रहः।

"मम प्रवत्स्यन् पूर्वाग्निं मन्त्रयेत् पुनरागतः।
ममेत्याद्यैश्चतुर्मन्त्रैर्मनस्तत्र जुहोति हि॥
गतमग्नेरुपस्थानं मन्त्राः प्रासङ्गिका अथ।
पर्येत्याचामति स्वामी दर्शपूर्णिमयोरपः॥
अग्ने प्रागग्निपार्श्वस्थो जपेदग्निं हविस्तथा।
निरूप्यमाणं सम्मन्त्र्य कस्त्वा यज्ञं युनक्ति हि॥
यानीति मुच्यमानानि कपालान्यनुमन्त्रयेत्।
अभिन्नोऽप्सु क्षिपेद्भिन्नं कपालं यत इत्यतः॥
कपालान्तरमादध्यादिति प्रासङ्गिका गताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः॥ * ॥

---

वैश्वानरो न ऊत्या प्रयातु परावतः। अग्निरुक्थेन वाहसा। ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिं। अजस्रं घर्ममीमहे। वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः। उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा। पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सः ॥ १ ॥

रिषः पातु नक्तं। जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा। वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः। त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः। त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा। अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यं। वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर ॥ २ ॥

वाजमग्ने तवोतिभिः। वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः। इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण। अव ते हेडो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर

प्रचेतो राजन्नेनांसि शिश्रथः कृतानि। उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य ॥ ३ ॥

व्रते तवानागसो अदितये स्याम। दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्। आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि। अग्निर्मूर्धा भुवः। मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे। आ तू नः ॥ ४ ॥

उपगन्तन। या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त रयिं नो धत्त वृषणः सुवीरं। अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु। अदितिः पात्वंहसः। महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिं। सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिं। दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये। इमां सु नावमारुहं

शतारित्राꣳ शतस्फ्यां। अच्छिद्रां पारयिष्णुं ॥ ५ ॥

दिवा सः संहस्रिणं वैश्वानरादित्य तू नोऽनेहसꣳ सुशर्माणमेकान्नविꣳशतिश्च ॥ ११ ॥

देवासुराः परा भूमिर्भूमिरुपप्रयन्तः सम्पश्याम्ययंञ्नः *सम्पश्याम्यग्निहोत्रं मम नाम वैश्वानर एकादश ॥ ११ ॥

देवासुराः क्रुद्धः सम्पश्यामि सम्पश्यामि नक्तमुपगन्तनैकपञ्चाशत् ॥ ५१ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥ * ॥

पञ्चमप्रपाठकः सम्पूर्णः ॥ * ॥

अथान्तिम एकादशानुवाके काम्येष्टियाज्या उच्यन्ते। इष्टिकाण्डे चिरविघ्ना काचिदिष्टिराम्नायते "वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्रावण्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनꣳ स्वदयत्यप पापं वर्णꣳ हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्रावण्णा पुनाति" (सं०२कां०।२प्र०।५अ०) इति। अभिशस्यमानः पातकरूपेण दूष्यमाणः। वैश्वानरशब्देन संवत्सराभिमानी कश्चिदग्निरुच्यते। तेनैव संवत्सराभिमानिना एनमभिशस्तं स्वात्मानं स्वदयति बन्धुभ्यो रोचयते। वर्णं वर्ण्यमानमारोप्यमाणं पापमपहते विनाशयति पापिनं

* सम्पश्याम्यत्याह इति पुस्तकद्वये।

बद्धानेतुं प्रसारितो यो वरुणपाशः तस्मादेनं स्वात्मानं वारुणयागेन मोचयति। *दधिक्रावदेवकेन यागेम स्वात्मानं पूतं करोति। चोदकप्राप्तामन्वाहार्यदक्षिणां बाधितुं दक्षिणान्तरं विधत्ते "हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवति" (सं०२कां०।२प्र०।५अ०) इति। आद्यं अत्तुं योग्यं स्वदन्नं। अस्यामिष्टौ प्रथमहविषो याज्यापुरोऽनुवाक्यायुग्मानि चत्वारि विकल्पितानि। तत्र प्रथमयुग्मे पुरोऽनुवाक्यामाह "वैश्वानरो न ऊत्या प्रयातु परावतः। अग्निरुक्थेन वाहसा" इति। विश्वेषां नराणामुपकारी वैश्वानरोऽग्निः ऊत्या रक्षणनिमित्तं परावतो दूरादपि देशात् वाहसा प्रापणसामर्थ्येन उक्थेन उत्थानपूर्वकेणागमनेन अस्मान् आप्रयातु आगच्छतु। याज्यामाह "ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिं। अजस्रं घर्ममीमहे" इति। वैश्वानरमीमहे वयं प्राप्नुमः। कीदृशं। ऋतावानं सत्यवन्तं। ऋतस्य यज्ञस्य ज्योतिषोऽभीष्टफलप्रकाशकस्य पतिं पालकं। अजस्रं घर्मं निरन्तरं दीप्यमानं। द्वितीययुग्मे पुरोऽनुवाक्यामाह "वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः। उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा" इति। कविर्बुद्धिमान् एको यजमानो वैश्वानरसम्बन्धिनीभ्यो दंसनाभ्यः क्रियाभ्यो बृहन्महाफलं अरिणात् प्राप्नोत्। अपःशब्दः कर्मवाची। शोभनमपः स्वपः स्वपसो भावः स्वपस्यं। तेन

---

* दधिक्रावन्मकेन यागेन इति तै०।

वैश्वानरयागस्य शोभनकर्मत्वेनेत्यर्थः। छान्दसो लिङ्गव्यत्ययः। अयमग्निः द्युभूमिरूपौ मातापितरौ भूरिरेतस्कौ स्वकीयमातापितरौ उभौ महयन् लोकपूज्यौ कुर्वन् स्वयमजायत। तस्मादेतदीयेन कर्मणा महाफलं युक्तमित्यर्थः। याज्यामाह "पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तं" इति। पृष्ट इत्यत्र सकारलोपश्छान्दसः। अयमग्निः दिवि स्पृष्टः सन् आदित्यरूपेणावस्थितः। पृथिव्यां स्पृष्टः सन् दाहपाकप्रकाशकारित्वेन अवस्थितः। तथा फलपाककारी सन् स्पृष्ट इति सम्बन्धः। सर्वा अप्योषधीः आविवेश। वैश्वानरोऽग्निः सहसा बलेन स्पृष्टः सम्बद्धः सन् तादृशो नोऽस्मान् दिवा रिषो हिंसकात् पापात् नक्तं रात्रावपि सोऽस्मान् पातु। तृतीययुग्मे पुरोऽनुवाक्यामाह "जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा। वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः" इति। हे अग्ने त्वं जातमात्र एव भुवनानि व्यख्यः स्वतेजसा विशेषेण ख्यापितवानसि। गोपाः पशुं न पशुमिव। यथा गोपालकोऽनायासेनैव पशुरेतदीय इति ख्यापयति तद्वत्। कीदृशस्त्वं। इर्यः इरामन्नमर्हसि। परिज्मा *परितो गन्ता। यस्मात् एवंविधस्त्वं ततो वैश्वानर ब्रह्मणे परिवृढायास्मै कर्मणे गातुं मार्गं विन्द लभस्व। यूयं स्वस्तिभिः श्रेयोभिः सदा नो अस्मान् पात रक्षत। यूयमिति

* परितो मन्ता इति तै०।

बहुवचनं पूजार्थं। याज्यामाह "त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः। त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा" इति। हे अग्ने त्वं शोचिषा शोशुचानो भृशं दीप्यमानो जायमान एव रोदसी द्यावापृथिव्यौ शोचिषा दीप्त्या आपृणाः सर्वतः पूरितवानसि। हे जातवेद उत्पन्नजगद्वेदिन् वैश्वानर त्वं महित्वा स्वमहिम्ना देवान् ऋत्विजः अभिशस्तेः पापात् अमुञ्चः मोचितवानसि। चतुर्थयुग्मे पुरोऽनुवाक्यामाह "अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यं। वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः" इति। हे अग्ने अस्माकं क्षत्रं पालकं पुरुषं इन्द्रेषु स्थापय इन्द्रसमानं कुरु। कीदृशं क्षत्रं। अनामि अनमनशीलं कस्यचिदपि नमस्कारं न करोतीत्यर्थः। अजरं जरारहितं। सुवीर्यं अभग्नसामर्थ्यं। हे वैश्वानर तवोतिभिः त्वदीयैः पालनैः वयमपि शतसहस्रसङ्ख्योपेतं वाजमन्नं जयेम। याज्यामाह "वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः। इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण" इति। वयं वैश्वानरस्य सुमतौ अनुग्रहबुद्धौ स्याम तिष्ठेम अभिप्राप्तश्रीरयं वैश्वानरः सर्वेषां भुवनानां राजा हिकं प्रकाशकः खलु। इत एव कारणाज्जातमात्र एवेदं विश्वं विचष्टे विशेषेण प्रख्यापयति। अयं वैश्वानरः सूर्यरूपेण यतते दिवा प्रवर्तते अत एवान्यत्राम्नातं "उद्यन्तं वावादित्यमग्निरनुसमारोहति" इति। तान्येतानि चत्वारि युग्मानि श्रूयमाणेषु सर्वेष्वपि वैश्वा-

नरयागेषु इच्छया विकल्प्यन्ते वैश्वानरलिङ्गस्य साधारणत्वात् विशेषलिङ्गानाञ्च स्पष्टानामदर्शनात्। यदि कश्चित् स्वबुद्ध्या विशेषलिङ्गं सूक्ष्ममुत्प्रेक्षेत तदा तदनुसारेण व्यवस्थास्तु। द्वितीयहविषः पुरोऽनुवाक्यामाह "अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनाꣳसि शिश्रथः कृतानि" इति। हे वरुण ते हेडः तव क्रोधं नमस्कारैरवेमहे शमयामः। यज्ञेभिः पूजाविशेषैः हविर्भिश्च पुरोडाशादिभिः अवेमहे शमयामः। हे असुर शत्रुनिरसनक्षम हे प्रचेतः प्रकृष्टचित्त हे राजन् दीप्यमान अस्मभ्यं अस्मदनुग्रहार्थं क्षयन् इह निवसन् अस्माभिः कृतान्येनांसि शिश्रथः श्लथय। याज्यामाह "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम" इति। हे वरुण उत्तमं उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमुत्कृष्य श्रथाय विनाशय। अधमं अधमाङ्गे पादप्रदेशस्थापितं पाशमवकृष्य विनाशय। मध्यमं मध्यमप्रदेशस्थापितं पाशं विच्छेदय। अथ पाशत्रयविनाशनानन्तरं हे आदित्य सूर्यसदृश वरुण वयमनागसः पापरहिताः सन्तः तव व्रते त्वदीयकर्मणि अदितये अखण्डितत्वाय स्याम योग्या भवेम। तृतीयहविषः पुरोऽनुवाक्यामाह "दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत्" इति। दधि क्रावति प्राप्नोतीति दधिक्रावा। दधिप्रियः कश्चिद्देवविशेषः। अग्नि-

रित्यन्ये। तस्य देवस्य अकारिषं अहं कर्म कृतवानस्मि। कीदृशस्य। जिष्णोः जयशीलस्य। अश्वस्य व्यापिनः। वाजिनोऽन्नवतः। स देवो नोऽस्माकं मुखं सुरभि करत् कर्पूरादिद्रव्यसमृद्धिप्रदानेन सुगन्धोपेतं करोतु। अस्माकमायूंषि च प्रतारिषत् प्रवर्धयतु। याज्यामाह "आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांᳲसि" इति। अयं दधिक्राः पञ्च कृष्टीः निषादपञ्चमैश्चतुर्भिर्वर्णैः पञ्चविधान्मनुष्यानाततान सर्वतो विस्तारयति। किं कृत्वा। शवसा अन्नेन संयोज्य। यथा सूर्यो ज्योतिषा रश्मिना भूरससमादाय वर्षतोऽपो विस्तारयति तद्वत्। कीदृशो दधिक्राः सहस्रसङ्ख्याकं धनं सनोति ददातीति सहस्रसाः। तथा शतसाः। वाजी अन्नवान् अर्वा कर्मभूमावागमनवान् तादृशो देव इमा मध्वा मधुराणि मदीयानि स्तुतिरूपाणि वचांसि संपृणक्तु अङ्गीकरोतु। पूर्वोक्तामेव त्रिहविष्कामिष्टिं फलान्तराय विधत्ते "एतामेव निर्वपेत्प्रजाकामः संवत्सरो वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन् प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्रजनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं विन्दते प्रजां" (सं०२कां०।२प्र०।५अ०) इति। यौवनादिसम्पत्त्या प्रजामुत्पादयितुं योग्योऽपि यः प्रजां

न लभते तस्य प्रजार्थं प्रवृत्तां योनिं गर्भधारणस्थानमशान्तः संवत्सरदेवो वैश्वानरो निःशेषेण दहति। एवं पशुष्वपि योज्यं। द्वादशकपालेन तु शान्तो योनिं समाधाय प्रजामुत्पादयति। उत्पन्नपुत्रस्य पूतत्वादिफलार्थमेकहविष्कामिष्टिं विधत्ते "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" (सं०२कां०।२प्र०।५अ०) इति। द्वादशत्वसङ्ख्यान्तर्गताभिरष्टत्वादिसङ्ख्याभिर्गायत्र्यादिसाम्यमनूद्य प्रशंसति। एतामेवेष्टिं दर्शाद्यत्ययप्रायश्चित्तार्थं विधत्ते "अव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वातिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्या अथो देवता एवान्वारभ्य सुवर्गं लोकमेति" (सं०२कां०।२प्र०।५अ०) इति। यदा संवत्सरमेवोपदधाति विच्छेदरहितं करोति तदा संवत्सरावयवयोर्दर्शपूर्णमासयोरनुष्ठानस्य न कालात्ययः। किञ्च संवत्सरे प्रीते सर्वदेवतानां प्रीतत्वाद्देवता

आश्रित्य तदनुग्रहेण सर्वं प्राप्नोति। आधानेन समृद्धिरहितो योऽग्निमुद्वासयिष्यति तस्य द्विहविष्कामिष्टिं विधत्ते "वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुरान्नमक्षन्नाग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन् यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो यथा जनं यतेऽवसं करोति तादृगेव तद्द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति" (सं०२का०।२प्र०।५अ०) इति। अष्टत्वसङ्ख्यया गायत्रीद्वारा वत्सरभेदस्याग्नेः सर्वस्याप्यातिथ्यं कृतं भवति। किञ्च यथा लोके दूरदेशवर्तिनं पितृभ्रात्रादिरूपं जनं प्रति यते गच्छते पुरुषाय अवसं रचकं पाथेयं करोति तादृशमेवमुद्वासयिष्यमाणाय अग्नये पुरोडाशप्रदानं, द्वादशसङ्ख्यया माससद्वारा संवत्सररूपां स्वयोनिमेवाग्निं गमयति। अग्नेरनुग्रहेणास्य समीचीनमन्नं भवति। अत्राग्नेयहविषि याज्यापुरोऽनुवाक्ययोः प्रतीकद्वयमाह "अग्निर्मूर्धा भुवः" इति। अनयोरग्निर्मूर्धेत्यसौ पुरोऽनुवाक्या सा चोपप्रयन्त इत्यनुवाके (सं०१कां०।५प्र०।५अ०) व्याख्याता। भुवो यज्ञस्येत्यसौ याज्या सा तु चतुर्थकाण्ड आम्नातत्वात् तत्रैव व्याख्यास्यते। प्रजाभिः समृद्धं ग्रामं कामयमानस्य द्विहविष्कामिष्टिं विधत्ते "वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकामः" इति प्रकृतावष्टाकपालैकादशकपालयोर्हविषोरेकस्मिन्नेवाग्नावधिश्रि-

तस्मादथ तत्प्राप्तावपवदति। "आहवनीये वैश्वानरमधिश्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै" (सं०२कां०।२प्र०।५अ०) इति। वसीयोऽत्यधिकं यत्पापं तत्पापवस्यसं। तस्य ग्रामप्राप्तिप्रतिबन्धकस्य पापस्य विधृत्यै वियोजनायेत्यर्थः। द्वादशत्वसङ्ख्यां प्रशंसति "द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै सजाताꣳश्च्यावयति" (सं०२कां०।२प्र०।५अ०) इति। अस्मै यजमानार्थं सजातान् समानकुले समुत्पन्नान् मनुष्यान् च्यावयति प्रह्वीभूतान् करोति। मरुद्देवतां प्रशंसति "मारुतो भवति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमवरुन्धे" (सं०२का०।२प्र०।५अ०) इति। विशः करप्रदाः प्रजाः दैविकप्रजानुग्रहेण मानुषप्रजावृद्धिं सम्पादयति। सप्तसङ्ख्यां प्रशंसति "सप्तकपालो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानवरुन्धे" (सं०२कां०।२प्र०।५अ०)इति। ईदृङ्न्यादृङ्चेत्यादिनामधारिणां सप्तानां समूहः प्रथमो गणः। शुक्रज्योतिश्च सत्यज्योतिश्चेत्यादिको द्वितीयो गणः। ऋतजिच्चेत्यादिकस्तृतीयः। ऋतश्चेत्यादिकश्चतुर्थः। ईदृक्षास इत्यादिकः पञ्चमः। *मितासश्चेत्यादिकः षष्ठः। गणान्तरं शाखान्तरे द्रष्टव्यं। वैदिकगणानुग्रहेण जातिगणान् बहून् सम्पादयति। प्राकृतहविःष्वासादितेषु पश्चात्सामिधेनीप्रैषे कृते ताः सामिधेन्योऽनूच्यन्ते। तद्वदत्रापि सामिधेनीभ्यः प्रागेवासादनं वैश्वानरस्य क्रियते।

* धुनिश्चेत्यादिक इति का०।

मारुतामादनस्य सामिधेन्यनुवचनकालीनत्वं विधत्ते "अनूच्यमान आसादयति विशमेवास्मा अनुवर्त्मानं करोति" (सं०२कां०। २प्र०।५अ०) इति। प्रजां यजमानानुगामिनीं करोतीत्यर्थः। अत्र मारुतयागे पुरोऽनुवाक्यामाह "मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे। आ तू न उपगन्तन" इति। हे मरुतो यद्यस्मात्कारणाद्वयं सुम्नायन्तः सुखमिच्छन्तः दिवो द्युलोकाद्वो युष्मान् हवामहे आह्वयामः तस्मादाहूता यूयं नोऽस्मानुपगन्तन प्राप्नुत। याज्यामाह "या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त रयिं नो धत्त वृषणः सुवीरं" इति। हे मरुतः वो युष्मान् शशमानाय भजमानाय दातुं या शर्म यानि सुखानि सन्ति सम्पादितानि वियन्त त्रिधातूनि त्रिस्थानानि लोकत्रयवर्तीनि यानि सुखानि दाशुषे हविर्दत्तवते अधियच्छत अधिकं यथा भवति तथा भवन्तः प्रयच्छन्ति तानि सर्वाण्यस्मभ्यं वियन्त प्रयच्छत। किञ्च। अथ वृषणो अभिमतस्य फलस्य वर्षितारः रयिं धनं नो अस्मभ्यं धत्त सम्पादयत सुवीरं शोभनपुत्रञ्च सम्पादयत। इष्ट्यन्तरं विधत्ते "आदित्यं चरुं निर्वपेत्सङ्ग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रतितिष्ठन्ति" (सं०२कां०।२प्र०।६अ०) इति। उपप्रयास्यन् जिगमिषुः अनयोश्चा जितसङ्ग्रामाः पूर्वे पुरुषाः भूमावेव प्रतितिष्ठन्ति तद्वदयमपीत्यर्थः। अत्र युग्मद्वयमाम्नातं। तत्र प्रथमयुग्मे पुरोऽनुवाक्यामाह "अदितिर्न उरुष्य-

त्वदितिः शर्म यच्छतु। अदितिः पात्वꣳहसः" इति। उरुष्यतु शत्रुभ्यो रक्षतु। स्पष्टमन्यत्। याज्यामाह "महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिं" इति। अदितिं अदितिदेवतामेव अवसे अस्मद्रक्षणार्थं सुहुवेम सुष्टु आह्वयामः। कीदृशीं महीं महनीयां सुव्रतानां मातरं शोभनकर्मणां पुरुषाणां मातृवद्धितकारिणीं ऋतस्य पत्नीं सत्यस्य पालयित्रीं तुविक्षत्रां *बहुराजपालयित्रीं अजरन्तीं सर्वदा जरारहितां उरूचीं विस्तीर्णगतिं सुशर्माणं समीचीनसुखोपेतां सुप्रणीतिं सुखेन कर्मणां प्रणेत्रीं। द्वितीययुग्मे पुरोऽनुवाक्यामाह "सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिं। दैवीं नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये" इति। स्वस्तये क्षेमाय अदितिं आरुहेम प्राप्नुयाम। कीदृशीं सुत्रामाणं सुष्ठु त्रात्रीं पृथिवीं विस्तीर्णां द्यां द्योतमानां अनेहसं कालात्मिकां चिरस्थायिनीमित्यर्थः। दैवीं नावं यथा मनुष्यनिर्मिता नौः समुद्रस्योपरि तिष्ठति तथा देवनिर्मिता भूमिर्महाजलस्योपरि वर्तत इत्यर्थः। स्वरित्रां सुष्ठु शत्रुभ्यः पालयित्रीं अनागसं पापरहितां अस्रवन्तीं छिद्ररहितां। याज्यामाह "इमाꣳ सु नावमारुहꣳ शतारित्राꣳ शतस्फ्यां। अच्छिद्रां पारयिष्णुं" इति। इमां भूमिं नावं नौसदृशीं सुष्ठु आरुहं प्राप्तवानस्मि। कीदृशीं शतसङ्ख्या-

* बहुराजपालितामिति क०।

कान्यरित्राणि चारिभ्यो रचकाण्यायुधानि यस्यां सा शतारित्रा तां *तादृक्पालकैः पालितामित्यर्थः। शतमङ्काकाः स्फ्यसदृशास्तरणदण्डा यस्याः सा शतस्फ्या। तां† अच्छिद्रां‡ दोषरहितां। पारयिष्णुं अभीष्टफलस्य पारं नेतुं समर्थामित्यर्थः। युद्धभूमिं प्राप्तस्य बलार्थिन इष्ट्यन्तरं विधत्ते "वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवायतने यतते जयति तꣳ सङ्ग्रामं" (सं०२कां०। २प्र०।६अ०) इति। यस्मिन्नायतने युद्धं भविष्यति तत्प्राप्य तस्मिन् भूप्रदेशे निर्वपेत्। संवत्सरदेवताया भूमिबलस्वामित्वात्तया पालिते देशे देवानां जयः। तद्वदयमपि प्रयतते तस्मात् जयति। मारणादिपापार्थं प्रवृत्तयोः परस्परवैरिणोरन्नं यो भुङ्क्ते तस्य प्रायश्चित्तरूपामिष्टिं विधत्ते "एतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेवात्ति नास्मिन्मृजाते" (सं०२कां०।२प्र०।६अ०) इति। अभिचारादिना परस्परं मारणायुक्तौ विद्वेषिणौ तावेतौ स्वकीयान्नभुजि स्वकीयं पापं लेपयतः संवत्सरदेवेन स्वदितं निर्दोषीकृतमेवान्नमसावत्ति अतस्तौ नास्मिन् लेप-

* दिक्पालकैरिति का०।

† तां मण्डूककूर्मादिभिर्जलस्योपरि धारितामित्यर्थ इति का०।

‡ अच्छिद्रां अधोभागे जलस्य प्रवेशच्छिद्ररहितामिति का०।

यतः। यावुभौ परस्परमद्रोहाय शपथे कुरुतः तयोर्मध्ये प्रथमं द्रुह्यतः प्रायश्चित्तायेष्टिं विधत्ते "संवत्सराय वा एतौ समामाते यौ समामाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादशकपालं निर्वपेत् समामानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाप्त्वा निर्वरुणं परस्तादभिद्रुह्यति नैनं वरुणो गृह्णाति" (सं०२कां०।२प्र०।६अ०) इति। संवत्सराय संवत्सरदेवं साक्षिणं कृत्वेत्यर्थः। समामाते सम्यक् शपथं कुरुतः। वरुणग्रहणं नाम रोगोत्पत्तिः। निर्वरुणं रोगनिवारकं। संवत्सरदेवमेव प्रथमतः प्राप्य पश्चात्तद्बलेन युक्तो द्रोहं कृतवान् भवति। ततो नास्य वरुणग्रहणं भवति। अविं प्रतिगृहीतवतः पापपरिहाराय इष्टिं विधत्ते "आर्त्यं वा एष प्रतिगृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादशकपालं निर्वपेदविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितामेव प्रतिगृह्णाति नार्त्यं प्रतिगृह्णाति" (सं०२कां०।२प्र०।६अ०) इति। अवत्यस्मादित्यार्त्यं पापं श्लेष्मरोग इति केचित्। संवत्सरेण स्वदितां निर्दोषीकृतां। अधस्तादुपरिष्टाच्चोभयतो दन्तैर्युक्तं प्राणिस्वरूपं प्रतिगृहीतवतः पापपरिहारायेष्टिं विधत्ते "आत्मनो वा एष मात्रामाप्नोति य उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेदुभयादत् प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेव प्रतिगृह्णाति नात्मनो मात्रामाप्नोति" (सं०२कां०।२प्र०।६अ०)इति। मात्रां हिंसां उभयतो

दन्ता यस्य तत्स्वरूपमुभयादत्। धनलाभनिमित्तं दातृसमीपे गमिष्यत इष्टिं विधत्ते "वैश्वानरं द्वादशकपालं निर्वपेत्सनि-मेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं निर्वपति संवत्सरमातामेव सनिमभिप्रच्यवते दानकामा अस्मै प्रजा भवन्ति" (सं०२कां०।२प्र०।६अ०) इति। सनिं धन-लाभं। लोके यो याचको दातृजनसमूहे संवत्सरं चरति तदानीमसौ धनसमृद्धो भवति। संवत्सरदेवेन सातां दत्ता-मेव सनिं धनलब्धिमभिप्राप्नोति। अस्य प्रजाश्च दानशीला भवन्ति। तयेष्ट्या दातृसमीपे धनं लब्ध्वा गृहे समागतस्य नैमित्तिकीमिष्टिं विधत्ते "यो वै संवत्सरं प्रयुज्य न विमुञ्चत्य-प्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्यै" (सं०२कां०।२प्र०। ६अ०) इति। संवत्सररूपं वैश्वानरं प्रयुज्य धनलाभार्थमिष्ट्या निर्बध्य यो न मुञ्चेत् सोऽप्रतिष्ठितो भवति। पुनरिष्ट्या तदीयं भागं दत्वा विमुञ्चति विसर्जितवान् भवति। तत्रेतिकर्तव्यतां काञ्चिद्विधत्ते "यया रज्ज्वोत्तमां गामाजेत्तां भ्रातृव्याय प्रहिणुयान्निर्ऋतिमेवास्मै प्रहिणोति" (सं०२कां०।२प्र०।६अ०) इति। दातृभ्यो लब्धासु गोषु उत्तमां गां यया रज्ज्वा बद्धा समानयति तां रज्जुं भ्रातृव्यविनाशार्थं तदीयगोष्ठे प्रक्षिपेत्। तथा सति निर्ऋतिं दारिद्र्यरूपां राक्षसीमेव भ्रातृव्यार्थं प्रेषयति।

अत्र विनियोगसङ्ग्रहः।

"अन्त्यानुवाकगा याज्या यागे वैश्वानराभिधे।
वैश्वेत्यष्टौ विकल्प्याः स्युरवते वारुणे चरौ॥
दधीति दध्यादिचरावग्न्युद्दामनयागके।
अग्निर्मूर्धा भुवो द्वे स्तः प्रतीके ते उभे मते॥
मरुत्सप्तकपालेष्टावदित्यादित्यके चरौ।
चतस्रः स्युर्विकल्पार्थ इति प्रश्नोऽत्र पञ्चमः"॥

अथ मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"यद्द्वादशकपालेष्टैर्वैश्वानर्या अनन्तरं।
श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत्।
द्रव्यं द्रव्यान्तरे नो चेद्, गुणस्तर्हि फलत्यसौ॥
वाक्यैक्यमुपसंहारादिस्पष्टं तत्तु बाध्यते।
नानागुणविधौ, तस्मादंशलादंशिसंस्तुतिः"॥

काम्येष्टिकाण्डे श्रूयते। "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति" इति। अत्राष्टत्वादिसङ्ख्यासमाम्नानात् पुरोडाशानां गायत्र्यादिरूपत्वकल्पना कृता। इष्टिविधायके वाक्ये येयं द्वादशसङ्ख्या तस्यामष्टत्वादिसङ्ख्यानामन्तर्भावात्तत्सङ्ख्यां निमित्ती-

कृत्य अग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः। नात्र द्वादशकपालशब्दः सङ्ख्यापरः किन्तु पुरोडाशद्रव्यपरः। द्वादशकपालेषु संस्कृत इति व्युत्पत्तेः। एवमष्टाकपालादिशब्दा अपि। तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेत् एवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयतां। न चोत्पत्तिविशिष्टद्वादशकपालपुरोडाशावरुद्धत्वात् अष्टाकपालादेरनवकाश इति वाच्यं ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः। अयमप्यनुपपन्नः। बहूनां गुणानां विधौ वाक्यभेदापत्तेः। न च भिन्नान्येवैतानि वाक्यानीति वाच्यं। वैश्वानरं द्वादशकपालं निर्वपेदिति विहितस्य यस्मिन् जात इत्युपसंहारेण वाक्यैकत्वावगमात्। तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते। चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्।

"वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वा क्रमः।
कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि॥
जाते यस्मिन्निष्टिमेतां निर्वपत्तस्य पूतता।
तच्चेप्सितं पितुस्तेन पिता तत्र प्रवर्तते"॥

काम्येष्टिकाण्डे वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति प्रकृत्य श्रूयते। यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति। तत्र पितुः प्रबुद्धस्य कर्तृत्वं न तु मुग्धस्य पुत्रस्य। ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव पूतत्वादिफलमिति चेन्मैवं। यस्मिन् जाते निर्वपति स

पूत इति वाक्येन फलस्य पुत्रसम्बन्धावगमात्। न चात्र निष्फलस्य पितुः प्रवृत्तिरिति वाच्यं। पुत्रनिष्ठपूतत्वादेरीप्सितत्वेन स्वफलबुद्ध्या प्रवृत्तिसम्भवात्। तस्मात् पुत्रस्य पूतत्वादिकं। तत्रैवान्यच्चिन्तितं।

"जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते।
निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः॥
जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात्।
प्रागेवेष्टौ कुमारस्य विपत्तेरूर्द्ध्वमस्तु सा" इति॥

पुत्रजन्मनो वैश्वानरेष्टिनिमित्तत्वात् नैमित्तिकस्य कालविलम्बायोगात् जन्मानन्तरमेवेष्टिरिति चेत् मैवं स्तनप्राशनं तावत् जातकर्मानन्तरं विहितं। यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरूप्येत तदा स्तनप्राशनस्यात्यन्तविलम्बनात् पुत्रो विपद्येत। तथा सति पूतत्वादिकमिष्टिफलं कस्य स्यात्। तस्मात् न जन्मानन्तरमेव। किन्तु जातकर्मण ऊर्द्ध्वं सा इष्टिः। तत्रैवान्यच्चिन्तितं।

"जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा।
निमित्तसन्निधेराद्यः कर्तृशुद्ध्यर्थमुत्तरः" इति॥

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म सन्निहितं भवति, तथाप्यशुचिना पित्रानुष्ठीयमानमङ्गविकलं भवति। जातकर्मणि तु विपत्तिपरिहाराय तात्कालिकशुद्धिः शास्त्रेण दर्शिता। ततो मुख्यसन्निधेरवश्यं बाधितत्वादशुद्धिलक्षणाङ्गवैकल्यं वारयितुमाशौचादूर्द्ध्वमिष्टिं कुर्यात्। द्वादशाध्यायस्य तृतीयपादे चिन्तितं।

"वैश्वानरे पायिकृते साहित्यं वा विकल्पनं।

साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये" इति॥

तत्र विहितयोर्दर्शपूर्णमासयोः कदाचिदननुष्ठाने प्रायश्चित्तं श्रूयते। "वैश्वानरं द्वादशकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयति। अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयति" इति। अत्र पूर्ववद्दृष्टप्रयोजनाभावाददृष्टार्थमुभयं समुच्चित्यानुष्ठेयमिति चेत् न यज्ञवैगुण्यसमाधेर्दृष्टप्रयोजनत्वात्। अन्योन्यनिरपेक्षयोर्द्वयोर्व्रीहियववद्विकल्पः, एवमृग्यजुःसामवेदेषु विहितस्याननुष्ठानात् निषिद्धस्याचरणाद्वा यद्यज्ञवैगुण्यं तस्य वैगुण्यमात्रस्य सर्वस्य समाधानाय निरपेक्षाणि प्रायश्चित्तानि विहितानि। भूः स्वाहेति गार्हपत्ये जुहुयात्। भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्। भूर्भुवः सुवः स्वाहेत्याहवनीये जुहुयात् इति। तान्येतानि विकल्प्यन्ते। प्रत्येकं वैगुण्यसमाधानक्षमत्वात्॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डस्य पञ्चमप्रपाठके एकादशोऽनुवाकः॥ * ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्विद्यायोगीन्द्रविद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरश्रीबुक्कमहाराजस्याज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठकः सम्पूर्णः॥ * ॥　ॐ तत्सत्॥

श्रीगणेशाय नमः ।



# अथ तैत्तिरीयसंहिताभाष्ये

## प्रथमकाण्डे षष्ठप्रपाठकः ।

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च । बृहस्पतिप्रसूतो यजमान इह मा रिषत् । आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुः ॥ १ ॥

असि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीय । पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय ॥ २ ॥

धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि

सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामि भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामि कामाय त्वा गृह्णामि ॥ ३ ॥

सत्यायुरोजसे यन्त्राय चर्यस्त्रिꣳशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

श्रीवेदव्यासाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥

षष्ठप्रपाठके ऐष्टिकयाजमानमन्त्रास्तद्ब्राह्मणानि चाम्नायन्ते तद्विशेषविनियोगस्तु विनियोगसङ्ग्रहे दर्शितः।

"षष्ठप्रश्ने याजमानकाण्डे द्वादश वर्णिताः।
अनुवाकाः, षट्सु मन्त्राः, ब्राह्मणं पञ्चसूदितं ॥
अन्ते याज्याः, क्रमेणाज्यग्रहणाद्यनुमन्त्रणं।
आज्यग्रहो मुख्यहोमो भक्ष्यः शेषाहुतिस्तथा ॥
*एतेऽनुमन्त्रणीयार्था मन्त्रा आप्यायनादिकाः।
सूर्योपस्थित्यादिमन्त्रा, ब्राह्मणे तु विभज्यते ॥
परिग्रहो देवतानामायुधानाञ्च सम्भृतिः।
द्वादशद्वन्द्वसम्पत्तिर्हविषां सादने विधिः ॥

---

* एतेऽनुमन्त्रणे याज्यामन्त्रा इति तै०।

विधिराश्रावणादीनां याज्या इत्यनुवाकगाः"। इति।

तत्र प्रथमानुवाके आज्यग्रहणानुमन्त्रणमन्त्राः प्राधान्येनाभिधीयन्ते। कल्पः "सं त्वा सिञ्चामीति तत्सꣳसिञ्चेदभि वा मन्त्रयेत" इति। तदिति स्कन्नमाज्यमुच्यते। यस्याज्यमनुत्पूतꣳ स्कन्देदित्यादिना स्कन्दनस्य प्रकृतत्वात्। यदि शुद्धप्रदेशे स्कन्देत् तदानीमनेन मन्त्रेण पुनः पात्रे प्रक्षिपेत्। अशुचिप्रदेशे स्कन्दने त्वभिमन्त्रणं। पाठस्तु "सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च। बृहस्पतिप्रसूतो यजमान इह मा रिषत्" इति। हे स्कन्नाज्य बृहस्पतिप्रेरितोऽहं प्रजादीन् सम्पादयेयं। त्वां अनेन यजुषा मन्त्रेण पात्रे सम्यक् सिञ्चामि। इह कर्मणि यजमानः स्कन्दनापराधेन मा रिषत् मा हिंस्यतां। अयं मन्त्र आध्वर्यवः, अतो यजमानस्यान्यत्वेन उक्तिरविरुद्धा। कल्पः "आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्चानिमील्यावेक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते" इति। पाठस्तु "आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीय" इति। अत्र वैश्वानरमित्यादिचतुर्भिः पदैः प्रत्येकमन्वेतुं असीति पदमनुवर्तनीयं। तथा सति तान्येतानि द्वाविंशति वाक्यानि सम्पद्यन्ते। तैस्तैर्वाक्यैराज्यं प्रशस्यते। अजधातोर्गत्यर्थादुत्पन्न आज्यशब्दः।

आज्यमसि प्रापकमसि। घृतेन हि होमाधारो ज्वलन्नग्निः प्राप्यते। सत् विद्यमानं कर्मफलं तदर्हतीति सत्यं, प्रसिद्धं ह्याज्यस्य कर्मफलदानत्वं। सत्यस्याध्यक्षमसि। सतां कर्म सत्यं ज्योतिष्टोमे प्रवर्तमाना यजमानसप्तदशा ऋत्विजः सन्तः ते हि परस्परं द्रोहशङ्कामपनेतुं *तानूनप्त्रमंशमाज्यं स्पृशन्ति। सो ऽयं स्पर्शः सतां कर्म तस्य कर्मणोऽध्यक्षं स्वामि हविरसि प्राधान्येन हूयमानमसि पुरोडाशादीनां हविषां नाशेऽप्याज्येनैवैतत्कर्मशेषसमापनात् प्राधान्यं द्रष्टव्यं। विश्वेषां नराणां सम्बन्धि वैश्वानरं। विश्वेषां देवानां सम्बन्धि वैश्वदेवं। प्रसिद्धो ह्याज्यस्य भोज्यत्वेन हविष्ट्वेन चोभयसम्बन्धः। उत्पूतशुष्मं। उत्पवनेनोपेतबलं। सत्यौजाः सत्यबलं, आज्यस्य हि बलमवितथं, तस्योद्दीपनस्य प्रत्यक्षत एव दृश्यमानत्वात्। सहः शत्रूणां अभिभवनसमर्थं। सहमानं निरन्तरं तदभिभवेनैव वर्तमानं तादृक्कं। सहस्वारातीः अस्मदमित्रान् अभिभव। सहस्वारातीयतः ये तु प्रत्यक्षं शात्रवं कर्तुमसमर्थाः मनसा शात्रवं कर्तुमिच्छन्ति तानप्यभिभव। सहस्व पृतनाः शत्रुसेना अभिभव। सहस्व पृतन्यतः सेनां सम्पादयितुमिच्छतः शत्रूनभिभव। सहस्रवीर्यमसि यथोक्ताभिभवविशेषान् कर्तुं बहुप्रकारसामर्थ्योपेतं त्वमसि। तस्मा जिन्व तादृक्स्वभावं त्वं मां यागद्वारेण प्रीणय। आज्यस्याज्यमसि लौकिकं यदाज्यं तदुत्पूत-

---

* तानूनप्त्रसंज्ञमिति का०। सतां कर्म सत्यमित्यादि आज्येनैवेत्यन्तं तैलिङ्गपुस्तके नास्ति।

शुष्मं न भवति। त्वं तूत्पूतशुष्मत्वात् मुख्यमाज्यमसि। सत्यस्य सत्यमसि लौकिकफलसाधनं क्रृष्यादिकं सत्यं तत्कदाचित् वृष्ट्याद्यभावेन व्यभिचारान्न मुख्यं सत्यं त्वं तु कदाचिदप्यव्यभिचारान्मुख्यं सत्यमसि। सत्यायुरसि सत्यभूतमायुरस्मिन्निति सत्यायुः। आज्यनिष्पन्नेन कर्मणा भाविदेहे यदायुः प्राप्यते तन्न व्यभिचरतीत्यायुषः सत्यत्वं। सत्यशुष्ममसि सत्यबलमसि। अग्न्युद्दीपनबलं सत्यौजःशब्देन पूर्वमुक्तं। इह तु फलप्रदानबलमुच्यते। सत्येन त्वाभिघारयामि तादृशं त्वां चक्षुषा पश्यामीत्यर्थः। तथा च पौरोडाशिककाण्डे समाम्नायते "ब्रह्मवादिनो वदन्ति। यदाज्येनान्यानि हवीꣳष्यभिघारयति। अथ केनाज्यमिति। सत्येनैवैनदभिघारयति" (ब्रा०३कां०।३प्र०।५अ०) इति। चक्षुषः सत्यत्वमाधानब्राह्मणे समाम्नातं "अनृतं वै वाचा वदति। अनृतं मनसा ध्यायति। चक्षुर्वै सत्यं। अद्रा३गित्याह। अदर्शमिति। तत्सत्यं" (ब्रा०१कां०।१प्र०।४अ०) इति। तस्य ते भक्षीय तादृशं त्वां भक्षयाणि। कल्पः "आज्यग्रहणं गृहीतं गृहीतमनुमन्त्रयते। पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि। पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि। पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि। पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि। चतुर्भिर्जुह्वां। अष्टाभिरुपभृति। चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि। ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि। क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि। विशे त्वा यन्त्राय धर्त्राय गृह्णामि।

सुवीर्याय त्वा गृह्णामि। सुप्रजास्त्वाय त्वा गृह्णामि। रायस्पोषाय त्वा गृह्णामि। ब्रह्मवर्चसाय त्वा गृह्णामि इति। चतुर्भिर्ध्रुवायां। भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामि इति। अभिपूर्यमाणमनुमन्त्रयते। कामाय त्वा गृह्णामि" इति। प्राच्यादिषूर्ध्वान्तासु पञ्चसु दिक्षु वर्तमाना वायवः पञ्चसङ्ख्याकाः ते चाग्निचयनाङ्गेषु मन्त्रेष्वेवमाम्नायन्ते "यत्ते रुद्र पुरोधनुस्तद्वातो अनुवातु ते। यत्ते रुद्र दक्षिणाधनुस्तद्वातो अनुवातु ते। यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनुवातु ते। यत्ते रुद्रोत्तराधनुस्तद्वातो अनुवातु ते। यत्ते रुद्रोपरिधनुस्तद्वातो अनुवातु ते" इति। यद्वा शरीरमध्ये वर्तमानाः प्राणापानव्यानोदानसमानरूपाः पञ्च वाताः तेषां वातानां यन्त्राय स्वस्वव्यापारेषु नियमनाय धर्त्राय जगद्विधारणकुशलत्वाय हे आज्य त्वां गृह्णामि। ऋतूनां पञ्चत्वमैतरेयब्राह्मणे प्रतिपादितं। द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेनेति। प्राच्यादीनामूर्ध्वान्तानां दिशां पञ्चत्वं प्रसिद्धं। पञ्चजनशब्दः समस्तो देवमनुष्यासुररक्षोगन्धर्वेषु रूढः, ते च देवादयः पञ्चसङ्ख्याकाः। स चरुशब्दः पाकाधारभूतां स्थालीमाचष्टे। सा च क्वचित् पञ्चबिलैर्युज्यते। तच्च पुरुषमेधावसाने कल्पसूत्रकार उदाजहार। पञ्चबिलस्य चरोर्विज्ञायत आज्य आग्नेयः पूर्वस्मिन् बिले, दधन्यैन्द्रो दक्षिणे, शृते प्रतिदुह्निनीतमिश्रे वा वैश्वदेवः पश्चिमे, अप्सु मैत्रावरुण उत्तरे, पयसि बार्हस्पत्यो मध्यमे इति तस्य पञ्च-

बिलस्य चरोर्नियमनायेति योज्यं। ब्रह्मणे ब्राह्मणजातेः तेजो ब्रह्मवर्चसं तस्मै तस्य यन्त्राय। क्षत्रियजातेरोजो युद्धसामर्थ्यं। वैश्यजातेः कृषिवाणिज्यादिषु नियमनं। सुवीर्यं स्वस्वव्यापारेषु सर्वेषां सामर्थ्यातिशयः। सुप्रजास्त्वं शोभनापत्यत्वं। रायस्पोषो धनपुष्टिः। ब्रह्मवर्चसं श्रुताध्ययनसम्पत्तिः। ब्रह्मणस्त्वा तेजस इत्यत्र शिष्टाङ्गीकृतसाधुवेषरूपं द्रष्टव्यं। भूरस्माकमित्याद्यो मन्त्रः। हविर्देवानामिति द्वितीयो मन्त्रः। आशिषो यजमानस्येति तृतीयो मन्त्रः। अवशिष्टश्चतुर्थः। हे आज्य त्वमस्माकं श्रेयसे भव। देवानां हविर्भव। यजमानस्य या आशिषस्तद्रूपं भव। देवानां तर्पकं त्वां गृह्णामि। आपस्तम्बस्य तु भूरस्माकमित्यादिरेकमन्त्र इति। हे आज्य हविर्भागिन्यो देवताः त्वां यथा यथा कामयन्ते तथाविधकामाय त्वां गृह्णामि।

अत्र विनियोगसङ्ग्रहः।

"स्याद्दर्शपूर्णमासस्थं काण्डं तु यजमानगं।
षष्ठः प्रश्नस्तत्र सं त्वा स्कन्नाज्यं प्रक्षिपेत्स्रुचि॥
आज्यमाज्यमवेक्षेत पञ्चानां त्वा चतुर्दश।
स्रुच्याज्यमन्त्रणे मन्त्रा इति मन्त्रास्तु षोडश"॥

इति माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः॥ * ॥

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविदुग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविदभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविद्युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः। इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते। यन्मे अग्ने अस्य यज्ञस्य रिष्यात्॥ ॥ १ ॥

यद्वा स्कन्दादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे। भूर्भुवः सुवरुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते। अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वामर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मनोऽसि प्राजापत्यं मनसा मा भूतेनाविश। वागस्यैन्द्री सपत्नक्षयणी ॥ २ ॥

वाचा मेन्द्रियेणाविश। वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु। ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु। वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु। शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु। हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणी-

तामग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमग्ने-रहं देवयज्ययान्नादो भूयासं ॥ ३ ॥

दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिन्द्राग्नियोरहं देवयज्य-येन्द्रियाव्यन्नादो भूयासमिन्द्रस्याहं देवयज्ययेन्द्रिया-वी भूयासं महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयं ॥ ४ ॥

रिष्यात् सपत्नक्षयण्यन्नादो भूयासꣳ षट्चिꣳशच्च ॥ ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

प्रथमानुवाके आज्यग्रहणानुमन्त्रणमुक्तं। द्वितीयानुवाके हविर्होमानुमन्त्रणं वक्तव्यं। तत्र ह्रूयमानस्य हविषो बहिः-स्कन्दननिवारणाय परिधीयमानानां परिधीनामनुमन्त्रणमनु-वाकादौ उपवर्ण्यते। कल्पः। परिधीन् परिधीयमानाननुमन्त्रयते "ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुवित्" इति मध्यमं "उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसु-वित्" इति दक्षिणं "अभिभूरस्यभिभूरहꣳ सजातेषु भूयास-

मभिभूश्चेत्ता वसुवित्" इत्युत्तरमिति। हे मध्यमपरिधे त्वं ध्रुवोऽसि स्थिरोऽसि। रक्षोभिरविचाल्यमानत्वात्। अतएवा-म्नायते। परिधीन् परिदधाति रक्षसामपहत्या इति। तस्य ध्रुवस्य तवानुमन्त्रणेन अहमपि सजातेषु ज्ञातिषु ध्रुवो भूयासं। किञ्च धीरो धैर्यवान् चेत्ता रक्षोऽपहननस्य ज्ञाता, वसुवित् वसुनो लब्धा भूयासं। हे दक्षिणपरिधे त्वं रक्षांस्यपहन्तुमु-ग्रोऽसि। तवानुमन्त्रणेन अहमपि उग्रो भूयासं। यथा ज्ञातयो मम प्रतिवादिनो न भवन्ति तथा सम्पादनमुग्रत्वं। किञ्च वैरिणोऽपहन्तुमप्युग्रो भूयासं। हे उत्तरपरिधे त्वं रक्षसामभि-भवितासि। तवानुमन्त्रणेन अहमपि ज्ञातीनां वैरिणाञ्चाभि-भविता भूयासं। एतदीयस्य ब्राह्मणस्य समीपवर्त्तित्वेनात्यन्त-विच्छेदाभावान्नात्र ब्राह्मणमुदाहृत्य व्याक्रियते। किन्तु पाठक्र-मेणोदाहृत्य दशमानुवाके व्याकरिष्यते। कल्पः। अथाग्नियोगेन युनक्ति "युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जात-वेदः" इति। हे जातवेदः दैव्येन देवयोग्येन ब्रह्मणा मन्त्रेण त्वां युनज्मि अस्मिन् कर्मणि युक्तं करोमि। किमर्थं। इदं हविर्वोढुं। कल्पः। समिधारभ्याधीयमानयोर्जपति "इन्धा-नास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते" इति। हे जातवेदः त्वां इन्धानाः ज्वालयन्तो वयं सुप्रजसः शोभ-नापत्योपेताः सुवीराः शोभनभृत्योपेताः ज्योक् *चिरं जीवेम। किं कुर्वन्तः। बलिं पूजामाहरन्तः। कल्पः। अथान्तर्वेदि हवीꣳ-

* नीरोगमिति तै०।

ष्यामन्नान्यभिमन्त्रयते “यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे” इति। हे अग्ने अस्य मम यज्ञस्य सम्बन्धि यत् बर्हिरादिकं रिष्यात् रक्षःप्रभृतिभिर्विनाशितं स्यात् आज्यस्योत आज्यस्यापि यद्वा अल्पं विन्दुजातं जौहवादिकं स्कन्देत् अधः पतेत् हे विष्णो व्यापक तेन नष्टेन स्कन्नेन च वैरिणं हन्मि। यः सपत्नो मारयितुमशक्यः एनं दुर्मरायुं सपत्नं निर्ऋत्याः पापदेवतायाः उपस्थे उत्सङ्गे आदधामि स्थापयामि। कल्पः “अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभि-र्व्याहृतीभिरुपसादयेत्। अथ वै भवति। दर्शपूर्णमासावालभ-मान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेत्। अथ वै भवति। चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेत्” इति। भूरादयस्त्रयः शब्दा लोकत्रयवाचिनः एतानि हवींषि लोकत्रयरूपाणीति स्तूयन्ते। इदं व्याहृतित्रयं यद्यपि याज-मानकाण्डे पठितं तथापि प्रत्यक्षेण ब्राह्मणवाक्येन आध्वर्यव-क्रियायां विनियुक्तत्वात् उत्कृष्टव्यं। कल्पः। इध्ममभ्याधीय-मानमनुमन्त्रयते “उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते। अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्व” इति। हे अग्ने यजमानाय उच्छुष्म एधि उद्भूतबलो भव। यजमानकार्ये-ष्वाविष्कृतबलो भव। अभिदासते उपक्षयते शत्रवे निशुष्म एधि न्यग्भूतबलो भव। उक्तक्रमेण यजमानमनुग्रहीतुं निग्र-हीतुञ्च शत्रून् चतुर्भिर्विशेषणैरग्निं प्रोत्साहयति। हे अग्ने

अङ्गनादिगुणयुक्त देवेद्ध देवैर्दीप्त मन्विद्ध मनुनापि दीप्त। एतच्च पदद्वयं निविद्ब्राह्मणे व्याख्यातं। देवेद्ध इत्याह देवा ह्येतमैन्धत। मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवभ्य ऐन्ध इति। मन्द्रजिह्व मन्द्रा हर्षहेतुर्जिह्वा यस्येति विग्रहः। कल्पः। प्रवरं प्रव्रियमाणमनुमन्त्रयते "अमर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय" इति। हे होतर्देवानामाक्रातमरणरहितस्य तव मूर्धनि आजिघर्मि घृतादिकं धारयामि। किमर्थं। यजमानस्य धनपुष्टिशोभनापत्यशोभनवीर्यार्थं। कल्पः। स्रौवमाघारमाघार्यमाणमनुमन्त्रयते "मनोऽसि प्राजापत्यं मनसा मा भूतेनाविश" इति। हे स्रौवाघार त्वं मनोऽसि प्रजापतिसम्बन्धि चासि। मनसा प्रजापतिं ध्यायताध्वर्युणा निष्पाद्यमानत्वात्। अत्र भूतशब्दः प्रजापतिसृष्टं यज्ञमाचष्टे। प्राजापत्यो यज्ञ इति ब्राह्मणेन व्याख्यास्यमानत्वात्। तेन भूतेन प्रजापतिसृष्टेन यज्ञेन तत्साधकेन मनसा च सह हे स्रौवाघार मां आविश। कल्पः। स्रुच्यमाघारमाघार्यमाणमनुमन्त्रयते "वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविश" इति। हे स्रुच्याघार त्वं वागसि वाचा मन्त्रमुच्चारयताध्वर्युणा निष्पाद्यमानत्वात्। कीदृशी वाक्। ऐन्द्री इन्द्रेण व्याकृतत्वात्। तच्चैन्द्रवायवग्रहब्राह्मणे समाम्नातं। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोदिति। सा च वाक् सपत्नक्षयणी वैरिघातिनी। स्रुच्याघारमन्त्ररूपाया वाचः सपत्नघातित्वं तद्ब्राह्मणेन सूचितं। अहुतो यज्ञो यज्ञपतेरित्याहानार्त्यै

इति। तादृश्या वाचा इन्द्रसृष्टेन चक्षुरादीन्द्रियेण सह हे स्रुच्याघार मामाविश। कल्पः। प्रयाजानामिष्टमनुमन्त्रयते "वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु। ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु। वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु। शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु। हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतां" इति। ऋतुवाचकैर्वसन्तादिशब्दैः समिद्यागादिपञ्चप्रयाजाभिमानिदेवता वच्यन्ते। तांश्च वसन्तादीनहं तोषयामि। ते च तुष्टा मां तोषयन्तु। कल्पः। आज्यभागाविष्टावनुमन्त्रयते "अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासं" इति। उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति श्रवणादग्नीषोमावाज्यभागयोर्देवौ तयोः सम्बन्धिनी देवयज्या समन्त्रकाज्यभागाहुतिः तया अध्वर्युनिष्पादितया यजमानोऽहं चक्षुःपाटवयुक्तो भूयासं। युक्तं चैतत्। चक्षुषी वा एते यज्ञस्य यदाज्यभागाविति ब्राह्मणे चक्षुष्ट्वेन निरूपितत्वात्। कल्पः। अग्निमिष्टमनुमन्त्रयते "अग्नेरहं देवयज्ययान्नादो भूयासं" इति। दर्शपूर्णमासयोराद्यस्य प्रधानयागस्याग्निर्देवता स चान्नभक्षकः। अग्निर्वै देवानामन्नाद इति श्रुतेः। अतस्तद्यागेन यजमानस्यान्नादत्वमुचितं। कल्पः। उपांशुयाजमिष्टमनुमन्त्रयते "दब्धिरस्यदब्धो भूयासममुं दभेयं" इति। अमुमित्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायतीति। उपांशुयाजस्य प्रजापतिर्विष्णुरग्नीषोमौ वा विकल्पेन देवताः, हे उपांशुयाजदेव त्वं दब्धिरसि।

अस्माभिर्द्वेष्यस्य त्वं हिंसकोऽसि। त्वत्प्रसादात् अहं वैरिभिरहिंसितो भूयासं। अमुं वैरिणं दभेयं मारयेयं। कल्पः। अग्नीषोमाविष्टावनुमन्त्रयते "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासं" इति। पौर्णमास्यां तृतीययागस्याग्नीषोमौ देवता तयोश्च वृत्रहत्वनिमित्तत्वं त्वष्टा हतपुत्र इत्यनुवाके प्रपञ्चितं। अतस्तद्यागेन यजमानस्य वैरिहन्तृत्वं युक्तं। कल्पः। इन्द्राग्नी इष्टावनुमन्त्रयते "इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासं" इति। अमावास्यायां असोमयाजिनः सान्नाय्याभावे द्वितीयपुरोडाशस्य इन्द्राग्नी देवता। तत्रेन्द्रानुग्रहाद्यजमानस्येन्द्रियोपेतत्वं अग्न्यनुग्रहाच्चान्नादत्वं। कल्पः। इन्द्रमिष्टमनुमन्त्रयते "इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासं" इति। सान्नाय्यस्येन्द्रो देवता। तत्प्रसादाद्यजमानस्येन्द्रियावित्वं। कल्पः। महेन्द्रमिष्टमनुमन्त्रयते "महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयं" इति। केषाञ्चित्सान्नाय्यस्य महेन्द्रो देवता। तथा चाम्नायते "त्रयो वै गतश्रियः शुश्रुवान् ग्रामणीराजन्यस्तेषां महेन्द्रो देवता" इति। तत्रेन्द्रशब्दार्थप्रयुक्त्या यजमानस्य जेतृत्वप्राप्तिः। महच्छब्दार्थप्रयुक्त्या दिव्यैश्वर्यादिगुणैर्महत्त्वप्राप्तिः। कल्पः। स्विष्टकृतमिष्टमनुमन्त्रयते "अग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयं" इति। कश्चिदग्निः केनचिन्निमित्तेन रुद्रनामधेयमलभत, स च कदाचिद्देवैराऊत्या तोषितः पूर्वमिष्टानां यागानां वैगुण्यं परिहृत्य स्विष्टकृत्त्वं कृतवान्। तथा च ब्राह्मणमाम्नायते "देवा वै यज्ञाद्रुद्र-

मन्तरायन्त्स यज्ञमविध्यत्तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं" इति। यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयतीति च। स्विष्टकृच्छब्दस्य निर्वचनं सौत्रामण्यां मैत्रावरुणप्रैषमन्त्रे विस्पष्टमाम्नायते "देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्। स्विष्टं कुर्वन्त्स्विष्टकृत् स्विष्टमद्य करोतु नः" इति। तत्राग्निशब्दार्थप्रयुक्तं यजमानस्यायुष्मत्त्वं। अत एव मन्त्रान्तरमेवमाम्नायते "अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि" इति। स्विष्टकृच्छब्दार्थप्रयुक्ता यज्ञप्रतिष्ठाप्राप्तिः। यदायमग्निः स्विष्टं करोति तदा यजमानः सगुणेन सम्पूर्णेन यज्ञेन प्रतिष्ठां फलप्राप्तिं लभते।

अत्र विनियोगसङ्ग्रहः।

"ध्रुवोऽसीति त्रिभिर्मन्त्रैः परिधित्रयमन्त्रणं।
युनाग्निर्योग इन्धाना: समिधोरनुमन्त्रणं॥
यन्मे हविर्मन्त्रयेत भूत्रिभिः स्थापयेद्धविः।
उच्छुष्मो मन्त्रयेतेध्ममग्ने प्रवरं तथा॥
स्रौवाघारं मनोऽसीति स्रुच्याघारं तु वागिति।
वसन्तपञ्चभिर्मन्त्रैः प्रयाजानाञ्च मन्त्रणं॥
अग्नीषोमेत्याज्यभागावग्नेरित्यग्नियाजकं।
दब्धीत्युपांशुयाजाख्यं स्विष्टमग्नीति पञ्चकं॥
अनुवाके द्वितीयेऽस्मिन्मन्त्राः षड्विंशतिर्गताः"। इति॥

अथ मीमांसा। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

"स्याद्वसन्तादिमन्त्राणां क्रमो नो वान्यवद्भवेत्।
शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि॥

दर्शपूर्णमासयोर्याजमानकाण्डे प्रयाजानुमन्त्रणमन्त्रा *आम्नाताः। वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामीत्यादयः। तेषां नियतक्रमोऽभ्युपगन्तव्यः, †अन्येष्वाग्नेयोपांशुयाजाद्यनुमन्त्रणमन्त्रेषु नियतक्रमदर्शनेनात्रापि क्रमनियमस्य बुद्धिस्थत्वादिति चेन्मैवं। अत्र नियामकाभावात्। न तावदत्र पाठो नियामकः, वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण तैत्तिरीयशाखायां पठितानां शाखान्तरे व्यत्ययेन पाठदर्शनात्। नात्र यवागूपाकवदर्थो नियामकः, वसन्तमन्त्रेण यस्य कस्यचित्प्रयाजस्यानुमन्त्रणेऽप्यनुपपत्त्यभावात्। नाप्यत्र लिङ्गं नियामकं, वसन्तमन्त्रे समिद्यागैकविषयस्य विशेषसामर्थ्यस्यादर्शनात्। तस्मादत्र नापि नियतक्रमः। तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

"उपांशुयजने नाङ्गं दृष्टिमन्त्रो गतोऽथवा।
साधारणत्वाल्लिङ्गादेर्मानाभावादसङ्गता॥
मन्त्राणां कर्मणाञ्चात्र क्रमेण मानमीक्ष्यते।
प्रक्रियावत्क्रमो मानं यथासङ्ख्यं ततोऽङ्गता॥
क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः।
यथासङ्ख्यं सन्निधिश्च यथासङ्ख्यमुदाहृतं॥

---

* अनियता इति तै०।

† अन्येष्वग्नीषोमीयोपांशुयाजादि० इति तै०।

शुन्धध्वमिति सान्नाय्यपात्राङ्गं सन्निधेर्मतं।
पशुधर्मोऽर्थसादेश्यादग्नीषोमीयगो भवेत्"॥

दर्शपूर्णमासयोर्याजमानमन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते। "दब्धिरस्यदब्धो भूयासममुं दभेयं" इति। अस्य मन्त्रस्योपांशुयाजाङ्गतायां श्रुतिवाक्ये न विद्येते। *ब्राह्मणे विनियोगमाम्नाय अर्थान्तरेणास्यैवाम्नातत्वात्। एतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोतीति ब्राह्मणं। दब्धिर्घातकमायुधं। आग्नेयाग्नीषोमीययोरप्यनिष्टनिवारकत्वात् लिङ्गं साधारणं प्रकरणञ्च त्रयाणामेकमेव, ततो मानाभावादयं मन्त्रो नोपांशुयाजाङ्गमिति प्राप्ते ब्रूमः। आध्वर्यवकाण्डे आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाम्नातानि। याजमाने च काण्डे तद्विषयमन्त्राः क्रमेणाम्नाताः "अग्नेरहं देवयज्ययान्नादो भूयासं। दब्धिरस्यदब्धो भूयासममुं दभेयं। अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासं। अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासं" इति। तत्र यथा वाक्यद्वयानुसन्धानसम्पन्नं प्रकरणं पृथक् प्रमाणं तथा प्रकरणद्वयानुसन्धानसम्पन्नः क्रमः कुतो न मानं स्यात्। न चास्य प्रकरणेऽन्तर्भावो द्वयोर्वाक्ययोरिव प्रकरणयोरेकवाक्यत्वाभावात्। तस्मात् मन्त्रक्रमप्रमाणेन मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोऽङ्गं। समानदेशत्वं क्रम इति क्रमस्य स्वरूपं। तच्च द्विविधं। पाठकृतमर्थकृतञ्च। तत्र पाठकृतमपि द्विविधं।

* ब्राह्मणे विनियोग आम्नायार्थविवरणस्यैवाम्नातत्वात् इति का०।

यथासङ्ख्यं सन्निधिश्चेति। तयोराद्यस्य दृष्टिमन्त्र उपांशूदाहरणं। शुन्धध्वं दैव्याय कर्मण इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते। तत्र सान्नाय्यपात्राणि कुम्भीशाखापवित्रादीनि अनन्तरेषु मातरिश्वन इत्यादिमन्त्रेषु अवभासन्त इति सन्निधिना तत्पात्रप्रोक्षणे शुन्धध्वमिति मन्त्रो विनियुज्यते। अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयाङ्गत्वं। तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यं॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ ● ॥

अग्निर्मा दुरिष्टात् पातु सविताऽघशꣳसाद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषꣳ सुरूपवर्षवर्ण एहीमान् भद्रान्दुर्याꣳ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृड्ढ्मिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं ॥ १ ॥

तेऽशीय सा मे सत्याशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मा-

स्विन्द्र इन्द्रियं दधात्वस्मानाय उत यज्ञाः संचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टा नः ॥ २ ॥

असि जुष्टिं ते गमेयं। मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तां। ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसत् प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके ॥ ३ ॥

उपहवं जुष्टा नस्त्वा षट् च ॥ ३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीयानुवाके हविरनुमन्त्रणमुक्तं। तृतीयानुवाके भक्ष्यस्येडादिभागस्यानुमन्त्रणमुच्यते। कल्पः। प्राशित्रेऽवदीयमाने जपति "अग्निर्मा दुरिष्टात् पातु सविताऽघशꣳसात्" इति। मन्त्रवैकल्येन क्रियावैकल्येन वा यदरिष्टं तद्दुरिष्टं तस्माद्दुरिष्टात् अग्निर्मां पातु। अघशंसात् पापरुचेरसुरादेः सविता मां पातु। कल्पः। यजमानभागे "यो मेऽन्ति दूरेऽरातीयति

तमेतेन जेषं" इति। अवदीयमाने जपतीति शेषः। यो राक्षसादिः ममान्तिके दूरे वा अरातीयति शत्रुत्वमिच्छति तं राक्षसादिमेतेन यजमानभागेन जेषं जयेयं। कल्पः। इडा-मवदीयमानामनुमन्त्रयते। सुरूपवर्षादिर्मघोनीत्यन्तः। सुरू-पेति मन्त्रादिः। मघोनीति मन्त्रान्तः। पाठस्तु "सुरूपवर्ष-वर्ण एहीमान् भद्रान्दुर्याꣳ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृद्ध्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं तेऽशीय सा मे सत्या ऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी" इति। गोशरीरधारिण्या इडाख्याया देवतायाः सम्बोधनं सुरूपवर्षवर्ण इति। शृङ्गपुच्छादिकं रूपं। वर्षं वृष्टिः। वर्णः शुक्लकृष्णकपिलत्वादिः। शोभना रूपवर्षवर्णा यस्याः सा तथो-क्ता। शृङ्गादीनामतिदीर्घत्ववक्रत्वादिपरिहारेण दर्शनीयत्वं रूपस्य शोभनत्वं। वर्षं द्विविधं उदकरूपं घृतरूपञ्च। तत्रेडा स्वकीयात्पदात् घृतं वर्षति। तथा च मन्त्र आम्नायते "इडा-याः पदे घृतवति स्वाहा" इति "मानवी घृतपदी मैत्रा-वरुणी" इति "इडायाः पदं घृतवच्चराचरं" इति च। तथा ब्राह्मणमप्याम्नायते "सा यत्र यत्र न्यक्रामत्ततो घृतम-पीड्यत तस्माद्घृतपद्युच्यते" इति "वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे

घृतं प्रजाः संजीवन्तीः पिबन्ति" इति च। तदिदं घृतरूपत्वं वर्षस्य शोभनत्वं। कर्बुरादिमङ्कीर्णत्वपरिहारेण विस्पष्टं शुक्लकृष्णकपिलत्वादिकं वर्णस्य शोभनत्वं। तथाविधे हे इडे इमान् अस्मदीयान् भद्रान् शास्त्रोक्तयज्ञसाधनसम्पूर्णान् दर्यान् यज्ञगृहान् प्रत्यागच्छ। गृहा वै दुर्या इति हि श्रूयते। किञ्च मामभिलक्ष्य अनुव्रता अस्मिन् यज्ञव्रते अनुकूला सती एहि आगच्छ। उ शब्दः समुच्चये। हे इडाविशेषा यूयं अस्मदीयानि शिरांसि निम्रढ्वं नितरां स्नेहपूर्वकाघ्राणादिना शोधयध्वं। त एवेडाविशेषाः इडादिभिः स्नूनर्यन्तैः षड्भिर्नामविशेषैः स्पष्टीक्रियन्ते। इडादीनां गोनामविशेषत्वं सप्तमकाण्डे समाम्नातं"इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" (सं०७का०।१प्र०।६अ०) इति। एतेषां प्रदर्शनार्थत्वात् रमत्यादिकमपि द्रष्टव्यं। हे जुष्टे प्रिये सेव्ये वा ते जुष्टिं त्वदीयां प्रीतिं अशीय प्राप्नुयां। हे उपहूते इडे एहीत्येवमागमनायास्माभिरनुज्ञाते अहमपि त उपहवं त्वदीयामनुज्ञां अशीय प्राप्नुयां। अस्य यज्ञस्य येयमाशीः फलप्रार्थना सा मे सत्या भूयात्। अरेडता अनादरमकुर्वता मनसा तत्फलं साधयितुं शकेयं त्वत्प्रसादाच्छक्तो भूयासं। मयानुष्ठितोऽयं यज्ञः निःश्रेणिमिव क्रमेण दिवमारोहतु। केनापि वैकल्यप्रतिबन्धेन भंशो यज्ञस्यानारोहणं भंशाभावे तु यज्ञ आरोहत्येव। आरुह्य च यस्यां दिवि यज्ञहविर्भाजो देवा निवसन्ति तां दिवं स्वर्गप्रदेशविशेषं गच्छतु। तस्मिन् प्रदेशे गत्वा सभायामुप-

विष्टा* देवा येन मार्गेण हविर्भाजनशालां गच्छन्ति तेनैव मार्गेणायं यज्ञो यज्ञसम्बन्धं हविर्देवानप्येतु प्राप्नोतु। तेन यज्ञेन तुष्ट इन्द्रः अस्मास्विन्द्रियं यज्ञान्तरानुष्ठानाय चक्षुरादिपाटवं दधातु स्थापयतु। तादृशानस्मान् गावो यज्ञसाधनानि धनानि यज्ञा उत करिष्यमाणा यज्ञा अपि सचन्तां आश्रयन्तां। आशिषः तद्यज्ञफलान्यस्मासु सन्तु। सा तादृशी त्वं नोऽस्मान् प्रति सुप्रतूर्तिः सुष्ठु प्रकर्षेण शत्रूणां हिंसिका मघोनी धनवती च भव। कल्पः। अवान्तरेडां प्राश्यमानामनुमन्त्रयते "जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयं" इति। हे अवान्तरेडे त्वं जुष्टिरसि प्रीतिरूपासि। नो अस्मान् जुषस्व प्रीणय। नो अस्माभिर्जुष्टासि सेवितासि। ते जुष्टिं त्वदीयां प्रीतिं गमेयं प्राप्नुयां। कल्पः। अन्तर्वेद्यङ्गिर्मार्जयते "मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तां" इति। मनो ज्योतिः मननीयोऽयमग्निः तत्तदाहुतिष्वाज्यं सेवतां। केनापि वैकल्येन विच्छिन्नमिमं यज्ञं वैकल्यपरिहारेण सन्दधातु। बृहस्पतिः स्वयमेव नो अस्मदीयमिमं यज्ञं तनुतां। विश्वे देवा इह यज्ञे मादयन्तां तृप्यन्तु। कल्पः। बर्हिषदं पुरोडाशमनुमन्त्रयते "ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसत्" इति। यज्ञपुरुषवाचो ब्रध्नशब्दः। यज्ञो वै ब्रध्न इति श्रुतेः। हे ब्रध्न पिन्वस्व अस्मान्

* सभायामुपरिष्टादिति तै०।

ऋत्विजश्च प्रीणय। ददतो धनं प्रयच्छतो मम देयं धनं मा क्षीयतां। अपि तु उपचीयतां। यागं कुर्वतो मम सामर्थ्यं मोपदसत् मोपक्षीयतां। अपि तु पुनः पुनर्वर्धतां। कल्पः। अथान्वाहार्यं पचति तमन्तर्वेद्यासन्नमभिमन्त्रयते "प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके" इति। यद्यप्यन्वाहार्य ऋत्विजां भागस्तथापि तेन प्रजापतेः परितोषात्तद्भागत्वमविरुद्धं। स च भाग ऊर्जस्वान् बलवान् तद्भोजिनां बलप्रदत्वात्। पयस्वान् क्षीरवत्त्वादुत्तमः, यद्वा क्षीरे पच्यमानत्वात्पयस्वत्त्वं। अत एव क्षीरे भवतीत्येके इति सूत्रकार आह। हे अन्वाहार्य स त्वं शरीरगतान् प्राणादिवायुभेदान् पाहि। एक एव वायुः शरीरगतस्थानभेदात् कार्यभेदाच्च प्राणादिनामभिर्भिद्यते। स्थानभेदः कैश्चिदुक्तः।

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः" ॥ इति।

उच्छ्वासनिःश्वासौ प्राणव्यापारः। मलमूत्रयोरधःपातनमपानव्यापारः। भुक्तस्यान्नरसस्य शरीरे साम्येन नयनं समानव्यापारः। उद्गारहिक्कादिरुदानव्यापारः। कृत्स्नासु शरीरनाडीषु व्याप्य प्राणापानवृत्त्योः सन्धिकाले शरीरस्य बलप्रदानं व्यानव्यापारः। अत एव छन्दोगा आमनन्ति "यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः। अथ यः प्राणापानयोः

सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाच-मभिव्याहरति। अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोति" (छा०१प्र०।३ख०) इति। एवं बहुविध-व्यापारहेतुत्वात् प्राधान्यं द्योतयितुं व्यानस्य द्विरुक्तिः। यद्वा नागकूर्मकृकरादिवायुविशेषाणामत्रान्तर्भावमभिप्रेत्यापि पुनरुक्तिः। हे अन्वाहार्य त्वमचितोऽसि अपरिमितोऽसि इति ब्राह्मणं दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचतीति सूत्रकारश्च। तस्मात् परलोकेऽप्यचित्यै त्वा त्वां ददामीति शेषः। तेनाभिप्रायेण दीयमानत्वादमुत्र परलोके मे मम भागाय मा चेष्ठाः क्षयं मा प्राप्नुहि। तस्मात् अहमप्यस्मिन् लोके त्वां यथेच्छमनुभवामीति शेषः।

अत्र विनियोगसङ्ग्रहः।

"अग्निः प्राशित्रावदानं यो मेऽन्ति स्वामिभागदं।
इडाद्वयं सुरूपेति जुष्टिरित्यनुमन्त्रयेत्॥
मनो ऽङ्गिर्मार्जनं ब्रह्म पुरोडाशं प्रजापतेः।
अन्वाहार्यं मन्त्रयेत मन्त्राः सप्तेह वर्णिताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः॥ * ॥

---

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं नराशꣳ-
सस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतो
ऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमग्नेरह-
मुज्जितिमनूज्जेषꣳ सोमस्याहमुज्जितिमनूज्जेषमग्नेर-
हमुज्जितिमनूज्जेषमग्नीषोमयोरहमुज्जितिमनूज्जेषमि-
न्द्राग्नियोरहमुज्जितिमनूज्जेषमिन्द्रस्याहं ॥ १ ॥

उज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जितिमनूज्जेषमग्नेः
स्विष्टकृतोऽहमुज्जितिमनूज्जेषं। वाजस्य मा प्रसवे-
नोद्ग्राभेणोदग्रभीत्। अथा सपत्नाꣳ इन्द्रो मे निग्रा-
भेणाधराꣳ अकः। उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा
अवीवृधन्। अथा सपत्नानिन्द्राग्नी मे विषूचीनान्
व्यस्यतां। एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तः॥२॥

वनामहे धुक्षीमहि प्रजामिषं। रोहितेन त्वाग्नि-
र्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेत-
शेन त्वा सूर्यो देवतां गमयतु। वि ते मुञ्चामि रशना
वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि। धत्तादस्मासु
द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान् देवतासु। विष्णोः
शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयꣳ सोम-
स्याहं देवयज्यया ॥ ३ ॥

सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयं। देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासं। वेदोऽसि वित्तिरसि विदेय कर्मासि करुणमसि क्रियासꣳ सनिरसि सनितासि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनं ॥ ४ ॥

इन्द्रस्याहमिन्द्रियवन्तः सोमस्याहं देवयज्यया चतुश्चत्वारिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीये भक्ष्यस्येडादिभागस्यानुमन्त्रणमुक्तं। चतुर्थे शेषाहुतिना अनूयाजादीनामनुमन्त्रणमुच्यते। कल्पः। अनूयाजानामिष्टमनुमन्त्रयते "बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयं" इति। बर्हिर्नराशंसस्विष्टकृच्छब्दा अनूयाजदेवानामग्निविशेषाणां वाचकाः। बर्हिर्नराशंसयागाभ्यां प्रजापतिः क्रमेण प्रजाः पशूंश्च ससर्जेति यजमानस्य तत्तत्प्रार्थना युक्ता। स्विष्टकृन्मन्त्रस्तु

व्याख्यातः। कल्पः। अथ यत्र होतुरभिजानाति अग्निरिदं हविरजुषतेति तद्यजमानमुज्जितिं वाचयति "अग्नेरहमुज्जितिमनूज्जेषꣳ सोमस्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नीषोमयोरहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेषमिन्द्रस्याहमुज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जितिमनूज्जेषमग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषं" इति। यस्मिन् काले होता सूक्तवाकं पठन् अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृतेत्यादीनि तत्तद्देवतास्मारकाणि वाक्यानि पठति तस्मिन् कालेऽध्वर्युर्यजमानं तत्तद्देवताविषयाणि उज्जितिवाक्यानि वाचयेत्। अमावास्यायां पौर्णमास्यां वा यां यां देवतां यजति तदिष्टमनतिक्रम्य तदनुसारेण सूक्तवाकभागा उज्जितिभागाश्च प्रयोक्तव्याः। पाठस्तु "अग्नेरहमुज्जितिं० अनूज्जेषं" इति। आज्यभागदेवोऽग्निर्हविः सेवित्वा तेन हविषा पुष्टो यज्ञविरोधिनोऽसुरादीनभिभवन्नुत्कृष्टं *जयं प्राप्तवान्। तदीयां तामुज्जितिमनु यजमानोऽहं पापरूपं वैरिणमभिभवन्नुत्कृष्टं जयं प्राप्तोऽस्मि। एवं सर्वत्र योज्यं। कल्पः। †वाजवतीभ्यां व्यूहत्युभौ वाजवत्यौ जपेत्। वाजशब्दोऽस्ति ययोर्ऋचोस्ते ऋचौ वाजवत्यौ, तयोर्ऋचोर्यजमानेन जप्यमानयोरध्वर्युर्जुहूपभृतौ द्वे स्रुचौ व्यूहेत् परस्परविपर्यासेनापसारयेत्। तत्प्रकारस्त्वस्माभिराध्वर्यवकाण्डे दर्शितः। पाठस्तु

* यज्ञं इति तै०।

† उक्तं वाजवत्योर्व्यूहनमिति का०।

“वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्। अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः। उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्। अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यतां” इति। इन्द्रो वाजस्यान्नस्य प्रसूतिनिमित्तेन स्रुच ऊर्ध्वग्रहणेन मामुदग्रभीत् उत्कर्षं प्रापितवान्। अथ स्रुचो न्यक्कारेण मम सपत्नान् अधरान् न्यक्कृतान् अकरोत्। देवा ब्रह्म परिवृढं स्रुचोरुद्ग्राहनिग्राहरूपं कर्मद्वयं अवर्धयन्। अथेन्द्राग्नी मम सपत्नान् विषूचीनान् सर्वतः पलायमानान् व्यस्यतां विनाशयेतां। कल्पः। अथ यत्र होतुरभिजानाति आशास्तेऽयं यजमानोऽसाविति तद्यजमानं यज्ञस्य दोहं वाचयति “एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं” इति। यस्मिन् काले होता सूक्तवाकं पठन्नाशास्तेऽयं यजमानोऽसावित्यादिवाक्यमुच्चारयति तस्मिन् कालेऽध्वर्युः यजमानं एमा अग्मन्नित्यादियज्ञदोहमन्त्रं वाचयति। सूक्तवाके आयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादयः आयुराद्याशिषः समाम्नाताः। इमा आशिषः अग्मन् मां प्रत्यागच्छन्तु। वयमप्यायुरादिदोहं कामयमानास्तत्फलप्रदेनेन्द्रेण युक्तत्वादिन्द्रवन्तः तमिन्द्रं वनामहे भजामहे। तेन भजनेन पुत्रपौत्रादिप्रजामिषं इष्यमाणमन्नायुरादिकं धुक्षीमहि। कामधेनुसदृशीमिन्द्रदेवतां दुह्यास्म। कल्पः। प्रस्तरं प्रह्रियमाणमनुमन्त्रयते “रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु” इति। रोहित-

हर्यतशब्दा अग्नीन्द्रसूर्याणामश्वानभिदधते। हे प्रस्तर तैरश्वैरग्न्यादयस्त्वां सूक्तवाकोक्तां तां तां देवतां गमयन्तु। कल्पः। परिधीन् विमुच्यमानाननुमन्त्रयते "वि ते मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि। धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान् देवतासु" इति। लोके ह्यारूरुक्षुरारोहणीयमश्वं रशनादिभिः सर्वतो बध्नाति। तत्र रशनाशब्देन पलायनदार्ढ्याय उदरे बध्यमाना तन्तुमयी चर्ममयी वा कक्ष्याभिधीयते। रश्मिशब्देन अश्वमुखे संलग्नो हस्तेनाश्वनियमनार्थो रज्जुविशेष उच्यते। योक्त्रशब्देनाश्वं स्तम्भे बद्धुमुपयुक्तो रज्जुविशेषः। पलायनस्य पुरतः पृष्ठतश्चापसरणं वारयितुमुरःपुच्छादौ बन्धनोपयुक्ता रज्जुविशेषाः परिचर्तनशब्देनोच्यन्ते। अश्ववदग्नेः परिधयो रशनादिस्थानीयाः। हे अग्ने तव बन्धनहेतून् परिधिरूपान् रशनादीन् विमुञ्चामि। तद्विमोकेन सन्तुष्टस्त्वं अस्मासु द्रविणं धेहि। यच्चान्यद्भद्रमन्नपानादिकं तदप्यस्मासु धेहि। अस्मदीयहविर्भुक्षु देवतासु भागधान् हविःप्रदान् अस्मान् प्रकर्षेण ब्रूहि। कल्पः। शंयुवाकमुक्तमनुमन्त्रयते "विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयं" इति। शंयुशब्दः सुखमिश्रं बृहस्पतिपुत्रं ब्रूते। तेन शंयुं बार्हस्पत्यमिति ब्राह्मणोक्तेः। स च बहुषु कार्येषु व्याप्नुवन् विष्णुरित्युच्यते। तस्य परितोषहेतुत्वात् परिधिप्रहरणं तदीया देवयज्या तया यजमानोऽहं कृत्स्नयज्ञेन निष्पन्नां प्रतिष्ठां फलं गमेयं प्राप्नुयां। कल्पः। पत्नीसंयाजा-

नामिष्टमनुमन्त्रयते "सोमस्याहं देवयज्यया सुरेता रेतो धिषीय। त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयं" इति। अथेतरावुपसमस्यति "देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासं" इति। चतुर्णां पत्नीसंयाजानां क्रमेण सोमस्त्वष्टा देवपत्न्यो गृहपत्यग्निरिति चतस्रो देवताः, तत्र सोमस्य रेतोधारणाभिमानित्वात् तदीययागेनाहं रेतो धिषीय धारयेयं। द्विविधं हि रेतः। वन्ध्यमुत्पादकञ्च। तत्र वन्ध्यव्यावृत्तये सुरेता इति विशेष्यते। त्वष्टा तु निषिक्तं रेतः पश्वादिरूपेण विकारयते। अतस्तद्यागेन पशुरूपं पुषेयं पुष्यासं। मिथुनत्वसिद्ध्यर्थमेकस्मिन्नेव मन्त्रे तृतीयचतुर्थदेवते समस्येते। या देवपत्न्यो यश्च गृहपतिरग्निः तदुभयं मिलित्वा यज्ञसम्बन्धि मिथुनं। तदीययागेनाहमपि मिथुनेन पुत्रपुत्रीरूपेण प्रकृष्टो भूयासं। कल्पः। वेदे यजमानं वाचयति "वेदोऽसि वित्तिरसि विदेय" इत्याऽन्तादनुवाकस्येति। वेदे निहिते सतीति शेषः। अन्तर्वेदि वेदं निधायेति सूत्रान्तरे दर्शनात्। पाठस्तु "वेदोऽसि वित्तिरसि विदेय कर्मासि करुणमसि क्रियासꣳ सनिरसि सनितासि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनं" इति। वेदोऽसीत्यस्य वाक्यस्यार्थो वित्तिरसीत्यनेन स्पष्टीक्रियते। हे दर्भमय त्वं वेदनामासि तस्य नाम्नोऽयमर्थः। वित्तिर्द्रव्यलाभसाधनमिति। अतस्त्वत्प्रसादेन अहं धनं विदेय लभेय। तथैवोपरि व्याख्येयं। कर्मासि कर्मनाम-

क्रमसि तस्य व्याख्यानं करणमसीति। क्रियतेऽनेनेति करणं वेदीसम्मार्जनं भस्माद्युद्वहनादिसाधनमित्यर्थः। अतस्त्वया सम्मार्जनादिकं क्रियासं। तथा त्वं सनिरसि सनिनामासि। तद्व्याख्यानं सनितासीति। धनस्य दातासीत्यर्थः। अतस्त्वत्प्रसादेन सनेयं धनमृत्विगादिभ्यो देयासं। किञ्च भवान् मह्यं रायस्पोषं धनपुष्टिं ददातु। कीदृशं। घृतवन्तं घृतादिभोजनसाधनसमृद्धं। कुलायिनं निवासहेतुबहुगृहोपेतं। सहस्रिणं सहस्रसंख्यादिसङ्ख्योपेतं। वाजिनं भोज्यान्नसमृद्धं।

अत्र विनियोगसङ्ग्रहः।

"बर्हिस् त्रिभिरनूयाजान्मन्त्रयेत् सूक्तवाककं।
अग्नेरित्यष्टभिर्वाजद्वाभ्यां व्यूहेत् स्रुचौ तथा॥
एमा स्वनामग्रहणं रोहीति प्रस्तरं त्रिभिः।
वि ते परिधिमोचन्तु विष्णोः शं शंयुवाककं॥
त्रिभिः सोमेति संयाजान् वेदो वेदाभिमर्शनं।
अनुवाके चतुर्थेऽस्मिन् त्रयोविंशतिरीरिताः"॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः॥ * ॥

---

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्। प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि

सह यजमानेन सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां ॥ १ ॥

दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तां विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसान्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मो विष्णोः ॥ २ ॥

क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु विक्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभेन छन्दसा दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः ॥ ३ ॥

दक्षिणायामन्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मो विष्णोरेकान्नत्रिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

चतुर्थे अनूयाजादिशेषहोमानुमन्त्रणमुक्तं। पञ्चमे त्वाप्यायनादिमन्त्रा उच्यन्ते। कल्पः। ध्रुवामाप्यायमानामनुमन्त्रयते "आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्" इति। यज्ञं यज्ञं प्रति तां तामाहुतिं प्रति देवयद्भ्यो देवान् होतुमिच्छद्भ्यो ऋत्विग्भ्यः पर्याप्तेन घृतेनेयं ध्रुवा आप्यायतां पुनः पुनः पूर्यतां। ऊधःशब्देन पयःपूर्णस्तनमण्डलोऽभिधीयते। सूर्याशब्देन ऊषा आदित्यपत्नी विवक्ष्यते। तत्पत्नीत्वञ्च नक्षत्रेष्टावाम्नायते। उषा वा अकामयत। प्रियाऽऽदित्यस्य सुभगा स्यामिति (ब्रा०का०३।प्र०१।अ०६) इति। इवशब्दो ऽध्याहर्तव्यः। यथा सूर्याया गोरूपधारिण्या ऊधः पयःपूर्णं तथा ध्रुवा घृतेनाप्यायतां। किञ्च। अदित्याः वेदिरूपायाः पृथिव्याः उपस्थे उत्सङ्गे सेयं ध्रुवा उरुधारा महाधारा सया पुनः पुनः सिच्यमानाभिराज्यधाराभिरुपेता सती आप्यायतामिति शेषः। अत एव पृथिवी विस्तीर्णा सती सर्वस्मिन् यज्ञे सम्यगाप्यायतां। कल्पः। अथ याजमानभागं प्राश्नाति "प्रजापतेर्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन" इति। यद्यपि स्वर्गादिलोकाः सर्वे प्रजापतिना सृष्टत्वात्तत्सम्बन्धिनः तथाप्यकर्मभूमित्वेन यजमानान् प्रति विशेषेण न भान्तीति नास्ति तेषां विभान्शब्दवाच्यत्वं। भूलोकस्तु कर्मभूमित्वेन यजमानानां विशेषेण भासमानत्वाद्विभान्शब्दवाच्यः। विभान्नामके प्रजापतिसम्बन्धिनि तस्मिन् भूलोके

हि हविर्भागभक्षकेण यजमानेन मया सह त्वां स्थापयामि। कल्पः। पूर्णपात्रे यजमानं वाचयति "सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः" इति। पूर्णपात्रे आनीयमाने अध्वर्युणेति शेषः। हे पूर्णपात्र त्वं सदसि संयवनादिकार्यकारितया शोभनमसि। अतो मम फलप्रदानेन सद्भूयाः। सर्वमसि सत्येकेन वक्ष्यमाणेन प्राच्यादिसर्वदिग्व्याप्तमसि। अतो ममापेक्षितं सर्वं कार्यं कर्तुं क्षमं भूयाः। अद्भिः पूर्णमसि। अतो मम प्रयोजनं सम्पूर्णं कर्तुमुद्युक्तं भूयाः। अक्षितमसि पूर्णत्वादेव त्वं क्षयरहितमसि। अतो मम कार्यकरणे मा क्षेष्ठाः क्षयं मा प्राप्नुहि। कल्पः। दिशो व्यूहति "प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तां" इति। *ऋत्विग्देवाद्यभिमानिनः सर्वे प्राणिनो यागं द्रष्टुं प्राच्यादिदिक्षु निवसन्ति। अत एव ब्राह्मणमाम्नायते। सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्तीति। मासगृहादीनामचेतनत्वेऽपि तदभिमानिनः पुरुषा इह विवक्षिताः। अन्तर्धानादिशक्तियोगादेतेषामदर्शनमविरुद्धं†। त एते देवादयः तस्यां तस्यां दिशि मां‡ शोधयन्तु। कल्पः। अथो-

* ऋत्विग्देवाद्य० इति तै०।
† एतेषां दर्शनमविरुद्धमिति तै०।
‡ ताः शोधयन्त्वामिति का०।

पोत्थाय दक्षिणेन पदा विष्णुक्रमान् क्रमते "विष्णोः क्रमो ऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्मः। विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसान्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मः। विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु विक्रमे निर्भक्तः स यं द्विष्मः। विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभेन छन्दसा दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः" इति चतुर्भिर् अनुच्छन्दसं तृतीये चतुर्थमनुवर्तयति। न चतुर्थाय प्रक्रामति। नाहवनीयमुपात्येति इति। तृतीये पदेऽवस्थाय चतुर्थमन्त्रं पठेत्। चतुर्थमन्त्राय प्रक्रमं न कुर्यात्। किन्तु मन्त्रमन्तरेण तूष्णीमेव चतुर्थं प्रक्रमं कुर्यात्। तं प्रक्रमं कुर्वन्नाहवनीयं नातिक्रामेत्। किन्त्वाहवनीयात्पश्चादेव वेदिमध्ये चतुरः प्रक्रमान् समापयेत्। मन्त्रार्थस्तु। अत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत्। चतुरः प्रक्रमणप्रदेशान् पृथिव्यादिलोकरूपत्वेन भावयेत्। गायत्र्यादिछन्दोऽभिमानिदेवताः तेषां प्रक्रमाणामनुग्राहिकाः। अभिमातिशब्दो नरकप्रदं पापमाचष्टे। पाप्मा वा अभिमातिरिति श्रुतेः। हे प्रथमप्रक्रम त्वं पापघाती विष्णोः क्रमोऽसि। गायत्रीछन्दोदेवतया अनुगृहीतोऽहमेतत्प्रदेशरूपां पृथिवीमनुसृत्य विक्रमे पादं प्रक्षिपामि यं अभिमातिं वयं द्विष्मः सोऽभिमातिः निर्भक्तोऽस्मात्प्रदेशात् निःसारितः। एवमुत्तरत्र योज्यं। अभिशस्तिरन्यैरापादितोऽपवादः। रातिर्दानं द्रव्यलाभः। तन्निवारणम-

रातिः। तदिच्छन्तो विरोधिनोऽरातीयतः। तृतीयप्रक्रमस्तान् हन्ति। अघुत्वं हिंसकत्वं। तदिच्छन्तो वैरिणः अघूयतः। चतुर्थप्रक्रमस्तान् हन्ति॥

अत्र विनियोगसङ्ग्रहः।

"आप्या ध्रुवाप्यायनं स्यात् प्रजा स्वाम्यंशभक्षणं।
सदसीति प्रणीतानां धाराया अभिमन्त्रणं॥
प्राच्यान्तु पञ्चभिः सिञ्चेत् क्रमेद्विष्णो चतुष्टयात्।
अनुवाके पञ्चमेऽस्मिन् मन्त्रा द्वादश वर्णिताः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ० ॥

---

अगन्म सुवः सुवरगन्म सन्दृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृक्षि सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः॥ १ ॥

सं ज्योतिषाऽभूवमैन्द्रीमावृतमन्वावर्ते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया राय-

स्पोषः समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दी-
द्यासं वसुमान् यज्ञो वसीयान् भूयासमग्न आयूंषि
पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनां।
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं ॥ २ ॥

दधत्पोषं रयिं मयि। अग्ने गृहपते सुगृहपतिरहं
त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहप-
तिना भूयाः शतं हिमास्तामाशिषमाशासे तन्तवे
ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीं।
कस्त्वा युनक्ति स त्वा विमुञ्चतु। अग्ने व्रतपते व्रतम-
चारिषं तदशकं तन्मेऽराधि। यज्ञो बभूव स आ ॥ ३ ॥

बभूव स प्रजज्ञे स वावृधे स देवानामधिपतिर्बभूव
सो अस्माँ अधिपतीन् करोतु वयं स्याम पतयो
रयीणां। गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा
सदमिदप्रमृष्यः। इडावाँ एषो असुर प्रजावान्
दीर्घो रयिः पृथुबुध्नः सभावान् ॥ ४ ॥

द्विष्मः सुवीर्यं स आ पञ्चचिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके
षष्ठोऽनुवाकः ॥ ० ॥

पञ्चमेऽनुवाके आप्यायनादिमन्त्रा वर्णिताः। अत्र षष्ठे सूर्योपस्थानादिमन्त्रा उच्यन्ते। कल्पः। अथात्रैव तिष्ठन्नाहवनीयमुपतिष्ठते "अगन्म सुवः सुवरगन्म सन्दृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृक्षि" इति। आद्येन सुवःशब्देन कर्मणः फलभोगभूमिरभिधीयते। द्वितीयेन सुवःशब्देन मोक्षद्वारभूत आदित्यलोकः। हे आहवनीय त्वत्प्रसादात् प्रथमं फलभोगस्थानं सपुत्रपौत्रा वयं अगन्म। ततो मोक्षद्वारमादित्यलोकं अगन्म। तदर्थमहं तव सन्दृशः कटाक्षान्मा छित्सि विच्छिन्नो मा भूवं। त्वदर्थं यत्तपोऽस्माभिरनुष्ठास्यते तस्मै तपसे ते तवानुग्रहान्मा वृक्षि आ समन्तात् वृक्णो विच्छिन्नो मा भूवं। कल्पः। अथादित्यमुपतिष्ठते "सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहि" इति। हे आदित्य त्वं सुभूरसि। सुष्ठु भवत्युदेतीति सुभूः। रश्मीनां रश्मियुक्तानां चन्द्रादीनां मध्ये श्रेष्ठोऽसि। आयुषः स्थापयितासि। अतो मय्यायुः स्थापय। वर्चोधा असि वर्चः ब्रह्मवर्चसं मयि धेहि ब्रह्मवर्चसं मयि स्थापयेति तस्यार्थः। कल्पः। अर्थेभ्यो लोकेभ्यो भ्रातृव्यं निर्भजति "इदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः" इति। यो भ्रातृव्यो मदीयो वैरी पृथिव्यादिलोकत्रये प्राच्यादिदिक्षु मम विरोधमाचरति मदीयमन्नाद्यं च अपजिहीर्षति, अमुं भ्रातृव्यं ततः पृथिव्यादेः निर्भजामि शीघ्रमेव निःसारयामि।

इदानीं विरोधमनाचरन्तमपि कालान्तरे तदाचरणशङ्कया यं भ्रातृव्यं वयं द्विष्मः सोऽपि निःसारितः। कल्पः "सं ज्योतिषाऽभूवं" इत्यात्मानं * प्रत्यभिमृशति। अहमादित्यज्योतिषा समभूवं सङ्गतो भूयासं। कल्पः। दक्षिणमंसमभि पर्यावर्तते "ऐन्द्रीमावृतमन्वावर्ते" इति। परमैश्वर्ययोगादादित्य इन्द्रः। तदीयमावर्तनमनु अहमपि प्रादक्षिण्येन आवर्ते। कल्पः। अथोदङ्पर्यावर्तते "समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः" इति। अहं प्रजया सङ्गतो भूयासं प्रजा च मया सङ्गता भूयात्, तथा रायस्पोषेण सङ्गतो भूयासं रायस्पोषो मया सङ्गतो भूयात् मां योजयतु। कल्पः। अथाहवनीये समिधमादधाति "समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासं" इति। अत्र समित्प्रक्षेपाय स्वाहेति शब्दोऽध्याहृतः। हे अग्ने अनया समिधा प्रदीप्तस्त्वं मे मदर्थं दीदिहि दीप्यस्व। तव दीपयिताहमपि त्वत्प्रसादाद् दीप्तो भूयासं। कल्पः। अथाहवनीयमुपतिष्ठते "वसुमान् यज्ञो वसीयान् भूयासं" इति। अयं यज्ञस्त्वत्प्रसादात् वसुमान् धनवान् अहमपि त्वत्प्रसादात् वसीयान् वसुमत्तरो भूयासं। कल्पः। अग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते। अग्न आयूꣳषि पवसेऽग्ने पवस्वेति। पाठस्तु "अग्न आयूꣳषि पवस आ सुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनां। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं दधत्पोषꣳ रयिं मयि"

* उरः प्रति आत्मानं प्रति अभिमृशते इति का०।

इति। हे अग्ने पुत्रपौत्रादियुक्तानामस्माकमायूंषि पवसे शोधयसि अपमृत्युं परिहरसीत्यर्थः। नो अस्मभ्यं ऊर्जं बलं इषमन्नञ्च आ समन्तात् सुव प्रेरय देहीत्यर्थः। दुच्छुनां वैरिसेनां आरे दूरे बाधस्व निराकुरु। सकारान्तोऽपःशब्दः कर्मवाची। शोभनमपः कर्म यस्यासौ स्वपाः। हे अग्ने त्वं स्वपा असि अस्मान् पवस्व शोधय। मयि ब्रह्मवर्चसं व्यवहारसामर्थ्यं पोषं पुष्टिं रयिं धनञ्च स्थापय। कल्पः। अथ गार्हपत्यमुपतिष्ठते "अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमा सह्यमसुष्मै ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मा" इति। अमुष्मा इति यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्तत इति। यद्यप्यत्र "तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीं" इत्याम्नायपाठः तथाप्यदःशब्दस्योत्पन्नपुत्रविषयत्वात्तन्तुशब्दस्यानुत्पन्नपुत्रविषयत्वाच्चायं क्रमोऽन्याय्य इत्यभिप्रेत्य शाखान्तरानुसारेण सूत्रकारो मन्त्रं पपाठ। अयं गार्हपत्योऽग्निरस्मिन् गृहे सर्वदा धार्यमाणत्वात् गृहपतिः। हे गृहपतेऽग्ने गृहपतिना त्वयाऽनुगृहीतोऽहं सुष्ठु गृहपतिर्भूयासं त्वमपि गृहपतिना मया पूजितः सुष्ठु गृहपतिर्भूयाः। हिमशब्दो हेमन्तवाची सन् संवत्सरमुपलक्षयति। शतसंवत्सरानग्निमिन्धानोऽहं तन्तवे अनुत्पन्नवक्ष्यपुत्रोत्पत्तये ज्योतिष्मतीं तदुत्पत्तिप्रकाशनसमर्थां तामाशिषमाशास अमुष्मै उत्पन्नवक्ष्यपुत्राय देवदत्तादिनामकाय ज्योतिष्मतीं अतिबुद्धि-

प्रकाशनसमर्थां तामाशिषमाशास्ते। कल्पः "कस्त्वा युनक्ति स त्वा विमुञ्चतु" इति यज्ञं विमुञ्चतीति। कशब्दः प्रजापति-माचष्टे। हे यज्ञ पूर्वं यः प्रजापतिः त्वां युनक्ति युक्तवान् स एवेदानीं त्वां विमुञ्चतु। कल्पः। अथाहवनीये समिधमाद-धाति "अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि" इति। यज्ञरूपस्य व्रतस्य पते हे अग्ने त्वत्प्रसादादिदं व्रतं चरितवा-नस्मि। तद्व्रतं समापयितुमशकं शक्तोऽभूवं। मदीयं व्रतं अराधि समृद्धमभूत्। कल्पः। अथ यज्ञस्य पुनरालम्भं जपति "यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे स देवाना-मधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणां" इति। इदानीमनुष्ठितोऽयं यज्ञो बभूव सम्पूर्णोऽभूत्। स यज्ञ आबभूव पुनरप्यावृत्तो भवतु। स यज्ञः प्रजज्ञे अस्मान् अनुष्ठातॄन् प्रज्ञातवान्। अत एवास्मद्गृहे स यज्ञो वावृधे पुनः पुनरनुष्ठानेन वर्धतां। स यज्ञोऽस्माभि-रिज्यमानानां देवानामधिकं पालयिता भवतु। स यज्ञो ऽस्मानप्यधिपतीन् अधिकमनुष्ठानस्य पालकान् करोतु। वय-मपि तस्य यज्ञपुरुषस्य प्रसादात् रयीणां यज्ञसाधनानां धनानां पतयो भूयास्म। कल्पः। अथ प्राङुत्क्रम्य जपति "गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाꣳ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभा-वान्" इति। हे अग्ने पुनरावर्तनाय प्रार्थ्यमानो यज्ञ एतै-र्विशेषणैर्विशिष्टो भूयात्। बहवो गावोऽस्य सन्तीति गोमान्।

एवं अविमान् असीति योज्यं। नृवत्सखा ऋत्विग्रूपैर्मनुष्यैर्युक्ता देवाः सखायो यस्य यज्ञस्य तादृशः। सदमित् सदैव। सर्वेषामप्रसृष्योऽनभिभवनीयः। इडावान् अन्नवान् प्रजावान् बहुपत्यप्रदः। दीर्घः पुनः पुनरनुष्ठानादविच्छिन्नः। रयिः बहुधनोपेतः। पृथुबुध्नः विस्तीर्णमूलः, मन्त्रेष्वनुष्ठानेषु च मूलभूतेषु वैकल्यरहितः। सभावान् अविकलं यज्ञं द्रष्टुमिच्छन्त्या महत्या विद्वत्सभया युक्तः। असुः प्राणः सोऽस्यास्तीत्यसुरः, हे असुर प्राणवन्नग्ने एष पुनः प्रार्थ्यमानो यज्ञ उक्तविशेषणविशिष्टो भूयात्।

अथ विनियोगसङ्ग्रहः।

"अगन् पूर्वाग्न्युपस्थानं सभूर्भानोरुपस्थितिः।
इदं निःसारयेच्छत्रुं संज्योतिषाभिमर्शनं॥
ऐन्द्री प्रदक्षिणावृत्तिः ससहं तद्विपर्ययः।
समिद्धः सांसदाधानं वसु पूर्वाग्न्युपस्थितिः॥
अग्न आयूंषित्रिभिर्मन्त्रैरपराग्नेरुपस्थितिः।
कस्त्वा यज्ञ।वसोकः स्यादग्ने तद्व्रतमुत्सृजेत्॥
यशंति पुनरालम्भं जपेद्गामांस्तु गोमतीं।
षष्ठेऽनुवाक एतस्मिन्मन्त्राः पञ्चदशेरिताः"॥

अथ मीमांसा। नवमाध्यायस्य प्रथमपादे चिन्तितं।

"अगन्मादेः स्वर्गदेवौ हेतू यद्वा प्रचोदितं।
आद्यो लिङ्गी मेष्टमङ्गस्यापूर्वाकाङ्क्षितत्वतः"॥

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ। अगन्म सुवरित्येकः। अग्नेर-

हमुज्जितिमनूज्जेषमित्यपरः। तयोरुभयोः क्रमेण स्वर्गदेवौ प्रयोजकौ। कुतः। तल्लिङ्गदर्शनात्। तथा सति सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र स्वर्गाग्न्योरभावान्नास्त्यूह इति प्राप्ते ब्रूमः। चोदितं यदपूर्वं तस्यैव फलत्वेन अनुष्ठेयतया इतिकर्तव्यताकाङ्क्षा युक्ता। ततो मन्त्रयोरपूर्वत्वं प्रयोजकं। तथा सति विकृतौ अगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषमित्येवं मन्त्रयोरस्त्यूहः॥०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः॥ * ॥

---

यथा वै संसृतसोमा एवं वा एते संसृतयज्ञा यद्दर्शपूर्णमासौ कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाश्वो भूते यजत एतद्वै देवानामायतनं यदाहवनीयोऽन्तराग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्यपचनः पितॄणामग्निं गृह्णाति स्व एवायतने देवताः परि॥१॥

गृह्णाति ताश्वो भूते यजते व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतमुपैष्यन् ब्रूयादग्ने व्रतपते

व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमालभते बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनमुपस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहुर्मनुष्याः ॥ २ ॥

इन्न्वा उपस्तीर्णमिच्छन्ति किमु देवा येषां नवावसानमुपास्मिंच्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्द्धे यदारण्यस्याश्नाति तेनारण्यान्यदनाश्वानुपवसेत्पितृदेवत्यः स्यादारण्यस्याश्नातीन्द्रियं ॥ ३ ॥

वा आरण्यमिन्द्रियमेवात्मन्धत्ते यदनाश्वानुपवसेत् क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभिमन्येतापोऽश्नाति तन्नेवाशितं नेवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभिमन्यते वज्रो वै यज्ञः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यदनाश्वानुपवसति वज्रेणैव साक्षात् क्षुधं भ्रातृव्यꣳ हन्ति ॥ ४ ॥

परि मनुष्या इन्द्रियꣳ साक्षाच्चीणि च ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

एतैः षड्भिरनुवाकैर्याजमानमन्त्रा उदीरिताः। अथानुवाकपञ्चकेन याजमानब्राह्मणमुच्यते। तत्रास्मिन् सप्तमानुवाके देवतापरिग्रहादिर्विधीयते। आहवनीयादिष्वग्निष्वध्वर्युणान्वाधीयमानेषु तस्मिन्नन्वाधानकाले यजमानोऽच्छिद्रकाण्डे आम्नातान् अग्निं गृह्णामीत्यादिमन्त्रान् जपेत्। सोऽयं देवतापरिग्रहः, असौ चापस्तम्बसूत्रे विस्पष्टः। आपस्तम्बोऽग्निं गृह्णामीत्यादिमन्त्रानुच्चार्येदमाह, आहवनीयेऽन्वाधीयमाने जपतीति। अन्तराग्नी पशव इति मन्त्रमुच्चार्येदमाह, अन्तराग्नी तिष्ठन् जपतीति। इह प्रजा इत्यादिमन्त्रद्वयमुच्चार्येदमाह, गार्हपत्यमिति। अन्वाधीयमानमनुमन्त्रयत इति शेषः। अयं पितॄणामिति मन्त्रमुच्चार्येदमाह, दक्षिणाग्निमिति। अत्रापि पूर्ववद्वाक्यशेषः। तमिमं देवतापरिग्रहं विधातुमादौ प्रस्तौति "यथा वै समृतसोमा एवं वा एते समृतयज्ञा यद्दर्शपूर्णमासौ कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाश्वो भूते यजते" इति। एकस्मिन् काले संहत्य प्राप्ताः समृताः सोमाः सोमयागा एकस्मिन्नेव वसन्तौ बहूनां यजमानानां सोमयागाः संहत्य प्राप्यन्ते। एवमेव बहूनां यजमानानामेते दर्शपूर्णमासरूपा यज्ञा एकस्मिन्नेव पर्वणि संहत्य प्राप्यन्ते। देवताश्चाग्न्यादयो या एवैकस्य यजमानस्य ता एवान्यस्यापि। तथा सति देवानां मनसि सङ्कटमुत्पद्यते तत्सङ्कटमहशब्देन द्योत्यते। देवानां पक्षपातस्यानुचितत्वात्। कस्य यजमानस्य

यज्ञं देवा आगच्छन्ति। कस्य वा यज्ञं नागच्छन्तीति। महदेतत्सङ्कटं। तस्य सङ्कटस्यायं परिहारः। बहूनां यजमानानां मध्ये यो यजमान इतरेभ्यः पूर्वं प्रवृत्तो देवताः परिगृह्णाति स यजमान एताः परिगृहीता देवताः परेद्युर्यष्टुमर्हति। न च सर्वे यजमानाः परस्परमात्सर्येण प्रथमं प्रवर्तन्त इति स दोषस्तदवस्थ इति शङ्कनीयं। परिग्रहमन्त्रपाठेनैव देवसङ्कटपरिहृतत्वात्। *यागस्योद्देशमात्रत्वाद्देवानामागमनमन्तरेणापि सोऽनुष्ठातुं शक्यते। योगसामर्थ्येन वा बहूनि शरीराणि स्वीकृत्य तत्र तत्र सर्वत्रागमिष्यन्ति। इममु परिहारं भगवान् बादरायणो देवताधिकरणे, विरोधः कर्मणीति चेन्नानेकप्रतिपत्तिदर्शनादिति सूत्रयामास। किं बहुना अस्य वाक्यस्य देवतापरिग्रहविध्यर्थवादत्वान्न किञ्चिद्देवानां सङ्कटमस्ति। देवतापरिग्रहार्थानां देशविशेषाणां विधिमर्थवादेनोन्नयति "एतद्वै देवानामायतनं यदाहवनीयोऽन्तराग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्यपचनः पितृणां" इति। वसून् रुद्रानादित्यानिन्द्रेण सह देवता इत्याहवनीयार्थमन्त्रलिङ्गादाहवनीयो देवानां स्थानं। अन्तराग्नी पशव इति मन्त्रलिङ्गादाहवनीयगार्हपत्ययोर्मध्यं पशूनां स्थानं। इह प्रजा विश्वरूपा रमन्तामिति मन्त्रलिङ्गाद्गार्हपत्यो मनुष्याणां स्थानं। अन्वाहार्यः पच्यतेऽस्मिन्निति अन्वाहार्यपचनो दक्षिणाग्निः। अयं पितृणामग्निरिति मन्त्रलिङ्गादसौ पितृणां स्थानं।

* यागस्योद्देश्यत्यागमात्रत्वात् इति का०।

*देशमुन्नीय तेषु देशेष्ववस्थितस्य देवतापरिग्रहं विदधाति "अग्निं गृह्णाति स्व एवायतने देवताः परिगृह्णाति तास्वो भूते यजते" इति। स्पष्टोऽर्थः। मन्त्रेण यज्ञरूपव्रतस्वीकारं विधातुं प्रस्तौति "व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृत्" इति। वक्ष्यमाणमन्त्रपाठरूपेण व्रतस्वीकारेणैव व्रतपतिरयमग्निः मेध्यो यागयोग्यो भवति। ब्राह्मणस्य यजमानो व्रतधारी भवति। समन्त्रकव्रतस्वीकारं विधत्ते "व्रतमुपैष्यन् ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीति" इति। मन्त्रोऽयमतीतप्रश्ने मम नामेत्यनुवाके (१कां०।५प्र०।१०अ०) समाम्नातः। मन्त्रगतं व्रतपतिशब्दं मन्त्रतात्पर्यञ्च व्याचष्टे "अग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमालभते" इति। तिथिविशेषेण व्रतोपायनस्य कालविशेषं विधत्ते "बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनं" इति। बर्हिषा बर्हिरासादनेनोपलक्षिते काले, वत्सैर्वत्सापाकरणेनोपलक्षिते काल इत्यर्थः। एतदुक्तं कालद्वयमेतयोस्तिथिविशेषगतयोर्व्रतस्वीकारयोरुचितं स्थानमिति शाखान्तरप्रसिद्धिः। अथापस्तरणं विधत्ते। अध्वर्युर्यदा दर्भैराहवनीयगार्हपत्यौ परिस्तृणाति तदानीमच्छिद्रकाण्डपठितस्य उभावग्नी उपस्तृणत इत्यादिमन्त्रस्य यजमानेन जप उपस्तरणं। अथ चाध्वर्युकर्तृकं परिस्तरणं। तदिदमस्मिन् काण्डे विदधाति "उपस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहुः" इति। परोक्षिकथनेन विधिः प्रकल्प्यते।

---

* देशविधिमन्त्रान् उन्नीयेति का०।

विहितमुपस्तरणमुपपादयति "मनुष्या इन्वा उपस्तीर्णमिच्छन्ति किमु देवा येषां नवावमानमुपास्मिंञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति" इति। इन्वा इति निपातत्रयसमुदायोऽपिशब्दार्थं ब्रूते। तत्र दरिद्रा मनुष्या अपि शीतवातादिपरिहाराय तृणादिभिराच्छन्नं गृहमिच्छन्ति, महाप्रभावा देवा उपस्तरणमिच्छन्तीति किमु वक्तव्यं येषां देवानां इच्छानुसारेण तदा तदा तत्र तत्र नवावसानं नूतनगृहं निष्पाद्यते। यो यजमान एवं देवानामिच्छानुसारेण विद्वानग्निमुपस्तृणाति अस्मिन् यजमाने परेद्युर्यक्ष्यमाणे सति पूर्वेद्युस्तत्समीपे हविर्भुजो देवता निवसन्ति। आरण्यं सायमश्नातीति सूत्रकारेण यदरण्यधान्यभोजनमुक्तं तदिदं विधातुं प्रस्तौति "यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्द्धे यदारण्यस्याश्नाति तेनारण्यान्यदनाश्वानुपवसेत्पितृदेवत्यः स्यात्" इति। अत्रायं विचारः। किं ग्राम्यधान्यस्यान्नं भोक्तव्यमुतारण्यधान्यस्य वा। अथवा भोजनमेव वर्जनीयमिति। तत्रारण्यधान्यभोजनपक्षमभ्युपेत्येतरपक्षद्वयमपोद्यते। पशवो हि द्विविधाः। ग्राम्या आरण्याश्च। गवाश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः। द्विजेडश्वापदपक्षिसरीसृपहस्तिमर्कटाद्याः सप्तारण्याः। अत एव उभयेऽपि यजमानेनावरुध्याः सम्पाद्या इति बुद्धिमन्त आहुः। यदि ग्राम्यान् व्रीह्यादीन् प्रत्युपवसेत् भोजनेन वर्जयेत् तेन वर्जनेन ग्राम्यान् पशून् सम्पादयति। यदारण्यस्य

नीवारादेरन्नं भुञ्जीत तेन भोजनेन आरण्यान् पशून् सम्पादयति। यद्यनाश्वानुभयविधभोजनवर्जं उपवासं कुर्यात् तदानीमयं व्रतविशेषः पितृदेवत्यो भवेत्। पितरो ह्यनश्नन्तं श्राद्धकर्तारमभिनन्दन्ति। इदानीं विदधाति "आरण्यस्याश्नातीन्द्रियं वा आरण्यमिन्द्रियमेवात्मन्धत्ते" इति। इन्द्रियाभिवृद्धिहेतुरारण्यधान्यं। अथ पक्षान्तरं विधातुं भोजनाभोजनयोर्दोषमाह "यदनाश्वानुपवसेत् क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभिमन्येत" इति। क्षोधुकः क्षुधाशीलः। अभिमन्येत हन्यात्। विधित्सितं पक्षान्तरं विदधाति "अपोऽश्नाति" इति। उक्तं दोषद्वयमत्र परिहरति "तन्नेवाशितं नेवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभिमन्यते" इति। अशितास्वप्सु अदनाभावादशितं न भवति। क्षुच्छान्तेरनशितमित्र न भवति। अतो न दोषद्वयं। अथोपवासपक्षं विधत्ते "वज्रो वै यज्ञः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यदनाश्वानुपवसति वज्रेणैव साक्षात् क्षुधं भ्रातृव्यꣳ हन्ति" इति। यज्ञस्य नरकपाताद्यनिष्टनिवारकत्वाद्वज्रत्वं। क्षुधो वैरित्वं प्रसिद्धं। यज्ञाङ्गभूतोपवासलक्षणेनानेन वज्रेणैव भाविजन्मनि प्राप्यमानं साक्षाद्भ्रातृव्यं मुख्यं वैरिणं क्षुद्रूपं हन्ति। अनेन यज्ञेन जन्मान्तरे अन्नबाहुल्यस्य लभ्यमानत्वात्।

अथ मीमांसा। षष्ठाध्यायस्य चतुर्थपादे चिन्तितं।

"वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः।
व्रतकालं लक्षयेद्वा, वत्सयुक्ते व्रते विधिः॥

भाति, रागाद्व्रतप्राप्तेर्वत्समात्रं विधीयते, ।

व्रतस्याकरणं वत्सः, कालस्तस्मादपाकृतेः" ॥ इति ।

दर्शपूर्णमासयोः श्रूयते । बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायामिति । व्रतं भोजनं । अतएवाम्नायते । अमाषममाꣳसं बङ्गसर्पिष्कं व्रतयतीति । तदेतद्व्रतं वत्समंयुक्तमत्र विधीयते । कुतः । वत्सैरिति तृतीयया साहित्यस्य प्रतिभानादित्येकः पक्षः । रागत इत्येव प्राप्तत्वाद्व्रतं न विधातव्यं, किन्तु वत्समात्रं विधेयमिति द्वितीयः पक्षः । न हि वत्सः पाण्यादिवद्व्रतस्य करणं । ततो न तस्य विधिः किन्तु वत्सानामपाकरणेन काल उपलक्ष्यते । तस्मिन् काले व्रतमुपेयात् । एवं पूर्णमासे बर्हिःसम्पादनकाले व्रतमुपेयादिति ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

---

यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधतेऽपः प्रणयति श्रद्धा वा आपः श्रद्धामेवारभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं मनो वावैता नातिनेदन्तीति मनसा प्रणयतीयं वै मनः ॥ १ ॥

अनयैवैनाः प्रणयत्यस्कन्नहविर्भवति य एवं वेद यज्ञायुधानि सम्भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत्सम्भरति यदेकमेकꣳ सम्भरेत्पितृदेवत्यानि स्युर्यत् सह सर्वाणि मानुषाणि द्वेद्वे सम्भरति याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते स्फ्यः ॥ २ ॥

च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य एवं वेद मुखतोऽस्य यज्ञः कल्पते यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यꣳ हविर्निरुप्यमाणमभिमन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति ॥ ३ ॥

देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यमेष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते तदुदित्वा वाचं यच्छति यज्ञस्य धृत्या अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु कस्त्वा युनक्ति स त्वा युनक्त्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु ॥ ४ ॥

वै मनः स्फ्य इति युनक्त्येकादश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

सप्तमे देवतापरिग्रहादिरुक्तः। अष्टमे यज्ञायुधसंस्मृतिरुच्यते। तत्र प्रथमं तावदपां प्रणयनं विधातुं प्रस्तौति "यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधते" इति। यो यजमानो मनसि देवतादिविषयां श्रद्धामसंनिधाप्य यष्टुं प्रयुङ्क्ते तदीयमिष्टं देवा ऋत्विजश्च न विश्वसन्ति। विधत्ते "अपः प्रणयति श्रद्धा वा आपः श्रद्धामेवारभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते" इति। अपां श्रद्धाहेतुत्वमैतरेयिणः समामनन्ति। आपो ह्यस्मै श्रद्धां संनमन्ते पुण्याय कर्मण इति। प्रत्यक्षञ्चैतत् स्नानाचमनादियुक्तस्य देव*पूजादावैकाग्र्यातिशयदर्शनात्। अतोऽपां प्रणयनेनैव श्रद्धाया उपस्थापितत्वाद्देवानामृत्विजाञ्चैतदीययज्ञे विश्वासो युक्तः। यद्यपि पौरोडाशीयककाण्डे अध्वर्युकर्तृकमिदं प्रणयनमभिहितं तथापि शाखाभेदादपुनरुक्तिः। शाखाभेदश्चापस्तम्बेन तत्रत्यमन्त्राणां साकल्येन अनुवादाद्विधिपुनरुक्तिबाहुल्याच्चावगन्तव्यः। पृथिवीं मनसा ध्यायतीति सूत्रकारेण प्रणयनकाले ध्यानमुक्तं। तदिदं विधातुं प्रस्तौति "तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं मनो वावैता नातिनेदन्तीति" इति।

* पूजादावधिकाराद्देवातिशयदर्शनादिति तै०।

तत्रापां प्रणयने केचिदभिज्ञा इत्याहुः। किमिति। एता आपो वचं शरीरस्य वृत्तिमतिनेदन्ति अतिक्रामन्ति वाचमपि अतिक्रामन्ति, न खलु प्रवहन्तीनां नद्यादिगतानामपां निवारणं शरीरेण वाचा वा कर्तुं शक्यते। मन एवैकमेता आपो नातिक्रामन्तीति। तदेतदुत्तरत्र स्पष्टीकरिष्यते। विधत्ते "मनसा प्रणयति" इति। पृथिवीं ध्यायतीति शेषः। ब्राह्मणान्तरमनुसृत्य सूत्रकारेणोक्तत्वात्। अनतिक्रमणमुपपादयति "इयं वै मनः। अनयैवैनाः प्रणयति" इति। मनसः पृथिवीवद्व्याप्तुं शक्यत्वात् पृथिवीत्वं। न हि नद्यादिगता आपः पृथिव्या अतिक्रमणे शक्ताः। मनसा प्रणयनस्य वेदनं प्रशंसति "अस्कन्नहविर्भवति य एवं वेद" इति। विधत्ते "यज्ञायुधानि सम्भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत्सम्भरति" इति। वक्ष्यमाणानि स्फ्यकपालादीनि यज्ञस्य साधनत्वादायुधानीत्युच्यन्ते। तान्यध्वर्युः सम्पादयेत्। साध्यसाधनयोरभेदोपचारात् यज्ञस्यैव तदायुधत्वं तत्तेनायुधसम्पादनेन यज्ञमेव सम्पादयति। अत्रायुधानां प्रयोगस्त्रिविधः। एकैकस्य प्रयोगः, सर्वेषां सहप्रयोगः, द्वयोर्द्वयोः प्रयोगश्चेति। तत्र तृतीयं विधातुमितरपक्षौ निन्दति "यदेकमेकꣳ सम्भरेत्पितृदेवत्यानि स्युर्यत्सह सर्वाणि मानुषाणि" इति। ईदृशौ पैतृकमानुषपात्रप्रयोगौ गृह्यकारेण दर्शितौ। द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि सकृदेव मनुष्यसंयुक्तान्येकैकशः पितृसंयुक्तानीति। विधत्ते "द्वे द्वे सम्भरति याज्यानुवाक्ययोरेव

रूपं करोत्यथो मिथुनमेव" इति। द्वित्वसाम्येन याज्यानुवाक्यारूपत्वं स्त्रीपुरुषात्मकमिथुनत्वञ्च। सम्पादनीयानां यज्ञायुधानां स्वरूपविशेषं विधातुं तद्वेदनं प्रशंसति "यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते" इति। यो यजमानो मुखतो यज्ञारम्भे दशैतानि सम्पादनीयानीत्यनुमन्यते अस्य यज्ञो निर्विघ्नेन अनुष्ठानक्षमो भवति। आयुधविशेषस्वरूपाणि विधत्ते "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य एवं वेद मुखतोऽस्य यज्ञः कल्पते" इति। स्फ्यो नाम बाहुमात्रः खड्गाकारः काष्ठविशेषः। कपालानि भग्ननूतनमृद्भाण्डलेशानि*। अग्निहोत्रहवणीलक्षणं सूत्रकार आह। वैकङ्कत्यग्निहोत्रहवणी बाहुमात्री अरत्निमात्री वा प्रसृताकृतिरिति। शम्या बाहुमात्रा गदाकृतिः काष्ठविशेषः। शिष्टानि शूर्पादीनि लोकप्रसिद्धानि। पुनरपि दशायुधवेदनप्रशंसनमुपसंहारार्थं, चकाराः परस्परसमुच्चयार्था अनुक्तदशायुधसमुच्चयार्था वा। तानि सर्वाण्यापस्तम्बो दर्शयति "उत्तरेण गार्हपत्याहवनीयौ दर्भान्त्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दशपूर्वाणि, स्फ्यश्च कपालानि चेति यथा समाम्नातम् अपराणि प्रयुज्य, स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरण-

---

* कपालानि भाण्डलेशसदृशानि इति का०।

मिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि, तान्युत्तरेणावशि-ष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणि" (आ० १प्र०।१५ख०) इति। यजमानस्याभिमन्त्रणं विधातुं प्रस्तौति "यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यं" इति। प्रतिप्रोच्य होष्यामीति प्रतिश्रुत्य। विधत्ते "हविर्नि-रुप्यमाणमभिमन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यं" इति। अग्निꣳ होतारमित्यादिमन्त्रः पूर्वप्रपाठके मम नामेत्यनुवाके (सं०प्र०५प्र०।१०अ०) समाम्नातो व्याख्यातश्च। देवाना-माह्वातारं तमग्निं इह यज्ञेऽहमाह्वयामि। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे ऽस्येत्यस्मिन्नुत्तरार्धे देवेभ्यः प्रतिश्रवणं विस्पष्टं। अस्य हविषो वियन्तु इदं हविर-श्नन्त्वित्यर्थः। इदमभिमन्त्रणं पुनः प्रशंसति "एष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते" इति। एष मन्त्रप्रयोगो यज्ञ-स्वीकाररूपः। हविषो वियन्त्वित्यनेन देवतामुद्दिश्य द्रव्य-त्यागस्य सूचितत्वात्। यजमानस्य मौनं विधत्ते "तदुदित्वा वाचं यच्छति यज्ञस्य धृत्यै" इति। तदभिमन्त्रणवाक्यमुक्त्वा मौनेन यज्ञो वहिरप्रकाशितत्वात् धृतो भवति। पुनरपि मौनं प्रशंसति "अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय" इति। सति वाग्व्यापारे विवक्षितशब्दविशेषतदर्थचिन्तया तत्प्रसक्तानुप्रसक्तचिन्तया च विक्षिप्तं मनः प्रकृताद्यज्ञात् स्खलति। अतः प्रजापतिरविक्षे-

पाय मनसैव यज्ञमकरोत्। तद्वद्यजमानोऽपि तत् तेन मौनेन मनसैव यज्ञं तनुते। तथा सति स्खलनाभावात् रक्षसामत्र प्रचारो न भवति। यज्ञयोगविधिमुन्नेतुं प्रस्तौति "यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु" इति। यो यजमानो यज्ञयोगकाले समागते सत्यप्रमत्तो यज्ञं युनक्ति स एव यु-ञ्जानेषु यजमानेषु युङ्क्त इति व्यपदेशमर्हति। अकाले तु योगः कृतोऽप्यकृत एव स्यात्। योगविध्युन्नयनमभिप्रेत्य तत्र करणभूतं मन्त्रमुदाहृत्य व्याचष्टे "कस्त्वा युनक्ति स त्वा युन-क्तित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु" इति। अयमपि मन्त्रः पूर्वप्रपाठके समाम्नातः। यः प्रजापतिः सर्वदा सर्वेषां यजमानानां यज्ञं युनक्ति स एवाद्य मदीयं यज्ञं युनक्तु। रथेऽश्वमिव मयि यज्ञं सम्बध्नातु। अनेन मन्त्रेण यज्ञं युञ्ज्यादित्युन्नीतो विधिः।

अथ मीमांसा। तृतीयाध्यायस्य प्रथमपादे चिन्तितं।

"द्रव्यस्य स्फ्यकपालादेः साङ्कर्यं वा व्यवस्थितिः।
यज्ञायुधत्वं सर्वाङ्गसमं तेनात्र सङ्करः॥
वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं सङ्करे सति।
अनुवादो ह्यायुधोक्तिर्व्यवस्थानेन पूर्ववत्"॥

दर्शपूर्णमासयोः श्रूयते "स्फ्यश्च कपालानि चाग्निहोत्र-हवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति। स्फ्यशब्देन खड्गाकारं काष्ठमुच्यते। अग्निहोत्रहवणी हविर्निर्वापसाधनं

प्रसृताकारं काष्ठपात्रं। शम्या गदाकारं काष्ठं। तत्र व्रीह्यादिद्रव्येषु अवघातादिसंस्काराणां साङ्कर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु साङ्कर्यं निराकर्तुमशक्यं। येन केनापि द्रव्येण यस्यां कस्याञ्चित् क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याविरोधात्। न च व्यवस्थामात्रेण यज्ञसाधनत्वमुपैतीति प्राप्ते ब्रूमः। स्फ्येनोद्धन्ति। कपालेषु श्रपयति। अग्निहोत्रहवण्या हवींषि निर्वपति। शूर्पेण विविनक्ति। कृष्णाजिनमधस्तादुलूखलस्याऽवस्तृणाति। शम्यायां दृषदमुपदधाति। उलूखलमुसलाभ्यामवहन्ति। दृषदुपलाभ्यां पिनष्टि। इत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं साङ्कर्यपक्षे प्रसज्येत। व्यवस्थापक्षेऽपि सम्बन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेत् न। उद्धननादिवाक्यसिद्धार्थानुवादित्वात्। न च वैपरीत्येनोद्धननादिवाक्यानामेव अनुवादित्वमिति वाच्यं। बहुवैयर्थ्यस्य जघन्यत्वात्। न चात्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यं। यज्ञायुधानि सम्भरतीत्यासादनविधानायोपयुक्तत्वात्। तस्मादवघातादिसंस्कारा इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

"दश यज्ञायुधानीति हविष्टेन विधिर्न वा।
आद्ये प्राप्ते पुरोडाशे समुच्चयविकल्पने॥
साधमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते।

स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः"॥

दर्शपूर्णमासयोः स्फ्यश्च कपालानि चेत्याद्यनुक्रम्य एतानि वै दश यज्ञायुधानीत्याम्नातं। तानि चात्र हविष्ट्वेन विधीयन्ते। कुतः। मानान्तरैरप्राप्तत्वेन अपूर्वार्थत्वात्। यदि तत्र पुरोडाशो हविर्भवेत् तदा तेन सहैतेषां समुच्चयो विकल्पो वास्त्विति प्राप्ते ब्रूमः। आग्नेयोऽष्टाकपाल इत्युत्पत्तिशिष्टेन पुरोडाशेन सह पश्चात् शिष्टानामायुधानां विकल्पः समुच्चयो वा न भवति। आयुधत्वं यज्ञसाधनत्वं। तच्च स्फ्येनोद्धन्ति कपालेषु अपयतीत्यादिशास्त्रसिद्धमेवात्रानूद्य यज्ञायुधानि सम्भरतीत्येषः सम्भरणविधिः स्तूयते। तस्मान्नात्र हविष्ट्वं।

एकादशाध्यायस्य तृतीयपादे चिन्तितं।

"देशपात्रर्त्विजोऽन्यस्मिन् प्रयोगेऽन्य उतोच्छिकाः।
भुक्त्यर्थं पर्णवत्तेऽन्ये वासोवत्ते स्युरच्छिकाः"॥

समे यजेतेत्युक्तो देशः। जुह्वादीनि पात्राणि। अध्वर्युप्रमुखा ऋत्विजः। ते चैकस्मिन् प्रयोग उपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति। इष्टान्निर्गता निरिष्टाः कुत्सिताः। निरिष्टकाः दुष्टाः पुनः प्रयोगानर्हा इत्यर्थः। यथा भोजन उपयुक्तं कदलीपलाशादिपर्णं प्रक्षाल्यापि न पुनः शिष्टाः तत् स्वीकुर्वन्ति तथात्रापि। अन्ये देशादयः प्रयोगान्तरे सम्पाद्या इति प्राप्ते ब्रूमः। यथा वस्त्रं पूर्वदिने प्रावरणायोपयुक्तमपि दिनान्तरे निरिष्टकं न भवति, शिष्टास्तदान्यदा स्वेच्छया दिनान्तरे स्वीकुर्वन्ति तद्वदत्रापि द्रष्टव्यं। इदं निरिष्टक-

मिदं नेत्यत्र शिष्टाचार एव प्रमाणं, शिष्टाश्च देशादीन्नियमेन न त्यजन्ति। तस्मादैच्छिकाः। तत्रैवान्यच्चिन्तितं।

"मा भूदन्यत्त्वनियमः पात्रे तत्त्वं किमैच्छिकं।
नियतं वाग्रिमो देशवन्नैवं प्रतिपत्तितः"॥

देशपात्रर्त्विजां साधारण्येनान्यत्त्वनियमे निवारिते सति पुनः पात्रेषु नियमान्तरसद्सद्भावश्चिन्त्यते। प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्ति उतास्तीति संशयः। यथा देशे कर्तृषु च त एवेति नियमो नास्ति ऐच्छिकत्वोक्तत्वात्, तथा पात्रेष्वपीति चेन्नैवं। आमरणं पात्राणां धारणीयत्वात्। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानेनामरणं धारणमेव गम्यते। ननु पात्रैरिति तृतीयया गुणभावावगमादर्थकर्मैव न तु प्रतिपत्तिः। तथा सति पात्रान्तरैरपि दाहनसिद्धेर्न धारणनियम इति चेन्नैवं। दक्षिणे पाणौ जुहूमासादयतीति द्वितीयया प्रतिपद्यमानत्वावगमात्। पूर्वेषामेव धारणं। तस्मात् सर्वेषु प्रयोगेषु पात्राणां तत्त्वं। तत्रैवान्यच्चिन्तितं।

"किं पौर्णमासीमारभ्य यद्वाधानमियं धृतिः।
प्रकृत्यर्थतयाद्यः स्यात् मरणानियमात्परः"॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः। आधानकाले पवमानेष्टिषु चोदनप्राप्तत्वात् पात्राण्याधानमारभ्य धारयितव्यानि। अन्यथा आधानपौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे सति पात्रा-

भावेन दाहाभावप्रसङ्गात्। तस्मादाधानमारभ्य धारणमित्ययमपरः पक्षोऽभ्युपगन्तव्यः ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके ऽष्टमोऽनुवाकः ॥ * ॥

---

प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमञ्च पौर्णमासीञ्चोक्थ्यञ्चामावास्याञ्चातिरात्रञ्च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति ॥ १ ॥

तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छत्तेन प्रजापतिं निरवासाययत्तेन प्रजापतिः परमां काष्ठामगच्छत्तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां काष्ठा-

मगच्छत्तेनाग्नीषोमौ निरवासाययत्तेनाग्नीषोमौ परमां काष्ठामगच्छतां यः ॥ २ ॥

एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहुर्वत्सञ्चोपावसृजत्युखाञ्चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोपदधाति पुरोडाशञ्च ॥ ३ ॥

अधिश्रयत्याज्यञ्च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिञ्च परिगृह्णाति पत्नीञ्च सन्नह्यति प्रोक्षणीश्चासादयत्याज्यञ्चैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ सम्पाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ॥ ४ ॥

उक्थ्येनोपाप्नोत्यगच्छतां यः पुरोडाशञ्च चत्वारिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥ * ॥

अष्टमे यज्ञायुधसम्भृतिरुक्ता। नवमे द्वादशद्वन्द्वसम्पत्तिरुच्यते। प्रथमं तावदनुष्ठातॄणां फलाधिक्याय वेदनविशेषविधिमुन्नेतुं प्रस्तौति "प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमञ्च पौर्णमासीञ्चोक्थ्यञ्चामावास्याञ्चातिरात्रञ्च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रः" इति। अत्र अग्निहोत्रपौर्णमास्यमावास्यायागा अल्पैर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अतएवाल्पफलाः, अग्निष्टोमोक्थ्यातिरात्रयागा बहुभिर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अतएवाधिकफलाः। तानुभयविधान् यज्ञान् प्रजापतिः सृष्ट्वा कनिष्ठपुत्रे पितेव कनीयःस्वग्निहोत्रादिषु अनुग्रहेण तुलया त्रीणि द्वन्द्वान्युन्मितवान्। तदनुग्रहादग्निहोत्रादीनि अग्निष्टोमादीनि समानि सम्पन्नानि। वेदनविशेषविधिमुन्नयति "य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति। प्रजापत्यनुग्रहादग्निहोत्रादीनामग्निष्टोमादिसाम्यं जानतस्तत्समानफलत्वकथनात् फलाधिक्याय अनुष्ठातृभिरग्निष्टोमादिसाम्यं भावयेत्, इति विधिरुन्नीयते। विद्यायुक्तस्य कर्मणः फलाधिक्यं छन्दोगा आमनन्ति। यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति। लोकेऽपि राज्ञा ग्रामेषु प्रेरिते राजमुद्राधारिणि नीचे कस्मिंश्चिद्भृत्ये राजत-

मुपचरन्तीनां प्रजानां भृत्यचित्तप्रसादेन फलाधिक्यमुपल-भामहे। काण्वैस्तु बृहदारण्यकस्य पञ्चमाध्याये कानिचि-दुपासनानि अथ सम्पद इति वाक्येनाम्नायन्ते। स्वल्पे कर्मणि अधिककर्मत्वस्य मनसा सम्पादनं सम्पत्। एतदेवाभिप्रेत्य सर्वस्मृतिपुराणागमादिषु सालग्रामप्रतिमादौ विष्ण्वादिबुद्धि-र्विहिता। तस्मादेतद्वाक्यमग्निहोत्रादौ अग्निष्टोमादिसम्पादन-विधिपरं। यद्यपि पूर्वमीमांसायां द्वितीयाध्याये य एवं विद्वान् पौर्णमासीं यजत इत्यस्य विद्वद्वाक्यस्य विधायकत्वं निराकृत्य अनुवादकत्वमुक्तं। तथापि कर्मविधेरेव तत्र नि-राकरणात् *सम्पद्विध्युन्नीतौ न कोऽपि विरोधः। भावना-विधिपरत्वे वाक्यमेतत् कर्मप्रकरणादुत्कृष्यत इति चेत् उत्कृ-ष्यतां नाम। अग्निचयनप्रकरणपठितानां मनसेत्युपास्तीनां प्रकरणोत्कर्षस्य व्यासेनैव निर्णीतत्वात्। अन्यपरस्य अन्यार्थत्वात् दर्शपूर्णमासौ प्रशंसितुमत्र पाठोऽस्तु। पुनरपि दर्शपूर्णमासौ प्रशंसति "परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छत्तेन प्रजापतिं निरवासाययत्तेन प्रजापतिः परमां काष्ठामगच्छत्तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां का-ष्ठामगच्छत्तेनाग्नीषोमौ निरवासाययत्तेनाग्नीषोमौ परमां काष्ठामगच्छतां य एवं विद्वान् दर्शपूर्णमासौ यजते परमा-मेव काष्ठां गच्छति" इति। परमे पदे सत्यलोके तिष्ठतीति परमेष्ठी चतुर्मुखः। तस्य लग्ने पूर्वस्मिन् कल्पे यजमानत्वेना-

---

* सम्पद्बुद्ध्युन्नीताविति ले०।

वस्थितस्यैव दर्शपूर्णमासयज्ञः प्रवृत्तः, तेन चेश्वरार्पणबुद्ध्याऽनुष्ठितेन स यजमानः परमां काष्ठां इदं परमेष्ठित्वपदं प्राप्तवान्। प्रजापतिर्दक्षादिः तं पूर्वस्मिन् जन्मनि तेनोत्तमफलहेतुदर्शपूर्णमासोपदेशेन निरवासाययत् तोषितवान्। अनुष्ठानाय प्रेरितवान् वा। स च तस्मिन् जन्मनि यजमानः तेनानुष्ठानेन परमां काष्ठां दक्षत्वपदं प्राप्तवान्। एवमितरत्र योज्यं। अत एव दर्शपूर्णमासयोः स्वर्गकामार्थत्वमाम्नातं, मीमांसकैर्विचारितञ्च। द्वन्द्वसम्पादनं विधातुं प्रस्तौति "यो वै प्रजातेन यज्ञेन यजते स प्रजया पशुभिर्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहुः" इति। प्रजातेन अत्यन्तविस्तृतेन। प्रजादिभिः प्रसूतो विस्तृतो जायते। द्वादशमासोपेतसंवत्सरसाम्येन द्वादशद्वन्द्वोपेतयज्ञस्य प्रसृतत्वं। द्वन्द्वानि विधत्ते "वत्सञ्चोपावसृजत्युखाञ्चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोपदधाति पुरोडाशञ्चाधिश्रयत्याज्यञ्च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिञ्च परिगृह्णाति पत्नीञ्च सन्नह्यति प्रोक्षणीश्चासादयत्याज्यञ्च" इति। गां दोग्धुमध्वर्युरयञ्चावः प्रजयेति मन्त्रेण वत्सं बन्धनान्मुञ्चेत्। क्षीरं श्रपयितुं मातरिश्वनो घर्म इति मन्त्रेणोखां गार्हपत्ये स्थापयेत्। अव रक्षो दिव इति शाखान्तरमन्त्रेण व्रीहीनवहन्यात्। इषमावदोर्जमावदेति मन्त्रेण पाषाणेन शम्यया वा पेषणदृषदुपले समाहन्यात्। देवस्य त्वेत्यादिमन्त्रेण पेषणाय

दृषदि तण्डुलानधिवपेत्। ध्रुवमसीत्यादिभिर्मन्त्रैः पुरोडाश-प्रथनाय अग्नौ कपालान्युपदध्यात्। घर्मोऽसीति मन्त्रेण तेषु कपालेषु पुरोडाशमधिश्रयेत्। अग्निस्ते तेज इति मन्त्रेण आज्यमाहवनीयेऽधिश्रयेत्। चिकीर्षितवेदिस्थाने पृथिवि देव-यजनीत्यादिमन्त्रैः स्तम्बयजुर्हरेत्। अररुस्ते दिवमिति मन्त्रेणा-ग्नीध्रोऽञ्जलिना मृत्पाणान् पांशूनुत्करे प्रक्षिप्तानभिगृह्णीयात्। वसवस्त्वा परिगृह्णन्त्वित्यादिभिर्मन्त्रैर्वेदिं परिगृह्णीयात्। आ-शासानेति मन्त्रेण योक्त्रेण पत्नीं सन्नह्यात्। घृतसधस्थेति शाखान्तरमन्त्रेण स्फ्यनिष्पादितायां रेखायां प्रोक्षणीरासाद-येत्। अग्नेर्जिह्वासीति मन्त्रेण रेखायामाज्यं सादयेत्। विहि-तानि द्वन्द्वानि प्रशंस्योपसंहरति "एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ सम्पाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते" इति। यद्यप्युक्तानां वत्स-विमोकादीनां चतुर्दशत्वात् सप्तैवैतानि द्वन्द्वानि तथापि चकारैः पूर्वानुवाकोक्तेषु दशसु यज्ञायुधेषु समुच्चितेषु द्वादशसम्पद्यन्ते।

अथ मीमांसा। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

"एवं विद्वान् पौर्णमासीममावास्यामितीरितं।
कर्मान्तरुत पूर्वोक्तसमुदायानुवादकं॥
कर्मान्तरं स्यादभ्यासाद्, मैवं द्रव्यं हि, देवता।
वार्त्रघ्नीत्यादितो लभ्या,ऽनुवादस्तु न युज्यते॥
वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता।
पौर्णीत्यनूद्यते पौर्णमासीयुक्तं चिकं तथा॥

अमेत्यपि, समूहस्य द्वित्वसिद्धिः प्रयोजनं ।
सद्दस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥
विद्वद्वाक्ये पृथग् विध्यावृत्तिराग्नेय आदिना ।
विहितस्य फलित्वेन प्राधान्यादितरे गुणाः" ॥

इदमाम्नायते। य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इत्यत्र यजतिना कर्मान्तरं विधीयते न तु प्रकृता आग्नेयादयः षड्भागा अनूद्यन्ते। आग्नेयादयः कालसंयुक्तास्तत्प्रकरण एवाम्नाताः। यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवतीति। तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजतीति ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदिति। ऐन्द्रं दध्यमावास्यायामिति। ऐन्द्रं पयोऽमावास्यायामिति च। एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य कर्मणोऽन्यत्वे सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते। न च कर्मान्तरत्वे द्रव्यदेवतयोरभावो* ध्रौवादिसद्भावात्। अत एवोक्तं†। ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी। रूपवन्तौ ततो यागौ विधीयेते पृथक्कयेति। सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवाया आज्यमिति ध्रौवस्य साधारणत्वं श्रुतं। देवताया मान्त्रवर्णिकत्वमित्युन्नेतव्यं। तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायामिति। वार्त्रघ्नौ

* द्रव्यदेवतयोरभावादिति का०।

† ध्रौवं द्रव्यमित्यादि अतएवोक्तमित्यन्तं ते० पुस्तके नास्ति, एष तु का० पुस्तकपाठः परन्तु न सम्यक् परिस्फुटः।

वृधन्वत्यौ ऋचौ क्रमेण कालद्वयोपेते विधीयेते। तत्र अग्निर्वृत्राणि जङ्घनदित्येको वार्त्रघ्नो मन्त्रः। त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहेत्यपरः। तयोरुक्तावग्नीषोमौ पौर्णमासदेवता, एवमनन्तराम्नातयोर्वृधिधातुयुक्तयोर्मन्त्रयोरुक्तावग्नीषोमावमावास्यादेवता, ताभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते। षड्भागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिददर्शनाद्विदद्वाक्यमनर्थकं स्यात्। न केवलं तदानर्थक्यं किन्तु पौर्णमास्यां पौर्णमास्या यजेत। अमावास्यायाममावास्यया यजेतेत्येतदपि व्यर्थं स्यात्। न चैतत्कालविधायकं यदाग्नेय इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात्। कर्मान्तरत्वे तु कालं विधास्यति। तस्मात् कर्मान्तरविधिरिति प्राप्ते ब्रूमः। आस्तां तावत् द्रव्यं, देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते। वार्त्रघ्नीवृधन्वत्योराज्यभागदेवताप्रतिपादकत्वात्। होत्रमन्त्रकाण्डे सामिधेनीरावाहननिगदप्रयाजमन्त्रांश्चाम्नाय प्रयाजानन्तरभाविनोराज्यभागदेवतयोः क्रमेण वार्त्रघ्नीवृधन्वत्यावाम्नाते। लिङ्गञ्चाग्निविषयं सोमविषयञ्च तत्रोपलभ्यते। ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमुपगम्यते। यदार्त्रघ्नी पूर्णमास इत्यादिवाक्यं तल्लिङ्गक्रमक्लृप्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे, न तु नूतनकर्माङ्गतां तयोर्विदधाति। अतो रूपराहित्याद्विदद्वाक्यं कर्मान्तरविधायकं न भवति। किन्तर्हि पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुव-

इति। न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः। तत्तत्कालविहितयोर्यागत्रिकयोरुपलक्षितत्वात्। न चानुवादो व्यर्थः समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात्। तत्सिद्धौ च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यस्मिन् फलवाक्ये षड्यागविवक्षया द्विवचननिर्देश उपपद्यते। यद्यप्युक्तमनुवादपक्षे पौर्णमास्यामित्यादीनां वैयर्थ्यमिति तदयुक्तं कालविधानासम्भवेऽप्येकैकत्रिकस्य सहप्रयोगविधानात्। आग्नेयोपांशुयाजाग्नीषोमीयाणां त्रयाणां पौर्णमासकालविहितानां सहप्रयोगः पौर्णमास्येत्यनेन तृतीयैकवचनान्तेन विधीयते। एवमितरत्रापि। ननु विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नानुवादकत्वं तस्य यागविधायकत्वाभ्युपगमात्। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानि तु विहितयागानुवादेन द्रव्यदेवतालक्षणगुणविधायकानीति चेन्न। तथा सत्येकेन वाक्येन अनेकगुणविध्यसम्भवात्। प्रतिगुणं पृथग्विधौ विध्यावृत्तिः प्रसज्येत। आग्नेयादिवाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्यावृत्तिदोषः। तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकं। किञ्चानुवादमनभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनाञ्च गुणप्रधानभावो न सिध्येत्। तथा हि समिधो यजति, आघारमाघारयति इत्यादयः कालयोगरहिताः केचिद्विधय आम्नाताः। यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चेत्यादयः कालयुक्ता अपरे। तेषामुभयेषां प्रकृतत्वाद्दर्श-

पूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन सर्वेषां फलसम्बन्धो बोधनीयः, दर्शपूर्णमासाभ्यामिति द्विवचनं बहुवचनत्वेन परिणेतव्यं। विदद्वाक्यविहिते द्वे कर्मान्तरे प्रयाजादयः आग्नेयादयश्च इत्येतेषु द्वित्वासम्भवात्, सर्वेषाञ्च फलसम्बन्धे राजसूयगतेष्टिपशुसोमवत् समप्राधान्यात्, प्रयाजादीनां गुणभावो न स्यात्। तदभावे चानङ्गत्वात् सौर्यादिविकृतिष्वाग्नेयादीनामिव अतिदेशो न स्यात्। अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात् समुदायद्वित्वेन द्विवचनार्हत्वाच्चाग्नेयादीनामेव फलसम्बन्धेन प्राधान्यं, प्रयाजादीनान्तु गुणभाव इति न कोऽपि दोषः। तस्माद्विदद्वाक्यमनुवादकं।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितं।

"दर्शादिसर्वकामेभ्योऽनुवादो वा फले विधिः।
अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते॥
*उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने।
फलसंयोगबोधेन भवेदेष फले विधिः"॥

इदमाम्नायते। एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासाविति। एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यो ज्योतिष्टोम इति। तत्र सर्वेभ्य इत्यनेन वाक्येन दर्शपूर्णमासयोः न फले विधिः विधायकस्य लिङादेर्भावनावाचिन आख्यातस्य चाभावात्। अनुवादस्तु भविष्यति सर्वकामानां प्राप्तत्वात्। न च दर्शपूर्णमासाभ्यां स्वर्गकामो

* उत्पत्तिभावनासिद्धेराश्रित्येति तै०।

यजेतेति विधानात् स्वर्ग एव प्राप्नोति न तु कामान्तरमिति वाच्यं। अङ्गोपाङ्गकामानामपि प्राप्तत्वात्। सामिधेन्यो दर्शपूर्णमासयोरङ्गं। तत्र कामाः श्रूयन्ते। एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य चतुर्विंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्येति। तथा सान्नाय्ययागस्य दोहनमङ्गं। तत्साधनं वत्सापाकरणमुपाङ्गं। तत्र पलाशशाखाहरणे काम आम्नातः। यं कामयेत पशुमान्त्स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत् पशुमन्तमेवैनं करोतीति। एतेन सर्वकामा अनूद्यन्त इति प्राप्ते ब्रूमः। मा भूतामस्मिन् वाक्ये विधिभावने तथाप्युत्पत्तिवाक्यसिद्धे ते आश्रित्य* तादर्थ्यवाचिन्या चतुर्थ्या फलसंयोगो बोध्यते। तस्मादशेषफले विधिः। तृतीयाध्यायस्याष्टमपादे चिन्तितं।

"वत्सञ्चोपसृजेत्तद्वदुखाञ्चाधिश्रयेदिति।
द्वादशद्वन्द्वकर्मैतत् स्वामिनो वेतरस्य वा॥
आद्यः पाठात्स्वामिकाण्ड, तादर्थ्येन परिक्रयात्।
महाकाण्डाङ्कितोऽन्त्योऽस्तु द्वन्द्वता तत्र कीर्त्यते"॥

दर्शपूर्णमासयोर्याजमानकाण्ड श्रूयते। द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहुर्वत्सञ्चोपावसृजत्युखाञ्चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्तीत्यादि। तत्र गां दोग्धुं वत्सोपसर्जनमेकं कर्म, दोहनेन सम्पादितं चीरं धारयितुं पिठरस्थापनमपरं कर्म, तदेतदुभयमेकं द्वन्द्वं। तथा व्रीहीणामवघातो दृषदुपलयोः पाषाणान्तरेण समाघात इत्येतदुभयं

* वाक्यसन्देशाश्रित्येति ते०।

द्वितीयं द्वन्द्वं। एवं द्वादश कर्मद्वन्द्वान्यनुष्ठेयान्यत्राम्नातानि। तेषां याजमानकाण्डे पठितत्वात् समाख्यया यजमानेन तान्यनुष्ठेयानीति प्राप्ते ब्रूमः। यजमानस्य यानि कार्याणि तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः। किञ्च यजुर्वेदे याजमानमिदमवान्तरकाण्डं, महाकाण्डं त्वाध्वर्यवमेव। तत्रैते वत्सापाकरणादयो धर्मा आम्नाताः। तस्मादध्वर्युरेवताननुतिष्ठेत्। याजमाने तु काण्डे तेषामनुष्ठानप्रकारस्त्वोदितः किन्तु परिगणनया द्वन्द्वसम्पादनमात्रमेवाम्नातं। तेन यजमानस्तामानुपूर्वीं मनसि निधाय अध्वर्योरनुष्ठाने प्रमादराहित्यमनुसन्धातुं प्रभवति। तस्मादध्वर्योरेवानुष्ठानं॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ *॥

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमित्याह ध्रुवानेवैनान् कुरुत उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमित्याहाप्रतिवादिन एवैनान् कुरुतेऽभिभूरस्यभिभूरहꣳ सजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेन॥ १॥

एवैनं युनक्ति यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराभावयन् यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान् पराभावयत्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेद्यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म ॥ २ ॥

कुरुते संवत्सरे पर्यागत एताभिरेवोपसादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं ॥ ३ ॥

यज्ञस्याशीर्गच्छति यदृचा विशं यज्ञस्याशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन यजते यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याशीर्गच्छेदिति तस्यैता

व्याहृतीः पुरोऽनुवाक्यायां दध्याद्भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या भ्रातृव्यमेवास्य यज्ञस्य ॥ ४ ॥

आशीर्गच्छति यान् कामयेत यजमानान्त्समावत्येनान् यज्ञस्याशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोऽनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च एकां तथैनान्त्समावती यज्ञस्याशीर्गच्छति यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परिगृह्णाति मनोऽसि प्राजापत्यं ॥ ५ ॥

मनसा मा भूतेनाविशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन्धत्ते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन्धत्ते ॥ ६ ॥

तेनैव ब्रह्म राष्ट्रमेवास्य यज्ञस्य प्राजापत्यꣳ षट्चिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ ० ॥

नवमे दन्दसम्पादनमुक्तं। दशमे हविःसादनं विधीयते। प्रथमं तावत् द्वितीयानुवाकस्य पूर्वभागोक्तानां मन्त्राणां व्या-

ख्यानं। तत्र परिध्यनुमन्त्रणमन्त्रानुदाहृत्य व्याचष्टे "ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमित्याह ध्रुवानेवैनान् कुरुत उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमित्याहाप्रतिवादिन एवैनान् कुरुतेऽभिभूरस्यभिभूरहꣳ सजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते" इति। सजातेषु ध्रुवो भूयासमित्यनेन न केवलं स्वस्यैव ध्रुवत्वं प्रार्थितं किन्त्वेनान् ज्ञातीनपि ध्रुवानेव कर्तुं प्रार्थितं। स्वस्यानुग्रत्वेन अग्निचिता ज्ञातयः प्रतिवादिनो भवन्ति। अत उग्रत्वप्रार्थनेन तन्निवार्यते। ज्ञातिमध्ये यः कोऽप्येनं यजमानं प्रत्युत्पिपीते प्रतिकूलो भूत्वोत्सादयितुमिच्छति तं प्रतिकूलमभिभविता भूयासं इत्यनेनोपास्यते उपक्षिपति*। अग्नियोगमन्त्रमादौ व्याचष्टे "युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति" इति। एष मन्त्रपाठ एव अग्नेर्योगो भवति त्वामग्निं युनज्मीति मन्त्रेण श्रवणात्। आमनस्य हविषो मन्त्रं व्याचष्टे "यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराभावयन् यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान् पराभावयति" इति। यज्ञस्य हि द्वावंशौ समृद्धो व्यृद्धश्च। यथाशास्त्रमनुष्ठितः समृद्धः। अतथाभूतो व्यृद्धः। तत्र समृद्धो देवानां स्वर्गप्राप्तिहेतुः। व्यृद्धो ऽसुराणां तिरस्कारहेतुः। अतोऽस्मिन्मन्त्रे रिष्यात् स्कन्दादिति व्यृद्धमनूद्य

* उपक्षपयतीति का०।

तेन हन्मि सपत्नमिति वैरिपराभवः कथ्यते। मम्त्रद्वेन स्वर्गं प्राप्नोमीत्यर्थो लभ्यते। भूर्भुवः सुवरिति व्याहृतिभिरग्निहोत्रहविष उपसादनं विधत्ते "अग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेद्यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते" इति। आधानानन्तरमेव अनुष्ठेयत्वात्प्राथम्येन सर्वयज्ञेष्वग्निहोत्रस्य मुखत्वं। व्याहृतयस्तु त्रैलोक्यात्मनो विराड्रूपस्य परब्रह्मण्यारोपितशरीरस्य वाचकत्वेन ब्रह्मरूपाः। अतः प्रशस्ते यज्ञमुखे प्रशस्तं ब्रह्मरूपव्याहृतित्रयं कृतवान् भवति। अग्निहोत्रारम्भदिनगते हविःसादने व्याहृतीर्विधाय कालान्तरगतेऽपि सादने विदधाति "संवत्सरे पर्यागत एताभिरेवोपसादयेत्" इति। आद्यन्तयोर्दिनयोर्व्याहृतिभिरुपसादनं प्रशंसति "ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति" इति। अग्निहोत्रवत्कर्मान्तरेऽपि व्याहृतिभिरासादनं विधत्ते "दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति" इति। यज्ञो ज्योतिष्टोमादिः। ततः पूर्वभावित्वाद्दर्शादेर्मुखत्वं। अन्यत्रापि व्याहृतीर्विधत्ते "यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं यज्ञस्याशीर्गच्छति यदृचा विशं यज्ञस्याशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन

यजते" इति। यज्ञसम्बन्धि किञ्चिदङ्गं साम्ना क्रियते यथा बहिष्पवमानादि । अन्यत्किञ्चिदङ्गमृचा क्रियते यथा याज्या-पुरोऽनुवाक्यादि। तत्र सामसाध्येनाङ्गेन यत्फलं तद्राष्ट्रं प्राप्नोति । राष्ट्रे सस्याद्यभिवृद्धिर्भवतीत्यर्थः । ऋक्साध्येनाङ्गेन यत्फलं तद्विशं प्रजां प्राप्नोति। प्रजाया आयुरारोग्यादि वर्धत इत्यर्थः । अथैवं सति ब्राह्मणो यजमानः फलप्रदैर्यजुर्भिर्विरहितत्वादनाशीर्केण निष्फलेन यज्ञेनेष्टवान् भवति, अतो यज्ञरूपा व्याहृतीः प्रयुञ्ज्यात् । होत्रा अनुवचनीयाः प्र वो वाजा इत्यादय ऋचः सामिधेन्यः। तदनुवचनात्प्रागेव होता व्याहृतीः पठेत् । *तद्देवताब्रह्मरूपं व्याहृतित्रयमेव सामिधेनीनां प्रतिपदं प्रारम्भं कृतवान् भवति। तथा सति यजमानः सफलेन यज्ञेनेष्टवान् भवति। प्रकारान्तरेण विनियोगं हेयतया उपन्यस्यति "यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोऽनुवाक्यायां दध्याद्भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या भ्रातृव्यमेवास्य यज्ञस्याशीर्गच्छति" इति। यं यजमानं प्रति होता द्वेषादेवं कामयेत, अस्य यज्ञस्य फलं यजमानवैरिणं गच्छेदिति, तस्य यजमानस्य यागे पुरोऽनुवाक्यायाः प्राग् व्याहृतीः प्रयुञ्ज्यात् । तदा पुरोऽनुवाक्या वैरिदेवतेति कृत्वा तत्फलं वैरिगाम्येव भवति। प्रकारान्तरेण विनियोगमुपादेयतया विधत्ते "यान् कामयेत यजमानान्त्समावत्येनान् यज्ञस्याशीर्गच्छेदिति तेषामेता व्या-

* तावता ब्रह्मरूपमिति त० ।

हृतीः पुरोऽनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च एकां तथैनान्त्समावती यज्ञस्याशीर्गच्छति” इति। बहुयजमानकानामहीनसत्त्राणामङ्गभूतेष्टिषु होता यद्येवं कामयेत तान् सर्वान् यजमानान् यज्ञस्य फलं सममेव प्राप्नुयादिति तेषां यजमानानां यागे व्याहृतीरेवं दध्यात्। पुरोऽनुवाक्याया अर्धर्चेऽभिहिते सति प्रथमा व्याहृतिः। याज्यायाः पुरस्ताद्द्वितीया व्याहृतिः। याज्याया अर्धर्चेऽभिहिते सति तृतीया व्याहृतिः। तथा सति एनान् सर्वान् यजमानान् यज्ञस्य फलं साम्येन प्राप्नोति। तामेतां प्राप्तिं दृष्टान्तेन स्पष्टयति “यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परिगृह्णाति”इति। यथा लोके सर्वतः प्रसृतो मेघः पक्षपातमन्तरेण सर्वेषु देशेष्वेकरूपं सुवृष्टं सस्यनिष्पत्तिक्षमं वर्षं मुञ्चत्येवमयं यथोक्तव्याहृत्युपेतो यज्ञः सर्वयजमानसङ्घाय सुफलं साधारण्येन प्रयच्छति। तेन च सुवृष्टेन नद्यां पूर्णायां सर्वे जनाः स्थलया कूलेन उदकं परिगृह्णन्ति। तद्वद्यजमानसङ्घ आशिषा साधारणफलेन युक्तमिमं यज्ञं परिगृह्णाति। सौवाघारस्रुच्याघारानुमन्त्रणमन्त्रौ व्याचष्टे “मनोऽसि प्राजापत्यं मनसा मा भूतेनाविशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन्धत्ते। वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन्धत्ते” इति। सर्वव्यवहारसाधनस्य मनसः प्रजापतिना प्रथमसृष्टत्वात् मनसः प्राजापत्यत्वं प्रथमसृष्टिश्च होतृ-

ब्राह्मणकाण्डे समाम्नायते "इदं वा अग्रे नैव किञ्चनासीत् न द्यौरासीत् न पृथिवी नान्तरिक्षं तदसदेव सन्मनोऽकुरुत स्यामिति"(ब्रा०२का०।२प्र०।९अ०) इति। बृहदारण्यकेऽप्याम्नातं "तन्मनोऽकुरुत आत्मन्वी स्यामिति" इति। प्रजापतिर्यज्ञानसृजतेत्युक्तत्वात् प्राजापत्यो यज्ञः। अनेन मन्त्रपाठेन तौ मनोयज्ञौ स्वस्मिन् स्थापयति। इन्द्रेण व्याप्तत्वाद्वागैन्द्री। ताञ्च मन्त्रपाठेन स्वात्मनि स्थापयति॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः॥ * ॥

---

यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशत आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते यो वै यज्ञस्य प्रायणं प्रतिष्ठां॥ १ ॥ उदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छत्याश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कार

एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनं य एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति यो वै सूनृतायै दोहं वेद दुह एवैनां यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु॥ २ ॥

श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह इत्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनां देवा वै सत्रमासत तेषां दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्नाश्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति विद्युतं॥३॥

अजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण ततो वै तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते प्रजापतिं त्वो वेद* प्रजापतिस्त्वं वेद† यं प्रजापतिर्वेद स पुण्यो भवत्येष वै छन्दस्यः प्रजापतिराश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति वसन्तं॥ ४ ॥

ऋतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेदाग्नीषोमयोरहं देवयज्यया चक्षु-

* त्वोवेदेति त्वः॥वेद। इति पदपाठः।
† त्वंवेदेति त्वं॥वेद। इति पदपाठः।

ष्मान् भूयासमित्याहाग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान् ताभ्यामेव चक्षुरात्मन्धत्तेऽग्नेरहं देवयज्ययान्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैव ॥ ५ ॥

अन्नाद्यमात्मन्धत्ते दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोत्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहाग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन् ताभ्यामेव भ्रातृव्यꣳस्तृणुत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रियाव्येवान्नादो भवतीन्द्रस्य ॥ ६ ॥

अहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रियाव्येव भवति महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमित्याह जेमानमेव महिमानं गच्छत्यग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठति ॥ ७ ॥

प्रतिष्ठामन्नादस्तु विद्युतं वसन्तं तेनैवेन्द्रस्याष्टाचिꣳशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः ॥ * ॥

दशमे हविःसादनं विहितं। एकादशे त्वाश्रावणादिमन्त्राः प्राधान्येन विधीयन्ते। तेषां पञ्चमन्त्राणामुत्पत्तिं विधातुं प्रस्तौति "यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते" इति। अयं मन्त्रसङ्घः सप्तदशाक्षरोपेतत्वात् प्रजापतिसृष्टत्वाच्च सप्तदशः प्रजापतिरित्यभिधीयते। स च यज्ञमन्वायत्तः सर्वयज्ञेष्वनुगतः। तद्विज्ञानः* सम्पूर्णेन यज्ञेन प्रतिष्ठितो भवति। वैकल्याभावाच्चायं यज्ञान्न भ्रष्टो भवति। मन्त्रानुत्पादयति "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते" इति। एतेषु पञ्चसु मन्त्रेष्वाद्यस्य मन्त्रत्रयस्य विनियोगमापस्तम्बोऽध्वर्युकाण्डे दर्शयति (आ०१।१५।) 'ब्रह्मन् प्रवरायाश्रावयिष्यामीति ब्रह्माणमामन्त्र्य आश्रावयोश्रावय श्रावयोमाश्रावयेति वाश्रावयति। अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यं सम्मार्गांश्च धारयन् प्रत्याश्रावयति' इति। 'अवद्यन्नमुष्मा अनुब्रूहीति पुरोऽनुवाक्यां संप्रेष्यत्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणातिक्रम्य आश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकं'(आ०१।१८।) इति। आश्रावयेत्ययमेव पाठोऽत्रत्यः। ओश्रावय श्रावय ओमाश्रावयेति च त्रयं शाखान्तरीयं। हे आग्नीध्र यक्ष्यमाण-

* तद्विधिरस्येति तै०।

देवतां प्रति तुभ्यमिदं दीयत इत्याभिमुख्येन आवयेत्यध्वर्युणोक्ते सति स आग्नीध्रो अस्त्वित्यङ्गीकृत्य श्रौषडितिशब्देन आवयति। हे देवाः तद्विषयमिदं हविर्दानं शृणुतेत्यर्थः। हे होतर्यज याज्यां पठेत्यर्थः। इतरस्य तु मन्त्रद्वयस्य विनियोगमाश्वलायनो होतृकाण्डे दर्शयति 'आगूर्याज्यादिरनूयाजवर्जं ये यजामह इत्यागूर्वषट्कारोऽन्त्यः' (आश्व०१।५।) सर्वे ये वयं होतारोऽध्वर्युणा यजेति प्रेषिताः ते वयं यजामहे याज्यां पठामः। वषट्कारशब्देन वौषडित्येवंरूपो मन्त्रो विवक्षितः। तच्चाश्वलायन उदाहृत्य दर्शयति 'ये यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु वौषडिति वषट्कार इति' इति। हविर्दीयत इति तस्य शब्दस्यार्थः। एतेषां पञ्चमन्त्राणां महिमानं वक्तुं प्रस्तौति "यो वै यज्ञस्य प्रायणं प्रतिष्ठामुदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति" इति। प्रायणं प्रारम्भः। प्रतिष्ठा मध्यकालवर्त्यनुष्ठानं। उदयनं समाप्तिः। यो यजमानो यज्ञस्य मुख्यं प्रारम्भादित्रयं वेद तदीयो यज्ञः प्रतिष्ठितः साङ्गः, अरिष्टो वैकल्यरहितः, तादृशेन यज्ञेन संस्थां फलपर्यन्ततां प्राप्नोति। मन्त्रमहिमानं वक्ति "आश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनं य एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति" इति। आद्यो मन्त्रो मुख्यः प्रारम्भः। मन्त्रत्रयं प्रतिष्ठा। अन्त्य उदयनं। देवतोद्देशेन द्रव्यत्यागरूपस्य यागशरीरस्य एतैरेव मन्त्रैर्निष्पन्नत्वात्। अवशिष्टानि प्राच्यान्यु-

दीक्षानि चाङ्गानि शरीरगतवस्त्रालङ्कारादिस्थानीयानि। प्रकारान्तरेण महिमानं वक्तुं प्रस्तौति "यो वै सूनृतायै दोहं वेद दुह एवैनां" इति। सूनृता समीचीना वाक् सम्यक्त्वञ्च तस्याः सत्यप्रियरूपत्वं। अत एव स्मर्यते।

"सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियं।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः" इति॥

सा च कामधेनुवत् परितोषहेतुत्वात् गोत्वेनात्र विवक्षिता। तस्याश्च दोहनप्रकारं यो यजमानो वेद सोऽवश्यमेनां दुग्धे। कासावत्र सूनृता को वा तद्दोहनप्रकार इत्याशङ्क्य तदुभयं दर्शयन् मन्त्रमहिमानं वक्ति "यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह इत्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनां" इति। लोके हि धोक्ष्यमाणाया गोराभिमुख्याय किमपि भक्ष्यं घासादिकं दातुं साङ्केतिकेन नाम्ना तामाह्वयन्ति। अत एव प्रवर्ग्यब्राह्मणे घर्मदुह आह्वानमेवमाम्नायते। इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै देवनामानि। देवनामैरेवैनामाह्वयति। असावेह्यसावेह्यसावेहीत्याह। एतानि वा अस्यै मनुष्यनामानि। मनुष्यनामैरेवैनामाह्वयतीति। तद्वदत्रापि आश्रावयेति मन्त्रपाठेनैव एनां सूनृतामाह्वदाह्वयति। अस्तु श्रौषडिति पाठेन उपावास्राक् वत्समुपावसृजति। यजेति पाठेन उदनैषीद्दोहनपात्रमुन्नयति। ये यजामह इति पाठेन उपासदत् दोग्धा प्रत्यासीदति। वौषडिति पाठेन

दोग्धि। अत्र रूपकत्वेन परिकल्पनान्मन्त्राणां तत्तदर्थवाचकत्वं नापेक्षितं। सामर्थ्यान्तरकल्पनया पुनर्महिमानं वक्ति "देवा वै सत्रमासत तेषां दिशोऽदस्यन् त एतामार्द्रां पङ्क्तिमपश्यन्नाश्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति विद्युतमजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण ततो वै तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते" इति। सत्रमासीनानां देवानां केनापि वैकल्येन वृष्ट्यभावाद्दिश उदस्यन् नानादिग्भूतानि सस्यानि शोषणेन उपक्षीणानि, तत्परिहाराय देवा आर्द्रां पुष्टिहेतुभूतामेतां पङ्क्तिं मन्त्रपञ्चकमपश्यन्। स्पष्टमन्यत्। पुनरपि प्रकारान्तरेण मन्त्रमहिमानं दर्शयितुं प्रस्तौति "प्रजापतिं त्वो वेद प्रजापतिस्त्वं वेद यं प्रजापतिर्वेद स पुण्यो भवति" इति। त्वशब्दः सर्वनामगणे पठित एकशब्दपर्यायः। अत एव संप्रदायविद उत त्वः पश्यन्न ददर्श वाचमिति ऋचमेवं व्याचक्षते। अप्येकः पश्यन्न पश्यतीति। सप्तदशाक्षररूपमेनं प्रजापतिमेको यजमानो वक्ष्यमाणमहिमोपेतं वेद स च प्रजापतिः ज्ञातारमेकं यजमानं वेद जानाति अनुगृह्णाति। यमनुगृह्णाति सोऽन्येभ्यो यजमानेभ्यः पुण्यादुत्कृष्टो भवति। तन्महिमानं दर्शयति "एष वै छन्दस्यः प्रजापतिराश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति" इति। एष सप्तदशाक्षररूपः प्रजापतिः छन्दस्यः छन्दःसु वेदेषु सारत्वेन निष्पन्नः। अत एव तृतीयकाण्डे समाम्नायते "एतद्वै छन्दसां

वीर्यमाश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारः" इति। य एवं प्रजापतिछन्दःसारं वेद स पुण्य उत्कृष्टो भवति। लो वेद त्वं वेदेत्यत्रोभयत्रैकपद्यं साम्प्रदायिकं। द्वितीयानुवाकोक्तानां प्रयाजानुमन्त्रणमन्त्राणां रूपककल्पनया तात्पर्यं व्याचष्टे "वसन्तमृतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेद" इति। ऋतुदेवतास्तत्कल्पनया प्रीयन्ते प्रीतास्त्वास्मै यजमानाय यथापूर्वं कल्पन्ते ऽविपर्यासेन प्रवर्तन्ते। स्वस्वकालोचितपुष्पागमसन्तापवृष्ट्यादिलक्षणयुक्ता भवन्ति। वेदितुरपि तदेव फलं। आज्यभागानुमन्त्रणमन्त्रं व्याचष्टे "अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याहाग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान् ताभ्यामेव चक्षुरात्मन्धत्ते" इति। चक्षुषी वा एते यज्ञस्य यदाज्यभागावित्यस्मिन्ननुवाके (सं०२का०।६प्र०।२अ०) यज्ञचक्षुष्ट्वमाज्यभागयोः सम्यक् प्रतिपादितं। अतस्तदीयदेवताभ्यां यज्ञस्य चक्षुष्मत्त्वं यजमानस्य तत्फलञ्चोच्यते। आग्नेययागानुमन्त्रणमन्त्रं व्याचष्टे "अग्नेरहं देवयज्ययान्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैवान्नाद्यमात्मन्धत्ते" इति। उपांशुयाजानुमन्त्रणमन्त्रं व्याचष्टे "दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोति" इति। एतया उपांशुयाजरूपया दब्ध्या वैरिघातिन्या हेत्या अदभ्नुवन् हिंसितवन्तः। अनयैव दब्ध्या भ्रातृव्यं वैरिणं दभ्नोति मारयतीत्यर्थः।

पौर्णमासीगतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहाग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन् ताभ्यामेव भ्रातृव्यꣳ स्तृणुते" इति। वृत्रनामकोऽसुरोऽग्नीषोमौ देवौ दन्तैः संदष्टवान्। तौ निःसारयितुमिन्द्रः शीतज्वरसन्तापौ वृत्रे प्रयुज्य जृम्भमाणाद्वृत्रात्तौ निःसार्य वृत्रं हतवानिति द्वितीयकाण्डे स्पष्टीभविष्यति। स्तृणुते हिनस्तीत्यर्थः। अमावास्यागतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे "इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रियाव्येवान्नादो भवति" इति। सान्नाय्यानुमन्त्रणमन्त्रं व्याचष्टे "इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रियाव्येव भवति" इति। गतश्रियां राजन्यादीनां सान्नाय्यानुमन्त्रणमन्त्रं व्याचष्टे "महेन्द्रस्याहं देवयज्यया जेमानं महिमान गमेयमित्याह जेमानमेव महिमानं गच्छति" इति। जेमानं जेतृत्वलक्षणं, महिमानं विश्वैश्वर्यादिमहत्त्वमित्यर्थः। स्विष्टकृदनुमन्त्रणमन्त्रं व्याचष्टे "अग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठति" इति।

अथ मीमांसा। दशमाध्यायस्याष्टमपादे चिन्तितं।

"न आर्षेयं न होतारं नानूयाजेष्वितीदृशः।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात्॥
अन्याय्यत्वाद्विकल्पस्य विध्यंशः सा निषेधना।
नेत्यनूयाजधातुस्थस्तदर्थं पर्युदस्यति"॥

पितृयज्ञे चोदकप्राप्तं वरणं प्रत्येवं श्रूयते। नार्षेयं वृणीत

न होतारमिति। तथाऽनारभ्यवादे श्रूयते। आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इति। तथोक्तं नानूयाजेषु ये यजामहं करोतीति। तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते। ये यजामह इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधिप्रतिषेधप्रतीतिः। तत्र विधायकप्रतिषेधकयोर्द्वयोः प्रमाणयोरवैयर्थ्याय विकल्प इति प्राप्ते ब्रूमः। अष्टदोषग्रस्तत्वाद्विकल्पो न न्याय्यः। ननु परस्परविरुद्धयोर्विधिनिषेधयोः समुच्चयस्याप्यसम्भवात् का गतिरत्रेति चेत्। उच्यते। निषेधत्वेन प्रतीयमानमिदं नेत्यनेन शब्देनार्पितं वाक्यं विधिवाक्यस्यांशो भविष्यति। तथा हि। यदि नेत्ययं शब्दः करोतिना सम्बध्येत, तदा ये यजामहे इति शब्दं न करोति इत्येवं प्रतिषेधः स्यात्। यदि च वृणीत इत्येवाख्यातप्रत्ययेन सम्बध्येत तदा वरणं न कर्त्तव्यमिति निषिध्येत। न त्वेवं सम्बध्यते। किन्त्वनूयाजपदेन वृञ्धातुना च सम्बध्यते। तथा सत्यनूयाजव्यतिरिक्तेषु यागेषु ये यजामहः कर्तव्यः। वरणव्यतिरिक्तमङ्गजातमनुष्ठेयमित्यनूयाजवरणपर्युदासेन विधेरेव विशेषितत्वे सति प्रतिषेधवाक्यस्य कस्यचिदभावान्न विकल्पः शङ्कितुमपि शक्यः॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः॥ * ॥

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माक-मस्तु केवलः। इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः। शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः। इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आवृणे। अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु॥ ॥ १ ॥

क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये। आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा। ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः। आमासु पक्वमे-रय आ सूर्यं रोहयो दिवि। घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः। इन्द्रमिद्गाथिनो बृह-दिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत। गायन्ति त्वा गायत्रिणः॥ २ ॥

अर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रतवुद्वंशमिव येमिरे। अंहोमुचे प्रभरेमा मनीषामोषिष्ठदावन्ने* सुमतिं गृणानाः। इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः। विवेष यन्मा धिषणा जजा-

* ओषिष्ठदावुन्न इति पाठान्तरं।

न स्तवैं पुरा पार्यादिन्द्रमह्नः। अꣳहसो यत्र पीपर-द्यथा नो नावेव यान्तमुभये हवन्ते। प्र सम्राजं प्रथम-मध्वराणां ॥ ३ ॥

अꣳहोमुचं वृषभं यज्ञियानां। अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः। वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासति। इन्द्र क्षत्रमभि वाममोजो-ऽजायथा वृषभ चर्षणीनां। अपानुदो जनममित्रय-न्तमुरुं देवेभ्यो अकृणोरु लोकं। मृगो न भीमः कुच-रो गिरिष्ठाः परावतः ॥ ४ ॥

आजगामा परस्याः। सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व। वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र भामितोऽमि-त्रस्याभिदासतः। त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रं। हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः। मा ते अस्यां ॥ ५ ॥

सहसावन्परिष्टावघाय भूम हरिवः परादै। त्रा-य च नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम। अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तं।

ब्रह्माण इन्द्रं महयन्तो अर्केरवर्धयन्नहये हन्तवा उ। वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः। अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्॥ ६॥

वृत्रहत्येऽनु गायत्रियोऽध्वराणां परावतोऽस्यामष्टा चत्वारिंशच्च॥ १२॥

सं त्वा सिञ्चामि ध्रुवोऽस्यग्निर्मा बर्हिषोऽहमाप्या-यतामगन्म यथा वै यो वै श्रद्धां प्रजापतिर्यज्ञं ध्रुवो-ऽसीत्याह यो वै सप्तदशमिन्द्रं वो द्वादश॥ १२॥

सं त्वा बर्हिषोऽहं यथा वा एवं विद्वान् श्रौषट् सहमानेकपञ्चाशत्॥ ५१॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः॥ *॥

॥०॥ षष्ठप्रपाठकः सम्पूर्णः ॥०॥

सप्तमाद्येष्वेकादशान्तेष्वनुवाकेषु याजमानब्राह्मणप्रसङ्गा-दाध्वर्यवब्राह्मणमपि कियदभिहितं। द्वादशेऽनुवाके याज्या उच्यन्ते। काम्येष्टिकाण्डे (सं०२कां०।२प्र०।७अ०) सप्तमानु-वाके काचिदिष्टिरेवमाम्नायते "ऐन्द्रं चरुं निर्वपेत् पशुकाम

ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् प्रयच्छति पशुमानेव भवति" (सं०२कां०।२प्र०।७अ०) इति। पशूनामैन्द्रत्वमर्थवादान्तरे द्रष्टव्यं। पुरोडाशादि-परित्यागेन चरुविधानं दर्शयति "चरुर्भवति स्वादेवास्मै योनेः पशून् प्रजनयति" (सं०२कां०।२प्र०।७अ०) इति। वाजपेये हि नैवारं चरुमश्वानवघ्रापयेत्। अश्वमेधेऽपि लाजानित्यादि-मन्त्रेणाश्वायान्नमुपावहरति। तच्च भक्षितमन्नमुत्पत्स्यमानाना-मश्वानां रेतोरूपेण बीजमित्यभिप्रेत्य चरोः पशुयोनित्वम-चाभिधीयते। तस्या ऐन्द्रेष्टेः पुरोऽनुवाक्यामाह "इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः" इति। हे ऋत्विग्यजमानाः वो युष्माकं जनेभ्यः पुत्रभृत्यादिजनमि-द्ध्यर्थं विश्वतस्परि सर्वस्य जगत उपरिस्थितमुत्कृष्टत्वेन वर्तमानं इन्द्रं हवामहे आह्वयामः। स चेन्द्रोऽस्माकं केवलोऽस्तु असा-धारणोऽस्तु, इतरयजमानेभ्योऽधिकमनुग्रहमस्मासु करोत्वित्य-र्थः। याज्यामाह "इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः। शूरो नृषाता श्रवसश्चकाम आ गोमति व्रजे भजा त्वं नः" इति। अग्निचयनमनुतिष्ठन्तो नर इन्द्रं नेमधिता *ब्रह्मादिभिर्देवैः सह नेमस्य अर्धस्य हविषो धिता धारणाय हवन्ते आह्वयन्ति। अत एव चयनब्राह्मणमाम्नायते। अर्धे-न्द्राणि जुहोतीति। तन्मन्त्रास्चैवमाम्नायन्ते। अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च म इत्यादयः। यत् यस्मात् कारणात्

* ब्रह्मादिभिर्देवैः सह इति तै०।

पार्या: चितेऽग्नौ अग्निष्टोमादिपारमर्हन्तो यजमानास्ता धियो युनजते तान्यग्निष्टोमादीन्यनुगच्छन्ति। तादृश हे इन्द्र त्वं शूरो रक्षोभिरनभिभूतः नृषाता मनुष्येभ्यः सनिता धनस्य दाता शवसो अस्मदीयबलस्य चकानः *सम्यक्प्रकाशको भूत्वा नोऽस्मान् गोमति बहुगवादिपशुयुक्ते व्रजे सङ्के आभज आभिमुख्येन स्थापय। इत्यन्तरं विधत्ते "इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत् पशुकाम इन्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मा इन्द्रियं पशून् प्रयच्छति। पशुमानेव भवति" (सं०२कां०।२प्र०।७अ०)इति। इन्द्रियं बलं प्रभूतमस्यास्तीतीन्द्रियावान् क्षीरघृतादिद्वारेण इन्द्रियवृद्धिहेतुत्वात् पशूनामिन्द्रियत्वं। इन्द्रियं पशूंस्वेति समुच्चयोऽध्याहर्तव्यः। तस्यामिष्टौ पुरोऽनुवाक्यामाह "इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आवृणे" इति। हे शतक्रतो पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिवर्णेषु यानि ते तवानुग्रहात् इन्द्रियाणि सामर्थ्यानि सन्ति हे इन्द्र तानि सर्वाणि ते तवानुग्रहादावृणे समन्तादृणोमि। याज्यामाह "अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये" इति। यजत्र यष्टव्य हे इन्द्र मह महते सर्वेभ्यो देवेभ्योऽधिकाय ते तुभ्यं सत्रा सत्रेषु विश्वं सर्वं हविर् देवेभिः अग्न्यादिभिः अनुदायि अनुक्रमेण दीयते। किमर्थं। वृत्रहत्ये वृत्र-

* तर्पको भूत्वेति का०।

वधमनु ते* तव इन्द्रियाय बलमिद्धार्थं। न केवलं वृत्रवध-मनुसृत्य किन्तु चत्रमनु त्वदीयं चत्रियत्वजात्यभिमानमनु-सृत्य, महोऽनु त्वदीयं बलमनुसृत्य, नृषह्ये वैरिमनुष्यतिरस्कार-शीलमनुसृत्य, त्वयि यथोक्तान् गुणानवेच्य ते तुभ्यं पुनः पुन-र्दीयत इति शेषः। अन्यामिष्टिं विधत्ते "इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोपधावति स एवा-स्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति" (सं०२कां०। २प्र०।७अ०) इति। घर्मवते वेदशास्त्रप्रयुक्तब्रह्मतेजोविशि-ष्टाय। विद्वत्सभासु वेदशास्त्रादिरूपेण ब्रह्मवर्चसेन दीप्यत इति ब्रह्मवर्चसस्य घर्मत्वं। एतस्यामिष्टौ पुरोऽनुवाक्यामाह "आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा। ऋषिर्ह दीर्घश्रु-त्तम इन्द्रस्य घर्मो अतिथिः" इति। वासयन्ति रथस्योपर्या-दित्यमिति वासवा आदित्याश्वाः ते च सप्तसङ्ख्याकाः। सप्त युञ्जन्ति रथमेकचक्रमिति मन्त्रवर्णात्। न चैवं सति एको ऽश्वो वहति सप्तनामेत्यनेन विरोधः। वचनद्वयबलेन विक-ल्पस्याङ्गीकृतत्वात्। ते च सप्ताश्वाः स्वारुहो यथा आदित्य-परतन्त्रा अपि स्वयमेवारोहन्त इव वर्ण्यन्ते, सुशिक्षितत्वेन प्रेरणं विनैव प्रवृत्तत्वात्। तादृशाः सप्ताश्वा यस्मिन्नादित्ये आतिष्ठन्ति आश्रित्य वर्तन्ते स आदित्य ऋषिर्ह अतीन्द्रिय-ज्ञानेन सर्वदा वेदत्रयोपेतत्वात्, अतएवाम्नायते "वेदैरशून्य-

* वधमनुसरते इति तै०।

स्त्विभिरेति सूर्यः” इति। दीर्घश्रुत्तमः त्रैलोक्यप्रकाशनेन प्रथितकीर्त्तितमः। ईदृशो घर्मो दीप्यमान आदित्य इन्द्रस्य गृहेऽतिथिः स्वाभीष्टं याचितुं यदा कदाचिदागच्छति, तस्ये-न्द्रस्य महिमा किमु वक्तव्य इत्यभिप्रायः। याज्यामाह “आ-मासु पक्वमैरय आ सूर्यꣳ रोहयो दिवि। घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः” इति। फलपाकरहि-तास्वोषधीषु पक्वं सम्यक्पाकयुक्तं फलं हे इन्द्र त्वमैरयः वृष्टिद्वारा सम्पादितवानसि। सूर्यं चिरन्तनपरिवर्त्तनसामर्थ्य-प्रदानेन अनुगृह्य दिवि आरोहयसि। *हेतुभिर्यजमानाः जुष्टमिन्द्रस्य प्रियं हविः पुरोडाशरूपं तपत सुष्ठु कृतं कुरुत। किमिव घर्मं न प्रवर्ग्यमिव। सुवृक्तिभिः हिङ्कारप्र-स्तावादिशोभनभक्तियुक्तैः सामन् सामभिः घर्मं यथा तपन्ति। गिर्वणसे गीर्भिः स्तुत्यायेन्द्राय गिरः स्तुतिरूपाः प्रयुङ्क्तेति शेषः। इष्ट्यन्तरं विधत्ते “इन्द्रायार्कवते पुरोडाशमेकादश-कपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवति” (सं०२कां०।२प्र०।७अ०) इति। बुभुक्षुभिर-र्थ्यमानत्वादादरेण स्वीक्रियमाणत्वात् अन्नस्य अर्कत्वं। तत्र पुरोऽनुवाक्यामाह “इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत” इति। गाथिनः सामगाः बृहत् बृहता साम्ना इन्द्रमेव अनूषत अस्तुवन्। स्वच स्तुतावित्यस्माद्धातो-

* हेतिभिरिति का०।

इत्यत्नोऽर्कशब्द ऋक्त्वमाचष्टे। अर्केभिर्ऋग्भिरर्किणो बह्वृचा इन्द्रमस्तुवन्। वाणीः अन्या अपि वाचो यजूरूपा इन्द्रमस्तुवन्। याज्यामाह "गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रतवुद्वꣳशमिव येमिरे" इति। हे शतक्रतो गायत्रिणो गायत्रसामयुक्ता उद्गातारः त्वां गायन्ति। अर्किणो बह्वृचाः त्वामर्चन्ति स्तुवन्ति। ब्रह्माणस्तदुपलचिता अध्वर्यवोऽपि त्वामुद्येमिरे उत्थापयन्ति वर्धयन्तीत्यर्थः। किमिव वंशमिव। यथा कुलाचारादिभिः स्वकीयं वंशमुन्नयन्ति उन्नतं कुर्वन्ति तद्वत्। इष्ट्यन्तरं त्रिहविष्कं विधत्ते "इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रतितिष्ठति भवत्येव" (सं० २कां०।२प्र०।७अ०) इति। तेन घर्मवते निर्वापेणाध्वर्युरस्य यजमानस्य शिरः करोति। एवं विद्यैश्वर्यादिभिः सभायामुन्नतशिरस्कं करोति। तेनेन्द्रियावते निर्वापेणास्य यजमानस्य आत्मानमेव करोति, पुष्टशरीरमेव करोति। अर्कवते निर्वापेण यजमानो भूत एव ऐश्वर्यं प्राप्त एव सन्नदनयोग्ये सम्यगन्ने प्रतितिष्ठति, भवत्येव पुनरप्यधिकमैश्वर्यं प्राप्नोत्येव। अत्र घर्मवतो हविषि 'आ यस्मिन्' इत्यादिके याज्यानुवाक्ये, इन्द्रियावतो हविषि 'इन्द्रियाणि शतक्रतो' इत्यादिके, अर्कवतो हविषि 'इन्द्रमिद्गाथिनो बृहद्' इत्यादिके। इष्ट्यन्तरं विधत्ते "इन्द्रा-

याꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात् पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनापधावति स एवैनं पाप्मनोऽꣳहसो मुञ्चति" (मं०२कां०।२प्र०।७अ०) इति। अंहःशब्देन आगः, अत्र नरकहेतुर्निषिद्धाचरणादिरूपः पाप्मोच्यते। पाप्मनो अंहसः अत्यधिकात् पापादित्यर्थः। तत्र पुरोऽनुवाक्यामाह "अꣳहोमुचे प्रभरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः। इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः" इति। गृणानाः स्तुवन्तो वयं ओषिष्ठदाव्ने ग्रीष्मकाले दावाग्निना अत्यन्तदग्धभूप्रदेशेभ्यो वर्षैर्वा वृष्टिं दात्रे, अंहोमुचे पापान्मोचयित्रे मनीषां बुद्धिं प्रभरेम स्वीकुर्म। कीदृशीं सुमतिं, त्वां तोषयेमेत्येवमादिशोभनमनसोपेतां। हे इन्द्र इदं दीयमानं हव्यं प्रतिगृहाण, तेन यजमानस्य कामाः सत्याः सन्तु। याज्यामाह "विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः। अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते" इति। यद् यस्मात् कारणात् धिषणा पूर्व्वोक्ता बुद्धिर्मां विवेष व्याप्तवती तस्मादहं सुबुद्धिः जजान जातवानस्मि। अत एव पार्यादह्नः पारेभवात् मरणदिवसात् पुरा त्वां स्तवै आमरणं स्तवानीत्यर्थः। यत्र यस्यां धिषणायां मत्यां इन्द्रोऽस्मान् अंहसः पापात् पीपरत् उत्तारितवान् सा धिषणा विवेषेत्यन्वयः। अथवा यत्राहन्यस्मानंहसः पारयति तस्मात् पार्यादह्नः पुरा स्तवा इत्यन्वयः। यथा लोके नावा नद्यां यान्तं नाविकमुभये

कूलद्वयवर्त्तिनो हवन्ते भो मामुत्तारयेत्याह्वयन्ति तथैवांहसो मुक्तानस्मान् उभयकूलप्रभवा आह्वयन्तीत्यर्थः। अत्रैव विकल्पितामन्यां याज्यामाह "प्र सम्राजं प्रथममध्वराणामꣳहोमुचं वृषभं यज्ञियानां। अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः" इति। हे नरो मनुष्या ऋत्विजः प्रकर्षेण इन्द्रं भजतेति शेषः। कीदृशं सम्राजं सम्यग्दीप्यमानं, अध्वराणां अग्निष्टोमादीनां प्रथमं मुख्यदेवं, अंहोमुचं पापान्मोचयितारं, यज्ञियानां यज्ञसम्बन्धिफलानां वृषभं वर्षितारं, अपां उदकानां नपातं अविनाशयितारं, हयन्तं ऐश्वर्यसङ्गमयितारं। हे अश्विना अस्मिन् यजमाने इन्द्रियं चक्षुरादिपाटवं ओजो बलञ्च धत्तं स्थापयतं। इष्ट्यन्तरं विधत्ते "इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभिप्रवेपेरन् राष्ट्राणि वाभिसमियुरिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोपधावति स एवास्मान्मृधोऽपहन्ति" (सं०२कां०।२प्र०।७अ०) इति। मृधो वैरिणो यं यजमानमभितः प्रवेपेरन् प्रकर्षेण कम्पयेयुः भीतिमुत्पादयेयुः अथवा राष्ट्राणि देशानभितो विनाशयितुं समियुः सङ्गता भवेयुः तस्य यजमानस्य रक्षायै वैमृधाय शत्रुविनाशकायेन्द्राय एकादशकपालं पुरोडाशं निर्वपेत् स चेन्द्रोऽस्माद् यजमानात् मृधः शत्रूनपहन्ति। तत्र पुरोऽनुवाक्यामाह "वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासति" इति। हे इन्द्र नोऽस्माकं मृधः शत्रून् विशेषेण जहि। किञ्च पृतन्यतः अस्मा-

न्मारयितुं सेनामिच्छतः शत्रून् नीचा न्यग्भूतान् यच्छ उपरतान् कुरु। यश्चान्योऽस्मान् अभिदासति उपक्षपयति तमपि वैरिणं अधस्पदं अस्मत्पादयोः प्रणतशिरस्कं कुर्वित्यर्थः। तत्र याज्यामाह "इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनां। अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकं" इति। हे इन्द्र *वामं वननीयं क्षत्रं क्षतात्त्राणं ओजो ऽस्मदीयं बलमभिलक्ष्य अजायथाः एतत्सर्वं सम्पादयितुं जातोऽसि। चर्षणीनां मनुष्याणां हे वृषभ कामानां वर्षितः अमित्रयन्तं शत्रुभावमिच्छन्तं जनं अपानुदः निराकृतवानसि। देवेभ्यो हविःप्रदानादिव्यवहारिभ्यो यजमानेभ्यः उरुं विस्तीर्णं लोकं भोगस्थानं अकृणोरु कृतवानेवासि। अस्यामेवेष्टौ विकल्पितां पुरोऽनुवाक्यामाह "मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगामा परस्याः। सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व" इति। हे इन्द्र भीमो भयङ्करः कुचरः प्राणिभक्षणादिरूपकुत्सिताचरणशीलो गिरिष्ठाः पर्वतनिष्ठो मृगो न सिंहव्याघ्रादिमृग इव परस्याः परावतो महतो दूरादाजगाम अस्मद्विरोधिनं हन्तुमागतोऽसि। आजगन्थेति शाखान्तरे मध्यमपुरुषः पठितः। सृकं परशरीरादिषु सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं संशाय सम्यक् तीक्ष्णं कृत्वा विशेषेण शत्रून् ताडय। मृधो योद्धॄन् शत्रून् विशेषेण नुदस्व निराकुरु। विकल्पितां याज्यामाह

---

* वामं वसनीयं क्षत्रं प्रतिक्षयमिति तै० अशुद्धपाठः।

"वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः" इति। हे इन्द्र शत्रून् विशेषेण नुद निराकुरु। मृधो योद्धृनपि विशेषेण नुद। वृत्रस्य हनू विशेषेण भग्नीकुरु। त्वं भामितः क्रुद्धः सन्नभिदासतोऽस्मानुपक्षपयतः अमित्रस्य वैरिणो मन्युं विशेषेण भग्नं कुरु। इष्ट्यन्तरं विधत्ते "इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोपधावति स एवैनं त्रायते" (मं०२का०।२प्र०।७अ०) इति। बद्धः शृङ्खलया निगडितः परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्धः। तत्र पुरोऽनुवाक्यामाह "त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रं। ह्वये नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः" इति। त्रातारं शृङ्खलाबन्धाद्रक्षितारं। अवितारं भटावरोधाद्रक्षितारं। शूरं बन्धकानामवरोधकानाञ्च तिरस्कारे क्षमं। हवे हवे सुहवं सर्वस्मिं होमे सुखेन आह्वातुं शक्यं। शक्रं सर्वेषु कार्येषु शक्तियुक्तं। पुरुहूतं बहुभिर्यजमानैराहूतमिन्द्रं ह्वये नु आह्वयाम्येव प्रति विशेषणमिन्द्रशब्दावृत्तिर्वाक्यभेदार्थं। त्रातारमिन्द्रं ह्वये। अवितारमिन्द्रं ह्वये। इत्येवं वाक्यभेदः। तेश्च बहुभिर्वाक्यैर्महिमातिशयः प्रदर्श्यते। इन्द्रागच्छ हरिव आगच्छेत्यादौ तद्दर्शनात्। लोकेऽपि अतिबालमुपलालयितुं पितरागच्छ भ्रातरागच्छेत्यादौ तद्दृश्यते। मघवानिन्द्रो नोऽस्मभ्यं स्वस्ति धातु अविनाशं दधातु। तत्रैव याज्यामाह "मा ते

अस्यां महमावन्परिष्टावघाय भूम हरिवः परादै। त्रायस्व नो ऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम" इति। हे महमावन् बलवन्निन्द्र अस्यां परिष्टौ परित्राणार्थं क्रियमाणायामिष्टौ अघाय वैकल्याय मा भूम, अस्मदनुष्ठिते कर्मणि वैकल्यं मा भूदित्यर्थः। हे हरिवः हर्योऽश्वाः तद्वः परादै परादातुं त्वामवज्ञातुं वयं मा भूम, कदाचिदप्यवज्ञां मा करवामेत्यर्थः। त्वं नोऽस्मान् अवृकेभिः हिंसारहितैः वरूथैर्गृहैस्त्रायस्व, तादृशान् प्रयच्छ। सूरिषु विद्वत्सु यजमानेषु मध्ये वयं तव प्रिया भवेम। इत्यन्तरं विधत्ते "इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मा अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो नमति" (सं०२का०।२प्र०।७अ०) इति। अश्वमेधयज्ञस्य साधनभूतो योऽग्निः सोऽर्कः। यश्च तत्फलभूत आदित्यः सोऽश्वमेधः। अत एव पञ्चमकाण्डे पञ्चार्काहुतिविधिशेषार्थवादे समाम्नायते "अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि सन्दधाति" इति। अश्वमेधब्राह्मणे ऽप्येवमाम्नायते "अग्निर्वा अश्वमेधस्य योनिरायतनं सूर्योऽग्नेर्योनिरायतनं यदश्वमेधेऽग्निं चित्य उत्तरवेदिं चिनोति तावर्काश्वमेधौ" इति। वाजसनेयिनोऽपि चित्यस्याग्नेरुपासने समामनन्ति "एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्क-

स्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेध इति" इति। इन्द्रस्तु तयोरग्न्यादित्ययोः स्वामित्वादर्काश्वमेधवानित्युच्यते। यं यजमानं प्रत्यश्वमेधराजसूयादिमहायज्ञो नोपनमेन्न प्राप्नुयात्, स यजमानो ऽर्काश्वमेधस्वामिने निर्वपेत्। यावेतावर्काश्वमेधशब्दवाच्यावग्न्यादित्यौ तावुभौ महायज्ञस्याश्वमेधस्यान्त्ये तनू, प्रारम्भसमाप्तिकोट्योर्वर्तमाने शरीरे। चित्याग्निः साधनत्वेन प्रारम्भकोटौ वर्तते। आदित्यः फलरूपत्वेन समाप्तिकोटिगामी। स एवेन्द्रो यजमानस्य समीपे महायज्ञं प्रेरयति। स च महायज्ञ एनं यजमानं उपनमति प्राप्नोति। तत्र पुरोऽनुवाक्यामाह "अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तं। ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ" इति। हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र ते तव रथं अनवो मनुष्याः तक्षन् तक्षन्तु संस्कुर्वन्तु। किमर्थं। अश्वाय अश्वं संयोक्तुं। त्वष्टा देवशिल्पी द्युमन्तं दीप्तिमन्तं वज्रं तक्षतु। ब्रह्माणो ब्राह्मणा ऋत्विजः अर्कैरर्चनसाधनैर्मन्त्रैः महयन्तः पूजयन्तः इन्द्रमवर्धयन् यशसा वर्धयन्तु। अहये अहिमघं महायज्ञप्राप्तिप्रतिबन्धकपापं हन्तवा उ अवश्यं हन्तुं अवर्धयन्नित्यन्वयः। याज्यामाह "वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः। अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्" इति। हे इन्द्र यद् यदा वृष्णे ते कामाभिवर्षिणस्तव सम्बन्धिनमर्कमर्चनीयं वृषणो वर्षणं फलाभिवर्षकं यागं ग्रावाणः साधनभूता दृषदुपलादयः पदार्थाः

अर्वान् अर्चयन्ति अलङ्कुर्वन्ति। तदानीं अदितिर्वेदिरूपा पृथिवी सजोषास्तया समानप्रीतिर्भवतु। इन्द्रेषिताः इन्द्रप्रेरिताः ये पवयः वज्राः सन्ति तेऽप्यस्या अनश्यामो रथाश्वनिरपेक्षा एव दस्यून् महायज्ञप्राप्तिप्रतिबन्धकानसुरान् अभ्यवर्त्तन्त अभिलक्ष्य हन्तुं प्रवर्त्तन्तां।

अथ विनियोगसङ्ग्रहः।

"इन्द्रं वो विश्वतोऽमुष्मिंश्वरावेन्द्रं स्वचोदयं॥
इन्द्रीन्द्रियावद्यागे स्याद् आ यस्मिन् घर्मवद्यजौ।
इन्द्रं स्यादर्कवद्यागे तिस्रोऽंहोमुग्यजावृचः॥
वि नो मृधे चतस्रः स्युस्त्रातारं चात्मवद्यजौ।
अनवोऽर्काश्ववद्यागे मन्त्राः सप्तदशेरिताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः॥ *॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये प्रथमकाण्डे षष्ठः प्रपाठकः सम्पूर्णः।*॥

ॐ तत्सत्॥

---

## अथ तैत्तिरीयसंहिताभाष्ये

प्रथमकाण्डे सप्तमप्रपाठकः ।

हरिः ॐ ।

पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्त इडा खलु वै पाकयज्ञः सैषान्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता तामाह्रियमाणामभिमन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोपह्वयते यज्ञं वै देवा अदुह्रन् यज्ञोऽसुराꣳ अदुहन्तेऽसुरा यज्ञदुग्धाः पराभवन् यो वै यज्ञस्य दोहं विद्वान् ॥ १ ॥

यजतेऽप्यन्यं यजमानं दुहे सा मे सत्याशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सो यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत् ॥ २ ॥

मात्रे वत्समुपावसृजति सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत्सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः

पराचीमसुराः सा देवानुपावर्तत पशवो वै तद्देवा-न्वृणत पशवोऽसुरानजहुर्यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेतापशुरेव भवति यं ॥ ३ ॥

कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुपह्व-येत पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा इडामुपह्वयेत य इडामुपह्वयात्मानमिडायामुपह्वये-तेति सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपह्व-यात्मानमिडायामुपह्वयते व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति ॥ ४ ॥

सामि मार्जयन्त एतत्प्रति वा असुराणां यज्ञो व्य-च्छिद्यत ब्रह्मणा देवाः समदधुर्बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह सन्तत्यै विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञं देवे-भ्योऽनुदिशति यां वै ॥ ५ ॥

यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सङ्क्रामन्ति स एष ईजानोऽ*पशुर्भावुको यजमानेन खलु वै तत्का-र्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीतात्मन् पशून् रम-

* सः। तु। वै। इति पदपाठः।

येतेति ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्म-
हयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते
दददतो मे मा क्षायीत्याहाक्षितिमेवोपैति कुर्वतो मे
मोपदसदित्याह भूमानमेवोपैति ॥ ६ ॥

विद्वान् ध्यायेद्भवति यं प्राश्नन्ति यां वै स एकान्न-
विंशतिश्च ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपा-
ठके प्रथमोऽनुवाकः ॥ ० ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
प्रपाठके सप्तमेऽस्मिन् अनुवाकास्त्रयोदश।
याजमानब्राह्मणस्य शेषः षट्खादिमेषु हि ॥
वाजपेयस्य मन्त्रास्तु षट्स्वन्येष्वथ याज्यकाः।
इडानुमन्त्रणं तस्या इडायाश्च प्रशंसनं ॥
अन्वाहार्योऽथ मन्त्रानुवाकव्याख्यास्त्रिषु स्मृताः।
रथमन्त्रा धावनञ्च रोहणं वाजहोमकः ॥
उज्जित्यतिग्राह्ययाज्या इत्यर्था अनुवाकगाः। इति।

अथ प्रथमानुवाक इडानुमन्त्रणमुच्यते। तदेतद्विधातुं प्रस्तौति "पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्त इडा

खलु वै पाकयज्ञः सैषान्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता" इति । पाकयज्ञस्य रूपमापस्तम्बसूत्रव्याख्या-तृभिरुक्तं "औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः" इति । बोधायनो-ऽप्याह "हुतः प्रहुत आहुतः शूलगवीबलिहरणं प्रत्यवरोहण-मष्टका होम इति सप्त पाकयज्ञसंस्थाः" इति । अन्ये त्वाहुः "अल्पयज्ञाः पाकयज्ञाः" इति । आश्वलायनोऽप्याह "त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः" इति । एतेषां मध्ये यं कञ्चिदपि आहिताग्निः पाकयज्ञमनु गवाद्याः पशवोऽवस्थिता भवन्ति पाकयज्ञेन लभ्यन्त इत्यर्थः । अत्र त्विडाभक्षणमेव पाकयज्ञः । ब्रह्मणि हुतत्वात् । अतोऽनेनापीडाभक्षणेन पशवो लभ्यन्ते । सेयमिडा यजमानस्य लोके फलसाधने यज्ञे प्रयाजानूयाजमध्ये व्यव-स्थिता । प्रयाजाज्यभागप्रधानस्विष्टकृद्भ्य ऊर्द्ध्वमनूयाजेभ्यश्च प्रा-गिडाया अनुष्ठेयत्वात् । एतच्च होत्रकाण्डे स्विष्टकृद्याज्याया अनूयाजयाज्यायाश्च मध्ये इडोपाह्वानमन्त्रपाठादवगम्यते । विधत्ते "तामाह्रियमाणामभिमन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोपह्वयते" इति । तामिडामाह्रियमा-णामवदाय होतृसमीपमानीयमानां । तत्प्रकारमापस्तम्ब आह "इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडाꣳ समवद्यति चतुर-वत्तां पञ्चावत्तां वा" इति "अभिघार्येडाꣳ होत्रे प्रदाय" इति च । इडादेवतायाः पशुसाधनत्वात् गोरूपत्वाच्च मन्त्रगतेने-

ह्वीतिपदेन पशूनेवोपह्वयते। मा मे सत्याशीरित्येतं मन्त्रभागं व्याख्यातुं प्रस्तौति "यज्ञं वै देवा अदुह्रन् यज्ञोऽसुराꣳ अदुहत्तेऽसुरा यज्ञदुग्धाः पराभवन् यो वै यज्ञस्य दोहं विद्वान् यजतेऽप्यन्यं यजमानं दुहे" इति। दोहनं रिक्तीकरणं गां दोग्धीत्यत्र तथा दर्शनात्। देवाः प्रथमं यज्ञमदुह्रन् तद्गतसारफलस्वीकारेण रिक्तीचक्रुः। स च यज्ञोऽसुरानदुहत् तदीयसारापहारेण रिक्तीचकार। ततस्ते पराभूताः। यो यजमानो देवकर्तृकं यज्ञरिक्तीकरणं यज्ञकर्तृकमसुररिक्तीकरणञ्च विद्वान् यजते सोऽन्यमपि यजमानं दुहे रिक्तीकरोति। एतस्य वाक्यस्य मन्त्रप्रशंसारूपत्वादन्यस्य यजमानस्य न काचिद्धानिः। व्याचष्टे "मा मे सत्याशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे" इति। उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायां, उपहूत इत्येवमादिका येयमाशीरूपाह्वानमन्त्रगता सेयमस्य यज्ञस्य सम्बन्धिन्याशीर्मम सत्या भूयादित्येवंरूपो यज्ञदोहस्तेनैवान्यं यजमानं दोग्धि। वायुध्यानं विधातुं प्रस्तौति "प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सः" इति। प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौर्दुहे पयः स्रावयति। तद्वदत्रेडा प्रत्ता सती यजमानस्य फलं दोग्धि। तस्या इडाया इडोपहूतेत्यादिमन्त्रभागाः स्तनाः वायुश्च वत्सः। विधत्ते "यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत् मात्रे वत्समुपावसृजति" इति। यर्हि यस्मिन् काले। इडो-

पह्नतेत्यादिमन्त्रभागप्रयोगे हेयोपादेयपक्षौ विधातुं प्रस्तौति "सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत्सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुः" इति। मनुसहिताः सर्वे देवाः कृत्स्नेन दर्शपूर्णमासयागेन स्वर्गलोकं प्राप्तुमुद्यताः तत्र मनुः पाकयज्ञेन श्रान्तोऽभूत्। इडा खलु वै पाकयज्ञ इत्युक्तं, अतो मनुर्होता सन्निडोपाह्वान एव तात्पर्यवानभूदित्युक्तं भवति। सा चेडा देवता तात्पर्यवन्तं मनुमुपगतवती। तां दृष्ट्वा देवाश्चासुराश्च परस्परव्यत्ययेन इडामुपाह्वयन्त। ते देवाः प्रतीचीं सम्मुखमुपाह्वयन्त। असुराः पराचीनमुखमुपाह्वयन्त। इडापह्नतेत्येवमादाविडाशब्दप्रयोगः साम्मुख्यं, उपह्नतेडेति पश्चादिडाशब्दप्रयोगो विमुखत्वं। तत्र सम्मुखत्वेन तुष्टा सती सा देवानुपावर्तत। पशवो वा इडेत्याम्नातत्वादिडारूपाः पशवः तत्तदा देवानवृणत वृतवन्तः प्राप्तवन्तः। विमुखत्वेन इडाया अपरितोषात्तद्रूपाः पशवोऽसुरानजहुस्त्यक्तवन्तः। तत्र हेयपक्षं विधत्ते "यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेतापशुरेव भवति" इति। उपादेयपक्षं विधत्ते "यं कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुपह्वयेत पशुमानेव भवति" इति। सा नः प्रियेति मन्त्रभागं व्याख्यातुं प्रस्तौति "ब्रह्मवादिनो वदन्ति स त्वा इडामुपह्वयेत य इडामुपह्वयात्मानमिडायामुपह्वयेतेति" इति। वेदार्थविचारका

विद्वांसः परस्परमित्याहुः। किमिति। यो बुद्धिमान् मन्त्रेणेड एह्यदित एहीत्यादिनेडामुपहूय तस्यामिडायामात्मानमुपह्वयते योजयति स एवेडां यथाशास्त्रमुपह्वयेतेति। मन्त्रं व्याचष्टे "सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयात्मानमिडायामुपह्वयते" इति। येयमिडास्माभिरिड एहीत्यादिनोपहूता सेयमिडा नोऽस्माकं प्रियेत्यनेन वचनेन स्वात्मानमिडायां योजितवान् भवति। मार्जनार्थं मनो ज्योतिरित्यादिकामृचं व्याख्यातुं प्रस्तौति "व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति सामि मार्जयन्त एतत्प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुः" इति। इडेति यदेतेन यज्ञस्याङ्गं व्यस्तं विच्छिन्नमिव भवति तत्कथमित्युच्यते। सामि पुरोडाशस्य लेशमिडाभागरूपमृत्विजः प्राश्नन्ति। साम्युदकलेशं मार्जयन्ते शिरसि सिञ्चन्ति। तदानीं प्रधानयागाः पूर्वमेव कृता अनूयाजादियागा इत ऊर्द्ध्वं यष्टव्याः तन्मध्ये लेतदिडाभक्षणं मार्जनञ्च क्रियते। तयोरयागरूपत्वाद्यागविच्छेदकत्वं। तथा सत्यसुरा यष्टव्याननूयाजादीन् विस्मृतवन्तः, अतोऽसुराणां यज्ञ एतत् प्रति भक्षणमार्जनद्वयं प्रत्येतदीये काले विच्छिन्नोऽभूत्। देवास्त्वप्रमत्ताः सन्तो ब्रह्मणा परिदृढेन केनचित्पुरुषेण समदधुः, तयोर्विच्छिन्नयोः पूर्वोत्तरयोः यज्ञभागयोः सन्धानं कृतवन्तः। तस्या ऋचस्तृतीयपादं व्याचष्टे "बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति" इति। देवगुरुत्वाद्बृहस्पतेः

परिवृढत्वं। मन्थात्मप्रतिपादकं तृतीयपादं व्याख्याय मन्थान-प्रतिपादकं द्वितीयपादं व्याचष्टे "विच्छिन्नं यज्ञꣳ समिमं दधा-त्वित्याह सन्तत्यै" इति। अविच्छेदायेत्यर्थः। तस्य सन्ततस्य यज्ञस्य देवसमर्पणप्रतिपादकं चतुर्थपादं व्याचष्टे "विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञं देवेभ्योऽनुदिशति" इति। ब्रध्न पिन्वस्वेत्यादिकं पुरोडाशाभिमन्त्रणमन्त्रं व्याख्यातुं प्रस्तौ-ति "यां वै यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सङ्क्रा-मन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्य-मित्याहुर्यथा देवत्रा दत्तं कुर्वीतात्मन् पशून् रमयेतेति" इति। यजमानेनर्त्विग्भ्यो दीयमानां गवान्वाहार्यादिरूपां दक्षिणां तदीयाः पशवः सर्वेऽप्यनुगच्छन्ति, तदा यज्ञानुष्ठाता च पशुरहितो भवति। अतस्तेन दत्तं दक्षिणाद्रव्यं यथा देवत्रा देवेषु ऋत्विक्ष्ववस्थितं भवति, पशवश्च यथा स्वस्मिन्नेव रमन्ते तथा यजमानेन कर्त्तव्यमिति बुद्धिमन्त आहुः। मन्त्रस्य प्रथमभागं व्याचष्टे "ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते" इति। हे यज्ञ प्रीणीहीत्यनेन यज्ञस्य पूजारूपेण प्रोत्साहनेन यथोक्तं प्रयोजनद्वयं सम्पद्यते। द्वितीयभागं व्याचष्टे "ददतो मे मा क्षायीत्याहाक्षितिमेवोपैति" इति। दानप्रयुक्तो द्रव्य-क्षयो मा क्षायीति प्रार्थनेन निवारितो भवति। तृतीयभागं व्याचष्टे "कुर्वतो मे मोपदसदित्याह भूमानमेवोपैति" इति। उपक्षयनिवारणस्य पूर्वमेव प्रार्थितत्वान्मोपदसदित्यनेनाभि-

वृद्धिलक्षणं बाहुल्यमेव प्रार्थ्यते। भूमानमेवोपैतीति॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः॥ * ॥

---

सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच यत्सत्रिणाꣳ होताभूः कामिडामुपाह्वथा इति तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितनिति छिनत्ति सा न छिनत्तीइ इति छिनत्तीति होवाच शरीरं वा अस्यै तदुपाह्वथा इति होवाच गौर्वै ॥ १ ॥

अस्यै शरीरं गां वाव तौ तत्पर्यवदतां या यज्ञे दीयते सा प्राणेन देवान् दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान् यां पितृभ्यो घ्नन्ति सापानेन पितन् य एवं वेद पशुमान् भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्यन्नं वा अस्यै तत् ॥ २ ॥

उपाह्वया इति होवाचौषधयो वा अस्या अन्न-मोषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति य एवं वेदान्नादो भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति प्रतिष्ठां वा अस्यै तदुपाह्वया इति होवाचेयं वा अस्यै प्रतिष्ठा ॥ ३ ॥

इयं वै प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णाति य एवं वेद प्रत्येव तिष्ठत्यथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति छिनत्ति सा न छिनत्ती३ इति न छिनत्तीति होवाच प्र तु जनयतीत्येष वा इडामुपाह्वया इति होवाच वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति ॥ ४ ॥

गौर्वा अस्यै तत्प्रतिष्ठाऽह्वया इति विंशतिश्च ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

इडाद्यनुमन्त्रणमन्त्राः प्रथमे व्याख्याताः, तामिडां द्वितीये द्वयोर्मुन्योः प्रश्नोत्तराभ्यां प्रशंसति । तत्र प्रश्नमवतारयति

"स७ँश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच" इति। संश्रवा इत्यृषेर्नामधेयं, स च सुवर्चनसः पुत्रः, तुमिञ्ज इत्यृष्यन्तरस्य नामधेयं स चोपोदितस्य पुत्रः। संश्रवसः प्रश्नं दर्शयति "यत्सत्रिणा७ँ होताभूः कामिडामुपाह्वथा इति" इति। यत् यदा तदेत्यध्याहारः, कां किङ्गुणकां। तुमिञ्जस्योत्तरं दर्शयति "तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितॄनिति" इति। प्राणादिवृत्तिभिरिडाया देवादिधारणमुत्तरत्र स्पष्टीकरिष्यते, तां देवादिधारणगुणकामिडामुपहूतवानस्मि। पुनः प्रश्नं दर्शयति "छिनत्ति सा न छिनत्ती३ इति" इति। त्वयोपहूता सेयमिडा गोरूपा सती दक्षिणात्वेन प्रतिगृहीतृन् किं छिनत्ति प्रतिग्रहदोषेण विनाशयति, अथवा न छिनत्ति। विचारार्थः प्लुतः। उत्तरं दर्शयति "छिनत्तीति होवाच" इति। एवं तर्हि नेयं मुख्येडेति प्रश्नवादिनोक्तं दूषणं दर्शयति "शरीरं वा अस्यै तदुपाह्वथा इति होवाच" इति। अस्या इडादेवतायाः शरीरमेव त्वयोपहूतं न तु सा देवता। इदानीमाख्यायिकां नोपसृत्य श्रुतिः स्वयमेवाह "गौर्वा अस्यै शरीरं गां वाव तौ तत्पर्यवदतां" इति। गौरेवास्या इडायाः शरीरं, एतच्च मानवी घृतपदी मैत्रावरुणीत्येतस्य होत्रस्येडोपाह्वानमन्त्रस्य ब्राह्मणे मनुः पृथिव्या इत्याद्यनुवाके प्रसिद्धं। अतं इडायाः शरीरभूतां गामेव ज्ञातवन्तौ। तदानीं छिनत्तीत्येताद्दशाभ्यां प्रश्नोत्तराभ्यामनिन्दतां। इदानीं देवादिधारणं स्पष्टीकरोति

"या यज्ञे दीयते सा प्राणेन देवान् दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान् यां पितृभ्यो घ्नन्ति सापानेन पितॄन्" इति। यज्ञे दक्षिणारूपेण दत्तया गवा देवास्तूष्णीमेव तुष्यन्ति, न तु तां दुहन्ति नापि घ्नन्ति। अतः प्राणेन प्रकृष्टचेष्टया उत्तमया वृत्त्या देवान् धारयति। मनुष्यास्तु गां दुग्ध्वा जीवन्ति। तदा नात्यन्तमहानिः क्षीरस्य हीनत्वात्, नाप्यत्यन्तं हानिः शरीरस्य बाधाभावात्। अतः प्राणापानमध्यवर्तिन्या व्यानसमानया मध्यमवृत्त्या मनुष्यान् धारयति। अष्टकाश्राद्धे गां पितृभ्यो घ्नन्ति। तथा चापस्तम्बः श्वो भूते दर्भेण गामुपाकरोति, पितृभ्यस्त्वा जुष्टामुपाकरोमीति। सेयं गौरपानेनाधमवृत्त्या मारणरूपया पितॄन् धारयति। उक्तस्य देवादिधारणस्य वेदनं प्रशंसति "य एवं वेद पशुमान् भवति" इति। अथ तुमिञ्जः स्वेनोपहूताया इडाया मुख्यत्वं सम्पादयितुं गुणान्तरेणेडां विशिनष्टीति दर्शयति "अथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीति" इति। पक्षान्तरद्योतनायाथ वा इति पदद्वयं। येयमिडा प्रभुतोपेताः प्रजाः प्रत्याभिमुख्येन वर्तते तादृशीमिडामुपहूतवानस्मि। सेयं वा एतस्या अपीडाया मुख्यत्वं वारयतीति दर्शयति "अन्नं वा अस्यै तदुपाह्वया इति होवाच" इति। अस्या इडायाः संबन्धि यदन्नं तदेवोपहूतवानस्मि न तु मुख्यामिडां। तदेतदेव उपपादयति "ओषधयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति" इति।

ओषधीनां गवामन्नत्वं प्रसिद्धं। प्रभुत्वोपेतानाञ्च प्रजानां गृहेषु बहुजनभोजनाय ब्रीह्याद्योषधय आगत्य वर्त्तन्ते। एतद्वेदनं प्रशंसति "य एवं वेदान्नादो भवति" इति। पुनरपि तुमिञ्जस्य गुणान्तरोक्तिमिडाया मुख्यत्वसम्पादिकामुदाहरति "अथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति" इति। येयमिडा व्याध्यादिभिः पराभूयमानाः प्रजाः स्वस्यामवस्थाप्यानुगृह्णाति, पराभूयमानाः प्रजास्तत्तदपेक्षितस्थानप्रदानेन स्वीकरोति। अस्या अपीडाया मुख्यत्वनिराकरणोक्तिं दर्शयति "प्रतिष्ठां वा अस्यै तदुपाह्वया इति होवाच" इति। प्रतितिष्ठत्यस्यामिडा गौरिति प्रतिष्ठा भूमिः तामेवोपह्लतवानस्मि न मुख्यामिडां। तदेतद्वेद उपपादयति "इयं वा अस्यै प्रतिष्ठा इयं वै प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णाति" इति। वेदनं प्रशंसति "य एवं वेद प्रत्येव तिष्ठति" इति। मुख्यत्वसम्पादनाय गुणान्तरोक्तिं दर्शयति "अथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति" इति। यस्या वृष्टिरूपाया इडाया निक्रमणे न्यग्भावेन पतने सति यद् घृतं चरदुदकं तज्जीवनार्थिन्यः प्रजा उपजीवन्ति। तादृशीमिडामुपह्लतवानस्मि। संश्रवा अस्यामिडायां पूर्ववद्दोषभावाभावौ पृच्छति "छिनत्ति सा न छिनत्ती३ इति" इति, वृष्टेर्गवान्नभूमीनामिव प्रतिग्राह्यद्रव्यत्वाभावात्। तुमिञ्जस्य प्रतिग्रहदोषाभावोक्तिं गुणान्तरोक्तिञ्च दर्शयति "न छिनत्तीति हो-

वाच प्र तु जनयतीति" इति। वृष्टिरूपेयमिडा कमपि पुरुषं न छिनत्ति न दूषयति, किन्तु प्रकर्षेण सस्यादिकं जनयति। संश्रवसो मुख्येडात्वाङ्गीकारोक्तिं दर्शयति "एष वा इडामुपाह्वथा इति होवाच" इति। एष वृष्टिरूपेडावादी त्वमेव मुख्यामिडामुपहूतवानसि। एतस्यामुक्तायामिडायां पूर्वोक्तलक्षणं वेदो दर्शयति "वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति" इति। तदेवमस्मिन्ननुवाके सर्वप्राण्युपकारिभिर्गवान्नभूमिवृष्टिरूपैरियमिडा प्रशस्ता ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणात्यथो दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपि दधाति यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येण ॥ १ ॥

अन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानो ऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत् तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेः॥ २॥

आर्ध्यै देवा वै यद्यज्ञे ऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन् तमन्वाहरन्त ततो देवा अभवन् परासुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना परास्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती प्रजापतेर्भागोऽसि ॥ ३ ॥

इत्याह प्रजापतिमेव भागधेयेन समर्धयत्यूर्जस्वान् पयस्वानित्याहोर्जमेवास्मिन् पयो दधाति प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाशिषमेवैतामाशास्तेऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोक इत्याह क्षीयते वा अमुष्मिन् लोकेऽन्नमितः प्रदानꣳ ह्यमुष्मिन् लोके प्रजा उपजीवन्ति यदेवमभि-

मृशत्यक्षितिमेवैनङ्गमयति नास्यामुष्मिन् लोकेऽन्नं क्षीयते ॥ ४ ॥

अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिन् लोके पञ्च दश च ॥ ३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीय इडायाः प्रशंसोक्ता । तृतीयेऽन्वाहार्य उच्यते। तस्य दानं विधातुं प्रस्तौति "परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति" इति। परोक्षमिति क्रियाविशेषणं। अग्नीन्द्रादीनामदृश्यमानत्वात् तद्यागः परोक्षः, ऋत्विजां दृश्यमानत्वात् तद्यागः प्रत्यक्षः। अन्वाहार्यदानं विधत्ते "यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणाति" इति। अन्वाहार्यः पक्व ओदनः, तमाहरत्यृत्विग्भ्यो दद्यात्। प्रत्यक्षं वर्तन्त इति शेषः। अन्वाहार्यस्य दक्षिणारूपत्वेन यज्ञच्छिद्रपिधायकत्वेन च तं प्रशंसति "अथो दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपि दधाति" इति। अन्वाहार्यशब्दं निर्वक्ति "यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येण अन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं" इति। अतिरिक्तं कर्मणा यच्च हीनमित्यस्मिन् प्रायश्चित्ताहुतिमन्त्रे प्रोक्तं, अधिकं यज्ञाङ्गमत्र क्रूरं

स्तूनं विलिष्टं। तदुभयमनेनान्वाहार्यदानेनानुकूलं यथा भवति तथाऽऽहरति समादधाति, तस्मादन्वाहार्यते आनुकूल्येन स-माधीयतेऽनेनेत्यन्वाहार्यः। ऋत्विक्प्रीतिहेतुत्वेन पुनः प्रशंसति "देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति" इति। प्रजापतिभागत्वेन पुनस्तं प्रशंसति "प्रजा-पतिर्देवेभ्यो यज्ञान् व्यादिशन् स रिरिचानोऽमन्यत स एत-मन्वाहार्यमभक्तमपश्यत् तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोति" इति। आग्नेयाग्नीषोमीयपुरोडाशान् यागा-नग्न्यादिदेवेभ्यो विभज्य दत्त्वा स्वकीययागराहित्येन रिक्त-मात्मानं मन्यमानः प्रजापतिरभक्तं देवेभ्यो विभज्यासमर्पितं दृष्ट्वा तमात्मनि स्थापितवान्, ततोऽन्वाहार्यः प्राजापत्यः। तस्यान्वाहार्यस्य बाहुल्यसम्पादनं विधत्ते "अपरिमितो नि-रुप्योऽपरिमितः प्रजापतिः प्रजापतेराप्त्यै" इति। सर्वदेव-स्वामित्वेन व्याप्तिबाहुल्यात् प्रजापतेरपरिमितत्वं। स्वविजय-हेतुत्वेन वैरिपराजयहेतुत्वेन च पुनः प्रशंसति "देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वा-हार्यमपश्यन् तमन्वाहरन्त ततो देवा अभवन् परासुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना परास्य भ्रा-तृव्यो भवति" इति। इष्टापूर्तकारित्वपूरणेन च पुनः प्रशंसति "यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रि-यते स त्वेवेष्टापूर्ती" इति। इष्टमाग्नेयादिश्रौतकर्म, पूर्तं वापी-

कूपादिस्मार्तकर्म। तत्राग्नेयादियागेनेष्टसम्पत्तिः, पक्केनान्वाहार्येण पूर्तसम्पत्तिः। तस्याभिमर्शनमन्त्रे प्रथमभागं व्याचष्टे "प्रजापतेर्भागोऽसीत्याह प्रजापतिमेव भागधेयेन समर्धयति" इति। द्वितीयभागं व्याचष्टे "ऊर्जस्वान् पयस्वानित्याहोर्जमेवास्मिन् पयो दधाति" इति। तृतीयभागं व्याचष्टे "प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाशिषमेवैतामाशास्ते" इति। ऋत्विग्भिरन्वाहार्यस्य नीयमानत्वात्तेन स्वकीयप्राणादिपालनमाशीर्वाद एव। चतुर्थभागं व्याकुर्वन्नभिमर्शनं विधत्ते "अक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोक इत्याह क्षीयते वा अमुष्मिन् लोकेऽन्नमितः प्रदानꣳ ह्यमुष्मिन् लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नास्यामुष्मिन् लोकेऽन्नं क्षीयते" इति। स्वर्गस्य कर्मभूमित्वाभावात् न तत्साधनानुष्ठानेनान्नं सम्पादयितुं शक्यं, किन्तु स्वर्गप्राप्ताः प्रजा इतः प्रदानं एतल्लोकानुष्ठितकर्मसम्पादितमेवान्नं स्वर्गे लोके उपजीवन्ति, तस्मात्तत्र भुज्यमानमिदं क्षीयते। अक्षितोऽसीति मन्त्रेण यदभिमर्शनं तेनान्नस्याक्षयत्वप्रापणादन्नं न स्वर्गे क्षीयते ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

---

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजाः सृजते नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशूनसृजत तेनैव पशून् सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठति दर्शपूर्णमासयोः ॥ १ ॥

वै देवा उज्जितिमनूदजयन् दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानपनुदते वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवावरुन्धे द्वाभ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयतः ॥ २ ॥

एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च रोहितेन त्वाग्निर्देवतां गमयत्वित्याहैते वै देवाश्वाः ॥ ३ ॥

यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वै-
रेव यजमानꣳ सुवर्गं लोकं गमयति वि ते मुञ्चामि
रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं
विमुञ्चति विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां
गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतिति-
ष्ठति सोमस्याहं देवयज्यया सुरेताः ॥ ४ ॥

रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत
आत्मन्धत्ते त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेय-
मित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव
पशूनाꣳ रूपमात्मन्धत्ते देवानां पत्नीरग्निर्गृहपतिर्य-
ज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूया-
समित्याहैतस्माद्वै मिथुनात् प्रजापतिर्मिथुनेन ॥ ५ ॥

प्राजायत तस्मादेव यजमानो मिथुनेन प्रजायते
वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असु-
राणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं यद्यद्भ्रातृव्य-
स्याभिध्यायेत्तस्य नाम गृह्णीयात् तदेवास्य सर्वं वृङ्क्ते
घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो द-
दातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्यास्य प्र-
जायां वाजी जायते य एवं वेद ॥ ६ ॥

दर्शपूर्णमासयोरुभयतो देवाश्वाः सुरेताः प्रजापतिर्मिथुनेनाप्नोत्यष्टौ च ॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीयेऽन्वाहार्योऽभिहितः। चतुर्थे शेषाहुतीनामनुमन्त्रणमन्त्रा व्याख्यायन्ते। तत्रानूयाजमन्त्रान् व्याचष्टे "बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजाः सृजते नराशंसस्याहं देवयज्यया पशुमान् भूयासमित्याह नराशंसेन वै प्रजापतिः पशूनसृजत तेनैव पशून् सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठति" इति। बर्हिषा बर्हिर्यागानुमन्त्रणेन, एवमितरत्रोभयत्र। सूक्तवाकानुमन्त्रणमन्त्रं व्याचष्टे "दर्शपूर्णमासयोर्वै देवा उज्जितिमनूदजयन् दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानपनुदते" इति। अनुष्ठितयोर्दर्शपूर्णमासयोरनेनोज्जितिमन्त्रपाठेन उज्जितिरुत्कर्षः सम्पूर्णता भवति। तांश्च यज्ञोज्जितिमनु देवा अप्युत्कर्षेणाजयन् ताभ्यांश्च सम्पूर्णाभ्यां दर्शपूर्णमासाभ्यामसुरान्निराचक्रुः। स्रुग्व्यूहनानुमन्त्रणं विधत्ते "वाजवतीभ्यां व्यूहत्यन्नं

वै वाजोऽन्नमेवावरुन्धे" इति। व्यूहति अध्वर्युणा क्रियमाण मनुमन्त्रयेदित्यर्थः। पादद्वयेनैव प्रकर्षेण स्थित्यर्थं मन्त्रद्वित्व-मित्याह "द्वाभ्यां प्रतिष्ठित्यै" इति। कालविशिष्टमेमा अग्म-न्निति मन्त्रपाठं विधातुं प्रस्तौति "यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यः" इति। एष इदानीमत्र वक्ष्यमाण एमा अग्मन्नितिमन्त्रपाठः पृथक् दोहः, पूर्वमिडा-यामुक्तः सा मे सत्याशीरितिमन्त्रपाठः पृथग्दोहः। विधत्ते "यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च" इति। होता सूक्तवाकं पठन् 'आशास्तेऽयं यजमानोऽसौ' इति यदा नाम गृह्णाति तदानीमेमा अग्मन्निति मन्त्रं पठेत्। या देवता 'अग्निमग्न आवह' 'अग्निरिदं हविरजुषत' इत्यादिना होत्रा बहुशः संस्तुताः सर्वा अप्यनेन मन्त्रपाठेन यजमानो दुग्धे, किञ्चेडाकालीनो दोह इदानीन्तनो दोह इत्युभयमपि स-म्पादितं भवति। प्रस्तरानुमन्त्रणमन्त्रं व्याचष्टे "रोहितेन त्वा-ग्निर्देवतां गमयत्वित्याहैते वै देवाश्वा यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति" इति। यजमानवद्यागसाधनत्वात् प्रस्तरे यजमानत्वोपचारः। परिधिविमोकानुमन्त्रणमन्त्रं व्याचष्टे "वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं विमुञ्चति" इति।

ते रशना मुञ्चामीत्यग्निमुद्दिश्याभिधानादयमग्नेर्विमोकः। शंयुवाकानुमन्त्रणमन्त्रं व्याचष्टे "विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठति" इति। यज्ञस्य फलव्याप्त्या विष्णुत्वं, अन्ततः समाप्तिकाले। प्रथमस्य पत्नीसंयाजस्यानुमन्त्रणमन्त्रं व्याचष्टे "सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन्धत्ते" इति। गर्भाशये रेतोधारणं सोमस्यानुग्रहाद्भवति, ततः सोमो रेतोधाः। द्वितीयपत्नीसंयाजानुमन्त्रणमन्त्रं व्याचष्टे "त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते" इति। अन्यत्र "यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति" इत्याम्नानात् मनुष्यगवाश्वादिपशूनां स्त्रीपुरुषमिथुनात्मकानां रूपं त्वष्टा करोति। तृतीयचतुर्थपत्नीसंयाजयोरेकीकारेणानुमन्त्रणमन्त्रं व्याचष्टे "देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासमित्याहैतस्माद्वै मिथुनात् प्रजापतिर्मिथुनेन प्राजायत तस्मादेव यजमानो मिथुनेन प्रजायते" इति। वेदाभिमर्शनमन्त्रं व्याचष्टे "वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं" इति। वित्तं पूर्वलब्धं धनं, वेद्यं इतःपरं लब्धव्यं। तदुभयमसुरसम्बन्धि यत्र क्वापि निक्षिप्तं, तदुभयं देवाः कदाचिद्वेदेन भूमिं संमृजन्तोऽलभन्त। ततो विद्यते वित्त-

मनेनेति व्युत्पत्त्या वेदत्वं निष्पन्नं। विधत्ते "यद्यद्भ्रातृव्य-स्याभिध्यायेत्तस्य नाम गृह्णीयात् तदेवास्य सर्वं वृङ्क्ते" इति। वैरिणः सम्बन्धि यद्गृहक्षेत्रादिकं यजमानो ममास्त्वित्यभिध्या-येत् तस्य सर्वस्य नामधेयं मन्त्रमध्ये गृहीत्वा विदेयेत्येतत्पदं पठेत्। एतस्य मन्त्रस्यान्त्यभागे सहस्रिणमिति पदस्योच्चारणं प्रशंसति "घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोति" इति। मन्त्रार्थवेदनं प्रशंसति "आऽस्य प्रजायां वाजी जायते य एवं वेद" इति। प्रजायां मन्तौ सर्वतः पुत्रोऽन्नसमृद्धो जायते ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

---

ध्रुवां वै रिच्यमानां यज्ञोऽनुरिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वाप्यायते यज्ञं यजमानो यजमानं प्रजा आप्यायतां ध्रुवा घृते-नेत्याह ध्रुवामेवाप्याययति तामाप्यायमानां यज्ञो ऽन्वाप्यायते यज्ञं यजमानो यजमानं प्रजाः प्रजापते-

विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमाने-
नेति ॥ १ ॥

आहायं वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनं
दधाति सह यजमानेन रिच्यत इव वा एतद्यद्यजते
यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणात्येतावान् वै
यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यज-
मानभागं प्राश्नाति यज्ञ एव यज्ञं प्रतिष्ठापयत्येतद्वै
सूयवसꣳ सोदकं यद्बर्हिश्चापश्चैतत् ॥ २ ॥

यजमानस्यायतनं यद्वेदिर्यत्पूर्णपात्रमन्तर्वेदि निन-
यति स्व एवायतने सूयवसꣳ सोदकं कुरुते सदसि
सन्मे भूया इत्याहापो वै यज्ञ आपोऽमृतं यज्ञमेवामृ-
तमात्मन्धत्ते सर्वाणि वै भूतानि व्रतमुपयन्तमनूपय-
न्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष
वै दर्शपूर्णमासयोरवभृथः ॥ ३ ॥

यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव
सहावभृथमवैति विष्णुमुखा वै देवाश्छन्दोभिरिमान्
लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते वि-
ष्णुरेव भूत्वा यजमानश्छन्दोभिरिमान् लोकानन-
पजय्यमभिजयति विष्णोः क्रमोऽस्यभिमातिहेत्याह

गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमान् लोकान् यथापूर्वमभिजयति ॥ ४ ॥

यजमानेनेति चैतदवभृथो दिशः सप्त च ॥ ५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

चतुर्थे शेषाकृत्यनुमन्त्रणमन्त्रा व्याख्याताः। पञ्चमे त्वाप्यायनादिमन्त्रा व्याख्यायन्ते। तत्राप्यायनमन्त्रं व्याख्यातुमन्वयव्यतिरेकाभ्यां प्रस्तौति "ध्रुवां वै रिच्यमानां यज्ञोऽनुरिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वाप्यायते यज्ञं यजमानो यजमानं प्रजाः" इति। ध्रुवायां रिक्तायां यज्ञस्यासम्पूर्त्या यजमानस्य फलाभावात् तदीयप्रजाया अन्नाद्यभाव इति व्यतिरेकः। एवमन्वयं योज्यं। मन्त्रं व्याचष्टे "आप्यायतां ध्रुवा घृतेनेत्याह ध्रुवामेवाप्याययति तामाप्यायमानां यज्ञोऽन्वाप्यायते यज्ञं यजमानो यजमानं प्रजाः" इति। यजमानभागप्राशनमन्त्रं व्याचष्टे "प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेनेत्याहायं वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनं दधाति सह यजमानेन" इति। विशेषेण कर्मभूमित्वेन भातीति विभानयं

भूलोकः। एनं यजमानभागं। यजमानस्य रिक्तीकरणनिवारणेन भागप्राशनं प्रशंसति "रिच्यत इव वा एतद्यद्यजते यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणाति" इति। यजत इति यद् एतेन पुरोडाशाज्यसान्नाय्यद्रव्यहानेर्यजमानो* रिक्त इव भवति, भागप्राशनेन तु प्रीतस्तं क्लेशं जहाति। यज्ञप्रतिष्ठाहेतुत्वेनापि तदेव प्रशंसति "एतावान् वै यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रतिष्ठापयति" इति। यजमानस्य भागो यावानस्ति एतावानेवेह लोके यजमानस्योपयुक्तो यज्ञोऽवशिष्टस्य देवैर्ऋत्विग्भिश्च भक्ष्यमाणत्वात्, स्वयञ्च यज्ञस्वामित्वेन यज्ञात्मकः, तथा सति यजमानेन भागे प्राशिते यज्ञ एव यज्ञः प्रतिष्ठापितो भवति। पूर्णपात्रस्य निनयनं विधातुं प्रस्तौति "एतद्वै सूयवसꣳ सोदकं यद्बर्हिश्चापश्चैतद्यजमानस्यायतनं यद्वेदिः" इति। वेदेर्विधारणेन यजमानस्थानत्वं, एतच्च स्थानं बर्हिषास्तीर्णत्वात् समीचीनतृणोपेतं प्रणीतानामत्र स्थापितत्वात् उदकोपेतञ्च। विधत्ते "यत्पूर्णपात्रमन्तर्वेदि निनयति स्व एवायतने सूयवसꣳ सोदकं कुरुते" इति। सूयवसं तृणसमृद्धिं† सोदकं उदकसमृद्धिञ्च† कुरुते। निनयनमन्त्रं व्याचष्टे "सदसि सन्मे भूया इत्याहापो वै यज्ञ आपोऽमृतं यज्ञमेवामृतमात्मन्धत्ते" इति। अपां यज्ञसाधनत्वाद्यज्ञत्वं

* पुरोडाश० द्रव्यहोमे यजमान इति का०।

† ०समृद्धमिति तै०।

जीवनहेतुत्वाच्चामृतत्वं, तस्मादपोऽभिलक्ष्य मन्त्रे भूया इत्युक्ते सति यज्ञरूपममृतं स्वस्मिन् धारयति। व्युत्सेचनमन्त्रं व्याचष्टे "सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष वै दर्शपूर्णमासयोरवभृथो यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव सहावभृथ-मवैति" इति। यो यजमानो यज्ञव्रतमुपैति तमनु देवपित्रा-दीनि सर्वाणि भूतानि व्रतं प्रारभन्ते। अतो देवपित्रादि-मार्जनप्रतिपादकेनानेन मन्त्रेण तैः सर्वभूतैः सहैवावभृथं प्रा-प्नोति। विष्णुक्रमान् विधत्ते "विष्णुमुखा वै देवाश्छन्दोभिरि-मान् लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमान् लोकाननपजय्यमभिजयति" इति। देवाः पूर्वं स्वेषु विष्णुमेव मुख्यं कृत्वा छन्दोऽभिमानिदेवैः सहिता अन्यैर्जेतुं यथा न शक्यते तथा लोकानजयन्। अतो यजमानोऽपि विष्णुक्रमैस्तथा जयति। तत्रत्यान्मन्त्रान् व्याचष्टे "विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभ-मन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमान् लोकान् यथापूर्वमभिजयति" इति। गायत्र्यादिछन्दोदेवानां पृथिव्या-दिलोकस्वामित्वेन तैः सह लोकानां जेतुं शक्यतया मन्त्रेषु गायत्रेण छन्दसेत्यादि पठितमित्यभिप्रायः॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः॥ * ॥

---

अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति सन्दृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृक्षीत्याह यथायजुरेवैतत् सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाशिषमेवैतामाशास्ते प्र वा एषो ऽस्माल्लोकाच्च्यवते यः ॥ १ ॥

विष्णुक्रमान् क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान् क्रमेत य इमान् लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहेदित्येष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहति सं ॥ २ ॥

ज्योतिषाऽभूवमित्याहास्मिन्नेव लोके प्रतितिष्ठत्यैन्द्रीमावृतमन्वावर्त इत्याहासौ वा आदित्य इन्द्रस्तस्यैवावृतमनु पर्यावर्तते दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्तते संमहं प्रजया सं मया प्रजेत्याहाशिषं ॥ ३ ॥

एवैतामाशास्ते समिद्धो अग्ने मे दीदिहि समेद्धा ते

अग्ने दीद्यासमित्याह यथायजुरेवैतद्वसुमान् यज्ञो वसीयान् भूयासमित्याहाशिषमेवैतामाशास्ते बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्या अग्ने गृहपत इत्याह ॥ ४ ॥

यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रः ॥ ५ ॥

जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा विमुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना विमुञ्चति प्रतिष्ठित्या ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव ॥ ६ ॥

विसृजते शान्त्या अप्रदाहाय पराङ् वाव यज्ञ एति न निवर्तते पुनर्यो वै यज्ञस्य पुनरालम्भं विद्वान्

यजते तमभिनिवर्तते यज्ञो बभूव स आबभूवेत्याहैष वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरालभतेऽनवरुद्धा वा एतस्य विराड्य आहिताग्निः सन्नसभः पशवः खलु वै ब्राह्मणस्य सभेष्ट्वा प्राङुत्क्रम्य ब्रूयाद्गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञ इत्यव सभाꣳ रुन्धे प्र सहस्रं पशूनाप्नोत्यास्य प्रजायां वाजी जायते ॥ ७ ॥

यः समाशिषं गृहपत इत्याहामुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो व्रतमेव खलु वै चतुर्विꣳशतिश्च ॥ ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

आप्यायनादिमन्त्राः पञ्चमे व्याख्याताः। उपस्थानादिमन्त्राः षष्ठे व्याख्यायन्ते। तत्राहवनीयोपस्थानमन्त्रस्य पूर्वभागं व्याचष्टे "अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति" इति। द्विरुक्त्या आदरस्य प्रतीतेः सर्वथा प्राप्नोत्येव। उत्तरभागं व्याचष्टे "सन्दृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृचीत्याह यथायजुरेवैतत्" इति। अस्मिन् यजुषि तपःशब्ददर्शनात्तपसश्च विच्छिन्नो मा भूवमिति यत्प्रतीयते एतद्यजुरनतिक्रम्य तथैव प्रार्थ्यते। आदित्योपस्थानमन्त्रं व्याचष्टे

"सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाशिष-मेवैतामाशास्ते" इति। आयुर्मे धेहीत्यनेनाशीः प्रतीयते। इदमहमित्यादिकं वैरिनिःसारणमन्त्रं व्याख्यातुं प्रस्तौति "प्र वा एषोऽस्माल्लोकाच्च्यवते यो विष्णुक्रमान् क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान् क्रमेत य इमान् लोकान् भ्रातृव्यस्य संविद्य पुन-रिमं लोकं प्रत्यवरोहेदिति" इति। विष्णुक्रमाणां स्वर्गार्थ-त्वाद्विष्णुक्रमैरस्माल्लोकात् प्रच्युतिर्भवति, तस्याः प्रच्युतेः परि-हारोपायं ब्रह्मवादिनः परस्परमेवमाहुः, यो यजमानो वैरिण इमाँल्लोकान् तेन सम्पादितान् वैरिनिःसारणेन लब्ध्वा विष्णुक्रमैः स्वर्गारोहणादूर्द्ध्वं पुनरिमं मनुष्यलोकं प्रत्यवरो-हेत् स एव यजमानो विष्णुक्रमेषु चतुर इति। मन्त्रं व्याचष्टे "एष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्य-माभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान् भ्रातृव्यस्य सं-विद्य पुनरिमं लोकं प्रत्यवरोहति" इति। इदमहमित्यादि मन्त्रमाहेति यदेष एव पाठोऽस्य भूलोकस्य सम्बन्धी प्रत्यव-रोहः। आत्माभिमर्शनमन्त्रं व्याचष्टे "सं ज्योतिषाऽभूवमि-त्याहास्मिन्नेव लोके प्रतितिष्ठति" इति। एतल्लोकप्रापकेन ज्योतिषा सङ्गतोऽहमित्येवं मन्त्रे प्रतीयमानत्वात्। प्रदक्षिणा-वृत्तिमन्त्रं व्याचष्टे "ऐन्द्रीमावृतमन्वावर्त इत्याहासौ वा आ-दित्य इन्द्रस्तस्यैवावृतमनु पर्यावर्तते" इति। परमैश्वर्ययोगा-दादित्यस्येन्द्रत्वं। प्रदक्षिणावृत्तिं विधत्ते "दक्षिणा पर्यावर्तते

स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्तते" इति। दक्षिणा प्रादक्षिण्येन। दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यं, पुरुषस्य दक्षिणे भागे सामर्थ्यातिशयसद्भावात्। तदेवानुसृत्यावृत्तिः कृता भवति। यस्माद्दक्षिणभागे वीर्यं श्रुतेरभिप्रेतं तस्माल्लोकेषु सर्वेषु व्यापारेषु दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किञ्च आदित्यो मेरुं प्रदक्षिणीकरोति, तदप्यत्रानुसृतं भवति। विपर्ययेणावृत्तिमन्त्रं व्याचष्टे "समहं प्रजया सं मया प्रजेत्याहाशिषमेवैतामाशास्ते" इति। स्वयं यथा प्रजादिना सङ्गच्छते तथा प्रजादिरपि स्वेन सङ्गच्छत इत्येतदुभयं द्वितीयावृत्त्या प्रार्थ्यते। समिदाधानमन्त्रं स्पष्टार्थत्वेन व्याचष्टे "समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैतत्" इति। आहवनीयोपस्थानमन्त्रं व्याचष्टे "वसुमान् यज्ञो वसीयान् भूयासमित्याहाशिषमेवैतामाशास्ते" इति। वसीयानतिशयेन धनवान्। विधत्ते "बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्यै" इति। गार्हपत्योऽजस्रं धार्यते, तथा सति तस्मिन्नग्नौ बहुविधजन्तुपातः सम्भाव्यते। अतो यजमानेन गार्हपत्यस्य समीपे पापमिश्रमिव होमादिकर्मानुष्ठीयते। तत अग्न आयूंषीत्याद्याभ्यां अग्निपवमानदेवताकाभ्यां शुद्धिहेतुभ्यामृग्भ्यामग्न्युपस्थाने वह्नेः स्वस्य च शुद्धिर्भवति। अन्यमपि गार्हपत्योप-

स्थानमन्त्रं व्याचष्टे "अग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमाशासे त-न्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमाशासेऽमुष्मै ज्योतिष्मती-मिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति" इति। तदिदं मन्त्रब्राह्मणं स्पष्टार्थं पूर्वप्रपाठके व्याख्यातञ्च। तत्र नाम गृह्णातीति विधिः। तद्ग्रहणे प्रकारवि-शेषमाहापस्तम्बः "तन्तव इत्यजातस्यामुष्मा इति जातस्य" इति। अजातस्य पुत्रस्य विशेषनामाभावात् तन्तव इत्येतदेव सामान्य-नाम गृह्णीयात्, जातस्य पुत्रस्य त्वमुष्मा इत्यनेन विशेषनामनि-र्देशो विवक्ष्यते। यज्ञविमोकमन्त्रं व्याचष्टे "यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा विमु-ञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना विमुञ्चति प्रतिष्ठित्यै" इति। व्रतविसर्जनमन्त्रं व्याचष्टे "ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रत-मेव विसृजते शान्त्या अप्रदाहाय" इति। यद्व्रतं गृहीतं सत्र विसृष्टं तद्व्रतं प्रदहो यजमानं प्रदग्धुं ईश्वरं समर्थं। अग्ने व्रतपत इत्यादिमन्त्रपाठ एव व्रतविसर्गः, तेन शीतं सत् तं न दहति। पुनरालम्भमन्त्रं व्याख्यातुं प्रस्तौति "पराङ् वाव यज्ञ एति न निवर्तते पुनर्यो वै यज्ञस्य पुनरालम्भं विद्वान्

* शान्तमिति ते०।

यजते तमभिनिवर्तते" इति। पराङ् वाव विमुख एव पुनर्न निवर्तते, पुनरालम्भमन्त्रवादिनं* यजमानं प्रति तु पुनर्निवर्तते, पुनरप्यमावनुतिष्ठतीत्यर्थः। मन्त्रं व्याचष्टे "यज्ञो बभूव स आबभूवेत्याहैव वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरालभते" इति। एष वै मन्त्रपाठ एव। गोमतीमन्त्रं विधातुं प्रस्तौति "अनवरुद्धा वा एतस्य विराड्य आहिताग्निः सन्नसभः पशवः खलु वै ब्राह्मणस्य सभा" इति। यो यजमान आहिताग्निरपि सन् सभारहितो भवेत् एतस्य यजमानस्य विराट् विशेषेण राजमाना स्वोचितसभा कदाचिदप्यनवरुद्धा अस्वाधीना भवति, यागकाले सभाहीनस्य लोकव्यवहारकालेऽपि सभा न सम्भवेदित्यर्थः। नात्र राज्ञ इवामात्यस्वभटरूपा सभा ब्राह्मणस्योचिता, किन्तर्हि यज्ञनिष्पादका द्विपादश्चतुष्पादश्च पशवोऽस्य सभा। मन्त्रं विधत्ते "इष्ट्वा प्राङुत्क्रम्य ब्रूयाद्गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञ इत्यव सभाꣳ रुन्धे प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते" इति। "भूमनिन्दाप्रशंसासु" इति वैयाकरणैरुक्तत्वात् गोमानित्यादिको मतुप्प्रत्ययो बाहुल्यवाची। अतः सहस्रप्राप्तिर्युक्ता। इडावान् प्रजावानिति मन्त्रेऽभिधानादस्य प्रजायामन्नवतः पुत्रस्योत्पत्तिर्युक्ता॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः॥ * ॥

---

* ०वेदिनमिति तै०।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः। इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यात्। वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत्। अप्सु ॥ १ ॥

अन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः। वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंꣳशतिः। ते अग्रे अश्वमायुञ्जन्ते अस्मिन् जवमादधुः। अपान्नपादाशुहेमन्य ऊर्मिः ककुद्मान् प्रतूर्तिर्वाजसातमस्तेनायं वाजꣳ सेत्। विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमस्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनु सञ्चरन्तौ दूरेहेतिरिन्द्रियावान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ॥ २ ॥

अप्सु न्यङ्कौ पञ्चदश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

इत्थं षट्स्वनुवाकेषु दार्शिकयाजमानब्राह्मणशेषो वर्णितः। अथ देवसवितः प्रसुवेत्यादिषु षट्सु वाजपेयविषया आध्वर्यवमन्त्रा उच्यन्ते। तत्रास्मिन् सप्तमेऽनुवाके रथविषया मन्त्राः कथ्यन्ते। तेषां वाजपेयमन्त्राणां व्याख्यानं ब्राह्मणग्रन्थे प्रथमकाण्डे तृतीयप्रपाठके द्वितीयमारभ्य नवमान्तेष्वष्टस्वनुवाकेषु आम्नातं। तत्र वाजपेयविधिर्ग्रहविधिः पशुविधिश्चाद्येषु त्रिष्वनुवाकेषु क्रमेणाम्नाताः। अनयोर्वाजपेयविषययोर्मन्त्रब्राह्मणयोरत्यन्तविप्रकृष्टदेशवर्तित्वेन बुद्धिसन्निध्यभावाच्छ्रोतॄणां प्रतिपत्तिसौकर्याय पूर्वोक्तदार्शिकसौमिककाण्डवद्ब्राह्मणेन सहैव मन्त्रा व्याख्यायन्ते। तस्य च ब्राह्मणस्य प्रथमानुवाके वाजपेयं विधातुं प्रस्तौति "देवा वै यथादर्शं यज्ञानाहरन्त। योऽग्निष्टोमं। य उक्थ्यं। योऽतिरात्रं। ते सहैव सर्वे वाजपेयमपश्यन्। ते अन्योऽन्यस्मै नातिष्ठन्त। अहमनेन यजा इति। तेऽब्रुवन्। आजिमस्य धावामेति। तस्मिन्नाजिमधावन्। तं बृहस्पतिरुदजयत्। तेनायजत। स स्वाराज्यमगच्छत्। तमिन्द्रोऽब्रवीत्। मामनेन याजयेति। तेनेन्द्रमयाजयत्। सोऽग्रं देवतानां पर्यैत्। अगच्छत्स्वाराज्यं। अतिष्ठन्तास्मै ज्यैष्ठ्याय" इति। देवानां मध्ये कश्चिदग्निष्टोमं ददर्श अन्य उक्थ्यं अपरोऽतिरात्रं ते च स्वस्वदर्शनमनतिक्रम्य तान् यज्ञानाहरन्त अनुष्ठितवन्तः। ते देवाः सर्वे सहैव वाजपेयं दृष्ट्वाऽहमेव प्रथममनेन वाजपेयेन यजा इत्येवं विवदमानाः परस्परं प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त ज्यैष्ठ्यं नाङ्गीचक्रुः।

तत एवं समयं चक्रुः, अस्माकं मध्य आजिधावनेन यः कश्चि-ज्जयति स एव ज्येष्ठोऽस्त्विति। आजिर्धावनप्रदेशस्यावधिर्भू-मिविशेषः। एवं समयं कृत्वा तस्मिन् वाजपेयविषये विजया-याजिमधावन्, तत्र तं वाजपेयं प्रति धावन् बृहस्पतिरुत्क-र्षेणाजयत्, इतरेभ्यः प्रथममवधिं पस्पर्श। ततः प्रथमं स एव तेन वाजपेयेनेष्ट्वा स्वाराज्यमपारतन्त्र्यरूपं महाराज्यमग-च्छत्। तत इन्द्रस्तं बृहस्पतिं सम्प्रार्थ्य तेन वाजपेयेनेष्ट्वा देवा-नां मध्ये ज्येष्ठत्वमपारतन्त्र्येण स्वर्गाधिपत्यलक्षणं स्वाराज्यं चागच्छत्, अस्येन्द्रस्य ज्यैष्ठ्यमितरे सर्वे देवा मात्सर्यं परि-त्यज्याङ्गीचक्रुः। स्वाराज्यादिकामिनो वाजपेयं विधत्ते "य एवं विद्वान् वाजपेयेन यजते। गच्छति स्वाराज्यं। अग्रꣳ समानानां पर्येति। तिष्ठन्तेऽस्मै ज्यैष्ठ्याय" इति। अधिकारिवि-शेषविधिमुन्नयति "स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः" इति। स बृहस्पतिनानुष्ठितः, एष इन्द्रेणानुष्ठितः। देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, इन्द्रः क्षत्रियजात्यभि-मानी, ताभ्यामेवानुष्ठितत्वान्मनुष्येष्वपि ब्राह्मणराजन्ययोरेवा-त्राधिकारो न तु वैश्यस्य। अत एवापस्तम्ब आह "शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वृद्धिकामः" इति। नाम-निर्वचनं दर्शयति "तं वा एतं वाजपेय इत्याहुः। वाजाप्यो वा एष। वाजꣳ ह्येतेन देवा ऐप्सन्" इति। वाजो देवान्नरूपः सोमः पेयो यस्मिन् यागे स वाजपेय इत्येकं निर्वचनं। यस्मा-देतेन यज्ञेन देवा वाजं फलरूपमन्नं आप्तुमैच्छन्, तस्मादन्न-

रूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरं निर्वचनं। सोमस्यैतद्यागसाधनत्वात् तदभेदेन यागं तद्वेदनञ्च स्तौति "सोमो वै वाजपेयः। यो वै सोमं वाजपेयं वेद। वाज्येवैनं पीत्वा भवति। आऽस्य वाजी जायते" इति। एनं वाजपेयगतं सोमं। फलभूतान्नाभेदोपचारेण स्तौति "अन्नं वै वाजपेयः। य एवं वेद। अत्त्यन्नं। आऽस्यान्नादो जायते" इति। यागप्रतिपादकवेदाभेदोपचारेण स्तौति "ब्रह्म वै वाजपेयः। य एवं वेद। अत्ति ब्रह्मणान्नं। आऽस्य ब्रह्मा जायते" इति। ब्रह्मणा वेदाध्यापनसम्पादितया गुरुदक्षिणयेत्यर्थः। ब्रह्मा वेदाध्यापकः। मन्त्रोच्चारणसाधनभूतवागभेदोपचारेण स्तौति "वाग्वै वाजस्य प्रसवः। य एवं वेद। करोति वाचा वीर्यं। ऐनं वाचा गच्छति। अपिवर्तीं वाचं वदति" इति। देवसवितः प्रसुवेत्यादिमन्त्ररूपा वागेव वाजस्य वाजपेयस्य प्रसव उत्पत्तिहेतुः। य एतद्वेदिता स तया सभायां पाण्डित्यरूपया वाचा वीर्यमतिशयं करोति, सभागतस्य विद्वत्सङ्घः स्तुतिरूपया वाचा युक्त एनमागच्छति बहुधा प्रशंसतीत्यर्थः। पुनरपि वाजपेयवाक्यं श्रोष्यामि तदर्थं ज्ञास्यामि अनुष्ठास्यामीत्येतादृशीं पुनरपीत्यपिशब्दोपेतां वाचं सर्वदा वदति श्रद्धालुर्भवतीत्यर्थः। एकादशानुवाकगतानामुज्जितिमन्त्राणां पाठं विधातुं प्रस्तौति "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन् वाजपेयमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यद्वाजपेयः। अप्येव नोऽत्रास्त्विति। तेभ्य एता उज्जितीः

प्रायच्छत्" इति। प्रजापतिरितरेभ्यो देवेभ्योऽग्निष्टोमादीन् यज्ञान् विभज्य दत्त्वा वाजपेयं स्वस्मिन्नेव स्थापितवान्, देवाश्च वाजपेय एव मुख्यो यज्ञोऽतोऽस्माकमप्यत्र भागोऽस्त्वित्यमुवन्, स च तेभ्य उज्जितिमन्त्रान् प्रायच्छत्। विधत्ते "ता वा एता उज्जितयो व्याख्यायन्ते। यज्ञस्य सर्वत्वाय। देवतानामनिर्भागाय" इति। व्याख्यायन्ते व्याख्यायेरन् पठनीया इत्यर्थः। तत्पाठेन यज्ञस्य सर्वत्वमवैकल्यं भवति। देवताश्च भागयुक्ता भवन्ति। तेषु मन्त्रेष्वग्निरश्विनौ विष्णुः सोम इत्येवं तत्तद्भागभाजो देवता आम्नाताः। अयं विधिरापस्तम्बेन स्पष्टं दर्शितः "अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति" इति। उज्जितिमन्त्राणां रथधावनकाले पठनीयत्वात् धावनविधिसमीप एवायं विधिरुत्कृष्टव्यः। अस्य च विध्युत्कर्षस्य प्रसङ्गेन बुद्धिस्थं पुरुषार्थत्वेन क्रतुप्रकरणादुत्कृष्टव्यं। कञ्चित्प्रतिग्रहनिषेधं विधित्सुः प्रस्तौति "देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन्। यद्ब्रह्मणः शमलमासीत्। सा गाथा नाराशꣳस्यभवत्। यदन्नस्य। सा सुरा" इति। ब्रह्मणो वेदस्य शमलं मलिनभागमपाघ्नन् अपनीतवन्तः। नराणां राजामात्यादीनामा समन्तात् प्रशंसनं नराशंसः, तद्विषया गीर्नाराशंसी। प्रतिग्रहनिषेधं विधत्ते "तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यं। यत्प्रतिगृह्णीयात्। शमलं प्रतिगृह्णीयात्" इति। यस्माल्लौकिकमनुष्यविषयगानसुरे मलरूपे, तस्मात्तादृशगानपरस्य सुरापानमत्तस्य च धनं न प्रतिगृह्णीयात्। प्रकारान्तरेण वाज-

पेयं प्रशंसति "सर्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी । या पृथिव्यां याग्नौ या रथन्तरे । यान्तरिक्षे या वायौ या वामदेव्ये । या दिवि यादित्ये या बृहति । याप्सु यौषधीषु या वनस्पतिषु" इति । पृथिव्यन्तरिक्षद्युरूपं यल्लोकत्रयं तदभिमानिदेवतात्रयं, रथन्तरवामदेव्यबृहद्रूपं उक्तलोकाभिमानिदेवताप्रियं यत्सामत्रयं, अबोषधिवनस्पतिरूपं यद्यागोपयुक्तद्रव्यत्रयं, तस्य सर्वस्य सम्बन्धिन्यो या वाचः ताः सर्वा एतस्य वाजपेययाजिनोऽवरुद्धाः सम्पन्नाः । तत्र सामसम्बन्धिन्यो वाचस्तदाश्रयभूता ऋच एव । पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्येते यूपप्रोक्षणमन्त्राः पृथिव्यादिविषया वाचः । अग्न आयूंषीत्यादिराग्नेयातिग्राह्यमन्त्रोऽग्निविषया वाक् । आ वायो भूषेति ग्रहान्तरमन्त्रो वायुविषया वाक् । तुरीयादित्यसवनं त इन्द्रियमित्यादिग्रहान्तरमन्त्र आदित्यविषया वाक् । आप उन्दन्त्वित्यादिरब्विषया वाक् । ओषधे त्रायस्वैनमित्योषधिविषया वाक् । सुपिप्पला देवो वनस्पतिरित्यादिर्वनस्पतिविषया वाक् । एवं पृथिवी दीक्षेत्यादयो बहव उदाहार्याः । तदेवं सर्ववागवरोधाद्वाजपेयः प्रशस्तः । तामिमां प्रशंसामुपसंहरति "तस्माद्वाजपेययाज्यार्त्विजीनः । सर्वा ह्यस्य वाचोऽवरुद्धाः" इति । आर्त्विजीनः वाजपेयं यष्टुं प्रशस्तानृत्विजोऽर्हति । वाजपेयेनेष्ट्वा परार्थमार्त्विज्यञ्चार्हति । इत्यमेकेनानुवाकेन वाजपेयो विहितः । अथान्येनानुवाकेन ग्रहविशेषा विधीयन्ते । तत्रातिग्राह्यान् विधातुं प्रस्तौति "देवा वै

यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत । तदतिग्राह्यैरतिगृह्यावारुन्धत । तदतिग्राह्याणामतिग्राह्यत्वं" इति । अन्यैरैन्द्रवायवादिग्रहैर्यत् फलं न प्राप्नुवन् तदप्राप्यं फलमतिग्राह्यमन्त्रकैर्ग्रहैरतिशयेन गृहीत्वा स्वाधीनं कृतवन्तः । इतरग्रहानतिक्रम्य दुष्प्रापं फलं गृह्यत एभिरित्यतिग्राह्याः । विधत्ते "यदतिग्राह्या गृह्यन्ते यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे । तदेव तैरतिगृह्यावरुन्धे" इति । प्रकृतिगतानामाग्नेयैन्द्रसौर्याणामतिग्राह्याणां चोदकादेव प्राप्तत्वात् तद्विधित्वभ्रान्तिव्युदासाय सङ्ख्याविशेषं विधत्ते "पञ्च गृह्यन्ते । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तमाप्त्वावरुन्धे" इति । धानाः करम्भ इत्यादिब्राह्मणोदाहरणेन यज्ञस्य पाङ्क्तत्वमसकृद्दर्शितं । वक्ष्यमाणैरिन्द्राय जुष्टं गृह्णामीत्येतादृशैरिन्द्रलिङ्गकैर्मन्त्रैरेव तद्ग्रहणं विधत्ते "सर्व ऐन्द्रा भवन्ति । एकधैव यजमान इन्द्रियं दधाति" इति । सर्वेषामेकदेवताकत्वेनैकविधेन्द्रियधारकत्वं । ग्रहान्तराणि विधत्ते "सप्तदश प्राजापत्या ग्रहा गृह्यन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै" इति । प्रजापतेः सप्तदशत्वं "यो वै सप्तदशं" (सं०१का०।६प्र०।११अ०) इत्यत्रोपपादितं । वक्ष्यमाणामयाविष्टा इत्यादिकामृचं कुविदङ्गेत्यादिकाञ्च [illegible]विशेषेण व्यवस्थितां विधत्ते "एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति" इति । तेषु ग्रहेषु द्रव्यद्वयं विधत्ते "सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति । एतद्वै देवानां परममन्नं यत्सोमः । एतन्मनुष्याणां यत्सुरा । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे" इति । मनुष्याणामधमजातीना-

मिति शेषः। शालिमुद्गादिकं परमान्नं, यावनालप्रियङ्ग्वादि-कमवरं। यदा परमान्नसम्पत्तिः तदानीमवरान्नसम्पत्तिः किमु वक्तव्या। उक्तग्रहप्रकारश्चापस्तम्बेन स्पष्टीकृतः “ऐन्द्रमतिग्राह्यं गृहीत्वा ‘उपयामगृहीतोऽसि नृषदं त्वा’ इति पञ्चैन्द्रानतिग्राह्यान् गृह्णाति तेषां पूर्ववत्कल्पः, षोडशिनं गृहीत्वा ‘अया विष्ठा जनयन् कर्वराणि’ इति सप्तदश प्राजापत्यान् गृह्णाति तेषां षोड-शिवत्कल्पः ‘कुविदङ्ग’ इत्यपरस्मिन् वरे प्रतिप्रस्थाता सप्तदशभि-रुपयामैः सुराग्रहान् गृह्णाति” इति। द्विविधग्रहविधिमनूद्य प्रशंसति “सोमग्रहान् गृह्णाति। ब्रह्मणो वा एतत्तेजः। यत्सोमः। ब्रह्मण एव तेजसा तेजो यजमाने दधाति। सुराग्रहान् गृह्णाति। अन्नस्य वा एतच्छमलं। यत्सुरा। अन्नस्यैव शमलेन शमलं यजमानादपहन्ति” इति। ब्रह्मणो ब्राह्मणस्योचितं तेजः सोमः। अत एव तदभावे व्रात्यत्वमाम्नायते “यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्यः” इति। प्रकारान्त-रेण विधिद्वयं प्रशंसति “सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णा-ति। पुमान् वै सोमः। स्त्री सुरा। तन्मिथुनं। मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय। आत्मानमेव सोमग्रहैः स्पृणोति। जायाꣳ सुराग्रहैः। तस्माद्वाजपेययाज्यमुष्मिँल्लोके स्त्रियꣳ सम्भवति। वाजपेयाभिजितꣳ ह्यस्य” इति। स्पृणोति प्रीण-यति। तस्माज्जायाभिमानिदेवतायाः सुराग्रहैस्तोषितत्वात् स्वर्गलोके स्वापेक्षितां रम्भादिस्त्रियमनुभवति, तदेतत्सामर्थ्य-मस्य युक्तं वाजपेयेन सम्पादितत्वात्। वर्गद्वयस्य पूर्वोत्तर-

कालविशेषं स्थानविशेषञ्च विधत्ते "पूर्वे सोमग्रहा गृह्यन्ते। अपरे सुराग्रहाः। पुरोऽक्षꣳ सोमग्रहान्त्सादयति। पश्चादक्षꣳ सुराग्रहान्। पापवस्यसस्य विधृत्यै" इति। पुरोऽक्षं शकटस्याधस्तात् अक्षस्य पुरः। पापं सुराग्रहरूपं निन्दितं कर्म, वस्यसं वसुमत्तरं सोमग्रहरूपं पुण्यं कर्म, तयोर्विधृत्यै विभागेन धारणाय। व्यतिषङ्गं विधत्ते "एष वै यजमानः। यत्सोमः। अन्नꣳ सुरा। सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति। अन्नाद्येनैवैनं व्यतिषजति" इति। व्यतिषङ्गप्रकार आपस्तम्बेन दर्शितः "व्यतिषङ्गं सोमग्रहैः सुराग्रहान् गृह्णाति पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थाता" इति। व्यतिषङ्गं व्यतिषज्येत्यर्थः। अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति प्रतिप्रस्थाता प्रथमं सुराग्रहं गृह्णीयात्। ततो द्वितीये द्वितीयं, सोऽयं व्यतिषङ्गः। अध्वर्योरुद्द्रवणस्य विधास्यमानस्य मन्त्रमुत्पाद्य व्याचष्टे "सम्पृचः स्थ सं मा भद्रेण पृङ्क्तेत्याह। अन्नं वै भद्रं। अन्नाद्येनैवैनꣳ सꣳसृजति" इति। हे सोमग्रहा यूयं सम्पृचः स्थ सम्पर्कयोग्याः स्थ, अतो मां भद्रेण श्रेयमान्नेन सम्पृङ्क्त संयोजयत। प्रतिप्रस्थातुरुद्द्रवणस्य विधास्यमानस्य करणभूतं मन्त्रमुत्पादयितुं प्रस्तौति "अन्नस्य वा एतच्छमलं यत्सुरा। पाप्मेव खलु वै शमलं। पाप्मना वा एनमेतच्छमलेन व्यतिषजति। यत्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति" इति। पाप्मेव पापरूपमेव लोकवेदनिषिद्धत्वात्। मन्त्रमुत्पाद्य व्याचष्टे "विपृचः स्थ वि मा पाप्मना पृङ्क्तेत्याह पाप्मनैवैनꣳ शम-

लेन व्यावर्त्तयति। तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः” इति। हे सुराग्रहा यूयं विपृचः स्थ विभागयोग्याः स्थ अतो मां पाप्मना विपृङ्क्त वियोजयत। तस्मात् पापव्यावृत्तत्वादयं शुद्धो यष्टुं दक्षिणां दातुञ्च योग्यः। अध्वर्युप्रतिप्रस्थात्रोरुद्रवणं विधत्ते “प्राङ् द्रवति सोमग्रहैः। अमुमेव तैर्लोकमभिजयति। प्रत्यङ् सुराग्रहैः। इममेव तैर्लोकमभिजयति” तदेतदुद्रवणमापस्तम्बः स्पष्टीचकार “सम्पृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्रवति विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैराहवनीयं न्यङ् ते सोमग्रहैरवतिष्ठन्ते मार्जालीयं न्यङ् ते सुराग्रहैः” इति। प्रचारं विधत्ते “प्रतिष्ठन्ति सोमग्रहैः। यावदेव सत्यं। तेन सूयते” इति। प्रतिष्ठन्ति प्रचरन्ति जुह्वतीत्यर्थः। सत्यमवश्यंभावि फलं तद्यावदस्ति तेन सर्वेणायं यजमानः सूयते प्रेर्यते। कृत्स्नं फलमुद्दिश्य सोमग्रहैर्हुतवान् भवतीत्यर्थः। विधत्ते “वाजसृद्भ्यः। सुराग्रहान् हरन्ति। अनृतेनैव विशं ँ संसृजति” इति। वाजसृतोऽन्नस्यार्जयितारो वैश्याः, तेभ्यः सुराग्रहान् सोमरहितान् दद्युः, सुरायाः शमलत्वेनानृतसदृशत्वाद्विशमधमजातिमनृतेनैव संयोजितवान् भवति। दक्षिणाविशेषं विधत्ते “हिरण्यपात्रं मधोः पूर्णं ददाति। मधव्योऽसानीति” इति। मधु माक्षिकं। मध्वादिभोग्यद्रव्ययुक्तो भवानीत्यनेनाभिप्रायेण मधुपूर्णं सुवर्णपात्रं दद्यात्। तद्दानस्य कृष्णलदानसाहित्यं विधत्ते “एकधा ब्रह्मण उपहरति। एकधैव यज-

मान आयुस्तेजो दधाति" इति। कृष्णलमाहित्यस्यापस्तम्बो दर्शयति "कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति तानि प्रत्यादाय ब्रह्मणे ददाति मधुष्ठालञ्च सौवर्णं शतमानस्य कृतं" इति। ग्रहविधिमनेनानुवाकेन समाप्यानुवाकान्तरे पशून् विधातुं प्रस्तौति "ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽव-रुध्यन्त इति। पशुभिरिति ब्रूयात्" इति। यज्ञशब्देनोद्देश-त्यागरूपाः प्रयाजादयः प्रत्येकमभिधीयन्ते। तत्समूहरूप एव फलसाधनात्मा कर्मविशेषः क्रतुः। वेदवादिनो मिलित्वा परस्परमेवं विचारयन्ति, यज्ञास्य क्रतवश्च सर्वेऽपि वाजपेये ऽन्तर्भूता इत्यस्ति प्रसिद्धिः, तत्कथमुपपद्यते। तथा हि प्रया-जादीनां दीक्षणीयादिद्वारा तत्रान्तर्भावेऽप्यग्निष्टोमादीना-मनन्तर्भावात्। तेषां ब्रह्मवादिनां मध्ये कश्चिद्बुद्धिमानेवमुत्तरं ब्रूयात् 'अग्निष्टोमादिगतैराग्नेयादिसवनीयपशुभिः क्रतवो ऽन्तर्भूताः' इति। पशून् विधत्ते "आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्नेनोक्थ्यं। ऐन्द्रेण षोडशिनः स्तोत्रं। सारस्वत्यातिरात्रं। मारुत्या बृहतः स्तोत्रं। एतावन्तो वै यज्ञक्रतवः—तान् पशुभिरेवावरुन्धे" इति। आग्नेयादयो ऽग्निष्टोमादीनां व्यावर्तकाः पशवः। षोडशिनो ग्रहस्य स्तोत्रं, तेन स क्रतुरुपलक्ष्यते। सारस्वती मेषी, सा चातिरात्रस्य व्यावृत्तिहेतुः। मारुती वशा, तयानूबन्ध्यया बृहत्सामसम्बन्धि स्तोत्रमवरुन्धे, तेन च स्तोत्रेण वाजपेय उपलक्ष्यते। तस्य चा-

साधारणत्वात् तानेतान् पशुविधीन् बोधायन उदाहरति "अग्निं गृहीत्वा षड्रशना आदाय यूपमभ्यैति स्वर्वतं यूपमुत्सृज्याथैनान् पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं वशां सप्तदश प्राजापत्यान् श्यामान् एकरूपान् सारस्वतीमन्ततः" इति। आपस्तम्बस्त्वाग्नेयादीनां चोदकप्राप्तानामनुवादं मत्वा मेषीमारुत्योर्विधिमुदाहरति "पशुकाले त्रीन् क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति सारस्वतीञ्च मेषीं" इति। आत्मादिप्रीतिहेतुत्वेन भूम्यादिलोकजयहेतुत्वेन तेजःप्रभृतिधारणहेतुत्वेन च क्रतुपशून् प्रशंसति "आत्मानमेव स्पृणोत्यग्निष्टोमेन। प्राणापानावुक्थ्येन। वीर्यꣳ षोडशिनः स्तोत्रेण। वाचमतिरात्रेण। प्रजां बृहतः स्तोत्रेण। इममेव लोकमभिजयत्यग्निष्टोमेन। अन्तरिक्षमुक्थ्येन। सुवर्गं लोकꣳ षोडशिनः स्तोत्रेण। देवयानानेव पथ आरोहत्यतिरात्रेण। नाकꣳ रोहति बृहतः स्तोत्रेण। तेज एवात्मन्धत्त आग्नेयेन पशुना। ओजो बलमैन्द्राग्नेन। इन्द्रियमैन्द्रेण। वाचꣳ सारस्वत्या। उभावेव देवलोकञ्च मनुष्यलोकञ्चाभिजयति मारुत्या वशया" इति। अत्राग्निष्टोमेनेत्यादिशब्दैस्तन्निष्पादका आग्नेयादिपशवो विवक्षिताः। पशुविधेः प्रस्तुतत्वात्, आग्नेयेन पशुनेत्यन्तिमपर्यायविधानाच्च। विधत्ते "सप्तदश प्राजापत्यान् पशूनालभते। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" इति। तेषु पशुषु गुणद्वयं वाक्यभेदमङ्गीकृत्य विधत्ते "श्यामा एकरूपा भवन्ति। एवमिव हि प्रजापतिः समृद्ध्यै" इति। पशूनामेक-

रूपत्वं नामैकविधशृङ्गपुच्छादिभिर्युक्तत्वं। प्रजापतिशब्देनात्रे-श्वरस्य हिरण्यगर्भशरीराद्यभिव्यक्तेः प्रागवस्था विवक्ष्यते। सा चावस्था श्यामैव भवति। तम आसीत्तमसा गूढमिति श्रुतेः। जगद्रूपस्य नानात्वस्यानुत्पत्तेरेकरूपत्वं। एकमेवाद्वितीयमिति श्रुतेः। पशूनां जगदीश्वरेण साम्ये सति समृद्धिर्भवति। प्रकृतिभूतेऽग्नीषोमीये पशौ पर्यग्निकरणादूर्ध्वं अविलम्बेनालम्भस्य विहितत्वात्, अत्रापि चोदकपरम्परया तत्प्राप्तौ सहसालम्भनं निषेधति "तान् पर्यग्निकृतानुत्सृजति" इति। तदानीं नालभेतेत्यर्थः। आलम्भस्य व्यवधाने कारणमाह "मरुतो यज्ञमजिघाꣳसन् प्रजापतेः। तेभ्य एतां मारुतीं वशामालभत। तयैवैनानशमयत्" इति। सप्तदशप्रजापतिरूपो यः प्रजापतेर्यज्ञः, तं यज्ञं मरुतः पर्यग्निकरणादूर्ध्वं हन्तुमुद्यताः। तदानीमुत्कोचरूपेण प्रजापतिर्मरुद्भ्यो वशामालभत क्रुद्धान्मरुतस्तया वशया शमितवान्। प्राजापत्यानां सञ्ज्ञपनकालं विधत्ते "मारुत्या प्रचर्य। एतान् सञ्ज्ञपयेत्। मरुत एव शमयित्वा। एतैः प्रचरति। यज्ञस्याघाताय" इति। प्रचर्य मारुत्या वशाया वपां हुत्वेत्यर्थः। सप्तदशानां वपानां सहप्रचारं विधत्ते "एकधा वपा जुहोति। एकदेवत्या हि। एते। अथो एकधैव यजमाने वीर्यं दधाति" इति। विधत्ते "नैवारेण सप्तदशशरावेणैतर्हि प्रचरति। एतत्पुरोडाशा ह्येते। अथो पशूनामेव छिद्रमपि दधाति" इति। नीवारैर्निष्पन्नश्चरुः नैवारः, सप्तदशसङ्ख्याकैः शरावैर्निरुप्तः सप्तदशशरावः, तेनैव

चरुणैतर्हि प्राजापत्यवपाहोमादूर्द्धं प्रचरेत्। एष एव चरुः पशुपुरोडाशस्थानीयो येषां प्राजापत्यपशूनां त एतत्पुरोडाशाः। अतः प्रकृतौ यथा वपया प्रचर्य पुरोडाशेन प्रचरति तद्वदत्रापि। किञ्च वपोत्खेदात्पशूनां यच्छिद्रं कर्मवैकल्यं भवति तदेतेन चरुणा पिहितं भवति। सारस्वत्या मेष्या अङ्गप्रचारस्य कालविशेषं विधत्ते "सारस्वत्योत्तमया प्रचरति। वाग्वै सरस्वती। तस्मात्प्राणानां वागुत्तमा। अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति। प्रजापतिर्हि वाक्" इति। सारस्वती यथोत्तमा चरमा भवति तथा प्रचरेत्, सप्तदशपश्वङ्गप्रचारादूर्द्धं प्रचरेदित्यर्थः। यस्मात् सारस्वत्या उत्तमत्वं तस्माल्लोकेऽपि सरस्वतीरूपा वाक् प्राणानां चक्षुःश्रोत्रादीनां मध्ये उत्तमा सभामध्ये विद्वदमात्यादेर्वाग्मिनः प्रागल्भ्यदर्शनात्। किञ्च प्रजापतेः सरस्वतीपतित्वात् तदभेदोपचारेण वाग्रूपत्वे सति सारस्वत्या समापनेन प्रजापतावेव यज्ञः समापितो भवति। सारस्वत्या मेष्याः कञ्चिद्गुणं विधत्ते "अपन्नदती भवति। तस्मान्मनुष्याः सर्वां वाचं वदन्ति" इति। अपतितदन्तोपेता मेषी कार्या। लोकेऽप्यपतितदन्ताः पुरुषाः सर्वाण्यक्षराणि यथोक्तस्थानप्रयत्नोपेतान्येवोच्चारयन्ति। तदेवं ब्राह्मणगतेनानुवाकत्रयेण वाजपेयगता विधयो निरूपिताः। अथ मन्त्रव्याख्यानरूपान् ब्राह्मणानुवाकान् तत्तन्मन्त्रैः सहैवोदाहरामः। तत्र प्रथममन्त्रस्य विनियोगं बोधायन आह 'दीक्षणीयां निर्वप्स्यन् सावित्रं जुहोति "देव सवितः प्रसुव यज्ञं

प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः" स्वाहेति। दीक्षाहुतीर्होष्यन् सावित्रं जुहोति। प्रायणीयां निर्वप्स्यन् सावित्रं जुहोति' इति। हे सवितर्देव प्रेरकान्तर्यामिन् अस्मदीयं वाजपेययज्ञं प्रवर्तय, यज्ञपतिं यजमानं भगाय अनुष्ठानरूपायैश्वर्याय। दिविभवो यो गन्धर्वः सवितुरनुग्रहात् केतान् पुनाति प्राणिनां विज्ञानानि शोधयति, सोऽस्माकं केतं वाजपेयविज्ञानं पुनातु शोधयेत्। वाचस्पतिश्च सवित्रानुज्ञातोऽग्निमिन् कर्मणि वाचं अस्माभिः पठितान् वाजपेयमन्त्रान् स्वदाति स्वदयतु यथावत्पाठयतु। अनेन मन्त्रेण होमं विधत्ते "सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात्" इति। तदेतद्व्याधायनेनैवादाहृतं। तत्तत्कर्मादौ होममुपपादयति "कस्माद्दत्याहुः। यद्वाजपेयस्य पूर्वं यदपरमिति। सवितृप्रसूत एव यथापूर्वं कर्मणि करोति" इति। *बहुकर्मैरङ्गैश्चोदकप्राप्तैः प्रत्यक्षविहितैः †श्चोपेतस्य वाजपेयस्य यदङ्गं पूर्वभावि यच्च पश्चाद्भावि तन्मनुष्यः को वेदेति बुद्धिमन्त आहुः, सावित्रहोमे तु कृते सवित्रा प्रेरित एव सन् क्रममनुसृत्य कृतवान् भवति। प्रतिकर्म तमेतं होमं कर्तुमशक्तं प्रति पक्षान्तरं विधत्ते "सवने सवने जुहोति। आक्रमणमेव तत्सेतुं यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै" इति। उक्तेन त्रयाणां सवनानामादौ होमेन

* बहुकर्मैश्चोदकप्राप्तैरिति का० पुस्तकत्रयपाठः।
† चोदकस्येति का० पुस्तकत्रयपाठः।

स्वर्गं प्राप्तुं सेतुस्थानीयमाक्रमणं कृतवान् भवति। अस्य मन्त्रस्य चतुर्थपादे स्वदनस्यान्नविषयस्य वाग्विषयत्वमनुपयुक्तमिति शङ्कां निराकर्तुं व्याचष्टे "वाचस्पतिर्वाचमद्य स्वदाति न इत्याह। वाग्वै देवानां पुराऽन्नमासीत्। वाचमेवास्मा अन्नꣳ स्वदयति" इति। स्तुत्या देवैस्तृप्तत्वाद् वाचो देवान्नत्वं। कल्पः। रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति तमुपसादयति "इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यात्" इति। वार्त्रघ्नो वैरिघाती योऽयमिन्द्रस्य वज्रः हे रथ स एव त्वमसि त्वया सहकारिणा सहितोऽयं यजमानो वृत्रं वैरिणं वध्यात्। रथवाहने काष्ठविशेषे स्थापिते गमनाय सज्जीकर्तुं तस्य रथस्य तस्मात्काष्ठादवरोहणं विधत्ते "इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै" इति। कल्पः। अथैनं धूर्गृहीतमन्त्रैर्वेद्यभ्यावर्तयन्ति "वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत्" इति। दक्षिणवेदिश्रोण्यन्ते रथवाहनादवरोपितं रथं सौमिकवेदिमध्ये प्रादक्षिण्येनानयेदित्यर्थः। वाजस्य नु अन्नस्यैव प्रसव उत्पत्तिनिमित्तं मातरं अन्नस्य निर्मात्रीं महीं बृहद्रूपां पृथिवीं अदितिं नाम अखण्डनीयामेव वचसा स्तुत्या करामहे कुर्मः। यस्यां पृथिव्यामिदं सर्वं भूतजातं प्रविश्यावतिष्ठते तस्यां पृथिव्यां नोऽस्माकं धर्म धारणं सविता देवः साविषदनुजानातु। अनेन मन्त्रपाठेन भूमिं तदाश्रितं जगच्च स्वाधीनत्वेन सम्पा-

दयतीत्येवं व्याचष्टे "वाजस्य नु प्रसवे मातरं महीमित्याह। यच्चैवेयं। यच्चास्यामधि। तदेवावरुन्धे। अथो तस्मिन्नेवोभये ऽभिषिच्यते" इति। न केवलं तयोः स्वाधीनत्वं, किन्त्वेतस्मिन्नुभयस्मिन् भूम्यां तदाश्रितजने च राजत्वेनाभिषिक्तो भवति। कल्पः। अथाश्वान् पल्पूलयति "अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः" इति। पल्पूलयति जलं स्नावयति शरीरं प्रक्षालयतीत्यर्थः। अप्सु मध्ये ऽपमृत्युनिवारकं रोगनिवारकञ्च सारं वर्त्तते। हे वाजिनोऽन्नवन्तोऽश्वाः। अपां सम्बन्धिनीषु उत प्रशस्तिषु अमृतत्वभेषजत्वसदृशीषु अन्यास्वपि गुणवत्त्वप्रशंसासु यूयं सम्बद्धा भवथ। विधत्ते "अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान् पल्पूलयति। अप्सु वा अश्वस्य तृतीयं प्रविष्टं। तदनु वेनन्त्ववस्रवते। यदप्सु पल्पूलयति। यदेवास्याप्सु प्रविष्टं। तदेवावरुन्धे" इति। स्नपयितुं प्रवेशितो ऽश्वः स्वेच्छया क्रीडन् जलस्योपरि स्रवते। तत्रेदमुच्यते। अप्सु योनिर्वा अश्व इति श्रुतेरश्वजन्मकाले गर्भसम्बन्धि तृतीयमंशजातं जलेऽवस्थितं भवति। यथा मनुष्यगर्भे तद्वत्। अत एव हि मनुष्या नवप्रसूताया योषितो गर्भस्थानं समाधातुं बहुभिरौषधैश्चिकित्सां कुर्वन्ति। एवञ्च सत्यश्वमप्यश्वस्तदंशजातमनु वेनन् नु कामयमानो नु प्रायेणावस्रवते, यथा विनष्टद्रव्यमन्विच्छन् पुरुषो जले पुनः पुनर्मज्जन् उत्तिष्ठति तद्वत्। एवञ्च सत्यध्वर्युः स्नावयतीति यत् तेनाप्सु प्रविष्टं अश्वावयवजातं तत्सर्वं सम्पादितवान् भवति। प्रकारान्तरेण प्रा-

वनविधिं स्तौति "बज्ञ वा अश्वो ऽमेध्यमुपगच्छति। यदप्सु पल्पूलयति। मेध्यानेवैनान् करोति" इति। अश्वः खलु पृथिव्यां यत्र क्वाप्यशुचिप्रदेशे विपरिवर्तमानो बहुविधममेध्यमयज्ञार्हमुच्छिष्टादिकमुपगच्छति, अतोऽध्वर्युः प्रक्षालनेनाश्वान् यज्ञयोग्यानेव करोति। कल्पः। अथ दक्षिणं योग्यं युनक्ति "वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः। ते अग्रे अश्वमायुञ्जन्ते अस्मिन् जवमादधुः" इति। योग्यं रथे योक्तुमर्हमश्वं। वायुश्च मनुश्च पञ्चविंशतिसङ्ख्याका गन्धर्वाश्चेति मिलित्वा सप्तविंशतिसङ्ख्याका ये पुरुषास्ते सर्वेऽग्रे ऽस्मत्तः पूर्वं रथे संयोजितवन्तः। ते पुनः सर्वे पृष्ठसंमार्जनाद्युपचारेणास्मिन्नश्वे वेगं सम्पादितवन्तः। वायुस्त्वामयोजयत् मनुस्त्वामयोजयदिति पृथग्वाक्यकरणं तयोर्मुख्यत्वज्ञापनार्थं। अहं युनज्मीत्यभिप्रायः। अहं युनज्मीति पाठं परित्यज्य वायुर्वा त्वेति पाठस्याभिप्रायमाह "वायुर्वा त्वा मनुर्वा त्वेत्याह। एता वा एतं देवता अग्रे अश्वमयुञ्जन्। ताभिरेवैनान् युनक्ति। सवस्योज्जित्यै" इति। योजयितृणां देवानामनुग्रहाद्यज्ञस्योत्कर्षेण जयो भवति। विधत्ते "यजुषा युनक्ति व्यावृत्त्यै" इति। अनुष्टुप्छन्दस्त्वादृग्रूपोऽपि वायुर्वात्वेति मन्त्रो यजुर्वेदपठितत्वाद्यजुरित्युपचर्यते। लौकिके रथे मन्त्रमन्तरेणाश्वयोजनादृच समन्त्रकत्वेन व्यावृत्तिर्भवति। कल्पः। अथास्य पृष्ठं सम्मृज्यते "अपान्नपादाशुहेमन्य ऊर्मिः ककुद्मान् प्रतूर्तिर्वाजसातमस्तेनायं वाजः सेत्" इति। सम्मृज्यते पुनः पुनः

संमार्ष्टि। हे अपान्नपात् प्लवनकाले जलस्य कालुष्यानापादनादविनाशयितः, आशुहेमन् तीव्रगन्तः, तादृश हे अश्व जले य ऊर्मिः ककुद्मान् ककुदिवोन्नतः प्रवर्तिः निमज्जनेन प्रसक्तस्योपद्रवस्य प्रकर्षेण हिंसकः, वाजसातमः सस्योपकारित्वेनातिशयेनान्नप्रदः, तेन तत्सदृशेनोर्मिणाऽस्माकं वाजमन्नं मेत साधय। विधत्ते "अपान्नपादाशुहेमन्निति संमार्ष्टि। मेध्यानेवैनान् करोति। अथो स्तौत्येवैनानाजिꣳ सरिष्यतः" इति। पृष्ठसंमार्जनेन शोधितत्वाद्यागयोग्यत्वं। किञ्च धावनार्थायाः सप्तदशशरपातपरिमितायाः भूमेरवधिराजिः, तं प्रति सरिष्यन्ति गमिष्यन्ति, तान् गमिष्यतोऽश्वान् पृष्ठसंमार्जनरूपेणोपलालनेन स्तौत्येव प्रोत्साहयत्येव। कल्पः। अथ रथमभिप्रैति "विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि" इति। तदेतद्यजमानकर्म। तथा चापस्तम्बः 'विष्णोः क्रमोऽसीति रथं यजमानोऽभ्येति' इति। यजमानस्य मम हे प्रथम प्रक्रम त्वं विष्णोर्व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य प्रक्रमोऽसि, प्रथमपदप्रक्षेपेण जितो भूलोकोऽसि। हे द्वितीय प्रक्रम त्वं क्रान्तं विष्णोर्द्वितीयपदप्रक्षेपेण जितमन्तरिक्षमसि। हे तृतीय प्रक्रम त्वं विक्रान्तं विष्णोः पराक्रमेण जितं त्रिविष्टपमसि। विधत्ते "विष्णुक्रमान् क्रमते। विष्णुरेव भूत्वेमाँल्लोकानभिजयति" इति। कल्पः। अथ रथस्य पञ्चमी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति। पञ्चमी पार्श्वौ। पाठस्तु "अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाता-

यमनु सञ्चरन्तौ दूरेहेतिरिन्द्रियावान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु” इति। रथमभितो यावक्षौ लक्षणभूतौ पार्श्वविशेषौ न्यक्षौ नितरां लक्षणभूतौ चक्रविशेषौ। अत एवा-पस्तम्ब आह ‘अक्षौ न्यक्षाविति रथचक्रे अभिमृशति पक्षसी वा’ इति। ध्वान्तं ध्वन्युपेतं, वाताग्रं वायोरपि पुरोदेशं शीघ्र-तया वायुमप्यतिलङ्घ्यानुक्रमेण सञ्चरन्तौ, तादृग्भ्यामुभाभ्या-मग्नयो नोऽस्मान् पारयन्तु धावनावधिं पारयन्तु। कीदृशा अग्नयः। पप्रयः अपेक्षितमर्थं पूरयितारः। येऽग्नयो दूरेहेति-रित्यादिनामोपेतास्ते। एतन्मन्त्रगतमग्निपदं रथावस्थितदेव-तापरत्वेन व्याचष्टे “वैश्वदेवो वै रथः। अक्षौ न्यक्षावभितो रथं यावित्याह। या एव देवता रथे प्रविष्टास्ताभ्य एव नम-स्करोति। आत्मनो ऽनार्त्यै” इति। दूरेहेतिरित्यादिनामका अग्नयोऽत्र विश्वे देवाः तदाहनरूपोऽयं रथः। पारयन्त्विति प्रार्थनैव नमस्कारः। तेन नमस्कारेण तदीयं रथमारूढ-स्यापि स्वस्यार्तिर्न भवति। वेदनं प्रशंसति “अशमरथं भावु-कोऽस्य रथो भवति। य एवं वेद” इति। शमयुक्तो रथः शमरथः मन्दगतिः, अशमरथः शीघ्रगतीरथः, तच्छीलोऽस्य वेदितृरथो भवति।

अत्र विनियोगसङ्ग्रहः।

“देवहोमोऽत्र कर्मादाविन्द्रस्य रथमाहरेत्।
वाजस्य वेदिमध्ये तमभ्यावर्तयते रथं॥
अश्वस्नान् स्नावयेद् वायुर्युनक्ति तुरगं रथे।

अपां तदश्वपृष्ठानि मार्ष्टि विष्णोरथं व्रजेत्॥
अक्षौ रथे मृशेत्यचौ, अष्टौ मन्त्रा इहोदिताः"। इति॥

अथ मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः।
नाम वा, गुणता तत्र योगाद्गुणफलद्वये॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता।
त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां, फलं प्रति॥
उपादानविधेयत्वगुणत्वाख्यत्रिकं यजेः।
उद्देशानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति॥
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः।
वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत्"॥

वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्देन गुणो विधीयते। अन्नवाची वाजपेयशब्दः, तत्रान्नं पेयं सुराद्रव्यं, तच्चात्र गुणः, सुराग्रहाणामनुष्ठेयत्वात्। ननु गुणत्वे वाजपेयद्रव्यवता यागेन स्वाराज्यं भावयेदित्येवं मत्वर्थलक्षणा प्रसज्येत, मैवं, सकृदुच्चरितस्य यजेतेत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण सम्बन्धाङ्गीकारात्। वाजपेयद्रव्येण स्वाराज्याय यजेतेत्येवमुभयसम्बन्धः। ननु गुणसम्बन्धे सति वाजपेयेन गुणेन यागं कुर्यादिति यजेः कर्मकारकत्वं भवति, फलसम्बन्धे तु यागेन स्वाराज्यं सम्पादयेदिति करणकारकत्वं, ततः कथमुभयसम्बन्ध इति चेत् नायं दोषः यजेः साधारणत्वेन द्विरूपसम्भवात्। यजेतेत्यत्र प्रकृत्या याग उक्तः

प्रत्ययेन भावनोक्ता तयोस्तु समभिव्याहारात् सम्बन्धमात्रं गम्यते, तच्च कर्मत्वकरणत्वयोः साधारणं। न खलु तत्र कर्मत्वस्यैव करणत्वस्यैव वा साचादभिधायिका काचिदसाधारणा विभक्तिः श्रूयते। अतः साधारणस्य यजेरुभाभ्यां गुणफलाभ्यां युगपत् सम्बन्धे सति यथोचितं तत्सम्बन्धविशेषः पर्यवस्यति। एवं तन्त्रेण सम्बन्धाङ्गीकरणे वाजपेयद्रव्येण यागं कुर्यादित्यस्यार्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलचणा। यद्युद्भिदादिष्वप्येवं गुणविधिः स्यात्तर्हि तान्यपि वाक्यान्यत्रोदाहृत्य तदीयः सिद्धान्तः पुनराचिप्यतामिति प्राप्ते ब्रूमः। यजेस्तन्त्रेणोभयसम्बन्धे सति विरुद्धत्रिकद्वयापत्तिः स्यात्। उपादेयत्वं विधेयत्वं गुणत्वं चेत्येकं त्रिकं, उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेत्यपरं त्रिकं। तत्रोद्देश्यत्वादयः स्वाराज्यफलनिष्ठा धर्माः, उपादेयत्वादयस्त्रयः साधनभूतयजिनिष्ठाः। फलमुद्दिश्य यजिरुपादीयते, फलमनूद्य यजिर्विधीयते, फलं प्रधानं, यजिरुपसर्जनं। फलस्योद्देश्यत्वं नाम मानसापेचाविषयत्वाकारः, यजेस्तन्त्रेणोभयसम्बन्धे सति विरुद्धमुपादेयत्वं नामानुष्ठीयमानत्वाकारः। तावुभौ मनःशरीरोपाधिकौ धर्मौ। अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ। ज्ञातस्य कथनमनुवादः, अज्ञातस्यानुष्ठेयस्य कथनं विधिः। फलयागयोः साध्यसाधनरूपतया प्रधानत्वोपसर्जनत्वे। एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां फलस्योद्देश्यत्वादित्रिकं यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते। तथा

यागस्य वाजपेयद्रव्यस्य च साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकं द्रव्यस्योपादेयत्वादित्रिकं पर्यवस्यति। ततो यागस्य फलद्रव्याभ्यामुभाभ्यां प्रतियोगिभ्यां युगपत् सम्बन्धे सति विरुद्धत्रिकद्वयमापद्येत। ननु तर्हि माभूत्तन्त्रेणोभयसम्बन्धः, पृथक् सम्बन्धाय यजिरावर्त्ततामिति चेन्न, वाक्यभेदप्रसङ्गात्। द्रव्येण यागं कुर्यादित्येकं वाक्यं, यागेन फलं कुर्यादित्यपरं। तस्माद्वाजपेयशब्दो न गुणविधायकः, किन्तु यथोक्तं द्रव्यं निमित्तीकृत्याग्निहोत्रशब्दवत्कर्मनामधेयं।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

"आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता।
एकत्वं सकृदाख्यानात् सङ्ख्यावृत्त्या प्रयाजवत्॥
आख्यातमात्रं नो मानं सङ्ख्यया बहुकर्मता।
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः॥
पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत्।
विचारमाह पूर्वत्र क्रियाचित्वस्फुटत्वतः॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता।
रूपस्य तेन कर्मैक्यं, सङ्ख्या नात्र क्रियागता॥
देवताऽङ्गतस्यैव तद्धितार्थस्य पश्चिमः।
बहुत्वसङ्गमो रूपसङ्ख्यातः क्रियाभिदा"॥

तिस्र आहुतीर्जुहोतीति श्रूयते। तत्र जुहोतीत्येतदाख्यातं समिधो यजतीत्यादिवन्नाभ्यस्तं, किन्तु सकृदेवाम्नातं, अत एकमिदं कर्म, त्रित्वसङ्ख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या,

यथा प्रयाजेष्वेकादशत्वसङ्ख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता तद्वदिति प्राप्ते ब्रूमः। किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणं उत पदान्तरान्वितं। नाद्यः, वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात्। द्वितीये त्रित्वसङ्ख्यया विशेषितेनाख्यातेन कर्मबहुत्वं गम्यते। प्रयाजानान्तु पूर्वमेव सङ्ख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुःसम्पादं, इह त्वेतद्विधितः पूर्वं कर्मण एकत्वसङ्ख्यावरोधो नास्तीति वैषम्यं। तदेतद्वृत्तिकारोदाहरणं भाष्यकारो नानुमन्यते। कर्मवाचिन आकृतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात्। इदं त्वत्रोदाजहार "सप्तदश प्राजापत्यान् पशूनालभत इत्यत्र प्रजापतिर्देवता येषां पशूनां ते प्राजापत्याः" इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यं। यतो द्रव्यैक्याद्देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिदं कर्म। या तु सप्तदशेति सङ्ख्या सा पशुद्रव्यगता न तु पूर्वोदाहृतत्रित्वसङ्ख्येव क्रियागता, तस्मान्न कर्मभेदमापादयतीति प्राप्ते ब्रूमः। अत्र प्रजापतिर्देवता यस्य पशोः स प्राजापत्य इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात् तद्धितान्तप्रातिपदिकार्थस्य प्रजापतिदेवताविशिष्टपशोः कर्मत्वबहुत्वविवक्षायामुत्पन्ने इमे द्वितीयाविभक्तिबहुवचने। तत्र प्रथमभाविन्या द्वितीयाविभक्तेरेव तावत्तद्धितोत्पत्तिवेलायामन्वयो नास्ति कुतः पश्चाद्भाविनो बहुवचनस्यान्वयः। एवं सति प्राजापत्येत्यनेन तद्धितान्तप्रातिपदिकेनैकपशुद्रव्यकमेकदेवतोपेतं यागस्य रूपं

समर्थ्यते, तादृशानां च रूपाणां बहुत्वाय बहुवचनं बहुत्व-
विशेषस्य सप्तदशेति निर्दिश्यते, तस्मादत्र सङ्ख्यया कर्मभेदः ।
एवञ्च सत्यष्टमे वक्ष्यमाणानां सप्तदशपशूनामेकादशिनपशुगण-
विकृतित्वमुपपद्यते ।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितं ।

"उपाकृतानां किं सप्तदशानां यूपबन्धने ।
क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात् ॥
आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि ।
क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका" ॥

वाजपेये सप्तदशप्राजापत्यान् पशूनालभत इति विहिता-
नां पशूनामुपाकरणनियोजनादयः संस्काराः कर्तव्याः। तत्र-
दृशे पशावुपक्रम ईदृशे च समाप्तिरिति नियमकारिणः
शास्त्रस्याभावादैच्छिकेन क्रमेणोपाकरणरूपः प्रथमः संस्का-
रोऽनुष्ठितः। उपाकृतानां यूपे नियोजनं संस्कारान्तरं कर्तव्यं,
तदानीमीदृशः पशुः प्रथमं नियोक्तव्य इति क्रमनियमकारि-
णां श्रुत्यर्थपाठानामभावान्नास्ति क्रमनियम इति चेत्, मैवं।
उपाकरणे यः क्रमः स्वीकृतः, तस्यैव नियोजनादिसंस्कारेषु
स्वीकर्तव्यत्वात्। श्रुत्यर्थपाठ इव प्रथमप्रवृत्तिरपि क्रमं निय-
न्तुमर्हति, प्रवृत्त्या बुद्धिस्थस्य क्रमस्य त्यागकारणाभावात्। प्रा-
वृत्तिकक्रमस्वीकारे प्रथमपशावुपाकरणनियोजनयोः प्रथमद्वि-
तीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितैः षोडशभिरेवोपाकरणप-
दार्थैर्व्यवधानं भवति। तच्च व्यवधानं सप्तदशेति विधिबलादभ्यनु-

ज्ञातं। प्रावृत्तिकं क्रमं परित्यज्य पश्वन्तराणां पूर्वं नियोजनं कृत्वा पश्चात् प्रथमपशोर्यदि नियोजनं क्रियेत तदा द्वात्रिंशद्भिः पदार्थैर्व्यवधानं स्यात्, तत्तु नाभ्यनुज्ञातं। तस्मात्प्रवृत्त्या क्रमो नियम्यते।

तत्रैव द्वितीयपादे चिन्तितं।

"वाजपेये किमेकैकपशोः सर्वसमापनं।
सर्वेषु वैकैकधर्मो आद्यः साहित्यसिद्धये॥
वचनात्पशुसाहित्यं प्रयोगोक्त्या तु कल्प्यते।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते"॥

वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकैकस्मिन् पशावुपाकरणनियोजनादिसंस्काराः सर्वे समापनीयाः। तथा सति साङ्गं प्रधानं कर्तव्यमिति प्रयोगवचनेनावगतं धर्माणां साहित्यं प्रसिध्यति, चोदकोऽपि धर्मसाहित्यं प्रापयति, प्रकृतावुपाकरणनियोजनादीनां साहित्यदर्शनात्; तस्मादत्र काण्डानुसमयो न तु पदार्थानुसमय इति प्राप्ते ब्रूमः। सप्तदश प्राजापत्यान् पशूनालभत इति वचनात् पशुसाहित्यमवगतं। तच्च प्रबलं, प्रत्यक्षेण पशूनित्यनेनैकशब्देन प्रापितत्वात्। धर्मसाहित्यं तु न प्रत्यक्षशब्देन प्रापितं, किन्तु प्रयोगवचनेन परिकल्प्यते। यद्येकस्मिन् प्रयोगे धर्मसाहित्यं न स्यात्तदा कतिपयधर्मवैकल्येन साङ्गप्रधानानुष्ठानविधिर्नोपपद्येतेत्यर्थापत्त्या चोदकेनापि विकृतौ धर्मसाहित्यवचनमनुष्ठीयते। तदुभयं प्रत्यक्षात् पशुसाहित्यवचनाद्दुर्बलं, तस्माद्दैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्यनेन प्रत्यक्षवचनेनावगतं पशुसाहित्यमबाधितुं

सर्वेषु पशुष्वेकैक उपाकरणादिधर्मः कर्तव्य इत्येवं पदार्थानुसमयोऽभ्युपेतव्यो न तु काण्डानुसमयः। अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्यं न विरुध्यते। एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात्।

दशमाध्यायस्य चतुर्थपादे चिन्तितं।

"प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः।
अक्रियार्था पशूक्तिः स्याल्लिङ्गं तेनास्तु बाधनं॥
पशूनुद्दिश्य सङ्ख्यानादेतस्य च विधौ भिदा।
कर्मान्यत्वे ग्रहन्यायात् बोधनाच्च समुच्चयः"॥

वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभते" इति। तैरेतैः प्राकृतपशूनामाग्नेयादीनां बाधः स्यात्। कुतः, पशुत्वलिङ्गात्। न हि पशुशब्दो ग्रहशब्दवदपूर्वां विधेयक्रियां ब्रूते, येन लिङ्गत्वं हीयेतेति प्राप्ते ब्रूमः। किमत्र प्राकृतपश्वनुवादेन सप्तदशसङ्ख्या प्रजापतिर्देवता चेति गुणद्वयं विधीयते, आहोस्वित् विशिष्टमन्यत्कर्म। नाद्यः, वाक्यभेदापत्तेः। द्वितीये तु न पशुशब्दो लिङ्गं, ततोऽत्र ग्रहन्यायो योजनीयः। किञ्च अवरोधनमेवमाम्नायते "ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति। पशुभिरिति ब्रूयात्। आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्नेनोक्थ्यं। ऐन्द्रेण षोडशिनः स्तोत्रं। सारस्वत्यातिरात्रं। मारुत्या बृहतः स्तोत्रं। एतावन्तो वै यज्ञक्रतवः। तान् पशुभिरेवावरुन्धे"

इत्यस्मिन्नवरोधनाम्नाये चोदकप्राप्ताग्नेयादिपशुसद्भावस्य सि-द्धवदनुवादात्समुच्चयोऽवगम्यते।

एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"प्राजापत्यवसानां किं भेदस्तन्त्रमुताग्रिमः।
पशुभेदाद्देवपाककालैक्याच्छक्तितोऽन्तिमः"॥

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु तद्भेदानु-सारेण वसाहोमो भिद्यत इति चेत् मैवं। प्रजापतिरेक एव सप्तदशानां पशूनां देवता, तथा पाकोऽपि सहैव क्रियते, प्रदानस्यापि पाक उपलक्षणं, प्रदानेऽपि साहित्यमस्ति, का-लस्त्वेकः, याज्याया अर्धर्चा तस्य तत्काललेन चोदकातिदे-शात् शक्यते च सहहोमः, तस्मात्तन्त्रं।

तत्रैव चतुर्थपादे चिन्तितं।

"प्राजापत्येषु कुम्भ्यादेर्भेदो नो वाङ्गभेदतः।
भेदो नैवमशेषाङ्गश्रपणादौ प्रभुत्वतः"॥

वाजपेये सप्तदशसु प्राजापत्यपशुषु कुम्भ्या हृदयशूलवपाश्रप-णोश्च भेदः स्यात्,कुतः,तत्तत्पश्वङ्गानां भिन्नत्वात्,मैवं।पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भ्यादेर्दृष्टार्थश्रपणादौ प्रभुत्वात्, तस्मात्तन्त्रं।

तत्रैव तृतीयपादे चिन्तितं।

"प्राजापत्यप्रचारः किमार्भवे शस्त्रसोमतः।
ऊर्द्ध्वं वा विकृतौ वोत परस्तात्सर्वसोमतः॥
आर्भवे चोदकादृत्यामन्त्रिभ्यां तदनन्तरः।
श्रुतिबाधस्तदा तस्मात् तृतीयो विकृतित्वतः॥

पशवो न हि सोमस्य विकारा अविशेषतः।
उक्तत्वात् सर्वसोमानामुपरिष्टात् प्रचर्यतां" ॥

वाजपेये सप्तदशप्राजापत्यपशुप्रचारस्य काले चतुर्धा संशयः। तत्र तावदयं प्रयोगक्रमः। तृतीयसवने प्रथममार्भवः पवमानः, ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः, ततोऽशस्त्रेष्ववशिष्टेषु सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादयः सोमविकारा इति। एवं स्थिते प्राजापत्यपशूनामार्भवकाले प्रचारः कृतः प्रकृतौ तस्य पशुप्रचारकालत्वेन चोदकप्राप्तेरित्याद्यः पक्षः। उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति वचनेन सोमग्रहप्रचारादूर्ध्वः कालो विधीयते। यदि प्रातःसवनमाध्यन्दिनसवनसोमेभ्य ऊर्ध्वत्वमार्भवकालस्यास्तीति योज्येत तदा चोदकेनैव तत्कालप्राप्तेर्वचनमिदमनर्थकं स्यात्, अतस्तृतीयसवनगतसोमानामुपरीति वक्तव्यं। यदि तत्र सर्वसोमानामुपरीति विवक्ष्येत तदा चोदकप्राप्तः कालो विप्रकृष्येत। ततः प्रत्यासत्तये शस्त्रिणां वैश्वदेवग्रहान्तानां सोमानामुपरीति द्वितीयः पक्षः। उपरिष्टात् सोमानामित्यविशेषप्रवृत्ता श्रुतिः कतिपयसोमोर्ध्वत्वविवक्षायां बाध्येत, तस्माच्छस्त्रवतां तद्रहितानाञ्च सोमानामुपरिष्टादग्निष्टोमे यज्ञायज्ञीयसाम्ना संस्थिते सति तत्प्रचारः कार्यः, तस्य विकृतिकालत्वात् प्राजापत्यपशूनाञ्च विकृतिरूपत्वादिति तृतीयः पक्षः। सोमविकाराणामेवायं कालः पशवस्तु न सोमविकाराः तस्मादविशेषवचनानुसारेण प्राकृतानां वैकृता-

मास्य सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचार इति राद्धान्तः।

तत्रैव द्वितीयपादे चिन्तितं।

"पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।
कर्मशेषनिषेधस्य कर्मान्तरविधिर्भवेत्॥
किं वोत्कर्षो विशिष्टस्य ह्यारण्योक्तिवदादिमः।
अदृष्टवाक्यभेदाप्तेर्द्रव्याभावेन चान्तिमः"॥

वाजपेये सप्तदश प्राजापत्यान् पशून् प्रकृत्य श्रूयते "तान् पर्यग्निकृतानुत्सृजति ब्रह्मसाम्न्यालभत" इति। तेषु सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकालभावी कर्मशेष उत्सर्गशब्देन निषिध्यते। अश्वमेधे पर्यग्निकृतानारण्यानुत्सृजतीत्यत्र कर्मशेषनिषेधस्य सम्प्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समापनीयाः, आलभतिना च ब्रह्मसामकाले कर्मान्तरं विधीयत इति प्राप्ते ब्रूमः। कर्मान्तरविधौ सप्तदशपशुजन्यादृष्टाद्भिन्नं किञ्चिददृष्टं कल्प्येत वाक्यभेदश्च प्राप्नुयात्। किञ्च ब्रह्मसाम्न्यालभत इत्यत्र द्रव्यदेवतयोरश्रवणात् न कर्मान्तरविधिः सम्भवति। तस्मात् पर्यग्निकरणानन्तरमेव कर्तव्यस्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसमकाले उत्कर्षो विधीयते। तथा सत्यर्थप्राप्तः पर्यग्निकरणानन्तरभाविकर्मशेषव्यापारोपरम उत्सर्गशब्देनानूद्यते॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः॥ * ॥

देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषं देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमिन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयित्। अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजय। अर्वासि सप्तिरसि वाज्यसि वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वनः स्कभ्नीत ॥ १ ॥

काष्ठां गच्छत। वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः। ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनः। मितद्रवः सहस्रसा मेधसाता सनिष्यवः। महो ये रत्नꣳ समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु। देवताता मितद्रवः स्वर्काः। जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन् ॥ २ ॥

अमीवाः। एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्काꣳस्यन्वापनीफणत्। उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः। श्येनस्येव ध्रजतो

अङ्कसं परि दधिक्रावणः सहोर्जा तरिचतः। आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशम्भू। आ मा गन्तां पितरा ॥ ३ ॥

मातरा चा मा सोमो अमृतत्वाय गम्यात्। वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रत वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढमियं वः सा सत्या सन्धाभूद्यामिन्द्रेण समधध्वमजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वं ॥ ४ ॥

स्कभ्नीत युयवन् पितरा द्विचत्वारिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके ऽष्टमोऽनुवाकः ॥ * ॥

सप्तमे रथमन्त्रा वर्णिताः। अष्टमे रथस्य धावनमन्त्रा वर्ण्यन्ते। कल्पः। रथमातिष्ठति "देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषं" इति। आतिष्ठत्यारोहेदित्यर्थः। वाजजिता अन्नजयकारिणा बृहस्पतिनानुगृहीतोऽहं वाजं जेषं अन्नं जेष्यामि। एतन्मन्त्रगतं बृहस्पतिशब्दं ब्राह्मणजात्यभिमानिदेवपरत्वेन व्याचष्टे "देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्याह। सवितृप्रसूत एव ब्रह्मणा वाजमुज्जयति"

(ब्रा०का०१।प्र०३।अ०६।) इति। कल्पः। चात्वाले रथचक्रं निमित्तं ब्रह्मारोहति तमत एवानुमन्त्रयते "देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयं" इति। निमित्तं निखातस्य काष्ठस्याग्रे स्थापितं, वर्षिष्ठमतिशयेन प्रवृद्धं। पूर्वमन्त्रवद्व्याचष्टे "देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमित्याह। सवितृप्रसूत एव ब्रह्मणा वर्षिष्ठं नाकꣳ रोहति"(ब्रा०) इति। विधत्ते "चात्वाले रथचक्रं निमित्तꣳ रोहति। अतो वा अङ्गिरस उत्तमाः सुवर्गं लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति" (ब्रा०) इति। अत उपरिस्थिताद्रथचक्रात्, उत्तमा *उद्गततमाः, साक्षादेव अव्यवधानेनैव। विधत्ते "आवेष्टयति। वज्रो वै रथः। वज्रेणैव दिशोऽभिजयति" (ब्रा०) इति। ऊर्ध्वकाष्ठाग्रे स्थापितं ब्रह्मणा समारूढं रथचक्रं त्रिः प्रदक्षिणं पर्यावर्तयेत्। रथस्य वज्रांशत्वात् वज्रत्वं तच्चान्यत्राम्नातं "स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं" इति। अतो भ्राम्यमाणेन वज्ररूपेण रथचक्रेणैव सर्वासां दिशां जयो भवति। विधत्ते "वाजिनाꣳ साम गायते। अन्नं वै वाजः। अन्नमेवावरुन्धे" (ब्रा०) इति। वाजिनामन्नार्थिनां सम्बन्धि यत् साम तद् ब्रह्मा गायेत्। अन्नप्रदस्तु सामविशेषः शाखान्तरे द्रष्टव्यः। ब्रह्मण इदं गानमित्यापस्तम्बः स्पष्टयति 'औदुम्बरꣳ रथचक्रं ब्रह्मारोहति तमाह वाजिनाꣳ साम गायेति तस्य चक्रं त्रिः प्रदक्षिणमावर्तयति। तत्र

* उद्गाढतमा इति का०।

आवर्तमाने ब्रह्मा गायति' इति। कल्पः। आघ्नन्ति दुन्दुभीन् सम्प्रवदन्ति वाचः सम्प्रवदिता वाचोऽनुमन्त्रयते "इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयित्" इति। यागलक्षणेन परमैश्वर्येण योगाद् यजमान इन्द्रः, तस्माद् इन्द्राय हे सभ्या ब्राह्मणा आशीर्वादरूपां शुतां वाचं वदत, इन्द्रं यजमानं वाजं जापयत, अन्नविषये जयं प्रापयत। अयमिन्द्रो यजमानो वाजमन्नमजयित् जयतु। सोऽयं मन्त्र आपस्तम्बेन दुन्दुभिवादने विनियुक्तः 'इन्द्राय वाचं वदतेति दुन्दुभीन्त्सꣳह्रादयन्ति' इति। तमेतं दुन्दुभिघातं विधातुं प्रस्तौति "वाचो वर्ष्म देवेभ्योऽपाक्रामत्। तद्वनस्पतीन् प्राविशत्। सैषा वाग्वनस्पतिषु वदति। या दुन्दुभौ। तस्माद्दुन्दुभिः सर्वा वाचोऽतिवदति" (ब्रा०) इति। वाग्देवताया वर्ष्म नादात्मकं प्रधानशरीरं, तस्य प्रवेशादयं दुन्दुभिः सर्वा मनुष्यवाचोऽतिक्रम्य ध्वनिं करोति। विधत्ते "दुन्दुभीन्त्समाघ्नन्ति। परमा वा एषा वाक्। या दुन्दुभौ। परमयैव वाचावरां वाचमवरुन्धे। अथो वाच एव वर्ष्म यजमानोऽवरुन्धे" (ब्रा०) इति। मन्त्रगतमिन्द्रपदं वाजमजयिदित्येतच्च व्याचष्टे "इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्याह। एष वा एतर्हीन्द्रः। यो यजते। यजमान एव वाजमुज्जयति" (ब्रा०) इति। कल्पः। अथास्मा अश्वाजनिं प्रयच्छति "अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजय" इति। अस्मै यजमानाय। अश्वमजति क्षिपतीत्यश्वाजनी कशा, सा च विजये-

नान्नप्रदत्वाद्वाजिनी। वाजिन्यो वेगवत्योऽश्वगतयः, ता अस्याः कशाया इति वाजिनीवती। यथोक्तगुणत्रयोपेते हे कशे वाजेष्वन्नेषु निमित्तभूतेषु सत्सु त्वमस्मान् समत्सु युद्धेषु वाजय गमय। अयं मन्त्रः स्पष्टत्वबुद्ध्योपेक्षितः। त्रीन्विधयान् विधत्ते "सप्तदश प्रव्याधानाजिं धावन्ति। सप्तदशꣳ स्तोत्रं भवति। सप्तदश सप्तदश दीयन्ते। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" (ब्रा०) इति। प्रकर्षेण बलाधिक्येन विध्यन्ते मुच्यन्ते बाणा यावत्परिमाणेषु देशविशेषेषु तावत्परिमाणा देशाः प्रव्याधाः। ते च सप्तदशसङ्ख्याकाः, तेषामन्तेऽवधित्वज्ञापनाय काचिदौदुम्बरी शाखा निखन्यते। तत्काष्ठयुक्तोऽवधिराजिः। तत्पर्यन्तं रथारूढा धावेयुः। अस्मिन् वाजपेये सामवेदप्रसिद्धं यत्स्तोत्रं तत्सप्तदशसङ्ख्याकावृत्तियुक्तं भवेत्। तदावृत्तिप्रकारस्तु अष्टमप्रपाठके समिधमातिष्ठेत्यस्मिन्ननुवाके ब्राह्मणोदाहरणेन स्पष्टीकरिष्यते। दक्षिणात्वेन दातव्यानां रथादीनां गोशतान्तानां द्रव्याणां मध्य एकैकद्रव्यं सप्तदशसङ्ख्यायुक्तं दद्यात्। तच्चापस्तम्बो दर्शयति 'दक्षिणाकाले सप्तदश रथान् ददाति सप्तदशानांसि सप्तदशाश्वान् सप्तदश हस्तिनः सप्तदश निष्कान् सप्तदश दास्यः सप्तदशाजाः सप्तदशावीः सप्तदश वासांसि सप्तदश गवां शतानि' इति। यद्यपि स्तोमविशेषविधेर्देयद्रव्यसङ्ख्याविधेश्च नायमवसरः तथापि गन्तव्यदेशविशेषसङ्ख्याविधिप्रसङ्गेन तदुभयं विक्षितं, तथा सत्येकेनैव सप्तदशः प्रजापतिरित्यनेनार्थवादेन विधित्रयस्य स्तोतुं शक्यत्वात्। कल्पः। तथा यथायुक्तमस्मान्

क्षिपति "अर्वासि" इति दक्षिणं "सप्तिरसि" इति मध्यमं "वाज्यसि" इत्युत्तरमिति। अर्वादयोऽश्वजातिविशेषाः तदेवाभिप्रेत्यान्यत्राम्नायते "हयो देवानवहदर्वा सुरान्वाजी गन्धर्वानश्वो मनुष्यान्" इति। वामदक्षिणयोरश्वयोर्मध्ये ईषाद्वयं प्रसार्य तयोर्मध्ये सप्त्याख्यजातिविशेषोपेतमश्वं युञ्ज्यात्। त्रीन् तान् देवतात्रयरूपेण स्तौति "अर्वासि सप्तिरसि वाज्यसीत्याह। अग्निर्वा अर्वा। वायुः सप्तिः। आदित्यो वाजी। एताभिरेवास्मै देवताभिर्देवरथं युनक्ति" (ब्रा०) इति। पूर्वं यजुषा युनक्तीत्यत्र मन्त्रो विहितः। इदानीं रथयोगं विधत्ते "प्रष्टिवाहिनं युनक्ति। प्रष्टिवाही वै देवरथः। देवरथमेवास्मै युनक्ति" (ब्रा०) इति। प्रष्टिः पादत्रयोपेतो भोजनपात्रस्याधारः,तद्वदश्वैस्त्रिभिर्वहतीति प्रष्टिवाही। अत एवोपरिष्टादुच्यते "त्रयोऽश्वा भवन्ति रथश्चतुर्थः" इति। कल्पः। अथैतानाजिसृतो विख्यापयति "वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वनः स्कभ्नीत काष्ठां गच्छत" इति। हे वाजिनोऽश्वा वाजमन्नं सम्पादयितुं त्वरया धावत, मरुतामनुज्ञायां सत्यामन्नं जयत, विशेषेण बहून्यपि योजनानि मिमीध्वं शीघ्रधावनेन परिमितान्यल्पानीव कुरुत। किञ्चाध्वनो मार्गान् स्कभ्नीत स्तम्भयत, शीघ्रगत्या पीडितान् कुरुत। काष्ठामध्वसमाप्तिमाजिशिरो गच्छत। अस्मिन्मन्त्रे प्रथमभागं प्रतीकत्वेनोपादाय चतुर्थभागे काष्ठाशब्दं व्याचष्टे "वाजिनो वाजं धावत काष्ठां गच्छतेत्याह। सुवर्गो वै लोकः काष्ठा। सुवर्ग-

मेव लोकं यन्ति" (ब्रा०) इति। दिग्विशेषं विधातुं प्रस्तौति "सुवर्गं वा एते लोकं यन्ति। य आजिं धावन्ति" (ब्रा०) इति। विधत्ते "प्राञ्चो धावन्ति। प्राङिव हि सुवर्गो लोकः" (ब्रा०) इति। प्राञ्चः पूर्वाभिमुखाः, ऐन्द्रत्वात् स्वर्गस्य प्राग्दिग्वर्तित्वं। कल्पः। अथ रथान् धावतोऽनुमन्त्रयते 'वाजे वाजेऽवत वाजिनो नः' इति चतसृभिरनुक्रन्दममिति। तत्रेयमृक् प्रथमा "वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः" इति। हे वाजिनोऽश्वाः वाजे वाजे तत्तदन्ननिमित्तं धननिमित्तञ्च नोऽस्मानवत, विप्रा ब्राह्मणवत् स्नानेन शुद्धाः, अमृता मरणरहिताः अमरहिताः, ऋतज्ञाः ऋतं सत्यं अस्य गन्तव्यदेशं जानन्तः। तादृशस्याभिमानिनो हे देवाः अस्य मध्वः पिबत धावनात्पूर्वं पश्चाच्चावघ्राप्यमाणं मधुमसानं नैवारचरुमं पिबत, पीत्वा च मादयध्वं हृष्टा भवत। ततस्तृप्ताः सन्तो देवयानैः पथिभिराजिं प्रति यात। अथ द्वितीया "ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनः" इति। ते अश्वा अर्वन्तो गतिकुशलाः, हवनश्रुतोऽस्मदाह्वानश्रोतारो वाजिनोऽश्वन्तो विश्वे सर्वेऽपि हवमाह्वानमस्मद्वचनं शृण्वन्तु। अथ तृतीया "मितद्रवः सहस्रसा मेधसाता सनिष्यवः। महो ये रत्नꣳ समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु" इति। महान्तमपि पन्थानं मितमल्पमिव द्रवन्ति गच्छन्तीति मितद्रवः, सहस्रसाः सहस्रस्य महतोऽन्नराशेः सनि-

तारो दातारः। मेधसाता यज्ञस्य प्रदातारः, सनिष्यवः सनिं द्रव्यदानमस्मास्विच्छन्तः। ईदृशा येऽश्वाः समिथेषु सङ्ग्रामेषु महो रत्नं अत्यधिकं शत्रोर्धनं जभ्रिरे हृतवन्तः, ते वाजिनो नोऽस्माकं शं भवन्तु सुखकरा भवन्तु। अथ चतुर्थी "देवताता मितद्रवः स्वर्काः। जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः" इति। देवताता देवानर्हन्तीति देवतातयः, मितद्रवः पूर्ववत्, स्वर्काः शीघ्रधावनेन सुष्ठु अर्चनीयाः, ते वाजिनः अहिं वृकं रक्षांसि सर्पवदरण्यश्ववद्बाधकान् राक्षसान् जम्भयन्तः, वर्णव्यत्ययः। सनेमि क्षिप्रमेव अमीवा रोगानस्मद्युयवन् अस्मत्तो वियोजितवन्तः। तदेवमध्यापकसम्प्रदायमनुसृत्य मन्त्रचतुष्टयं विभक्तं। बोधायनाचार्यस्तु ते नो अर्वन्त इत्यादिर्वाजिनो हवेष्वित्यन्त एक एवं मन्त्र इत्यभिप्रेत्य चतुर्थीमेष स्य वाजीत्यादिकामृचं चतुष्टयेऽन्तर्भावयामास। तदीयपाठस्तु "एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्काꣳस्यन्वापनीफणत्" इति। ग्रीवायां कक्षे आस्ये च तत्तदुचितरज्जुविशेषैर्बद्धः सन् एषः स्यः वाजी एषोऽश्वः क्षिपणिं तुरण्यति कशां त्वरयति? बहुधा बद्धत्वात् रथं भञ्जयितुमितस्ततो न गच्छति, कशायास्तस्याः शीघ्रं धावतीत्यर्थः। दधिक्राः धारकान् मार्गावरोधकान् पाषाणादीनपि अतिक्रामन् क्रतुं सादिनोऽभिप्रायमनु सन्तवीत्वत् सम्यगनुसन्दधानः। पथां मार्गाणामङ्कांसि लक्षणानि कुटि-

लानि निम्नोन्नतानि च वाजी अन्यापनोफणत् अनुक्रमेण ऋजुलं समलं चापादयन् तुरण्यतीति पूर्वेणान्वयः। कल्पः। स यदस्मै रथमेषमाचक्षते आग्नीध्र एतान् जुहोत्युत स्मास्य द्रवतस्तुरण्यत इति। पाठस्तु "उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः। श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः" इति। उत स्म अपि च द्रवतो गच्छतः तुरण्यतस्त्वरयतः प्रगर्धिनः अभिं प्राप्तुं काङ्क्षतोऽस्यास्य अङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानमनु वाति गच्छन्तमश्वमनु उत्क्षिप्तत्वेन दृश्यमानं गच्छति। कस्य किमिव। वेः पक्षिणः पर्णं न पक्ष इव। यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यालङ्काररूपं वस्त्रचामरादिकं विस्पष्टमवलोक्यते। पक्षमात्रस्य पर्णसङ्कसस्य दृष्टान्तत्वेनाभिहितं। शीघ्रधावने श्येनदृष्टान्त उच्यते। ध्रजतो गच्छतः श्येनस्येव दधिक्राव्णो धारकपर्वताद्यतिक्रामिण ऊर्जा महात्यन्तवलेन सह तरित्रतो भृशं तरतोऽश्वस्येति योज्यं। आपस्तम्बस्त्वेवमाह 'वाजिनो वाजं धावतेति चतसृभिर्धावतोऽनुमन्त्रयतेऽग्निरेकाचरेणेति धावन्तुज्जितीर्यञ्जमानं वाचयति लक्षणं प्राग्वादस्य आवृत्य प्रदक्षिणमावर्तन्ते मितद्रव इति चतसृभिः प्रत्याधावतोऽनुमन्त्रयत' इति। 'वाजिनो' 'वि योजना' 'वाजे वाजे' 'तं नो अर्वन्तः' इति चतस्रः। प्रधावतोऽनुमन्त्रणं विधत्ते "चतसृभिरनुमन्त्रयते। चत्वारि छन्दांसि। छन्दोभिरेवैनं सुवर्गं लोकं

गयमति''(ब्रा०) इति। गायत्री त्रिष्टुब् जगत्यनुष्टुबिति छन्दसां चतुष्टयं। उदङ्मुखत्वेनावृत्तिं विधत्ते "प्र वा एतेऽस्माल्लोकाच्च्यवते। य आजिं धावन्ति। उदञ्च आवर्तन्ते। अस्मादेव तेन लोकान्नयन्ति" (ब्रा०) इति। कल्पः। रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यादिति। पाठस्तु "आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशम्भू। आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वाय गम्यात्" इति। वाजस्यान्नस्य प्रसव उत्पत्तिर्मां प्रत्याजगम्यादागच्छतु। द्यावापृथिव्यौ च विश्वशम्भू कृत्स्नस्य जगतः सुखं भावयन्तौ मां आगच्छतां। पितरा मातरा अस्मदीयः पिता माता च मां प्रत्यागन्तां चिरं जीवित्वाय ममागच्छतां। किञ्च सोमस्यामृतत्वाय मम देवत्वजन्मने मां प्रत्यागम्यादागच्छतु। अपाम सोमममृता अभूमेति ह्यन्यत्र श्रुतं। विधत्ते "रथविमोचनीयं जुहोति प्रतिष्ठित्यै" (ब्रा०) इति। रथविमोकेनाश्वानामायामं परिहृत्य स्वयं प्रतिष्ठितो भवति। मन्त्रे वाजप्रसवोक्तेरभिप्रायमाह "आ मा वाजस्य प्रसवो जगम्यादित्याह। अन्नं वै वाजः। अन्नमेवावरुन्धे" (ब्रा०) इति। इतरैः षोडशरथैर्धावद्भ्यः कृष्णलदानं विधातुं प्रस्तौति "यथालोकं वा एत उज्जयन्ति। य आजिं धावन्ति" (ब्रा०) इति। ये रथान्तरवर्तिन आजिं धावन्ति एते यथालोकं यथास्थानमुज्जयन्ति यस्मिन् यस्मिन् स्थाने यो यो धावति असावसौ तत्तत्स्थानं जयतीत्यर्थः। विधत्ते "कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति।

यमेव ते वाजं लोकमुज्जयन्ति। तं परिक्रीयावरुन्धे" (ब्रा०) इति। यवत्रयपरिमितं सुवर्णं कृष्णलं। वाजमन्नमुद्दिश्य सरन्ति धावन्तीति वाजसृतो रथान्तरवर्तिनः। अत एवापस्तम्बः 'यजुर्युक्तं यजमान आरोहति वाजसृत इतरान् रथान्' इति। एकैकस्मै वाजसृते एकैकं कृष्णलं दद्यात्तेन तैः सम्पादितमन्नं निवासस्थानञ्च परिक्रीय स्वाधीनं करोति। तान् षोडश कृष्णलान् पुनरादायैकीकृत्य ब्रह्मणे तद्दानं विधत्ते "एकधा ब्रह्मण उपहरति। एकधैव यजमाने वीर्यं दधाति"(ब्रा०) इति। चरुं विधातुं प्रस्तौति "देवा वा ओषधीष्वाजिमयुः। ता बृहस्पतिरुदजयत्। स नीवारान्निरवृणीत। तन्नीवाराणां नीवारत्वं" (ब्रा०) इति। यथा पूर्वं प्रथमतो वाजपेययागार्थमाजिं धावतो बृहस्पतेर्जयस्तद्वदत्राप्योषधीषु सारस्वीकाराया आजिप्राप्तौ बृहस्पतिर्जयं प्राप्यौषधीषु सारत्वेन नीवारानन्याभ्य ओषधीभ्यो निष्कृष्यावृणीत, निःशेषेण वृतत्वात् नीवारत्वं सम्पन्नं। विधत्ते "नैवारश्चरुर्भवति। एतद्वै देवानां परममन्नं। यन्नीवाराः। परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे" (ब्रा०) इति। शाल्यादिभ्योऽत्यन्तपूतत्वेन नीवाराणां देवान्नत्वं। चरोः परिमाणं विधत्ते "सप्तदशशरावो भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" (ब्रा०) इति। चरोः सप्तदशशरावपरिमितत्वं पूर्वं तत्प्रचारविधौ व्याख्यातं। चरुनिष्पादनोपयुक्तं द्रव्यविशेषं विधत्ते "क्षीरे भवति। रुचमेवास्मिन् दधाति" (ब्रा०) इति। रुचं स्वादुत्वं। निष्पन्ने चरौ

घृतस्नावमं विधत्ते "सर्पिष्वान् भवति मेध्यत्वाय" (ब्रा०) इति। एतदेवाभिप्रेत्याश्वदेवानुद्दिश्यास्य मध्वः पिबत मादयध्व-मित्यस्य मन्त्रस्यार्थो व्याख्यातः। चरोर्दैवतं विधत्ते "बार्हस्पत्यो वा एष देवतया। यो वाजपेयेन यजते। बार्हस्पत्य एष चरुः" (ब्रा०) इति। कर्तव्य इत्यध्याहारः। वाजपेययाजिनो बृहस्पतिर्दैवतेति तत्रत्यचरोरपि सा देवता युक्ता। कल्पः। तमेतान् यजुर्युजोऽश्वानवघ्रापयति "वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रत" इति। वाजजितोऽन्नं जेतुमुद्यता वाजिनो हे अश्वा वाजमन्नं जेतुमाजिमुद्दिश्य सरिष्यन्तो धावनं करिष्यन्तो वाजमन्नं जेष्यन्तो यूयं बृहस्पतेर्भागमिमं चरुमवजिघ्रत। कल्पः। यजुर्युजोऽश्वान् प्रत्याधावतोऽवघ्रापयति "वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढं" इति। यजमानार्थे रथे यजुर्भिर्मन्त्रैर्योजनीया अश्वा यजुर्युजः। ससृवांसः धावनं कृतवन्तः। जिगिवांसः जयं कृतवन्तः। निमृड्ढं शुद्धा भवत। आपस्तम्बमते तु जिगिवाꣳस इत्यन्तो मन्त्रः, तदर्थपूरणाय बृहस्पतेर्भागमवजिघ्रतेति पूर्वस्मान्मन्त्रादनुवर्तनीयं। अवशिष्टभागो मन्त्रान्तरं। तस्य विनियोगं स एवाह 'बृहस्पतेर्भागे निमृड्ढमिति प्रप्रोथेषु च लेपान्निमार्ष्टि' इति। प्रप्रोथा ओष्ठाग्राणि। आजिधावनात् पुरा पश्चाच्चावघ्रापणं विधत्ते "अश्वान् सरिष्यतः ससृषश्चावघ्रापयति। यमेव ते वाजं लोकमुज्जयन्ति। तमेवावरुन्धे" (ब्रा०)

इति। कल्पः। अथ रथान् विमुच्यमानाननुमन्त्रयते "इयं वः सा सत्या सन्धाभूद्यामिन्द्रेण समधध्वं" इति। हे रथा वो युष्माकमियं सन्धा आजिधावनप्रतिज्ञा सा सत्याभूत्, यां प्रतिज्ञामिन्द्रेणेन्द्रानुग्रहेण समधध्वं सम्यग्धारितवन्तः। इन्द्रानुग्रहार्थैवेन्द्रस्य वज्रोऽसीति रथमन्त्र आम्नातः। कल्पः। दुन्दुभीनवस्यतोऽनुमन्त्रयते "अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वं" इति। हे वनस्पतयो वनस्पतिविकारा दुन्दुभय इन्द्रं यागस्वामिनं वाजमन्नमुद्दिश्याजीजिपत यथा जितवान् भवति तथा जितवन्तः, तादृशा यूयं एवं यत्र बद्धास्ततो विमुच्यध्वं विमुक्ता भवत। बन्धनप्रदेशस्त्वापस्तम्बेन दर्शितः 'दक्षिणस्यां वेदिश्रोण्यां सप्तदश दुन्दुभीन् प्रवध्नाति' इति। विधत्ते "अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन् विमुञ्चति। यमेव ते वाजं लोकमिन्द्रियं दुन्दुभय उज्जयन्ति। तमेवावरुन्धे" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"देवारोहेद्रथं स्वामी ब्रह्मारोहणमन्त्रणं।
देवेतीन्द्रा दुन्दुभीनां घोषोऽश्वाज कशाग्रहः॥
अर्वासीति त्रिभिर्मन्त्रैर्युनक्त्यश्वचयं रथे।
वाजीत्येतैर्मन्त्रयेत चतुर्भिर्धावतो रथान्॥
मितेत्याभिस्त्रिसृभिस्तान् प्रत्याधावतो रथान्।
आ मा रथविमुक्त्याख्यं जुहुयात्, वाजिनद्दयात्॥
गतेः पुरोपरिष्टाच्च घ्रापयेच्चरुमश्वकान्।

बृहादि जिघ्रतेत्यन्तो द्वितीयेऽप्यनुषज्यते ॥
बृहेति मार्ष्टि घोणायामिथं तु रथमन्त्रणं।
अजी दुन्दुभिमन्त्रः स्यात्, एकविंशतिरीरिताः"॥ इति।

अथ मीमांसा। दशमाध्यायस्य तृतीयपादे चिन्तितं।

"यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत।
बाधः प्राकाशवन्नैवं पक्षे प्राप्तो नियम्यते"॥

वाजपेये श्रूयते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। तस्यायमर्थः। रथशकटदासीनिष्कादीनि सप्तदशद्रव्याणि प्राकृतगवाश्वादिदक्षिणाद्रव्यबाधकान्यत्र विहितानि, तेषु च प्रतिद्रव्यं सप्तदशसङ्ख्या विहिता। ततो रथाः सप्तदश। तेषु मुख्यं रथं यजमानारोहणायेन्द्रस्य वज्रोऽसीत्यादिभिर्यजुर्वेदोक्तैर्मन्त्रैः सज्जीकरोति, सोऽयं यजुर्युक्तो रथः, तञ्च दक्षिणाकालेऽध्वर्यवे दद्यादिति। प्राकाशावध्वर्यवे ददातीत्यत्र यथा चोदकप्राप्तस्याध्वर्युभागस्य बाध एवमत्रापि। ननु सप्तदशद्रव्यविधानेनैव प्राकृतद्रव्यबाधः सिद्धः। वाढं। तथाप्यर्धिनः पादिन इत्यादिसमाख्याप्रापिता * विषमविभागविशेषक्लृप्तिर्न द्रव्यान्तरमात्रेण बाधितुं शक्या, विरोधिनो विधान्तरस्याविधानात्। अतश्चोदकप्राप्ता येयमध्वर्योर्भागविशेषक्लृप्तिः सा यजुर्युक्तरथरूपभागविशेषविधिना बाध्यते। तस्मादध्वर्योर्न रथान्तरभागोऽस्ति नापि शकटदास्यादिभाग इति पूर्वः पक्षः।

* विषमविभागविशेषक्लृप्तिर्द्रव्यान्तरविधिमात्रेण न बाधितुं शक्या, विरोधि भागान्तरस्य विधानादिति तै०।

नैतद्युक्तं प्राकाशदृष्टान्तवैषम्यात्। अत्यन्तमप्राप्तो हि प्राकाशो तत्र विधेयो। यजुर्युक्तरथस्तु पक्षे प्राप्तः। तथा हि सप्तदश-रथान् ददातीत्युक्ते कस्य को रथ इति वीक्षायां यजमाने-च्छाया नियामकत्वाद्यदाध्वर्यवे तं दातुमिच्छति तदा प्रा-प्नोति, यदा नेच्छति तदा न प्राप्नोतीति पक्षे प्राप्तिः। ततो यजुर्युक्तो यो रथः सोऽध्वर्यवेऽवश्यं देय इति नियम्यते। अतो न कस्याप्यनेन बाधः।

तत्रैव द्वितीयपादे चिन्तितं।

"शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः।
चत्वारः सन्ति नो वेत स्यादेकं मुष्टिसङ्ख्ययोः॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः।
द्वितीयोऽस्त्विति चेन्नैवं द्विलोपे बाधगौरवात्॥
तृतीयोऽस्त्वेकलोपेऽत्र धर्मः सङ्ख्यैव लुप्यतां।
क्रियायोगान्न तद्धर्मः प्राशस्त्यात्मानुगम्यतां"॥

प्रकृतौ चतुरो मुष्टीन् निर्वपतीति मुष्टितत्सङ्ख्ये श्रुते, तथा वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः, तत्र चरौ किं मुष्टिसङ्ख्ये द्वे अपि विद्येते किं वा द्वे अपि न विद्येते। आ-होस्विदुभयोरेकमस्ति अन्यन्नास्ति। यद्येकं तदापि किं मुष्टि-रेव किं वा सङ्ख्यैवेति संशयः। चोदकप्राप्तमुभयमस्तीत्याद्यः पक्षः प्राप्नोति। चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरणमसमर्थस्य चरोरनिष्पत्तेः स पक्षो न युक्तः। तर्हि मुष्टिसङ्ख्ये द्वे अपि बाध्येते इति द्वितीयः पक्षोऽस्त्विति चेत्, नैवमेकतरबाधनैव

पूरणाभावपरिहारे सिद्धे सति द्वयोर्बाधे गौरवप्रसङ्गात्। नन्वचोपदिष्टेन शरावद्रव्येणातिदिष्टं मुष्टिद्रव्यं बाध्यते, तथा सप्तदशसङ्ख्यया चतुःसङ्ख्या बाध्यत इत्युभयबाधोऽवश्यम्भावी। मैवं। भिन्नविषयत्वेन बाधासम्भवात्। शरावसप्तदशसङ्ख्ये याग-सम्बद्धे मुष्टिचतुःसङ्ख्ये तु निर्वापसम्बद्धे इति विषयभेदः। कथं तर्ह्येव बाधप्रसङ्गः। अन्यथानुपपत्त्येति वदामः, अनुप-पत्तिश्च पूरणासम्भवेन दर्शिता। पूरणञ्चैकबाधेनाप्युपपद्यते, मुष्टिबाधे यथोचितं चतुःसङ्ख्योपेतैः कुडवादिभिः पूर्तिः स्यात्, चतुःसङ्ख्याबाधे यथोचितमधिकसङ्ख्योपेतैर्मुष्टिभिः पूर्तिर्भवि-ष्यति। एवं तर्ह्येकलोप इति तृतीयः पक्षोऽस्तु, तत्र। सङ्ख्या धर्मो मुष्टिर्धर्मी, तथा सति मुष्टौ लुप्ते सति निराश्रयस्य धर्म-स्यासिद्धेः सङ्ख्यालोपोऽप्यवश्यम्भावी, सङ्ख्यायां तु लुप्तायां मुष्टिः शक्नोत्यवस्थातुं, तस्मात् सङ्ख्यैव लुप्यतामिति प्राप्ते ब्रूमः। चतुःसङ्ख्या तावन्न मुष्टिमात्रेऽन्वेति कर्मकारकवाचिद्वितीया-विभक्त्यन्तस्य चतुःशब्दस्य सहकर्मकारकेण निर्वपतिधातुना सहान्वयात्। अतः सङ्ख्या न मुष्टिधर्मः। पार्ष्णिकान्वयेन तु मुष्टिविशेषणं भविष्यति। सङ्ख्यामुष्ट्योः क्रियासम्बन्धे समाने सत्यपि प्रथमश्रुतत्वात् सानुगृह्यते, चरमश्रुतत्वेन दुर्बलो मुष्टि-र्बाध्यत इति राद्धान्तः॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डे सप्तमप्रपाठके ऽष्टमोऽनुवाकः॥ * ॥

क्षत्रस्योल्वमसि क्षत्रस्य योनिरसि जाय एहि सुवो रोहाव रोहाव हि सुवरहं नावुभयोः सुवो रोक्ष्यामि वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नि-यश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च। आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानः ॥ १ ॥

यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताꣳ सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूम समहं प्रजया सं मया प्रजा समहꣳ रा-यस्पोषेण सं मया रायस्पोषोऽन्नाय त्वान्नाद्याय त्वा वाजाय त्वा वाजजित्यायै त्वामृतमसि पुष्टिरसि प्र-जननमसि ॥ २ ॥

अपानो वाजाय नव च ॥ ९ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपा-ठके नवमोऽनुवाकः ॥ * ॥

अष्टमे रथधावनमुक्तं। नवमे यूपारोहणमुच्यते। कल्पः। अथ यजमानं तार्प्यं परिधापयति "क्षत्रस्योल्वमसि" इति "क्षत्रस्य

योनिरसि" इति दर्भमयं पत्नीमिति। घृताक्तं वस्त्रं तार्प्यं। क्षत्रस्य राजस्थानीयस्य यजमानस्य गर्भत्वेनोपचर्यमाणस्योल्बमावरणमसि। उल्बवृतो गर्भ इति छन्दोगा आमनन्ति। हे दर्भमय पट क्षत्रस्य राजमहिषीस्थानीयस्य पत्नीशरीरस्य योनिरसि शीतनिवारणकारणमसि। तदेतत्परिधानद्वयं विधत्ते "तार्प्यं यजमानं परिधापयति। यज्ञो वै तार्प्यं। यज्ञेनैवैनꣳ समर्धयति। दर्भमयं परिधापयति। पवित्रं वै दर्भाः। पुनात्येवैनं। वाजं वा एषो ऽवरुरुत्सते। यो वाजपेयेन यजते। ओषधयः खलु वै वाजः। यद्दर्भमयं परिधापयति। वाजस्यावरुद्ध्यै" (ब्रा०का०१।प्र०३।अ०७) इति। तार्प्यस्य यज्ञसाधनत्वाद्यज्ञत्वं। एनं पत्नीदेहं। वाजपेययाजिनोऽन्नावरोधकामिन ओषधिरूपदर्भमयेनान्नमवरुद्धं भवति। कल्पः। अथ जायामामन्त्रयते "जाय एहि सुवो रोहाव" इति "रोहाव हि सुवः" इतीतरा प्रत्याह "अहं नावुभयोः सुवो रोक्ष्यामि" इति यजमान इति। स्पष्टार्थो मन्त्रः। एहीत्याह्वानस्य तात्पर्यमाह "जाय एहि सुवो रोहावेत्याह। पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (ब्रा०) इति। आह्वानेन यजमानस्य यज्ञारम्भमनु पत्न्या अपि यज्ञारम्भे सति यज्ञोऽनवच्छिन्नो भवति। पूर्वमन्त्रैः स्वर्गत्वेन निरूपितस्यारोहणीयस्य यूपस्य चोदकप्राप्तं परिमाणमपवदितुं परिमाणान्तरं विधत्ते "सप्तदशारत्निर्यूपो भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" (ब्रा०) इति। चतुर्विंशत्यङ्गुलिपरिमितोऽरत्निः, सप्तदशसङ्ख्याका अरत्नयः परिमाणं यस्य

यूपस्येति विग्रहः। अन्यद्गुणद्वयं यूपस्य विधत्ते "तूपरश्चतु-रश्रिर्भवति" (ब्रा०) इति। इतरेषां यूपानामग्रे शृङ्गस्थानीयः काष्ठशेषोऽणीयान् चषालप्रतिमोकायावशिष्यते सोऽस्य ना-स्तीति तूपरत्वं। अष्टाश्रित्वमपवदितुं चतुरश्रित्वं। चषालनाम-कस्य यूपकटकस्य दारुमयत्वापवादाय विधत्ते "गौधूमं चषालं। न वा एते व्रीहयो न यवाः। यद्गोधूमाः। एवमिव हि प्रजापतिः समृद्धौ। अथो अमुमेवास्मै लोकमन्नवन्तं करो-ति" (ब्रा०) इति। गौधूमं कुर्यादिति शेषः। यथा व्रीहिभ्यो यवेभ्यश्च गोधूमानां लोके प्रशस्तत्वमेवमेवान्येभ्यो देवेभ्यः प्रशस्तः प्रजापतिः। किञ्च गोधूमसम्पत्त्या स्वर्गोऽन्नवान् भवति। यूपस्य वेष्टनं विधत्ते "वासोभिर्वेष्टयति। एष वै यजमानः। यद्यूपः। सर्वदेवत्यं वासः। सर्वाभिरेवैनं देवताभिः समर्धयति। अथो आक्रमणमेव तत्सेतुं यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०) इति। वाससां सङ्ख्यामापस्तम्ब आह 'रशना-काले सप्तदशभिर्वासोभिर्यूपं वेष्टयति' इति। वाससां सर्वदेवत्यत्वं "अग्नेस्तृषाधानं"(सं०६का०१प्र०१अ०)इत्यादौ सोमिकदीक्षा-प्रकरणे विस्पष्टं। आक्रमणं स्वर्गारोहणं सोपानसदृशं। कल्पः। आहवनीये जुहोत्यन्वारब्धे यजमाने वाजस्य प्रसवमिति द्वा-दश स्रुवाहुतीरिति। पाठस्तु "वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चा-धिपतिश्च" इति। वाजादयः सर्वे मम सन्त्विति शेषः। वाजो ऽन्नं। प्रसवस्तस्योत्पत्तिः। अपिजस्तस्यैव पुनः पुनरुत्पत्तिः। क्रतुः

सङ्कल्पो भोगादिविषयो यागो वा। सुवस्तस्यैवोत्पत्तौ हेतुरादित्यः। अथवा वाजादयः चैत्रादिमासानां नामविशेषाः। तदानीं सर्वे ते प्रीणन्त्विति वाक्यशेषः। चकाराः परस्परसमुच्चयार्थाः, अनुक्तकालादिदेवतासमुच्चयार्था वा। विधत्ते "द्वादश वाजप्रसवीयानि जुहोति। द्वादश मासाः संवत्सरः। संवत्सरमेव प्रीणाति। अथो संवत्सरमेवास्मा उपदधाति। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०) इति। वाजशब्दप्रसवशब्दौ येषु कर्मसु मन्त्रत्वेन श्रूयेते तानि कर्माणि वाजप्रसवीयानि, अन्नोत्पत्तिहेतुत्वाद्वा वाजप्रसवीयत्वं। न केवलमनेन होमेन संवत्सरदेवतायाः प्रीतिः किन्त्वस्य यजमानस्य स्वर्गप्राप्तये संवत्सरदेवतां निःश्रेणिवदुपधानमाधारमपि करोति। कल्पः। तं दशभिः कल्पैरोहत्यायुर्यज्ञेन कल्पतामिति। तं यूपं, कल्पैः कल्पशब्दोपेतैः। पाठस्तु "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां" इति। आत्मा जीवः, यज्ञेन यज्ञसम्बन्धिना यूपारोहणेन। आयुरादयः स्वस्वप्रयोजनसमर्था भवन्तु। विधत्ते "दशभिः कल्पैरोहति। नव वै पुरुषे प्राणाः। नाभिर्दशमी। प्राणानेव यथास्थानं कल्पयित्वा। सुवर्गं लोकमेति। एतावद्वै पुरुषस्य स्वं। यावत्प्राणाः। यावदेवास्यास्ति। तेन सह सुवर्गं लोकमेति" (ब्रा०) इति। अन्यत्र सप्त वै शीर्षण्याः

प्राणा द्वाववाञ्चाविति श्रुतत्वादिहापि छिद्राभिप्रायः प्राणशब्दः। अनेन कल्पमन्त्रपाठेन प्राणापानचक्षुःश्रोत्रादीन् प्राणान् स्वस्वस्थाने स्थापयित्वा तैस्तदीयस्थानैः सह स्वर्गं प्राप्तो भवति। कल्पः। बाहू उद्गृह्णाति "सुवर्देवाᳬं अगन्मामृता अभूम प्रजापतेः प्रजा अभूम" इति। उद्गृहीताभ्यां बाहुभ्यां स्वर्गप्राप्तिमभिनयता यजमानेनेदमुच्यते। वयं स्वर्गावस्थितदेवान् प्रति अगन्म प्राप्ताः स्मः। प्राप्य चामृता देवा अभूम। अतः प्रजापतेः प्रीतिविषयाः प्रजा अस्मिन् भूलोके यज्ञानुष्ठानपरा अभूम। मन्त्रस्य त्रीन् भागान् पृथग्व्याचष्टे "सुवर्देवाᳬं अगन्मेत्याह। सुवर्गमेव लोकमेति। अमृता अभूमेत्याह। अमृतमिव हि सुवर्गो लोकः। प्रजापतेः प्रजा अभूमेत्याह। प्राजापत्या वा अयं लोकः। अस्मादेव तेन लोकान्नैति" (ब्रा०) इति। तेन तृतीयभागपाठेन भूलोकात् सर्वात्मना निर्गतो न भवति। कल्पः। अथेमं लोकं प्रत्यवेक्षते "समहं प्रजया सं मया प्रजा समहᳬं रायस्पोषेण सं मया रायस्पोषः" इति। सङ्गतोऽस्मि सङ्गस्यतामिति यथायोगमध्याहर्तव्यं। आशीःपरत्वेन व्याचष्टे "समहं प्रजया सं मया प्रजेत्याहाशिषमेवैतामाशास्ते" (ब्रा०) इति। कल्पः। तमेवमासपुटैर्घ्नन्ति "अन्नाय त्वा" इति पुरस्तादध्वर्युः "अन्नाद्याय त्वा" इति दक्षिणतो ब्रह्मा "वाजाय त्वा" इति पश्चाद्धोता "वाजजित्यायै त्वा" इत्युत्तरत उद्गातेति। ऊषखननपांसव आमाः, तानश्वत्थपत्रैः पुटीकृत्य तैरामपुटैर्यूपादवरोहन्तं यजमानं

हन्युः। अत एवापस्तम्ब आह 'तमाश्वत्थैरासपुटैरूषपुटैर्भयै-र्वा वैश्याः प्रतिदिशमर्पयन्ति मर्हर्लिजो वा दीर्घवंशेषु प्रबन्ध्य' इति। सामान्येन प्राणिभिर्भोज्यमन्नं, राजामात्यादिभि-र्भोज्यमन्नाद्यं, तत्राप्यपूपादिविशेषो वाजः, तस्य सर्वस्यान्नस्य सम्पादनं वाजजित्वा। द्विविधं हननं क्रमेण विधत्ते "आस-पुटैर्घ्नन्ति। अन्नं वा इयं। अन्नाद्येनैवैनꣳ समर्धयन्ति। ऊषै-र्घ्नन्ति। एते हि साचादन्नं। यदूषाः। साचादेवैनमन्नाद्येन समर्धयन्ति" (ब्रा०) इति। ऊषाणामाधानादिसाधनत्वेन पारलौकिकान्नं प्रति साचात्साधनत्वं। हनने प्रकारविशेषं विधत्ते "पुरस्तात् प्रत्यञ्चं घ्नन्ति। पुरस्ताद्धि प्रतीचीनमन्नम-द्यते" (ब्रा०) इति। हन्यमानस्य पुरस्तादवस्थितो हन्ता प्रत्यञ्चं स्वाभिमुखं हन्यात्। लोकेऽपि हि पुरतोऽवस्थितात्पात्रात् समादाय स्वाभिमुखं तदन्नमद्यते। एतदापस्तम्बेन स्पष्टीकृतं 'मुखतोऽभिघ्नन्ति हन्तारं हन्तारमभिपर्यावर्तते' इति। ता-ड्यमानं प्रदेशं विधत्ते "शीर्षतो घ्नन्ति। शीर्षतो ह्यन्नमद्यते" (ब्रा०) इति। चतुर्दिक्षु हननं विधत्ते "दिग्भ्यो घ्नन्ति। दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते" (ब्रा०) इति। कल्पः। अथास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यं दक्षिणं पादꣳ हिरण्य उपावरो-हयति "अमृतमसि" इति "पुष्टिरसि प्रजननमसि" इति सव्यं बस्ताजिन इति। हे हिरण्य त्वं विनाशरहितमसि न ह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद् विनश्यति। हे बस्ताजिन त्वं

पुष्टिरपि संवत्सरे बहुपत्योत्पादकत्वात्। एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते। हिरण्येऽवरोहं विधातुं प्रस्तौति "ईश्वरो वा एष पराङ् प्रदघः। यो यूपश्ः रोहति" (ब्रा०) इति। यूपमारूढो यजमानः पराङ् भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति। अथवा प्रदघः प्रकर्षेण गन्तुमीश्वरः। न पुनरावर्तत इत्यर्थः। विधत्ते "हिरण्यमध्यवरोहति। अमृतं वै हिरण्यं। अमृतश्ः सुवर्गो लोकः। अमृत एव सुवर्गे लोके प्रतितिष्ठति" (ब्रा०) इति। हिरण्यस्य परिमाणं विधत्ते "शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति। मानशब्देन पणस्य विंशो भागोऽभिधीयते, ततः पञ्चपणपरिमितमित्युक्तं भवति। शतसङ्ख्याकाः संवत्सराः पुरुषस्यायुः। दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्य एकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वं। बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति "पुष्टी वा एतद्रूपं। यदजा। त्रिःसंवत्सरस्यान्यान् पशून् परि प्रजायते" (ब्रा०) इति। संवत्सरे सकृत्प्रसवोपेतानन्यान् गवादिपशून् परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूते। अतोऽस्याः पुष्टिरूपत्वं, विधत्ते "बस्ताजिनमध्यवरोहति। पुष्ट्यामेव प्रजनने प्रतितिष्ठति" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"वत्र तार्प्यं वत्र दार्भ्यं परिधत्तेऽत्र दम्पती।

जाये स्वाम्याह्वयेद्भार्या रोहा तं प्रतिवक्ति सा॥

अहं स्वाम्याह वाजस्य जुहुयाद्द्वादशाहुतीः ।
आयुर्दशभिरारोहेत् स्वयं बाहुद्वहः स्रुवः ॥
सं भुवं प्रेक्षतेऽन्नाय चतुर्भिस्तु महर्त्विजः ।
दिग्भ्यो ग्रन्थ्यासपुटकैर्, अष्टपुष्टिद्दद्यात्पदे ॥
स्वर्णवस्त्रत्वचोर्दद्यात् पञ्चत्रिंशत्त्विहोदिताः" । इति ।

अथ मीमांसा। दशमाध्यायस्य *चतुर्थपादे चिन्तितं ।

"तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाग्रिमः ।
गुह्याच्छादनकार्यैक्यादयोग्यत्वात् समुच्चयः" ॥

महाव्रते श्रूयते 'तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी' इति। प्रकृतौ 'अहतं वासः परिधत्तः' इति। घृताक्तं वस्त्रं तार्प्यमित्युच्यते। ताभ्यां तार्प्यदर्भमयाभ्यां दम्पत्योरहतं वस्त्रं बाध्यते। कुतः। परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात्। मैवं, तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात्, परिधानं त्वचोपरितनं प्रावरणं, तत्कार्यभेदात् समुच्चयः ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितं ।

"भवेत् सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥
आनन्तर्यात् प्रकरणात् कर्माङ्गं, षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सोमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना" ॥

---

* तृतीयपाद इति काशीस्थैकपुस्तकपाठः ।

वाजपेयप्रकरणे श्रूयते, सप्तदशारत्निर्वाजपेयस्य यूपो भवतीत्यत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् प्रकरणाच्चैवमनुगम्यते। यदि कर्मणः साक्षादूर्ध्वमानं न सम्भवेत् तर्हि वाजपेयगतं खादिरमूर्ध्वं यत् षोडशिपात्रं तस्मिन्नद उन्मानं सम्बध्य तद्द्वारा कर्मणान्वेतीति प्राप्ते ब्रूमः। सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात् सम्बध्यते। तस्य च यूपस्य पश्वङ्गत्वात् उन्मानं यूपद्वारा पश्वङ्गं भवति। तस्यापि पशोर्वाजपेयाङ्गत्वात् पशुद्वारा कर्मणोऽङ्गं। यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथापि वाजपेयस्य सोमयागतया साक्षाद्यूपसम्बन्धाभावात् पश्वव्यवधानमभ्युपेयं। वाजपेयस्येति षष्ठ्याः सम्बन्धमात्रवाचित्वेन व्यवहितसम्बन्धमप्यसावभिधत्ते। देवदत्तस्य नप्तेति प्रयोगवत्। यत् सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात्। किञ्च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयं, सिद्धान्ते तु नासौ दोषः।

तत्रैवाष्टमपादे चिन्तितं।

"वाचयेत् स्वामिनं ज्ञाञ्जो वाचनीयो ज्ञ एव वा।
अविशेषादुभौ, ज्ञस्य स्वामित्वाद्वाचयेदमुं"॥

वाजपेये श्रूयते, क्लृप्तीर्यजमानं वाचयतीति। आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः। तत्र मन्त्रतदर्थाभिज्ञम-

नभिज्ञश्चोभावपि वाचयेत्, विज्ञं वा वाचयेदित्येवं संशयः। विशेषस्याश्रवणादनभिज्ञं, तदैव शिक्षयित्वापि वाचयितुं शक्यत्वादिति चेत्, मैवं। अध्ययनविधिबलादधीतवेदवेदार्थस्यैव यजमानत्वात्। तस्मादभिज्ञमेव वाचयेत्॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ * ॥

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु। ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः। वाजस्येदं प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। स विराजं पर्येति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे। वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्। अदित्सन्तं दापयतु प्रजानन् रयिं॥ १ ॥

च नः सर्ववीरां नियच्छतु। अग्ने अच्छा वदेह नः प्रति नः सुमना भव। प्र णो यच्छ भुवस्पते धनदा असि नस्त्वं। प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः

प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः। अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं विष्णुं सरस्वतीं सवितारं॥ २॥

च वाजिनं। सोमं राजानं वरुणमग्निमन्वारभामहे। आदित्यान् विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिं। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि॥ ३॥

रयिं सवितारं षट्चिंशच्च॥ १०॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः॥ *॥

नवमे यूपारोहणमुक्तं, दशमेऽन्नहोमा उच्यन्ते। कल्पः। अथास्यैतत्पुरस्तादौदुम्बरे द्रोणे सर्वौषधमाज्येन समुदायुतं भवति तस्यौदुम्बरेण स्रुवेणोपघातं सप्तान्नहोमान् जुहोति वाजस्येमं प्रसवः सुषुवे अग्रे सोममिति। तत्रेयमृक् प्रथमा "वाजस्येमं प्रसवः सुषुवे अग्रे सोमं राजानमोषधीष्वप्सु। ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयाम पुरोहिताः" इति। वाजस्यान्नस्योत्पादकः परमेश्वर ओषधीषु अप्सु च

सारभूतमिमं सोमं वल्लीरूपं राजानं दीप्तिमन्तं पदार्थं अग्रे सृष्ट्यादौ सुषुवे उत्पादयामास। ताश्च ओषधयः आपश्चास्मदर्थं मधुमतीः माधुर्योपेता भवन्तु। वयमप्यस्मिन् राष्ट्रे पुरोहिताः यागानुष्ठानादौ पुरोगामिनो जाग्रियाम जागरूका भूयास्म। अथ द्वितीया "वाजस्येदं प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। स विराजं पर्येति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे" इति। वाजस्य प्रसवः परमेश्वर इदमनुष्ठीयमानं कर्म आबभूव भावितवान् उत्पादितवान्। इमानि सर्वाणि भुवनानि सर्वत उत्पादितवान्। स परमेश्वरः अस्मे अस्मदर्थं प्रजां पुष्टिं च वर्धयमानः, प्रजानन् अस्मदभिप्रायं प्रकर्षेण जानानो विराजं हूयमानमन्नं पर्येति सर्वतः प्राप्नोतु। अन्नं वै विराडिति श्रुतिः। अथ तृतीया "वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्। अदित्सन्तं दापयतु प्रजानन् रयिं च नः सर्ववीरां नियच्छतु" इति। वाजस्य प्रसव ईश्वर इमां दिवमिमानि चान्यानि सर्वाणि भुवनानि शिश्रिये आश्रितवान्। सर्वेषाञ्च भुवनानां राजा भूत्वा अदित्सन्तं हविर्दातुमनिच्छन्तं मां प्रजानन् मदीयबुद्धिप्रेरणेन हविर्दापयतु। ततो ऽसोऽस्मभ्यं सर्ववीरां पुत्रभृत्यादयः सर्वे वीराः यस्याः सा सर्ववीरा, तादृशीं रयिं धनं च नियच्छतु नियमेन ददातु। अथ चतुर्थी "अग्ने अच्छा वदेह नः प्रति नः सुमना भव। प्र णो यच्छ भुवस्पते धनदा असि नस्त्वं" इति। हे अग्ने इह

अस्मिन् कर्मणि नो ऽस्माकमच्छा आभिमुख्येन वद हितं कथय। नो ऽस्मान् प्रति सुमनाः करुणार्द्रचित्तो भव। हे भुवस्पते भूमिपते नो ऽस्मभ्यं प्रकर्षेण यच्छ धनं देहि, यस्मात्त्वमस्मत्स्वामी सन् नो ऽस्मभ्यं धनदा असि। अथ पञ्चमी "प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः। प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः" इति। पञ्चभिः प्रशब्दैः प्रयच्छत्विति प्रददात्वित्यन्वये सति एतानि षड्वाक्यानि भवन्ति। अर्यमभगबृहस्पतयो देवेषूत्तमत्वात् विप्रपरिव्राजकन्यायेन पृथग् निर्दिश्यन्ते। तेभ्यो ऽन्ये तत्र देवशब्देनोच्यन्ते। ते सर्वे नो ऽस्मभ्यं धनं प्रयच्छन्तु। उत अपि च सूनृता प्रियवागभिमानिनी देवता या चान्यवाङ्मात्राभिमानिनी देवता ते उभे धनं प्रयच्छतां। अथ षष्ठी "अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनं" इति। हे ईश्वर पुनरस्मभ्यं दातुं धनस्य दातारमर्यमादीन् चोदय प्रेरय। वाक्सरस्वत्योः पूर्वोक्तसूनृतावाचोरिव भेदो द्रष्टव्यः। वाजिनं अन्नाधिपतिं। अथ सप्तमी "सोमꣳ राजानं वरुणमग्निमन्वारभामहे। आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिं" इति। वयं सोमराजादीन् प्रथमतः कर्मारम्भकाननुसृत्य पश्चादारभामहे, अतस्ते सर्वे ऽनुग्रहन्तु। विधत्ते "सप्तान्नहोमान् जुहोति। सप्त वा अन्नानि। यावन्त्येवान्नानि। तान्येवावरुन्धे। सप्त ग्राम्या ओषधयः। सप्तारण्याः। उभयीषामवरुद्ध्यै" (ब्रा०।का०१।प्र०३।अ०८)

अन्नहेतूनामोषधीनां सप्तत्वात्तत्कार्याणामन्नानामपि सप्तत्वं। ओषधीनां सप्तत्वमापस्तम्बोऽग्निचयने दर्शयति 'तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमाः वेणुः श्यामाका नीवारा जर्तिलाश्च गवीधुका अरण्यजा मार्कटका विज्ञेया गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इति। एकैकस्यान्नस्य पृथगेव होमं विधत्ते "अन्नस्यान्नस्य जुहोति। अन्नस्यान्नस्यावरुध्यै" (ब्रा०) इति। इमं पक्षमापस्तम्बो दर्शयति 'वाजप्रसवीयं जुहोति सप्त ग्राम्या ओषधयः सप्तारण्याः पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति ग्राम्याणि हुत्वारण्यानि जुहोति' इति। इदानीं बोधायनाभिमतं सर्वाण्येकीकृत्य होमं विधत्ते "यद्वाजपेययाज्यनवरुद्धस्याश्नीयात्। अवरुद्धेन व्यृध्येत। सर्वस्य समवदाय जुहोति। अनवरुद्धस्यावरुध्यै" (ब्रा०) इति। होमकाले यदन्नमवरुद्धं स्वीकृतं तदुपेक्ष्य यदस्वीकृतं वाजपेययाजी कालान्तरेऽश्नीयात्, तदानीमुपेक्षितेन यागकालीनेनान्नेनासौ वियुक्तो भवेत्। अतः सर्वमेकीकृत्य होमे सर्वस्यापि यागकाले स्वीकृतत्वेन दोषापादकमस्वीकृतं किञ्चिन्न भवेत्। अतोऽस्वीकृतस्य सर्वस्यापि यागकाले स्वीकाराय मिलित्वा होम इत्यर्थः। होमे साधनविशेषं विधत्ते "औदुम्बरेण स्रुवेण जुहोति। ऊर्ग्वा अन्नमुदुम्बरः। ऊर्ज एवान्नाद्यस्यावरुध्यै" (ब्रा०) ऊर्ग्वा अन्नं बलप्रदमेवान्नं। अत एव देशविशेषे बहुद्यते*।

---

* बहुाद्रियत इति तै०। किन्तु बहूत्पद्यत इति युक्तोऽर्थः।

कल्पः। अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमा-स्तृणाति। तद् यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्मा-भ्यां पर्युपास्य पुरस्तात् प्रत्यञ्चमभिषिञ्चति शीर्षतोऽभिषि-ञ्चत्यामुखादन्ववस्रावयति "देवस्य त्वा सवितुः प्रसवेऽश्वि-नोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्ने-स्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा बृहस्पतेस्त्वा साम्राज्ये-नाभिषिञ्चामि" इति। अत्रेन्द्रस्येत्यस्मिन्मध्यममन्त्रे अनुषङ्ग-सूचनायानाम्नातोऽपि त्वाशब्दः सूत्रकारेण पठितः। देवस्य त्वेत्यादिर्व्याख्यातः। या सरस्वती वाग्विशेषदेवता या च वाक्-शब्दाभिहिता वाक्सामान्यदेवता यश्चान्तर्यामी यन्तृशब्द-वाच्यो योऽप्यग्निस्तेजःप्रदः, तेषां यन्त्रेण नियमनेनानुज्ञया साम्राज्यनिमित्तं त्वामभिषिञ्चामि। इन्द्रस्येत्येतावानेवाम्नातो द्वितीयो मन्त्रः, स च पूर्वोत्तरभागयोरनुषङ्गेण व्याख्यातव्यः। बृहस्पतेरित्यादौ तृतीयमन्त्रे पूर्वभागोऽनुषञ्जनीयः। देवस्य त्वेत्येतस्मिन्मन्त्रभागे प्रसवपदाभिप्रायमाह "देवस्य त्वा सवितुः प्रसव इत्याह। सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभिषि-ञ्चति" (ब्रा०) इति। ब्रह्मणा मन्त्रेण प्रतिपाद्याभिरिति शेषः। सर्वौषधिं समभिषेकद्रव्यत्वेन विधत्ते "अन्नस्यान्नस्याभिषिञ्च-ति। अन्नस्यान्नस्यावरुद्ध्यै" (ब्रा०) इति। प्रकारविशेषं विधत्ते "पुरस्तात् प्रत्यञ्चमभिषिञ्चति। पुरस्ताद्धि प्रतीचीनमन्नमद्यते। शीर्षतोऽभिषिञ्चति। शीर्षतो ह्यन्नमद्यते" (ब्रा०) इति। आसपुटाघातविषयवाक्यवद् व्याख्येयं। गुणान्तरं विधत्ते "आ

मुखादन्ववस्रावयति। मुखत एवास्मा अन्नाद्यं दधाति" (ब्रा०) इति। शिरस आरभ्यानुलोम्येन मुखपर्यन्तमेवावस्रावयेत् न लधः। मन्त्रेष्वग्नीन्द्रबृहस्पतिशब्दतात्पर्यं व्याचष्टे "अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह। एष वा अग्नेः सवः। तेनैवैनमभिषिञ्चति। इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह। इन्द्रियमेवास्मिन्नेतेन दधाति। बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनमभिषिञ्चति" (ब्रा०) इति। एष ओषधिरसोऽग्नेः सवः अग्निना प्रेरितः। अतोऽग्निशब्दमुच्चारयन्नग्निसम्बन्धेन तेनैव रसेनाभिषिञ्चति। एष वा इन्द्रस्य सवः, बृहस्पतेः सव इत्यनुमन्धेयं। विधत्ते "सोमग्रहाꣳश्चावदानीयानि चर्त्विग्भ्य उपहरन्ति। अमुमेव तैर्लोकमन्नवन्तं करोति। सुराग्रहाꣳश्चानवदानीयानि च वाजसृद्भ्यः। इममेव तैर्लोकमन्नवन्तं करोति। अथो उभयोष्वेवाभिषिच्यते" (ब्रा०) इति। पशोर्यान्यवदानीयानि हृदयादीनि, हृदयस्याग्रेऽवद्यतीत्यादिश्रुतेः, तानीडायामवत्तानि सोमग्रहांश्च ऋत्विग्भ्यः प्रयच्छेत्। शिर आदीन्यनवदानीयानि, न शीर्ष्णोऽवद्यति नांसयोरित्यादिश्रुतेः। तानि सुराग्रहांश्च वाजसृद्भ्यः रथान्तरैः षोडशभिराजिधाविनं कृतवद्भ्यो वैश्येभ्यः प्रयच्छेत्। एवं सत्युभयीषु दैवीषु मानुषीषु च प्रजास्वयमभिषिक्तो भवति। विधत्ते "विमाथं कुर्वते वाजसृतः। इन्द्रियस्यावरुद्ध्यै" (ब्रा०) इति। विशेषेण मथनमालोडनं कलहो विमाथः। पानवशनटनायाभिनयं विमाथं

कुर्युः। सवनत्रये स्तोत्रेषु ऋग्विशेषं विधत्ते "अनिरुक्ताभिः प्रातःसवने स्तुवते। अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै। वाजवतीभिर्माध्यन्दिने। अन्नं वै वाजः। अन्नमेवावरुन्धे। शिपिविष्टवतीभिस्तृतीयसवने। यज्ञो वै विष्णुः। पशवः शिपिः। यज्ञ एव पशुषु प्रतितिष्ठति" (ब्रा०) इति। अनिरुक्ताभिरव्यक्तदेवताकाभिर्ऋग्भिः साकल्येन तन्महिम्ना वक्तुमशक्यत्वात् प्रजापतिरनिरुक्तः, वाजशब्दोपेता ऋचो वाजवत्यः, शिपिविष्टशब्दोपेतास्त्वृचः शिपिविष्टवत्यः, ताः सर्वाः सामवेदे द्रष्टव्याः। विष्टशब्दो विष्णुपर्यायः सन् अत्र फलव्यापिनं यज्ञमाचष्टे, शिपिशब्दः पशुवाची। अतः शिपिविष्टवतीभिर्ऋग्भिर्यज्ञे पशुषु च प्रतितिष्ठत्येव। सामविशेषं विधत्ते "हृदन्त्यं भवति। अन्तमेवैनꣳ श्रियै गमयति" (ब्रा०) इति। अन्त्यमस्य स्तोत्रस्य यदन्त्यं साम तद्बृहद्गायेत्, तेन गानेनैनं यजमानं श्रियै सम्पत्सिद्ध्ये यज्ञस्यान्तं समाप्तिं प्रापितवान् भवति।

अत्र विनियोगसङ्ग्रहः।

"वाज सप्तभिरन्नस्य होमा इव यजुस्तयात्।
अभिषिञ्चेत्स्वामिनं तं दशमन्त्रा इहोदिताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः॥ * ॥

अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत्सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्करीमुदजयद्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् ॥ १ ॥

वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन् रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् ॥ २ ॥

त्रिवृतꣳ स्तोममुदजयत् षट्चत्वारिꣳशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ * ॥

दशमेऽन्नहोम उक्तः । एकादश उज्जितिमन्त्रा उच्यन्ते । कल्पः । अथ यजमानमन्वास्थाय उज्जितीर्वाचयत्यग्निरेका-

चरेण वाचमुदजयदिति सप्तदशेति। पाठस्तु "अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत्सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्वरीमुदजयद्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयद्वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन् वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन् रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्" इति। आश्रावयेत्यादिके सप्तदशाक्षरे मन्त्रसङ्घे एकैकाक्षरं त्यक्त्वा तत्तन्मन्त्रं पठित्वा तत्सामर्थ्यादग्न्यादयो वागादीनुदजयन्। अथवा विध्यन्तर एकाक्षरो मन्त्रः शास्त्रप्रसिद्धो वागग्निबीजं* तेन एकाक्षरमन्त्रेणाग्नेर्वागुज्जयः। द्व्यक्षरेणाजपामन्त्रेण प्राणापानात्मकेनाश्विनोः प्राणापानोज्जयः। एवमन्येऽपि त्र्यक्षरादिमन्त्रा यथायोगमुन्नेयाः। मन्त्राक्षरसङ्ख्यानुसारेण लोकत्रयादिजयो विज्ञेयः। त्रिवृत्स्तोमगतानामृचां नवसङ्ख्यापेतत्वात् तज्जयो द्रष्टव्यः। त्रयोदशस्तोमादावपि तिसृणामृचामावृत्तिविशेषेण तत्तत्सङ्ख्या द्रष्टव्या। एतदुज्जितिविधिस्तु ता वा

---

* रं वह्निबीजमिति तन्त्रे।

एता उज्जितयो व्याख्यायन्त इत्येतादृशः पूर्वमेवास्माभिर्व्याख्यातः सोऽयमत्र उत्कर्षणीयः।

अत्र विनियोगसङ्ग्रहः।

"अग्निः सप्तदशाम्नाता उज्जितीर्वाचयेदमूः।
यजमानं रथेष्वेषु धावत्स्वध्वर्युरादरात्" ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ * ॥

---

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि पृथिविषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा। ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः। दैव्यः कोशः ॥ १ ॥

समुब्जितः। तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा। अपाꣳ रसमुद्वयसꣳ सूर्य-

रश्मिꣳ समाभृतं। अपाꣳ रसस्य यो रसस्तं वो गृह्णा-
म्युत्तममेष ते योनिरिन्द्राय त्वा। अया विष्ठा जनयन्
कर्वराणि स हि घृणिरुरुर्वराय गातुः। स प्रत्युदैद्धरुणो
मध्वो अग्रꣳ स्वायां यत्तनुवां तनूमैरयत। उपयाम-
गृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः
प्रजापतये त्वा॥ २॥

कोशस्तनुवां त्रयोदश च॥ १२॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपा-
ठके द्वादशोऽनुवाकः॥ *॥

एकादशे उज्जितिमन्त्रा उक्ताः। द्वादशेऽतिग्राह्यमन्त्रा उच्यन्ते। कल्पः। आग्रयणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान् गृह्णात्युपयामगृहीतोऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिरिति। तत्र प्रथममन्त्रपाठस्तु "उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा" इति। हे प्रथमातिग्राह्य त्वमुपयामेन पृथिव्यात्मकेन पात्रेण गृहीतोऽसि। इयं वा उपयाम इति पूर्वमुदाहृतं। मनुष्येषु वनस्पतिषु भुवनेषु स्वामित्वेनावस्थितमिन्द्राय प्रियं त्वां गृह्णामि। एष खरप्रदेशस्ते स्थानं तस्मादिन्द्राय त्वामत्र सादयामि। एष इत्यादिः सादनमन्त्रः। नृषदमित्यादिपदाभि-

प्रायमाह “नृषदं त्वेत्याह। प्रजा वै नृन्। प्रजानामेवैतेन सूयते। द्रुषदमित्याह। वनस्पतयो वै द्रु। वनस्पतीनामेवैतेन सूयते। भुवनसदमित्याह। यदा वै वसीयान् भवति। भुवनमगन्निति वै तमाहुः। भुवनमेवैतेन गच्छति” (ब्रा०१का०३प्र०।९अ०) इति। नृन् नरः तेषु सीदतीति नृषत् तं नृषदं। एतेन यजुःपाठेन प्रजानां मध्ये सूयते स्वामित्वेनाभिषिच्यते। यदा लोके वसीयान् धनाढ्यो भवति तदा तं पुरुषं स्वामित्वेन कृत्स्नं भुवनमगन् प्राप्तवानिति जना आहुः। अथ द्वितीयग्रहमन्त्रः “उपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा” इति। पूर्ववद्व्याख्येयं। एतदेवाभिप्रेत्य तथैव व्याचष्टे “अप्सुषदं त्वा घृतसदमित्याह। अपामेवैतेन घृतस्य सूयते। व्योमसदमित्याह। यदा वै वसीयान् भवति। व्योमागन्निति वै तमाहुः। व्योमैवैतेन गच्छति” (ब्रा०) इति। अप्स्वित्यादिपाठेन तत्स्वामित्वेनाभिषेकः। धनाढ्यस्य व्योमगामित्वं नाम गजाश्वारोहणं। अथ तृतीयग्रहमन्त्रः “उपयामगृहीतोऽसि पृथिविषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा” इति। पूर्ववद्व्याचष्टे “पृथिविषदं त्वान्तरिक्षसदमित्याह। एषामेवैतेन लोकानाꣳ सूयते। तस्माद्वाजपेययाजी न कञ्चन प्रत्यवरोहति। अपीव हि देवतानाꣳ सूयते। नाकसदमित्याह। यदा वै वसीयान् भवति। नाकमगन्निति वै तमाहुः। नाकमेवैतेन गच्छति” (ब्रा०) इति।

तस्मादयं वाजपेययागेनाग्न्यादिदेवतानामपि मध्ये ऽभिषिक्त इव भवति। अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्यादिमन्त्रेषु अग्न्यादीनां यत्तत्साम्राज्यं तेन निमित्तेनाभिषेकस्योक्तत्वात् न प्रत्यवरोहति। अपि तस्माद्देवतानां मध्ये ऽभिषिक्तत्वात् देववदेव कमपि मनुष्यं प्रति गजादिवाहनान्नावरोहति नाव-रोहेदिति विधिः। अत एवापस्तम्ब आह 'यावज्जीवं न कञ्चन प्रत्यवरोहेत् बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत' इति। अथ चतुर्थग्रहमन्त्रः "ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः। दैव्यः कोशः समुब्जितः। तेषां विशिप्रियाणामिष-मूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा" इति। येऽतिग्राह्य-रूपा ग्रहाः पञ्चजनीनाः पञ्चजनेभ्यो देवमनुष्यासुररक्षो-गन्धर्वेभ्यो निषादपञ्चमेभ्यो वर्णेभ्यो वा हिताः, येषामतिग्राह्या-णां तिस्र आग्नेयैन्द्रसौर्याख्यातिग्राह्यरूपाः परमजाः प्रकृतयः, किञ्च येषां प्रभावेन दैव्यो दिविभवः कोशो मेघः समु-ब्जितः सम्यक् न्युब्जीकृतः वर्षाभिमुखः कृत इत्यर्थः। विविधानि शिप्राणि हनुस्थानीयानि पात्राग्राणि, तैरुपेता विशिप्रियाः। तादृशानां तेषामतिग्राह्याणां पूरणायेषमन्नसदृशं ऊर्जं बल-प्रदं सोमरसं समग्रभीं सम्यक् गृह्णामि। पञ्चजनीनशब्दाभि-प्रायं दर्शयति "ये ग्रहाः पञ्चजनीना इत्याह। पञ्चजनाना-मेवैतेन सूयते" (ब्रा०) इति। एतेन मन्त्रपाठेन निषाद-पञ्चमानां वर्णानां स्वामित्वेनाभिषिच्यते। अथ पञ्चमग्रहः "अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतं। अपाꣳ रसस्य

यो रसस्तं वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा" इति। हे अतिग्राह्याः वो युष्माकं मध्ये उत्तमं चरमं ग्रहं तं तथाविधं गृह्णामि। किंविधं। अपां रसं उदकस्यैव सोमरसत्वेन परिणामात्। उद्भूतं वयोऽन्नं जीवनं वा यस्य तमुद्वयसं, सोमरसो ह्यन्नभूतो जीवनहेतुश्च। अपाम सोमममृता अभूमेत्युक्तत्वात्। सूर्यरश्मिः परिपाकहेतुर्यस्य तं सूर्यरश्मिं, वृष्टिक्लिन्ना ओषधय आतपेन पच्यन्ते, अन्यथा वृष्ट्याधिक्येन पूयेयुः। समाभृतं गायत्र्या द्युलोकात् सम्यगानीतं। किञ्चापां रसः सोमवल्लिरूपेण परिणतः, तस्यापि यो रसः सारः तादृशमुदकरसं। स्वामित्वं तेजोयुक्तत्वञ्च भागद्वयपाठेन भवतीति दर्शयति "अपाꣳ रसमुद्वयसमित्याह। अपामेवैतेन रसस्य सूयते। सूर्यरश्मिꣳ समाभृतमित्याह स शुक्रत्वाय" (ब्रा०) इति। कल्पः। अया विष्ठा जनयन् कर्वराणीति सप्तदशप्राजापत्यान् सोमग्रहान् गृह्णातीति। पाठस्तु "अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः। स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायां यत्तनुवां तनूमैरयत। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा" इति। अया अयं प्रजापतिः विष्ठाः विशेषेणावस्थितः, कर्वराण्येतानि कर्माणि जनयन् सम्पादयन् वर्तते*। यस्मात् स प्रजापतिः घृणिः दीप्तिमान् प्रकाशको भूत्वा वराय श्रेष्ठाय कर्मफलाय उरुर्गातुः विस्तीर्णो मार्गो भवति। तस्मात् स प्रजापतिः

* वर्ततामिति तै०।

मध्वो मधुनः कर्मफलस्य धरुणो धारयिता मन्नग्रं प्रति अस्मात्समीपं प्रति उदैतु उत्कर्षेण प्राप्नोतु। यद् यस्मात् स्वायां तनुवां स्वकीये शरीरे तनूं अस्मच्छरीरं ऐरयत प्रापयति, तस्माद् वयं फलं प्राप्स्याम इति शेषः। एकयर्चा गृह्णातीत्येतस्य विधिः, स च पूर्वमेव व्याख्यातः (मं०१का०।७प्र०।७अ०)।

अत्र विनियोगसङ्ग्रहः।

"उपेत्यतिग्राह्यमैन्द्रं गृहीत्वैषति सादयेत्।
उत्तरेषु चतुर्ष्वेवम् अया सप्तदशग्रहान्॥
प्राजापत्यान् प्रगृह्णाति मन्त्रा द्वादश वर्णिताः"। इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः॥ * ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः। अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानं। अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये। इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवं। न ह्यस्या अपरञ्चन जरसा॥ १॥

मरते पतिः। नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यंᳲ हविः प्रियं देवेषु गच्छति। यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः। आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः। पताति दिद्युन्नर्यस्य बाह्वोः। मा ते ॥ २ ॥

मनो विष्वद्रियग्विचारीत्। मा नो मर्धीराभरा दद्धि तन्नः प्रदाशुषे दातवे भूरि यत्ते। नव्ये देष्णे शस्ते अस्मिं त उक्थे प्रब्रवाम वयमिन्द्र स्तुवन्तः। आ तू भर माकिरेतत्परिष्ठाद्विद्मा हि त्वा वसुपतिं वसूनां। इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व ॥ ३ ॥

प्रयन्धि प्रदातारᳲ हवामह इन्द्रमा हविषा वयं। उभा हि हस्ता वसुना पृणस्वाप्रयच्छ दक्षिणादोत सव्यात्। प्रदाता वज्री वृषभस्तुराषाट् छुष्मी राजा वृत्रहा सोमपावा। अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः। इन्द्रः सुत्रामा स्ववाᳲ अवोभिः सुमृडीको भवतु विश्ववेदाः। बाधतां द्वेषो अभयं कृणोत सवीर्यस्य ॥ ४ ॥

पतयः स्याम। तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम। स सुत्रामा स्ववां इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु। रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम। प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत। अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा। अस्माकं बोधि चोदिता नभन्तामन्यकेषां। ज्याका अधि धन्वसु॥ ५॥

जरसा मा ते हर्यश्व सुवीर्यस्याध्येकञ्च॥ १३॥

पाकयज्ञं संश्रवाः परोऽक्षं बर्हिषोऽहं ध्रुवामगन्मेत्याह देव सवितर्देवस्याहं क्षत्रस्योत्त्वं वाजस्येममग्निरेकाक्षरेणोपयामगृहीतोऽस्यन्वह मासास्त्रयोदश*॥ १३॥

पाकयज्ञं परोक्षं ध्रुवां विसृजते च नः सर्ववीरां पतयः स्यामैकपञ्चाशत्॥ ५१॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः॥ *॥

॥०॥ सप्तमप्रपाठकः सम्पूर्णः ॥०॥

* ०गृहीतोऽसि त्वषदमन्वह त्रयोदशेति काण्व। स्थकपुस्तकपाठः।

द्वादशे वाजपेयमन्त्राः समापिताः। त्रयोदशे काम्ययाज्या उच्यन्ते। काम्येष्टिकाण्डे काचिदिष्टिरेवमाम्नायते "इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इन्द्रमेवान्वृजुꣳ स्वेन भागधेयेनोपधावति स एवास्मै सजाताननुकान् करोति ग्राम्येव भवति" (सं०२का०।२प्र०।८अ०) इति। अनुकूलश्चासौ ऋजुश्चेत्यन्वृजुः। साहाय्यकरणमानुकूल्यं विरोधानाचरणमृजुत्वं। स तादृश इन्द्रोऽस्मै यजमानाय सजातान् ज्ञातिप्रभृतिबन्धून् अनुकान् एतस्मिन्ननुकूलान् करोति। ततोऽयं ग्रामस्वामी भवत्येव। तत्र पुरोऽनुवाक्यामाह "अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः। अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानं" इति। अहशब्द इच्छब्दश्च समुच्चये। चैत्रादयो मासाः, ते च जायमानमिन्द्रं अनुसृत्य अजिहत अस्माननुग्रहीतुं प्राप्तवन्तः। एवं वनान्योषधयः पर्वता वावशाने अस्मान् कामयमाने रोदसी द्यावापृथिव्यौ आपश्चाजिहतेति योजना। षोढा वाक्यानि भेत्तुं षडनुशब्दाः, स च भेद आदरार्थः। अथ याज्यामाह "अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये" इति। यजत्र यष्टः* 'हे इन्द्र महे महते सर्वेभ्योऽपि देवेभ्योऽधिकाय ते तुभ्यं सत्रा सत्रेषु विश्वं सर्वं हविः देवेभिरग्न्यादिभिरनुदायि अनुक्रमेण दीयते। किमर्थं। वृत्रहत्ये वृत्रबधमनु, ते तवेन्द्रियाय स्वबलसिद्ध्यर्थं।

* यष्टव्येति तै०।

न केवलं वृत्रवधमनुसृत्य चत्रमनु त्वदीयं चत्रियत्वजात्यभिमानञ्चानुसृत्य, सहोऽनु त्वदीयं बलमनुसृत्य, नृषह्य वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान् गुणानवेत्य ते तुभ्यं पुनः पुनर्दीयत इति शेषः। इष्ट्यन्तरं विधत्ते "इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसंशितेव स्यादिन्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेयेनोपधावति सैवास्य सेनाꣳ संश्यति" (सं०२का०) इति। असंशिता तीक्ष्णा न भवति स्वकार्यचमा नैव भवतीत्यर्थः। तस्यामिष्टौ कञ्चिदङ्गविशेषं विधत्ते "बल्बजानपीध्मे सन्नह्येद्गौर्यत्राधिष्कन्ना न्यमेहत्ततो बल्बजा उदतिष्ठन् गवामेवैनं न्यायमपिनीय गा वेदयति" (सं०२का०) इति। बल्बजास्तृणविशेषाः तानपि चोदकप्राप्त इध्मे सम्यक् बध्नीयात्। अधिष्कन्ना अधिकं पुरीषं प्राप्ता गौर्यत्र देशे न्यमेहत् नितरां मूत्रं करोति, ततो देशाद् बल्बजा उत्पद्यन्ते, तेषाञ्च बल्बजानां बन्धनेन यजमानं गवामेव न्यायमपिनीय प्रापय्य गा वेदयति लम्भयति। गवां न्यायः स्वाधीनतया शिचितत्वं। यथा धेनवः शिचिताः प्रतिदिनमरण्ये गत्वा यत्र क्वापि पलायनलचणं चापलं परित्यज्य काले स्वगृहमेवायान्त्यनायासेन दुह्यन्ते, यथा वा बलीवर्दाः शिचिताः सन्तो रथादीन् स्वामिन इच्छानुसारेण वहन्ति, तथा सेनायाः स्ववशत्वेन कार्यकारित्वं गोन्यायः। गा वेदयति गोवद्धितां स्वाधीनां कार्यकारित्वेन प्रापयतीत्यर्थः। तत्र पुरोऽनुवाक्यामाह "इन्द्राणीमासु नारिषु सु-

पत्नीमहमश्रवं। न ह्यस्या अपरञ्चन जरसा मरते पतिः” इति। आसु नारिषु देवस्त्रीषु मध्ये सेनाख्यामिभूतामिन्द्राणीं सुपत्नीं पतिव्रतामहमश्रवं। अपरञ्चन अन्यदप्येकमस्ति, अस्या इन्द्राण्याः पतिर्जरसा न हि मरते नैव म्रियते। तत्रैव याज्यामाह “नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यᳬ हविः प्रियं देवेषु गच्छति” इति। हे इन्द्राण्यहं सख्युर्वृषाकपेर्ऋते त्वत्प्रियमिन्द्रं विना यं कमप्यन्यं देवं न रारण नैव कीर्तयामि। यस्य मम अप्यं अप्सुभवमिदं हविः सोमपुरोडाशादिकं प्रियमिष्टं भूत्वा देवेषु गच्छति सर्वान् देवान् प्राप्नोति। तादृशोऽहमिति पूर्वत्रान्वयः। इष्यन्तरं विधत्ते “इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् सङ्ग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तᳬ स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तᳬ सङ्ग्रामं”(मं०२का०) इति। मनस्वते धैर्योपेताय सङ्ग्रामे युद्धे संयत्ते सम्यक् प्रवृत्ते सति इन्द्रियेण पाणिपादादीन्द्रियपाटवेन, मन्युना वैरिविषयकोपाधिक्येन, मनसा पलायनभीत्यादिवर्जनरूपेण धैर्येण। तत्र पुरोऽनुवाक्यामाह “यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः” इति। यो देव इन्द्रो जात एव उत्पन्नमात्र एव प्रथमो देवानां मध्ये मुख्यो मनस्वान् धैर्यवांश्च भूत्वा क्रतुना वृत्रवधादिकर्मणा देवानन्यानन्या-

दीन् पर्य्यभूषदतिक्रान्तवान्, यस्येन्द्रस्य शुष्माद् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेतां अबिभीतां। भ्यस भय इति धातुः। जनासः हे जनाः स इन्द्रो नृम्णस्य स्वकीयबलस्य मह्ना महिम्ना युष्मान् अवत्विति शेषः। याज्यामाह "आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः। पताति दिद्युन्नर्यस्य बाह्वोः। मा ते मनो विष्वद्रियग्विचारीत्" इति। उग्र हे इन्द्र आसमन्तात्ते तव ऊती रक्षणं महोऽधिकं यद् यस्माद्रक्षणादस्मदीयाः सेनाः समन्यवः वैरिविषयकोपयुक्ताः सत्यः समरन्त सम्यगरमन्त क्रीडामकुर्वन् परबलं नैवागणयन्नित्यर्थः। नर्यस्य* मनुष्यहितस्य ते तव बाह्वोर्दिद्युत् खड्गादिदीप्तिः पताति सर्वत्र प्रसरति, ते मनो विष्वद्रियक् बहुमुखं सत् मा विचारीत् मा विचरतु। पूर्वोक्तामेवेष्टिं फलान्तराय विधत्ते "एतामेव निर्वपेद् यो हतमनाः स्वयं पाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनाः स्वयं पाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति न हतमनाः स्वयं पापो भवति" (सं०२का०) इति। यः पुरुषो रोगेण द्रव्यहान्यादिना वा हतमना नष्टचित्तः सन् स्वयं पाप इव भ्रान्त इव स्यात् एतस्मात् पुरुषादेतानि इन्द्रियमन्युधैर्य्याणि अपक्रान्तानि। अथेदानीमेष पुरुषो नष्टचित्तः स्वयं भ्रान्तो भवति। तादृश एतामेव निर्वपेदिति पूर्वेणान्वयः, एतस्यामपीष्टौ पूर्वोक्ते एव याज्यानुवाक्ये। इष्ट्य-

---

* स च नर्यस्येति काशीस्थपुस्तकत्रये पाठः।

न्तरं विधत्ते "इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरितीन्द्रमेव दातारꣳ स्वेन भागधेयेनोपधावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्ति"(सं०२का०)इति। तत्र पुरोऽनुवाक्यामाह "मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते। नव्ये देष्णे शस्ते अस्मिं त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः" इति। हे इन्द्र नोऽस्मानस्मदीयाः प्रजाश्च मा मर्धीः कलहार्थिनीर्मा कार्षीः। किन्तु प्रकर्षेण दाशुषे हव्यं दत्तवते यजमानाय दातवे दातुं ते त्वदीयं यद् भूरि धनं सञ्चितमस्ति तदाभर तदाहर। आहृत्य च नोऽस्मभ्यं दद्धि देहि। हे इन्द्र नव्ये नूतने देष्णे त्वद्दानसाधने शस्ते प्रशस्ते ऽस्मिन् कर्मणि त उक्थे त्वदीये शस्त्रे स्तुवन्तः वयं प्रब्रवाम प्रकर्षेण प्रार्थयामहे। तत्रैव याज्यामाह "आ तू भर माकिरेतत्परिष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम्। इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व प्र यन्धि" इति। हे इन्द्र त्वं आ तू भर धनमाहरैव एतत्त्वदाहृतं धनं माकिर्मैव परिष्ठात् परत्र मा तिष्ठतु। यस्मात्त्वां वसूनां वसुपतिरिति विद्म कस्यचिदेव धनस्य पतिर्न भवसि, किन्तु सर्वेषामिति विवक्षया वसूनां वसुपतिमित्युक्तं, यस्मादेवं विद्म तस्मादाहरेत्यन्वयः। हे इन्द्र त्वदीयं माहिनं महनीयं दत्रं दातव्यं यद्धनमस्ति हे हर्यश्व हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र तद्धनमस्मभ्यं प्रयन्धि प्रयच्छ। इष्ट्यन्तरं विधत्ते "इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै

प्रत्तमिव मन्न प्रदीयेतेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्रदापयति" (सं०२का०) इति। प्रदात्रे प्रदापयित्रे वाक्यस्यान्ते प्रदापयतीति श्रवणात्। यस्मा उत्तमर्णाय प्रतिग्रहीत्रे दायादाय वा अधमर्णादिः पूर्वं प्रकर्षेण दत्तमित्येवं दातव्यं धनमपलपति, तद्धनं खलेन व्यवहितपते वस्तुतस्तु नैव प्रत्तं। तादृश उत्तमर्णादिर्निर्वपेत्। तत्र पुरोऽनुवाक्यामाह "प्रदातारꣳ हवामह इन्द्रमा हविषा वयं। उभा हि हस्ता वसुना पृणस्वाप्रयच्छ दक्षिणादोत सव्यात्" इति। प्रकर्षेण दातारं दापयितारमिन्द्रं हविषा युक्ता वयं आह्वामहे आह्वयामः। हे इन्द्र उभावपि हस्तौ धनेन पृणस्व पूरय, ततो ममाभिमुखेन दक्षिणाद्धस्तात् प्रयच्छ, सव्यादप्याभिमुख्येन प्रयच्छ। तत्र याज्यामाह "प्रदाता वज्री वृषभस्तुराषाट् शुष्मी राजा वृत्रहा सोमपावा। अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः"। प्रदाता प्रकर्षेण दाता वज्री वज्रवान् वृषभोऽभिमतानां धनानां वर्षिता तुराषाट् शत्रूणां शीघ्रमभिभविता शुष्मी बलवान् राजा दीप्यमानो वृत्रहा वृत्रं हतवान् सोमपावा सोमस्य पाता, ईदृशस्त्वमस्मिन्यज्ञे बर्हिषि वेद्यास्तीर्णदर्भे आनिषद्यागत्योपविश्याथानन्तरं शं सुखकरः योरनिष्टवियोजयिता भव। इष्ट्यन्तरं विधत्ते "इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वापरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोपधावति स एवैनं त्रायते ऽनपरुध्यो भवति" (सं०२का०) इति।

सुत्राम्णे सुष्ठु त्रात्रे, अपरुद्धश्चिरं राज्याद्भ्रष्टः, अपरुध्यमान इदानीमेव भ्रंश्यमानः, अनपरुध्यो भ्रंशाविषयः। तत्र पुरोऽनुवाक्यामाह "इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको भवतु विश्ववेदाः। बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम" इति। अयमिन्द्रः सुत्रामा सुष्ठु त्राता स्ववान् धनवान् अवोभिः रक्षणैः सुमृडीकः सुखकरः विश्ववेदा अस्मदनुष्ठितकृत्स्नपरिचर्याभिज्ञो भवतु। बाधतां अस्मान् बाधमानानां वैरिणां द्वेषो विद्वेषी स इन्द्रोऽस्माकमभयं कृणोतु करोतु। तत्प्रसादाद्वयं सुवीर्यस्य वैर्यभिभवसामर्थ्यस्य पतयः स्याम स्वामिनो भवेम। याज्यामाह "तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम। स सुत्रामा स्ववाꣳ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु" इति। वयं यज्ञियस्य यज्ञसम्बन्धिनस्तस्येन्द्रस्य सुमतावनुग्रहयुक्ते चित्ते स्थिता भवेम। अपि च भद्रे परममङ्गले सौमनसे मनःसमाधानेऽवस्थिताः स्याम। सुत्रामा सुष्ठु त्राता स्ववान् धनवान् स इन्द्रः अस्मे अस्माकं द्वेषः द्वेष्यान् आराच्चित् दूरादेव युयोतु पृथक्करोतु। कीदृशानामस्माकं सनुतः सनूनां* हविर्दातॄणां। इष्ट्यन्तरं विधत्ते "इन्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमेकादशकपालं निरवपत्तेनैवास्मिन्निन्द्रियमदधाच्छक्वरी याज्यानुवाक्ये अकरोद्वज्रो वै शक्वरी स एनं वज्रो भूत्या ऐन्ध सोऽभवत् सोऽबिभेद्भूतः प्र

* सनुतामिति का० पु० त्रयपाठः।

मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत् स प्रजापतिः शक्वर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय" (सं०२का०) इति। पुरा कदाचिदिन्द्रो देवताभिरितराभिर्हि सदृश आसीत् तदाधिपत्यलक्षणां व्यावृत्तिं न प्राप्तवान्। कश्चिदपि देव एतदीयं भृत्यत्वं नाङ्गीचकार। स इन्द्रः खिन्नः प्रजापतिमुपाजगाम, स प्रजापतिर्व्यावृत्तिकामाय तस्मा इन्द्रायातीतसृष्टिगतेन्द्रदेवताकमेकादशकपालं पुरोडाशं निरवपत्, स प्रजापतिः स्वयमिन्द्रस्य यजमानस्य यागे आध्वर्यवमकरोत्, तेनैव यागेनास्मिन् व्यावृत्तिकामे इन्द्रे सामर्थ्यं स्थापितवान्, तत्सिद्ध्यर्थं शक्वरीछन्दसा युक्ते द्वे ऋचौ याज्यानुवाक्ये अकरोत्, यद्यप्यत्र प्रो ष्वस्मा इत्येकैव शक्वरी तथाप्यावृत्त्या सतो सैव शक्वरी याज्या पुरोऽनुवाक्या च भविष्यतीति। सा शक्वरी वज्ररूपा स वज्र एनं व्यावृत्तिकामिनमिन्द्रं भृत्यैं आधिपत्यलक्षणायैश्वर्याय ऐन्ध प्रकाशितवान्, स इन्द्रोऽधिपतिरभवत्, भूतः ऐश्वर्यं प्राप्तः स इन्द्रः पुनरबिभेदियमत्युग्रा शक्वरी मां प्रधक्ष्यतीति विचार्य तच्छान्त्यै स इन्द्रः प्रजापतिं पुनरुपाधावत्, स प्रजापतिः शक्वर्या अधि अधिकत्वेन रेवतीं रेवतीर्नः सधमाद इत्येतामृचं निर्मितवान्। किमर्थं। शक्वर्या उग्रत्वशान्त्या इन्द्रस्याप्रदाहाय च। ऐश्वर्ययागमराजकुमारादेरैश्वर्याप्राप्तावैश्वर्यप्राप्त्यर्थमिष्टिमिदानीं विधत्ते "योऽलꣳ श्रियै सन् सदृङ् समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं

दधाति" (मं०२का०) इति। यः पुमान् राजकुमारादिः श्रियै ऐश्वर्याय अलं सन् समर्थः सन्नपि तदैश्वर्यं अप्राप्य समानैः साधारणैः ऐश्वर्यरहितैः प्राणिभिः सदृशः स्यात्, तस्मै तदर्थमियमिष्टिः। तामेतामिष्टिं विधाय याज्यानुवाक्ये विधत्ते "रेवती पुरोऽनुवाक्या भवति शान्त्या अप्रदाहाय शक्करी याज्या वज्रो वै शक्करी स एनं वज्रो भूत्वा इन्धे भवत्येव" इति। रेवत्याः पाठस्तु "रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम" इति। रेवतीर्धनवत्यः सधमादः अस्माभिः सह मादयन्त्यो हर्षयुक्ताः, तुविवाजाः बह्वन्नोपेताः शक्करीप्रापितदाहशान्तिप्रदा आपो नोऽस्माकं स्वामिनि इन्द्रे सन्तु अस्मत्सुखाय तिष्ठन्तु। याभिरद्भिः सह वयं क्षुमन्तः शब्दायन्तः इन्द्रं स्तुवन्तो मदेम हृष्टाः स्मः। शक्कर्याः पाठस्तु "प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत। अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा। अस्माकं बोधि चोदिता नभन्तामन्यकेषां। ज्याका अधि धन्वसु" इति। अस्मै इन्द्राय अस्येन्द्रस्य पुरोरथं रथस्य पुरोभागे शूषं बलं प्रो ष्वर्चत प्रकर्षेण सुष्ठु पूजयत। कथं बलस्य पूजेत्युच्यते। अयमिन्द्रो वृत्रहा वैरिघाती समत्सु सङ्ग्रामेषु सङ्गे योद्धृभिः वैरिभटैः सङ्गे सति संयोगे सति अभीके चिदु हन्तुं कामयमानेऽपि वैरिणि लोककृत् स्थितिं करोत्येव न तु पलायत इत्थं बलस्य पूजा, तथा पूजित इन्द्रोऽस्माकमितरव्यावृत्तये चोदिता प्रेरयिता सन् बोधि बुध्यतां सावधानो भवतु।

अन्यकेषां कुत्सितानां वैरिणां धन्वसु अधिश्रित्य वर्तमाना ज्याकाः कुत्सिता ज्याः नभन्तां नश्यन्तु त्रुट्यन्त्वित्यर्थः।

अथ विनियोगसङ्ग्रहः।

"अन्वहान्नूनुमत्यैन्द्र इन्द्राणीति तु तद्द्वयं।
यो जातो मन्युमत्यैन्द्रे मा नो दातृमतैन्द्रकं॥
प्रदा प्रदातृमत्यैन्द्र इन्द्रः सुत्रामसंयुतं।
रेवती श्रीमदैन्द्रे स्यादथ सप्ताश्चतुर्दश"॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः॥ * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण *सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामके तैत्तिरीययजुःसंहिताभाष्ये प्रथमकाण्डे सप्तमः प्रपाठकः सम्पूर्णः॥*॥

ॐ तत्सत्॥

* माधवाचार्येणेति ते०।

# शुद्धिपत्रं।

| अशुद्धं। | शुद्धं। | पृष्ठा। |
|---|---|---|
| (सं०६का।५प्र०) | (सं०।६का०।१प्र०।१अ०।७ख०) | ७७४ |
| सम्भरदिति | सम्भरेदिति | ७७६ |
| पुत्रस्व | पुत्रस्य | ८१४ |
| तानूनप्य | तानूनप्त्र | ८५५ |

